श्रीगणेशाय नमः





गुरुमण्डलग्रन्थमालाया विंशम्पुष्पम्

# स्कन्दमहापुराणम्

श्रीमन्महर्षिकृष्णद्वैपायनव्यासविरचितम्

तस्य

अवन्तीखण्डात्मकः

**पञ्चमो भागः**

---

पूर्वार्द्धम्

"पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्"

(मत्स्यपुराणम्)

**मनसुखराय मोर**

५, क्लाइव रो,

कलकत्ता—१

विक्रम सम्वत् २०१६ ईशवीयसन् १९६२



* श्रीगणेशायनमः *

गुरु मण्डलग्रन्थमालाया विंशम्पुष्पम्

# स्कन्दपुराणम्

—*::*—

## श्रीमन्महर्षि-कृष्णद्वैपायनव्यासविरचितम्

तस्य

## अवन्तीखण्डान्तर्गतअवन्तीमाहात्म्यादिसहितम्

## पूर्वार्द्धम्

### पञ्चमोभागः

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयम्भैरवम् ।
सिद्धौघं बटुकत्रयम्पदयुगं दूतीक्रमं मण्डलम् (शाम्भवम्) ॥
वीरान्द्वयष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकम् ।
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥

५, क्लाइव रो,

कलकत्ता—१

| वैक्रमाब्दः | प्रथमंसंस्करणम् | ख्रैस्ताब्दः |
| --- | --- | --- |
| २०१६ | ५००० | १९६२ |

॥ श्रीगणेशायनमः ॥

गुरुमण्डलग्रन्थमाला का बीसवां पुष्प

# स्कन्दपुराण



( अवन्तीखण्ड पूर्वार्द्ध )

पञ्चम भाग

महर्षि कृष्णद्वैपायनव्यासदेवजी कृत

मनसुखरायमोर

५, क्लाइव रो

कलकत्ता—१

प्रथमबार—५०००

मुद्रकः—
सारनमण्डलान्तर्गत गोरियाकोठी-
निवासि श्रीमत्स्वर्गतगोपालप्रसाद-
सूनुःश्रीव्रजकिशोरसिंह
स्वयन्त्रालये
गोपाल प्रिण्टिङ्ग वर्क्स
नामके मुद्रापितवान्
स्थानम् :—८७ए, राजा दिनेन्द्र स्ट्रीट,
कलकत्ता—६



॥ श्रीगणेशायनमः ॥

# स्कन्दपुराणस्थ पञ्चम अवन्तीखण्ड के विषय में

श्रीसच्चिदानन्दघन परब्रह्म भगवान् कृष्णचन्द्र की असीम अनुकम्पा से गुरुमण्डलग्रन्थमाला के बीसवें पुष्प स्कन्दमहापुराण के पञ्चम अवन्तीखण्ड के पूर्वार्द्ध अवन्तीमाहात्म्य के भाग को विज्ञ पुराणप्रेमी विद्वद्वर्ग को समर्पण करते हुए अतीव आनन्द हो रहा है। इस भाग में वर्णित विषयानुक्रम का विवरण इस प्रकार है। यह नारदपुराण में बृहदुपाख्यानस्थ चतुर्थ पाद की १०४ अध्याय में प्रतिपादित है।

---

पञ्चमे अवन्ती खण्डे :—

"अतः परं त्ववन्त्याख्यं शृणु खण्डञ्च पञ्चकम्।
महाकालवनाख्यानं ब्रह्मशीर्षच्छिदा ततः॥
प्रायश्चित्तविधिश्चाग्नेरुत्पत्तिश्च समागमः।
देवदीक्षा शिवस्तोत्रं नानापातकनाशनम्॥

कपालमोचनाख्यानं महाकालवनस्थितिः। तीर्थंकलकलेशस्यसर्वपापप्रणाशनम्
कुण्डमप्सरसञ्ज्ञञ्च सर्गोरुद्रस्य पुण्यदम्। कुटुम्बेशञ्च विद्याध्रमर्कटेश्वरतीर्थकम्॥
स्वर्गद्वारं चतुःसिन्धुतीर्थं शङ्करवापिका। शङ्करार्कगन्धवती तीर्थंपापप्रणाशनम्
दशाश्वमेधैकानंशा तीर्थे चहरिसिद्धिदम्। पिशाचकादियात्राचहनूमत्कयमेश्वरौ
महाकालेव ( कालस्य ) यात्रा च वल्मीकेश्वरतीर्थकम्।
शक्रेशमेशोपाख्यानं कुशस्थलयाः प्रदक्षिणम्॥

ब्रह्माजी ने मरीचि ऋषि को सम्बोधन कर कहा हे महर्षे ! इसके बाद अवन्ती नामवाले पञ्चमखण्ड का विवरण आप सुनिये। श्रीगणेश में महाकाल वनका आख्यान ब्रह्मशिरके छेदन के साथ प्रायश्चित्त विधि अग्निदेव की उत्पत्ति और समागम, देवदीक्षा, नानापापों को नाश करनेवाले शिवशङ्कर का स्तोत्र कपालमोचन का आख्यान, महाकालवन की स्थिति सम्पूर्ण पापों को नाशकरनेवाले कलकलेश तीर्थ का वर्णन, अप्सरो नाम के कुण्ड का प्रतिपादन है जो रुद्रसर्ग में पुण्यदायक है। कुटुम्बेश, विद्याधर, मर्कटेश्वरतीर्थ स्वर्गद्वार, चतुःसिन्धुतीर्थ, शङ्करवापी, दशाश्वमेध, एकानंशा,

---

अक्रूरमन्दाकिन्यङ्कपादचन्द्रार्कवैभवम् । करभेशकुक्कुटेशलड्डुकेशादितीर्थकम्
मार्कण्डेशं यज्ञवापी सोमेशंनरकान्तकम् । केदारेश्वररामेशसौभाग्येशनरार्ककम्
केशार्कं शक्तिभेदञ्च स्वर्णक्षुरमुखानि च ।
ओङ्कारेशादितीर्थानि अन्धकस्तुतिकीर्त्तनम् ॥
कालारण्ये लिङ्गसङ्ख्या स्वर्णश्रृङ्गाभिधानकम् ।
कुशस्थल्या अवन्त्याश्चोज्जयिन्याभिधानकम् ॥
पद्मावती कुमुद्वत्यमरावतीति नामकम् ।
विशाला प्रतिकल्पाभिधाने च ज्वरशान्तिकम् ॥
शिप्रास्नानादिकफलं नागोन्मीता शिवस्तुतिः ।
हिरण्याक्षवधाख्यानं तीर्थं सुन्दरकुण्डकम् ॥
नीलगङ्गापुष्कराख्यंविन्ध्यावासनतीर्थकम् ।
पुरुषोत्तमाधिमासं च तत्तीर्थञ्चाघनाशनम् ॥
गोमतीवामनेकुण्डे विष्णोर्नामसहस्रकम् । वीरेश्वरसरः कालभैरवस्य च तीर्थके
महिमा नागपञ्चम्यां नृसिंहस्यजयन्तिका । कुटुम्बेश्वरयात्राचदेवसाधककीर्त्तनम्
कर्कराजाख्यतीर्थञ्च विघ्नेशादि सुरोहनम् । रुद्रकुण्डप्रभृतिषु बहुतीर्थनिरूपणम्

भगवान् हरि की सिद्धि देनेवाले तीर्थ का वर्णन है। पिशाचक आदि की यात्रा, हनुमत्केश्वर और यमेश्वर तीर्थ, महाकालेश की यात्रा, वल्मीकेश्वरतीर्थ शक्रेशमेशोपाख्यान, कुशस्थलीकी परिक्रमा, अक्रूरेश,मन्दाकिनी, अङ्कपाद,चन्द्र, सूर्यवैभव, करभेश, कुक्कुटेश, लड्डुकेश आदितीर्थ प्रतिपादित है। मार्कण्डेश, यज्ञवापी, सोमेश, नरकान्तक, केदारेश्वर, रामेश, सौभाग्येश, नरार्क, केशार्क, शक्तिभेद, स्वर्णक्षुरमुख, ओङ्कारेशादितीर्थ, अन्धकस्तुति कीर्तनवर्णन है। आगे कालारण्य में लिङ्गों की गणना, स्वर्णश्रृङ्गनामकतीर्थ का सविस्तर प्रतिपादन है। कुशस्थली, अवन्ती और उज्जयिनी नाम की प्रसिद्धि पद्मावती, कुमुद्वती, अमरावती ये नाम कैसे पड़े इसका विवरण है।

---

यात्राष्टतीर्थजापुण्यारेवामाहात्म्यमुच्यते। धर्मपुण्यस्यवैराग्येमार्कण्डेयेनसङ्गमः

प्राग्लयानुभवाख्यानं अमृतापरिकीर्त्तनम्।

कल्पे कल्पे पृथक् नाम नर्म्मदायाः प्रकीर्त्तितम्॥

स्तवमार्षंनार्मदश्च कालरात्रिकथाततः। महादेवस्तुतिःपश्चात्पृथक्कल्पकथाद्भुता

विशल्याख्यानकं पश्चाज्जालेश्वरकथा तथा।

गौरीव्रतसमाख्यानं त्रिपुरज्वालनन्ततः॥

देहपातविधानञ्च कावेरीसङ्गमस्ततः। दारुतीर्थं ब्रह्मवज्रं यन्त्रेश्वरकथानकम्॥

अग्नितीर्थं रवितीर्थं मेघनादादिदारुकम्। देवतीर्थं नर्मदेशं कपिलाख्यकरञ्जकम्

कुण्डलेशं पिप्पलादं विमलेशञ्च शूलभित्॥

शचीहरणमाख्यातमन्धकस्यवधस्ततः। शूलभेदोद्भवो यत्र दानधर्माःपृथग्विधाः

आख्यानं दीर्घतपसऋष्यश्रृङ्गकथा ततः।

चित्रसेनकथा पुण्या काशिराजस्य मोक्षणम्॥

ततो देवशिलाख्यानं शवरीचरिताचितम्।

व्याधाख्यानं ततः पुण्यं पुष्करिण्यर्कतीर्थकम्॥

विशाला, प्रतिकल्प के अभिधान में ज्वरशान्ति, शिप्रा नदी में स्नान आदि आदि का फल, नागकृत शिवजी की स्तुति, हिरण्याक्ष के वध का आख्यान, सुन्दरकुण्डतीर्थ का वर्णन, नीलगङ्गा पुष्कराख्यान, विन्ध्यावासनतीर्थ, पुरुषोत्तमाधिभास और पापनाशक उस तीर्थ का वर्णन, गोमतीवामनकुण्ड, विष्णु का सहस्रनाम, वीरेश्वरसरोवर और कालभैरवतीर्थ, नागपञ्चमी में महिमा, नृसिंह की जयन्ती, कुटुम्बेश्वर यात्रा और देवसाधक का विवरण है। कर्कराज नामकतीर्थ, विघ्नेशादितीर्थ, रुद्रकुण्ड आदि में बहुत तीर्थों का निरूपण है।

---

आदित्येश्वरतीर्थञ्चशक्रतीर्थंकरोटिकम्। कुमारेशमगस्त्येशंच्यवनेशञ्च मातृजम्
लोकेशं धनदेशञ्च मङ्गलेशञ्च कामजम्। नागेशञ्चापिगोपारं गौतमं शङ्खचूड़जम्॥
नारदेशं नन्दिकेशं वरुणेश्वरतीर्थकम्। दधिस्कन्दादितीर्थानि हनूमन्तेश्वरन्ततः॥

रामेश्वरादि तीर्थानि सोमेशं पिङ्गलेश्वरम्।
ऋणमोक्षं कपिलेशं पूतिकेशं जलेशयम्॥
चण्डार्कयमतीर्थञ्च कलहोडीशञ्च नान्दिकम्।
नारायणञ्च कोटीशं व्यासतीर्थं प्रभासिकम्॥

नागेशं सङ्कर्षणकं मन्मथेश्वरतीर्थकम्। एरण्डीसङ्गमं पुण्यं सुवर्णशिलतीर्थकम्

करञ्जं कामहं तीर्थं भाण्डीरं रोहिणीभवम्।
चक्रतीर्थं धौतपापं स्कान्दमाङ्गिरसाह्वयम्॥
कोटितीर्थमयोन्याख्यमङ्गाराख्यत्रिलोचनम्।
इन्द्रेशं कम्बुकेशञ्च सोमेशं कोहनेशकम्॥

नार्म्मदं चार्कमाग्नेयं भार्गवेश्वरमुत्तमम्। ब्राह्मं दैवं च भागेशमादिवाराहणं कवे

रामेशमथ सिद्धेशमाहात्म्यं कङ्कटेश्वरम्।
शाक्रं सौम्यञ्च नान्देशं तापेशं रुक्मिणीभवम्॥

आगे अष्टतीर्थों की पुण्यकथाका निरूपण किया गया है उससे रेवामाहात्म्य आरम्भ होता है। धर्म्मपुण्य (राजायुधिष्ठिर)के वैराग्य होने पर मार्कण्डेय के साथ सङ्गम, प्रथमलय आदिका वर्णन, अमृताका परिकीर्तन, कल्प कल्प में नर्म्मदाका पृथक् नाम बताया है। नर्मदाजीका ऋषिप्रणीतस्तोत्र और कालरात्रि की कथा के बाद विभिन्न पृथक् कल्पों की अद्भुत कथा, विशल्याख्यान और फिर जालेश्वर कथा, गौरीव्रत का समाख्यान के अनन्तर त्रिपुरा का ज्वालन, देहपातविधान, कावेरी सङ्गम, दारुतीर्थ, ब्रह्मवर्ज्ज, ईश्वर कथानक, अग्नितीर्थ

---

योजनेशं वराहेशंद्वादशीशिवतीर्थके। सिद्धेशं मङ्गलेशञ्च लिङ्वाराहतीर्थकम्
कुण्डेशं श्वेतवाराहं भार्गवेशं रवीश्वरम्।
शुक्लादीनि च तीर्थानि हूँकारस्वामितीर्थकम्॥
सङ्गमेशं नारकेशं मोक्षं सार्पञ्च गोपकम्।
नागं साम्बञ्च सिद्धेशं मार्कण्डाक्रूरतीर्थके॥
कामोदशूलारोपाख्योमाण्डव्यंगोपकेश्वरम्। कपिलेशंपिङ्गलेशंभूतेशंगांगगौतमे
आश्वमेधं भृगुकच्छं केदारेशञ्च पापनुत्। कनखलेशं जालेशं शालग्रामं वराहकम्
चन्द्रप्रभासमादित्यं श्रीपत्याख्यञ्च हंसकम्।
मूलस्थानञ्च शूलेशमाम्नायाचित्रदैवकम्
शिखीशं कोटितीर्थञ्च दशकन्यं सुवर्णकम्।
ऋणमोक्षं भारभूतिरत्रास्ते पुङ्खमुण्डिमम्॥
आमलेशं कपालेशं शृङ्गेरण्डीभवन्ततः। कोटितीर्थं लोटनेशं फलस्तुतिरतःपरम्
द्रुमिजङ्गलमाहात्म्ये रोहिताश्वकथाततः।
धुन्धुमारसमाख्यानं वधोपायस्ततोऽस्य च॥
वधो धुन्धोस्ततः पश्चात् सतश्चित्रवहोद्भवः।
महिमाऽस्य ततश्चण्डीशप्रभाघोरतीश्वरः॥

रवितीर्थ, मेघनाद और दारुकतीर्थों का वर्णन है। देवतीर्थ, नर्म्मदेश, कपिलाख्य, करञ्जक, कुण्डलेश, पिप्पलाद, चिमलेश और शूलभित् शची (इन्द्राणी) का हरण फिर अन्धक का वध, शूलभेदोद्भवतीर्थ के प्रसङ्ग में नानाप्रकार के दानधर्म, दीर्घतपा का आख्यान, फिर ऋष्यश‍ृङ्ग की कथा, चित्रसेन का पवित्र पुण्यचरित्र, काशिराज का मोक्षण, बाद में शवरी के चरित के सहित देवशिलाख्यान का विवरण है। फिर पुण्यव्याधाख्यान और पुष्करिणी अर्कतीर्थ, आदित्येश्वरतीर्थ, शक्रतीर्थ, करोटिक, कुमारेश, अगस्त्येश, च्यवनेश, मातृतीर्थ, लोकेश, धनदेश, मङ्गलेश, कामतीर्थ, नागेश, गोपार, गौतम, शङ्खचूडतीर्थ, नारदेश, नन्दिकेश, वरुणेश्वरतीर्थ, दधिस्कन्द आदि तीर्थों के बाद हनूमन्तेश्वर रामेश्वरादितीर्थ, सोमेश, पिङ्गलेश, ऋणमोक्ष, कपिलेश, दूतिकेश, जलेशय, चण्डार्क, यमतीर्थ, कल्होडीश, नान्दिक, नारायण, कोटीश, व्यासतीर्थ, प्रभासिक, नागेश, सङ्कर्षणक, मन्मथेश्वरतीर्थ, एरण्डीसङ्गम नामकतीर्थ, सुवर्णशिलतीर्थ नाम का पुण्य तीर्थ, करञ्ज, कामहतीर्थ,भाण्डार, रोहिणीभव, चक्रतीर्थ,धौतपाप, स्कान्द और आङ्गिरस, कोटितीर्थ, अयोन्याख्य, अङ्गाराख्य, त्रिलोचन, इन्द्रेश, कम्बुकेश, सोमेश, कोहनेश, नार्मद, आर्क, आग्नेय, भार्गवेश्वर, उत्तमतीर्थ, ब्राह्म, दैव, भागेश, आदिवाराह, रामेश, सिद्धेश का माहात्म्य, कङ्कटेश्वर, शक्रतीर्थ, सौम्य, नान्देश, तापेश, और रुक्मिणीभव, योजनेश, वराहेश, द्वादशी व शिवतीर्थ, सिद्धेश, मङ्गलेश, लिङ्गवाराहतीर्थ, कुण्डेश, श्वेतवाराह, भार्गवेश, रवीश्वर, शुक्लादितीर्थ, हुङ्कारस्वामितीर्थ, सङ्गमेश, नारकेश

---

केदारेशो लक्षतीर्थं ततोविष्णुपदीभवम्। मुखारंच्यवनान्धाख्यंब्रह्मणश्चसरस्ततः
चक्राख्यं ललिताख्यानंतीर्थञ्चबहुगोमथम्। रुद्रावर्त्तञ्चमार्कण्डंतीर्थंपापप्रणाशनम्
रावणेशं शुद्धपटं देवान्धुर्प्रेततीर्थकम्। जिह्वोदतीर्थसम्भूतिःशिवोद्भेदंफलस्तुतिः
एष खण्डो ह्यवन्त्याख्यः श‍ृण्वतां पापनाशनः।

मोक्ष, सर्प और गोपकतीर्थ, नाग, साम्ब; सिद्धेश, मार्कण्डेय, अक्रूरतीर्थ, कामोदशूलारोप, माण्डव्य, गोपकेश्वर, कपिलेश, पिङ्गलेश, भूतेश, और गाङ्ग तथा गौतमतीर्थ, आश्वमेध, भृगुकच्छ, केदारेश पापनुत् (धौतपाप) हैं, कनखलेश, जालेश, शालग्राम, वराहक, चन्द्रप्रभास, आदित्य, श्रीपत्याख्य, हंसतीर्थ, मूलस्थान, शूलेश, 'आश्वायश्वित्रदैवकम्' ( आश्विन, सावित्रीतीर्थ देवतीर्थ ) शिखीश, कोटितीर्थ, दशकन्य, सुवर्ण, ऋणमोक्ष, भारभूति, पुङ्खमुण्डिम, आमलेश, कपालेश, शृङ्ग, एरण्डीभव तीर्थ, कोटितीर्थ, लोटणेश, फिर फलस्तुति का वर्णन है। *द्रुमिजङ्गल का माहात्म्य, रोहिताश्व की कथा, धुन्धुमार का आख्यान, धुन्धुमार के वध का उपाय, धुन्धुमार का वध, सतश्चित्रवह की उत्पत्ति। चित्रवह की महिमा, चण्डीशप्रभाव,रतीश्वर, केदारेश, लक्षतीर्थ, त्रिष्णुपदीभव, मुखारच्यवनान्धतीर्थ, ब्रह्मसर, चक्रतीर्थ, ललिताख्यान, बहुगोमथतीर्थ, रुद्रावर्त्त और पापों का नाश करनेवाला तीर्थ रावणेश, शुद्धपटतीर्थ, देवान्धुतीर्थ, प्रेततीर्थ, जिह्वोदतीर्थ का आविर्भाव, शिवोद्भेदतीर्थ और इस आवन्त्यखण्ड की फलस्तुति का निरूपण है। यह अवन्ती नाम का खण्ड सुननेवाले का पाप नाश करने वाला है।

इस खण्ड की आदर्शप्रति पूर्वानुगत वेङ्कटेश्वरमुद्रणालय बम्बई ( महाराष्ट्र ) नवलकिशोर प्रेस, लखनऊ और बङ्गवासी प्रेस, कलकत्ता के बङ्गाक्षर मुद्रित ग्रन्थहैं। इनमें अवन्ती खण्ड में उपलब्ध चतुरशीति लिङ्गमाहात्म्य केवल वेङ्कटेश्वर मुद्रणालय और बङ्गवासी मुद्रणालय से मुद्रित ग्रन्थ प्राप्त होने पर

---

* द्रुमिजङ्गल माहात्म्य से ग्रन्थ के शिवोद्भेद पाठतक का अंश जो अधिक से अधिक कितने हजार श्लोकों में पूरा हो सकने का ठीक अनुमान नहीं है वह प्रचलित प्रकाशित अवन्ती खण्ड में अनुपलब्ध है इसकी विशेष अनुसन्धानपूर्वक उपलब्धि कराकर प्रकाशन करने की विनम्र प्रार्थना है।

उसे ही दिया गया है। कारण नवलकिशोर मुद्रणालय लक्ष्मणपुर [ लखनऊ ] से प्रकाशित अवन्ती खण्ड में अवन्ती खण्ड माहात्म्य के आगे चतुरशीति-लिङ्गमाहात्म्य की ८४ अध्याय नहीं है और आगे रेवा खण्ड में ११६ अध्याय है, जो उपर्युक्त दोनों ग्रन्थों के समान प्रायः रेवा खण्ड से भिन्न है विद्वान् महानुभाव इस विषय में हमें मार्गदर्शन करावें यही प्रार्थना है।

आगे इस पञ्चम भाग का उत्तरार्द्ध रेवाखण्डनाम से अविकल शीघ्र प्रकाशित हो रहा है। आशा है उसकी प्रस्तुति विद्वद्वर्ग को विशेष प्रमोदावह होगी कारण उसमें रेवाखण्डस्थ सत्यनारायणव्रतकथा की चतुरध्यायी (वर्तमान प्रचलित ग्रन्थ के अनुसार पञ्चाध्यायी) का समावेश अत्यन्त सावधानतापूर्वक हुआ है।

श्रीशारदासदन पुस्तकालय लक्ष्मणगढ़ [ सीकर ] की स्थानीय प्रबन्धकारिणी समिति के पदाधिकारियों का हृदय से आभार मानता हूँ कि उन सहृदय महानुभावों की अप्रतिम सहायता से इस ग्रन्थ के अबतक के भागों का इतनी सुविधा से प्रकाशन हो सका।

अन्त में इस ग्रन्थ के सम्पादकद्वय पं० श्रीब्रह्मदत्तजी त्रिवेदी व्याकरणाचार्य एम० ए० तथा पं० रामनाथजी शास्त्री पुराणसाङ्ख्यस्मृतितीर्थ नवलगढ़ (जयपुर) की उनके आशावान् भविष्य के साथ अभिनन्दनीय कार्यों में तल्लीनतापूर्वक साफल्यमण्डन की कामना करता हुआ इस खण्ड में आई हुई शीसकाक्षर योजना पटु कार्यकारी लोगों तथा प्रेस के भूतों की अनवधानताजन्य त्रुटियों के लिये वारम्वार करबद्ध क्षमाप्रार्थी हूँ।

इस विशाल कार्य को ८११०० श्लोकों के साथ साङ्गोपाङ्ग प्रकाशित करने में आप सभी विद्वद्वर्ग सहायता प्रदान करें यह मेरी प्रार्थना है जिससे

प्रातःस्मरणीय व्यासदेव भगवान् की पुराणवाणी विश्व में हमें आदर्श ज्ञान का दिव्य कोष प्रदान कर कृतार्थ करें जिससे उन उपदेशों को जीवन में उतार कर हम "सर्वभूतहिते रताः" बन सर्वप्राणी हित में लगें।

"कामये दुःखतप्तानां प्राणिनामार्त्तिनाशनम्"

शुभमिति ज्येष्ठ शुक्ला
निर्जला एकादशी
गुरुवार २०१९ वि०
१४।६।६२

कृपाकाङ्क्षी
मनसुखराय मोर
५, क्लाइव रो, कलकत्ता—१

---



* श्रीगणेशायनमः *

# स्कन्दपुराणान्तर्गतपञ्चमावन्तिखण्डस्य [पूर्वार्द्धस्य] विषयानुक्रमणिका

समाप्ताचेयंस्कन्दपुराणान्तर्गतपञ्चमावन्तीखण्डस्य ( पूर्वार्द्धस्य )

विषयानुक्रमणिका।

इतिविद्वज्जनकृपाभिलाषिणौ लक्ष्मणदुर्गाभिजन ( लक्ष्मणगढ़-सीकरनिवासि )

ब्रह्मदत्तत्रिवेदि—नवलदुर्गवास्तव्य ( नवलगढ़-जयपुरनिवासि )

रामनाथमिश्रदाधीचौ।

शुभम्भूयात्

———

प
२०५

* श्रीगणेशायनमः *

॥ ॐ नमोभगवतेवासुदेवाय ॥

श्रीमन्महर्षिवेदव्यासप्रणीतम्

# स्कन्दपुराणम्

—:*:—

## तस्येदं पञ्चममवन्तीखण्डम्प्रारभ्यते

### प्रथमोऽध्यायः

मङ्गलाचरणपूर्वकंमहाकालवनप्रशंसावर्णनम्

स्रष्टारोऽपि प्रजानां प्रबलभवभयाद्यं नमस्यन्ति देवा-
यश्चित्ते सम्प्रविष्टोऽप्यवहितमनसां ध्यानयुक्तात्मनां च ।
लोकानामादिदेवः स जयतुभगवाञ्छ्रीमहाकालनामा;
बिभ्राणः सोमलेखामहिवलययुतं व्यक्तलिङ्गं कपालम् ॥ १॥

उमोवाच

पृथिव्यां यानि तीर्थानि पुण्याश्चसरितस्तथा ।
कथ्यतां तानि यत्नेन श्राद्धं येषु प्रदीयते ॥ २ ॥

ईश्वर उवाच

अस्तिलोकेषुविख्याता गङ्गात्रिपथगानदी। सेवितादेवगन्धर्वैर्मुनिभिश्चनिषेविता
तपनस्यसुतादेवी यमुनालोकपावनी। पितृणांवल्लभादेवि! महापातकनाशिनी ॥ ४
चन्द्रभागावितस्ताच नर्म्मदाऽमरकण्टकम्। कुरुक्षेत्रंगयांदेवि! प्रभासंनैमिषन्तथा
केदारंपुष्करञ्चैव तथाकायावरोहणम्। तथापुण्यतमन्देविमहाकालवनं शुभम् ॥ ६॥
यत्रास्तेश्रीमहाकालः पापेन्धनहुताशनः। क्षेत्रंयोजनपर्यन्तं ब्रह्महत्यादिनाशनम् ॥ ७
भुक्तिदं मुक्तिदं क्षेत्रं कलिकल्मषनाशनम्। प्रलयेऽप्यक्षयंदेवि दुष्प्रापं त्रिदशैरपि ॥

उमोवाच

प्रभावः कथ्यतां देव! क्षेत्रस्याऽस्य महेश्वर!।
यानि तीर्थानि विद्यन्ते यानि लिङ्गानि सन्ति वै ॥ ९ ॥
तान्यहं श्रोतुमिच्छामि परं कौतूहलं हि मे ॥ १० ॥

महादेव उवाच

शृणुदेविप्रयत्नेन प्रभावंपापनाशनम्। क्षेत्रमाद्यंमहादेवि! सर्वपापप्रणाशनम् ॥ ११॥
श्रीमेरोस्सन्निधाने यच्छिखरं रत्नचित्रितम्। वैराजभवनंनाम ब्रह्मणः परमात्मनः ॥
तत्रदिव्याङ्गनागीतमधुरस्वरनादिता। पारिजाततरुच्छन्नमञ्जरीदामशोभिता ॥ १३
बहुवाद्यसमुत्पन्नसुमहास्वननादिता। लयतालयुतानेकगीतवादित्रनादिता ॥
विन्यस्ता कोटिभिः स्तम्भैर्निर्मलादर्शशोभिता ॥ १४ ॥
अप्सरोनृत्यविन्यासविलासोल्लासशोभिता।
सभाकान्तिमतीनाम्नी देवानां हर्षदायिका ॥ १५ ॥
तस्यांनिविष्टं वागीशशङ्कराराधने रतम्। सनत्कुमारंब्रह्मर्षिं ब्रह्मणोमानसं सुतम्
मुनिमध्यात्समुत्थाय कृष्णद्वैपायनो मुनिः।
पराशरसुतोव्यासः प्रणिपत्य यथाविधि ॥ १७ ॥
कृताञ्जलिपुटोभूत्वा भवभक्त्यानुभावितः। पप्रच्छपरयातुष्ट्या हृषितां गरुडाननः॥
महाकालस्य माहात्म्यं प्राणिनां मोहनाशनम्।

व्यास उवाच

भगवन्! क्षेत्रमाहात्म्यं महाकालस्य कथ्यताम् ॥ १६ ॥

महाकालवनंकस्मात् प्रोच्यतेसर्वतोवरम् । कथं गुह्यवनं प्रोक्तं पीठंसऊषरन्तथा ॥

फलंयथास्यक्षेत्रस्य मृतानाञ्चगतिर्यथा । स्नानेनयद्भवेत्पुण्यं दानेनापिचयत्फलम् ॥

कथमेतच्छ्मशानञ्च क्षेत्रं प्रोक्तं यथातथा । पृष्टोमेशङ्करेभक्ति ब्रूहि त्वं शास्त्रकोविद

सनत्कुमार उवाच

क्षीयतेपातकंयस्मात् तेनेदंक्षेत्रमुच्यते । यस्मात्स्थानञ्चमातॄणां पीठन्तेनैवकथ्यते

मृताः पुनर्नजायन्ते तेनेदमूषरं स्मृतम् । गुह्यमेतत् प्रियन्नित्यं क्षेत्रंशम्भोर्महात्मनः

यस्मादिष्टंहिभूतानां श्मशानमतिवल्लभम् । महाकालवनंयच्च तच्चैवापिविमुक्तिकम्

एकाम्रकंभद्रकालं करवीरवनन्तथा । कोलागिरिस्तथा काशीप्रयागममरेश्वरम् ॥

भरतंचैव केदारं दिव्यं रुद्रमहालयम् । दिव्यश्मशानान्येतानिरुद्रस्येष्टानिनित्यशः ॥

रमतेभगवानेषु सिद्धिक्षेत्रेषु सर्वदा । पृथिव्यान्नैमिषंतीर्थमुत्तमं तीर्थपुष्करम् ॥ २८

त्रयाणामपिलोकानां कुरुक्षेत्रं च शस्यते । कुरुक्षेत्राद्दशगुणा पुण्यावाराणसीमता ॥

तस्माद्दशगुणंव्यास! महाकालवनोत्तमम् । प्रभासाद्यानितीर्थानिपृथिव्यामिहयानितु

प्रभासमुत्तमंतीर्थं क्षेत्रमाद्यंपिनाकिनः । श्रीशैलमुत्तमंतीर्थं देवदारुवनंतथा ॥ ३१ ॥

तस्मादप्युत्तमा व्यास! पुण्या वाराणसी मता ।

तस्माद्दशगुणं प्रोक्तं सर्वतीर्थोत्तमं यतः ॥ ३२ ॥

महाकालवनंगुह्यंसिद्धिक्षेत्रंतथोषरम् । किञ्चिद्गुह्यान्यथान्यानिश्मशानान्यूषराणिच

सर्वतस्तुसमाख्यातं महाकालवनंमुने !। श्मशानमूषरं क्षेत्रं पीठन्तु वनमेवच ॥ ३४॥

पञ्चैकत्र न लभ्यन्ते महाकालपुराद्वते ॥ ३५ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे महाकालवनप्रशंसानामप्रथमोऽध्यायः ॥ १ ॥

---

# द्वितीयोऽध्यायः

## ब्रह्मशिरश्छेदवर्णनम्

सनत्कुमार उवाच

पुरात्वेकार्णवेप्राप्ते नष्टे स्थावरजङ्गमे । नाग्निर्नवायुरादित्यो न भूमिर्नदिशोनभः ॥१॥
ननक्षत्राणिनज्योतिर्नद्यौर्नेन्दुर्ग्रहास्तथा । नदेवासुरगन्धर्वाः पिशाचोरगराक्षसाः ॥
सरांसिनैवगिरयो नापगा नोह्रदास्तथा । सर्वमेवतमोभूतं न प्राज्ञायत किञ्चन ॥ ३

तदैको हि महाकालो लोकानुग्रहकारणात् ।
तस्थौ स्थानान्यशेषाणि काष्ठास्वालोकयन् प्रभुः ॥ ४ ॥

सृष्ट्यर्थंसमहाकालःकरेकाष्ठंप्रतिष्ठितम् । दक्षिणस्यतुतर्जन्या निर्ममन्थाविशेषितम्
कललंबुद्बुदं भूत्वा तीव्रवेगविवर्द्धितम् । जज्ञे तदण्डं सुदृढं सुष्ठुवृत्तं हिरण्मयम् ॥
करेणताडितंतद्धिबभूवद्विदलंमहत् । अधः खण्डंस्मृताभूमिरूर्ध्वंद्यौस्तारकान्वितम्
मध्येऽभवत्तदाब्रह्मा पञ्चवक्त्रश्चतुर्भुजः । महेश्वरोऽनुमान्यैतमयोजयदनन्तरम् ॥ ८

कुरु सृष्टिं महाबाहो! त्वचित्रां मदनुग्रहात् ।
इत्युक्त्वाऽन्तर्हितः क्वाऽपि देवो ब्रह्मा न ज्ञातवान् ॥ ६ ॥

प्रेर्यमाणोऽपिवैस्रष्टुं नाभूद्देवमचिन्तयत् । ब्रह्मणाध्यायमानश्च ज्ञानार्थंभगवान्भवः
ब्रह्मणस्तपसा तुष्टः प्रादाद्वेदंषडङ्गकम् । लब्धेवेदेऽपिनचिरात् सृष्टिंकर्तुंशशाकसः॥
तपसाराधयद्भूयः समाराधयितुंभवम् । नापश्यत्सयदादेवं तदा तुष्टाव भावतः ॥

ब्रह्मोवाच

नमः शिवायाऽमलसत्त्वचेतसे गुणत्रयातीतविसारितेजसे ।
षडङ्गवेदस्यममाऽपि वेधसः परस्यरूपानुभवाय चक्षुषे ॥ १३ ॥
नमोऽस्तुते सृष्टिविधौरजोजुषे जगत्स्थितौसत्त्वमधिष्ठिताय ते ।
विनाशहेतौतमसोपयोगिने शिवाय निर्वाणसुखप्रदायिने ॥ १४ ॥

अशेषभूतप्रकृतेः पराय वै परात्मरूपाय नमः शिवाय वै ।
नबुद्ध्यहङ्कारमनोविधाय धात्रे च षड्विंशकरूपकाय ॥ १५ ॥
भूवायुवह्न्यम्बरवारिचन्द्रसूर्यात्मरूपाभिरिदन्तनूभिः ।
व्याप्तंजगद्यस्यनमोऽस्तु तस्मै भूतं भविष्यं त्वथ वर्तमानम् ॥ १६ ॥
यानीहतेजांसि जगन्तियानि भूतानि भव्यान्यथ कारणानि ।
भवन्ति सृष्टौ विलयं विनाशे व्रजन्ति यस्याऽऽत्मनि तं नमामि ॥ १७ ॥

सनत्कुमार उवाच

एवंसंस्तुवतोव्यास! ब्रह्मणोभगवान्परः । अन्तर्हित उवाचेदं ब्रह्मन्संवाच्यतांवरः ॥
सवत्रेमनसापुत्रं भवंगौरवकारणात् । विज्ञायान्तर्गतंतस्य परमेश उवाच तम् ॥१६
यस्मान्मांमनसापुत्रंचतुर्मुख!समीहसे । कस्मिंश्चित्कारणेतस्मादहंछेत्स्यामितेशिरः

अयाच्यं याचितं यस्मान्ममांऽशो नीललोहितः ।
रुद्रो भविष्यति सुतः स च ते हिंस्यति प्रभाम् ॥ २१ ॥
अन्यद्यस्मात्स्मृतो भक्त्या त्वयाऽहं पितृभावतः ।
परब्रह्मस्वरूपेण जिज्ञासा मम या कृता ॥ २२ ॥

तस्माद्ब्रह्मे तिलोकेत्रनामख्यातंभविष्यति । पितामहत्वंयेनापिततोह्यसिपितामहः
लब्ध्वा शापवरावेवं पुत्रसृष्टिंचकारसः । स्वतेजोजनितंवह्निं जुह्वतः स्वेदआवहत्
समिद्युक्तेनहस्तेनललाटंमार्जतोऽभवत् । छिन्नंभृष्टस्ततोरक्तबिन्दुरेकोविभावसौ
सनीललोहितोभूयात्सचरुद्रो भवाज्ञया । तदनन्तरमासाद्य उत्ततार सुतोऽन्तिकात्
पञ्चवक्त्रोदशभुजो शूलचापासिशक्तिमान् । त्रिपञ्चनयनोरौद्रो व्यालयज्ञोपवीतकः
सेन्दुं कपर्दं बिभ्राणः सिंहचर्मधरोवरः । जातमेवंसुतंदृष्ट्वा ब्रह्मानामाकरोत्तदा ॥२८॥

नीललोहितनामेति भवरुद्रपिनाकधृक् ।
ततः प्रववृते सृष्टिः स्रष्टुर्लोकपितामहात् ॥ २९ ॥

सप्तादौमानसाञ्ज्ञे सनकादींस्ततोपरान् । मरीचिदक्षप्रभृतीन्मन्वादींश्चततोऽसृजत्
अष्टभेदान्सुरान्कृत्वा तिर्यग्योनिश्च पञ्चधा । मनुष्यानेकभेदांश्च सृष्टिमेवं ससर्जह॥

सृष्टिःसुरादिकाजाताकृत्वाब्रह्माणमप्यधः । प्रणम्याथसिषेवुस्तेकेवलंनीललोहितम्
ततोब्रह्माऽवदद्रुद्रमपूज्योऽहंत्वयाकृतः । स्वतेजसाभनान्पूज्योयतोयाहिहिमालयम्
तन्नीललोहितोऽप्युक्त्वा भवता नाऽर्चितो ह्यहम् ।
ततो जगाम रुद्रोऽसौ स यत्र भगवान्भवः ॥ ३४ ॥
ततो ब्रह्माऽभवन्मूढो रजसा चोपबृंहितः । ततापतेजसासृष्टिमन्यमानोह्यपाकृताम्
मत्तुल्योनास्तिवैदेवो येनसृष्टिः प्रवर्द्धिता । सदेवासुरगन्धर्वपशुपक्षिमृगाकुला ॥
एवंमूढस्सपञ्चास्यो विरञ्चिसृष्टिदर्पितः । प्राग्वक्त्रंसुस्वरंतस्यऋग्वेदस्यप्रवर्तकम्
द्वितीयंवदनंतस्य यजुर्वेदप्रवर्तकम् । तृतीयं वदनन्तस्य सामवेदप्रवर्तकम् ॥ ३८ ॥
चतुर्थंवदनञ्चास्याऽथर्ववेदप्रवर्तकम् । साङ्गोपाङ्गेतिहासांश्चसरहस्यान्ससङ्ग्रहान्
वेदानधीत्यवक्त्रेण पञ्चमेनससर्जसः । तस्यासुरास्सुरास्सर्वे वक्त्रस्याद्भुततेजसः
तेजसा न प्रकाशन्ते दीपास्सूर्योदये यथा ।
सपुत्रा अपि सोद्वेगा बभूवुर्नष्टचेतसः ॥ ४१ ॥
नाभिगन्तुं न द्रष्टुञ्च चिरन्तेनोपसर्पितुम् । अभिभूतमिवात्मानंमन्यमानाअचिद्विषः
सर्वे ते मन्त्रयामासुर्देवावैहितमात्मनः । गच्छाम शरणं देवं निष्प्रज्ञा ब्रह्मतेजसा ॥
किं तस्यैव न जानीमः स्थानं यत्र व्यवस्थितम् ।
तम्भीममत्र द्रक्ष्यामो भक्त्या नान्येन केनचित् ॥ ४४ ॥
एवं संमन्त्र्य ते देवाः कृताञ्जलिपुटास्तदा । चक्रुःस्तोत्रंमहेशस्य परयास्वरसम्पदा

देवाऊचुः

नमस्ते देवदेवेश महेश्वरनमोनमः । न विद्मः परमं मूढा अभिधानं तवाऽतुलम् ॥
यद्योगेनपरंब्रह्म भूताना त्वं सनातनः । प्रतिष्ठा सर्वभूतानां हेतुस्सर्वस्य सर्जने ॥
बिभर्ति चैव नेत्रस्थान् सोमसूर्यविभावसून् ।
नामसङ्कीर्तनादेव मुच्यन्ते जन्तवोऽशुभात् ॥ ४८ ॥
पृथिव्यम्ब्वग्निचन्द्रार्क व्योमवायूपलक्षणाः । मूर्तयस्तेमहादेवव्याप्तमाभिरशेषतः
रजःसत्त्वतमोभावैर्भ्राम्यमाणंत्वयाजगत् । नावबुद्ध्यति सर्वेश! सर्वमूर्तिधरोयतः

ब्रह्मादीनां सुरेशानां सम्मोहनविमोहनः। त्वङ्करोषियुगावर्तं कालेकालेचदुस्सहम्
सनत्कुमार उवाच
एवंसंस्तूयमानोऽसौ देवर्षिपितृमानवैः। अन्तर्हितउवाचेदं देवाब्रूतयथेप्सितम्॥
देवा ऊचुः
प्रत्यक्षं दर्शनं स्थाणो ! प्रार्थयामस्सदा तव।
त्वया कारुण्यतोऽस्माकं वरश्चापिप्रदीयताम्॥ ५३॥
यदस्माकंमहद्वीर्यं यश्चास्माकंपराक्रमः। तत्सर्वं ब्रह्मणेग्रस्तं पञ्चमास्यस्यतेजसा
विनेशुःसर्वतेजांसि त्वत्प्रसादात्पुनर्विभो !। जायन्तेतद्यथापूर्वं तथाकुरु महेश्वर!॥
सनत्कुमार उवाच
प्रत्यक्षं दर्शनं दत्त्वा देवानामनुकम्पया। प्रसन्नवदनोभूत्वा देवैश्चापिनमस्कृतः॥
आश्वास्यचसुरान्सर्वान् सहदेवैर्महेश्वरः। प्रत्यक्षमेत्य पश्चाच्च चलितः शर्वएव हि॥
जगाम तत्र यत्राऽसौरजोऽहङ्कारमूर्तिमान्। देवाःस्तुवन्तोदेवेशं परिवार्यउपाविशन्
ब्रह्मातमागतन्देवं न जज्ञे तमसावृतः। सूर्यकोटिसहस्राणां तेजसाऽरञ्जयज्जगत्॥
तदाऽदृश्यत विश्वात्मा विश्वभुग्विश्वभावनः।
स पितामहमासीनं सकलं देवमण्डलम्॥ ६०॥
तेजसाभिभवन्रुद्रः स्वयम्भोरग्रतःस्थितः। रुद्रतेजोऽभिभूतश्च ब्रह्मवक्त्रंनराजते
रात्रौप्रकाशकिरणश्चन्द्रस्सूर्योदये यथा। सगर्वोत्थात्मजं दृष्ट्वा रुद्रं देवं सनातनम्॥
अभिवन्दे करेणैव देवं तत्तेजसावृतः। ततोऽट्टहासंभगवान् मुमोच शशिशेखरः॥
पश्यतां सर्वदेवानां शृण्वतां वाचमुत्कटाम्।
तेनाऽट्टहासशब्देन मोहयित्वा पितामहम्॥ ६४॥
तेजोराशिःशशङ्काभः शशाङ्कार्काग्निलोचनः।
वामाङ्गुष्ठनखाग्रेण ब्रह्मणः पञ्चमं शिरः॥ ६५॥
चकर्त कदलीगर्भं नरः कररुहैरिव। छिद्यमानञ्च वक्त्रञ्च बुबुधेन पितामहः॥६६॥
रुद्रस्यतेजसातस्मान्मोहितोननर्तिगतः। छिन्नंतस्य शिरःपश्चाद्रुद्रहस्तेस्थितं तदा

अपश्यद्दैवतैः सार्द्धं रौद्रञ्चातिभयाज्ज्वलत् । महेश्वरकरान्तस्थं नखैर्वक्त्रं विराजते
ग्रहमण्डलमध्यस्थो द्वितीय इव चन्द्रमाः ।
उत्क्षिप्य तत्कपालेन ननर्त शशिशेखरः ॥ ६९ ॥
शिखरस्थेन सूर्येण कैलासइवपर्वतः । छिन्नेवक्त्रे ततोदेवा हृष्टपुष्टावृषध्वजम् ॥
तुष्टुवुर्विविधैः स्तोत्रैर्देवदेवं कपालिनम् ।

देवा ऊचुः

नमः कपालिने नित्यं महाकालाय शङ्खिने ॥ ७१ ॥
ऐश्वर्यज्ञानयुक्ताय सर्वभोगप्रदायिने । नमो दर्पविनाशाय सर्वदेवमयाय च ॥ ७२ ॥
कालसंहारकर्ता त्वं महाकालस्ततोह्यसि । भक्तानांदुःखशमनो दुःखार्तस्तेनरोचते॥
शङ्करोप्याशु भक्तानां तेन त्वं शङ्करः स्मृतः ।
छित्त्वा ब्रह्मशिरो यस्मात्कपालं च बिभर्ति च ॥ ७३ ॥
तेनदेव ! कपालीत्वं स्तुतोह्यद्यप्रसीद नः । एवंस्तुतः प्रसन्नात्मा देवानुत्थायशङ्करः
वृन्दारकेशो भगवांस्तत्रैवाऽन्तरधीयत ॥ ७६ ॥ ७५
शशिशकलमयूखैर्भासितोयत्कपर्दस्त्वमलगगनगङ्गातोयवीचीविचेयः ॥ ७६
विधृतसितकपालोमालया यश्चकास्ति स जयति जितवेधाऊर्जितःप्राज्यतेजाः
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
ब्रह्मशिरश्छेदोनाम द्वितीयोऽध्यायः ॥ २ ॥

———

## तृतीयोऽध्यायः

### ब्रह्मणःप्रायश्चित्तकरणवर्णनम्

सनत्कुमार उवाच

छिन्नेवक्त्रेततोब्रह्मा क्रोधेनतमसावृतः। ललाटेस्वेदमुत्पन्नं गृहीत्वाऽताडयद्भुवि॥
तत्स्वेदात्कुण्डलीजज्ञे सधनुस्समहेषुधिः। सस्वर्णकवचोवीरःकिंकरोमीत्युवाचह
त्तमुवाचविरञ्चिस्तु दर्शयन्रुद्रमोजसा। वध्यतामेषदुर्बुद्धिर्जायतेनयथापुनः॥ ३॥
ब्रह्मणोवचनं श्रुत्वाधनुरुद्यम्यपृष्ठतः। सप्रतस्थेमहेशस्य बाणहस्तोऽतिरोषभृत्॥
सदृष्ट्वापुरुषं चोग्रमभवद्विस्मितोभवः। दिव्यबाणधनुर्हस्तं वेगविक्रान्तगामिनम्॥

मया नवध्योऽतिबलो सखा विष्णोर्भविष्यति।
अनुग्राह्यो ह्यहं तेन सख्यर्थं तपसि स्थितः॥ ६॥
चिन्तयन्नित्थमीशोऽपि विष्णोराश्रममभ्यगात्।
हुङ्कारध्वनिना ब्रह्मन्! मोहयित्वा ततो नरम॥ ७॥

प्रयात्येवतदाहृष्टः क्रीडांकुर्वञ्जगत्स्थितौ। यत्रनारायणः श्रीमांस्तपस्तेपेप्रतापवान्
अदृश्यस्सर्वभूतानांविश्वात्माविश्वसृग्विभुः। तत्रप्राप्तोविरूपाक्षो ददर्श मधुसूदनम्
एकाङ्गुष्ठस्थितम्भूमौ तपोरतमनातुरम्। युगान्तार्कसहस्रस्य तेजसावृतमद्भुतम्
पुण्याधारसमायुक्तं पुराणपुरुषोत्तमम्। दृष्ट्वानारायणंदेवो भिक्षान्देहीत्युवाचह॥

कपालं दर्शयित्वाऽग्रे ज्वलज्ज्वलनवत्स्थितम्।
कपालपाणिं सम्प्रेक्ष्य रुद्रं विष्णुरचिन्तयत्॥ १२॥
कोन्योयोग्यो भवेद्भिक्षुर्भिक्षादानस्य साम्प्रतम्।
योग्योऽयमिति सङ्कल्प्य दक्षिणं भुजमर्पयत्॥ १३॥

बिभेदान्तर्गतज्ञस्तं शूलेनशशिशेखरः। ततोप्रवाहउत्पन्नश्शोणितस्यविभोर्भुजात्
जाम्बूनदरसाकारो वह्निज्वालेवनिर्मलः। निष्पपातकपालान्तःशम्भुनासम्प्रतीच्छता

ऋज्वीवेगवतीक्षिप्रा दीधितीवाम्बरेरवेः । पञ्चाशद्योजनादीर्घा विस्तारेदशयोजना
दिव्यंवर्षसहस्रंसा समुवाहहरेर्भुजात् । कियन्तंकालमीशोहि भिक्षांजग्राहभावितः
दत्तांनारायणेनाथ सत्पात्रेपात्रउत्तमे । ततोनारायणः प्राह हरंपरमिदं वचः ॥ १८ ॥
सम्पूर्णंतवपात्रंहि ततोवैपरमेश्वरः । सतोयाम्बुदनिर्घोषं श्रुत्वावाक्यंहरेर्हरः ॥ १९ ॥
शशिसूर्याग्निनयनः शशिशेखरशोभितः । कपालेदृष्टिमावेश्य त्रिभिर्नेत्रैर्जनार्दनम् ॥
अङ्गुल्याघट्टयन्प्राहकपालंचातिपूरितम् । श्रुत्वाहरिश्शम्भुवाक्यं रक्तधारांसमाहरत्
कपालस्थं हरेरीशः स्वाङ्गुल्यारुधिरन्तथा । दिव्यंवर्षसहस्रंच दृष्टिपातममन्थयत्
मथ्यमानेततोरक्ते कललं बुद्बुदं क्रमात् । बभूवचततः पश्चात् किरीटीसशरासनः ॥
सहस्रबाहूरक्ताक्षो धनुर्ज्यांसंस्पृशन्मुहुः । बभूवतूणीरधरो वृषस्कन्धोऽङ्गुलित्रवान्
पुरुषोऽर्जुनसङ्काशो दिव्यमूर्तिर्बभूवह । तं दृष्ट्वा भगवान् विष्णुः प्राहरुद्रमिदं वचः
कपाले भगवन् कोऽयं प्रादुर्भूतोऽभवन्नरः । उक्तिं श्रुत्वा हरेरीशस्तमुवाचहरे शृणु
नरोनामेतिपुरुषः परमास्त्रविदांवरः । यस्त्वयोक्तोनरइति नरस्तस्माद्भविष्यति ॥

नरनारायणौ चोभौ युगे ख्यातौ भविष्यतः ।
सङ्ग्रामे देवकार्येषु लोकानां परिपालने ॥ २८ ॥

एषनारायणसखा नरस्तवभविष्यति । तवएकाकिनः सख्ये तपसश्चमहामुने !॥ २९
विज्ञानस्यपरीक्षायै तेजोलोकेभविष्यति । तेजोऽधिकमिदं दिव्यंब्रह्मणःपञ्चमंशिरः
तेजसाब्रह्मणोदीप्तं भुजस्यतवशोणितात् । ममदृष्टिनिपाताच्चत्रीणितेजांसियान्यतः
तत्संयोगात्समुत्पन्नःशत्रून्युद्धेजयिष्यति । अवध्यायेभविष्यन्ति दुर्जयास्तवचापरे
शक्रस्यचामरारीणां तेषामेषभयङ्करः । एवमुक्तवतश्शम्भोर्विस्मितस्तस्यतेजसा ॥
हरेरपिसतत्रैव तुष्टाव हरकेशवौ । नमो हर हरेतुभ्यं नमः शङ्करविष्णवे ॥ ३४॥
नमस्तेशूलहस्ताय नमस्तेखड्गपाणये । नमोनमस्ते मेध्याय हृषीकेशनमोऽस्तुते ॥ ३५
नमोऽस्तुवाचांपतये श्रीधरायनमोनमः । एवंस्तुवन्तं तं व्यास! कृताञ्जलिपुटं नरम्
तथैवाञ्जलिसम्बद्धं गृहीत्वासुकरद्वयम् । उद्धृत्याथकपालात्तु पुनर्वचनमब्रवीत् ॥
यएवपुरुषोरौद्रो ब्रह्मणः स्वेदसम्भवः । सतुहुङ्कारशब्देन मोहनिद्रामुपागतः ॥ ३८

निबोध तं चत्वरितमित्युक्त्वाऽन्तर्दधे हरः ।
नारायणस्य प्रत्यक्षं बोधयामास स्नाङ्नरम् ॥ ३९ ॥
वामपादेनतंहत्वा समुत्तस्थौनरोरुषा । तयोर्युद्धंसमभवत्स्वेदरक्तजयोर्महत् ॥ ४०
विस्फारितधनुश्शब्दैर्नादिताशेषभूतलम् । कवचंस्वेदजस्यैकं रक्तजस्यतथाभुजौ ॥
एवंसमेनवैयुद्धं दिव्यं जातन्तु भूतले । त्रिवर्षोनानि वर्षाणां शतानिदशसुद्विज !॥
युद्ध्यतोस्समतीतानि स्वेदरक्तजयोर्मुने !। रक्तजोद्विभुजोदृष्ट्वा कवचैकेनस्वेदजम् ॥
बिभेदबाणवेगेन ब्रह्मणः स्वेदजं नरम् । ससम्भ्रममुवाचेदं ब्रह्माणं मधुसूदनः ॥४४ ॥
मन्नरेणोच्छ्रितो ब्रह्मंस्त्वदीयो विनिपातितः ।
श्रुत्वा तदाकुलो ब्रह्मा बभाषे मधुसूदनम् ॥ ४५ ॥
हरेऽन्यजन्मनि नरो मदीयो यदिहीयते । तदास्सहायं कर्तव्यं वचनान्मम माधव !॥
तेनतुष्टेनसम्प्रोक्तं हरिणैवं भविष्यति । ततस्तयोरणमपि निवार्यतामुवाचह ॥ ४७
अथान्यजन्मनि नरो मदीयो भविता कलौ ।
ततो महारणे जाते तत्राऽहं योजयामि तम् ॥ ४८ ॥
विष्णुनाऽथसमाहूय दिनेश्वरसुरेश्वरौ ।
उक्ताविमौ नरौ रौद्रौ पालनीयौ स्वयन्ततः ॥ ४९ ॥
स्वेदजातोऽप्यसृग्जातः स्वकीयांशौ धरातले ।
स्वांशभूतौ द्वापरान्ते नियोज्यौ भूतले त्वया ॥ ५० ॥
ततोऽब्रवीत्तदाविष्णुं सुरेशोदुःखितंवचः । अस्मिन्मन्वन्तरेदेव! त्रेतानाम्नियुगेहरे
तद्रूपेणैव महता सूर्यपुत्रहितार्थिना । बालीनाम महाबाहुः सुग्रीवार्थेनिपातितः ॥
तेनदुःखेन तप्तोऽहं नाहं गृह्णामितेनरम् । अगृह्यमाणं देवेशं कारणान्तरवादिनम् ॥
विष्णुःप्रोवाचमघवन् भुवोभारावतारणे । अवतारंकरिष्यामि मर्त्यलोकेऽप्यहंविभो
ततोहृष्टो ऽभवच्छक्रो विष्णुभावेनतेनवै । प्रतिगृह्यनरंहृष्टस्सत्यमस्तु वचस्तव ॥
इत्युक्त्वा तु रवीन्द्रौ स प्रेषयित्वा च तौ पुनः ।
गत्वा च पुण्डरीकाक्षो ब्रह्माणं ब्रह्मवेश्मनि ॥ ५६ ॥

उवाचवाचंधर्मज्ञस्तस्य पापविशुद्धये । कृतंजुगुप्सितंकर्म ब्रह्मन्नीशंजिघांसता ॥५७॥
यत्त्वयादेवदेवेश! पुमान्कोपेन भाषितः । शुद्ध्यर्थमेवपापस्य प्रायश्चित्तं परंकुरु ॥
गृह्णन्वह्नित्रयंब्रह्मन्नग्निहोत्रमुपासकः । एको वै गार्हपत्यस्तु द्वितीयोह्यवनीयकः ॥

दक्षिणाग्निस्तृतीयस्तु त्रिखण्डेषु प्रकल्पय ।
वर्तुले स्थापयाऽऽत्मानं मामथो धनुषाकृतौ ॥ ६० ॥
चतुष्कोणे हरं देवं ऋग्यजुः सामनामभिः ।
हुत्वात्वग्निश्च तपसा हरावर्पय तत्क्षणात् ॥ ६१ ॥
दिव्यं वर्षसहस्रन्तु हुत्वाऽग्निं सिद्धिमाप्स्यसि ।
प्रायश्चित्तविशुद्धात्मा प्रतिपद्य महेश्वरम् ॥ ६२ ॥
ततो निष्कल्मषो भूत्वा विषादस्ते गमिष्यति ॥ ६३ ॥
इत्येवमुक्त्वा हरिरुग्रतेजा गतःस्वकीयं निलयं महात्मा ।
ब्रह्माऽपि चित्तं तपसे निधाय समादधे सर्वमथाऽच्युतोक्तम् ॥ ६४ ॥

इति श्रीस्कान्देमहापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमे-
ऽवन्तीखण्डे ब्रह्मणःप्रायश्चित्तंनाम तृतीयोऽध्यायः ॥३॥

---

## चतुर्थोऽध्यायः

### अग्नेराविर्भाववर्णनम्

व्यास उवाच

योऽसौकपाल उत्पन्नो नरोनामधनुर्धरः । किमेवंसोऽधुनाजात उत्पत्तौविश्वकर्मणः
कथंरुद्रेणजनितः प्रभुणाबुद्धिपूर्वकम् । विष्णुना वा भगवता ब्रह्मणाभावभेदतः ॥

केन कस्मात्समुत्पन्नः शङ्कराच्युतब्रह्मणाम् ।
ब्रह्मा हिरण्यगर्भो यो यो जातश्च चतुर्मुखः ॥ ३ ॥

अद्भुतं पञ्चमंवक्त्रंकथन्तस्याप्युपस्थितम् । सतस्थौ भगवान्ब्रह्मा कथंरुद्रेमनोदधन्
मूढात्मना नरो येन हन्तुं स प्रहितो हरम् ।

सनत्कुमार उवाच

महेश्वरहरीएतौ द्वावेवव्यास! तिष्ठतः । तयोरविदितंनास्ति सिद्धासिद्धंमहात्मनोः
ब्रह्मणःपञ्चमंवक्त्रं यत्तदासीन्महात्मनः । तस्यैव मानसःसोऽग्निः शिरसातेनवैधृतः
योनरो ब्रह्मणाप्रोक्तः सोऽप्यग्निस्तस्यमानसः । दधार तं महादेवःकृताङ्गुल्यन्तरान्तरे
पूर्वंदृष्ट्वा समुत्पत्तिमेवं तस्यमहात्मनः । तस्मात्कपालादङ्गुल्या घृष्यमानादजायत ॥
सतंहत्वाशरेणाजौ ब्रह्मणोनिहितंरजः । मुमोहरजसासत्त्वं यदृच्छाकृतप्रभुर्यतः ॥

व्यास उवाच

कथमग्निः समुत्पन्नो योनिःशर्वेणधारितः । विस्तरेणसमाचक्ष्व भगवन्मुनिवन्दित

सनत्कुमार उवाच

अव्यक्तादीन्ससर्जादावण्डंहितदजायत । जज्ञे सौवर्णवर्णाभो ब्रह्मालोकपितामहः॥
स्वयम्भूः स तपस्तप्त्वा दिव्यं वर्षशतं महत् ।
सन्तस्थौव्याजहाराऽथभूर्भुवःस्वरितिश्रुतिः ॥ १२ ॥
श्रुतियोगात्तु मनसः पश्चादग्निरजायत । अधोमुखःपपाताऽग्निः पृथिवींनिर्दहन् यदा
पाणिभ्यां ब्रह्मणा सोऽग्निर्भूमेरूर्ध्वं निवेशितः ।
ततो दक्षिणहस्तेन वेद्यामग्निः प्रणीयते ॥ १४ ॥
पुरापतन्नधोज्वालऊर्ध्वज्वालोयतोधृतः । उत्तानश्चकृतोयस्माद्ब्रह्मणानिर्मितस्त्रिधा
ज्वालाभिः प्रज्वलन्नूर्ध्वं सर्वशब्दः स्फुलिङ्गवान् ।
हिरण्यवर्णं ब्रह्माणं सउवाचाऽग्निरुत्कटम् ॥ १६ ॥
किमर्थं तु मया देव भूमिभक्ष्यं निवारितम् । बुभुक्षयाहमाविष्टआहारोमेप्रदीयताम्
एवमुक्तोऽग्नयेब्रह्मा स्वरोमाणिजुहावसः । कृशश्चखादन्नग्निस्तु सर्वरोमाणिब्रह्मणः
अब्रवीच्चनमेतृप्तिर्नचमेदेहनिर्वृतिः । त्वचंजुहावब्रह्मा स चखादाऽग्निस्तमेव च ॥१६
अब्रवीत्तं ततो वह्निस्तृप्तिर्नास्ति ममैव हि ।

जुहाव स्वानि मांसानि त्वचोत्कृत्य प्रजापतिः ॥ २० ॥
अब्रवीच्चनमेतृप्तिर्नचमेदेहनिर्वृतिः । जुहाव ब्रह्माचास्थीनि तान्यश्नन्स बुभुक्षितः ॥
ततोब्रह्माहुताशेन कृतोदेहीविधातुकः । तमदेहमथोवह्निर्ब्रह्माणमवदच्च सः ॥ २२ ॥
अहोब्रह्मन्नमेतृप्तिर्नचदेहनिर्वृतिः । क्रुद्धेनब्रह्मणासोऽग्निर्हुङ्कारेणद्विधाकृतः ॥ २३ ॥
आहतूरुदतावग्नी आहारार्थं प्रजापतिम् । हुङ्कारेणपुनर्ब्रह्मा द्विधैकैकंचकार वै ॥२४॥
त्रयस्तेषां रुदन्तिस्म रुद्रमेकोहि संश्रितः । क्रुद्धेनब्रह्मणाऽभ्यास हुङ्कारेणैवताडितः

रोरूयमाणे चाग्नौ तु पुनर्ब्रह्मा कृपान्वितः ।
आह कामाभिभूतानां भुङ्क्ष्व त्वं देहधातवः ॥ २६ ॥
ते काले लब्धकामस्य सावृत्तिः सम्प्रकल्पिता ।
अकाराग्निं सन्निविष्टं दृष्ट्वा मनसि मानसम् ॥ २७ ॥

अकाराग्निःप्रजज्वाल किमेतदितिचाब्रवीत् । ब्रह्मातमाहत्वमपि यथेष्टांवृत्तिमाश्रय
देवमध्येबहिर्वापि मुनीनामाश्रयेषु च । इत्येवमुक्तस्तेनाऽऽशु वृत्तिमेतामरोचयत् ॥
अहमेवं प्रदास्यामि पुनःपुनरुवाच ह । यस्मादेषद्वितीयोऽग्निर्हुङ्कारात्समजायत ॥

साभिमानोऽपमानो वा हुङ्कारो यत्र कथ्यते ।
सा च वृत्तिर्ममादेशाद् बुभुक्षा शान्तये तव ॥ ३१ ॥

इकाराग्निं समाहूय ब्रह्मावचनमब्रवीत् । भवंतोऽग्नेरियंवृत्तिरन्नंभुक्तंदहेरिति ॥३२॥
उकाराग्निं समाहूय ब्रह्मावचनमब्रवीत् । यत्पृथिव्यां मरुस्थानं भगवंस्तत्त्वमाश्रय
अहं तव विधास्यामि स्थानमाहारमेवच । इत्युक्तःसतुतेनाग्निर्यःपृथिव्यांशिलाचयः
यतोऽग्निर्व्यासतेनोक्तो गिरौदुर्गेमहामुने । उकाराग्निःसचाप्येष समुद्रेवडवामुखः

सोऽपि भिन्नः समाहूतो ब्रह्मणा स्थानलिप्सया ।
त्वञ्चक्षुः सर्वलोकस्य ब्रह्मा वचनमब्रवीत् ॥ ३६ ॥
तस्मात्त्वं संस्कृतां वाणीं द्विजातीनां प्रकाशय ।
दैवीपुण्यासंस्कृताचआयुष्यंहन्त्यसंस्कृता ॥ ३७ ॥
तस्माद्द्विजातेर्विज्ञेया वाणी पुण्याप्रकाशिता ।

वाक्चमाताद्विजातीनां मुखे सा सम्प्रतिष्ठिता ॥ ३८ ॥

अनृताक्षरविन्यासादमङ्गल्याद्यसंस्कृता । वकारंहन्त्यतोह्यग्निःसदासंस्कृतवाग्द्विजः
आहूयभूयोऽकाराग्निं प्रजापतिरचक्षुषम् । तां देववाणीमवदत्सोऽपिसंमीलितेक्षणः
ब्रह्माणमाहवह्निस्तु वाचोऽहमुखमास्महे । स्थानंममप्रयच्छस्व सर्वतेजोवरंपरम् ॥
ब्रह्मातमाहयस्मात्त्वंतेजःस्थानंसमीहसे । तस्मात्तेजोमयंयत्ते रविस्थानंभविष्यति
यस्मात्प्रपद्यतेतेजश्चक्षुर्भवतिदुर्बलम् । तस्मात्त्वांतेजसायुक्तं पश्येदनिमिषश्चकः ॥
इकारमथसंभिन्नमग्निमाहपितामहः । सौम्यदृष्ट्यातुब्रह्माणं समुद्वीक्ष्यह्युपागतः ॥

यस्माच्छीघ्रंमहासत्त्व! सौम्यदृष्टिरिहागतः ।
तस्माद्दास्याम्यहं स्थानं सर्वभूतमनोरमम् ॥ ४५ ॥
त्वं सितात्मा श्वेतरश्मिश्चन्द्रमास्त्वं भविष्यसि ।
सर्वतेजोऽधिको दिव्यः सौम्यः परमभासुरः ॥ ४६ ॥
तत्रस्थः सर्वतेजांसि तेजसाऽभिभविष्यति ।
इत्युक्त्वा तं विसर्ज्याऽथ उकाराग्निमथाऽऽह्वयत् ॥ ४७ ॥

इहेह्येहीतिशिरसि समादायन्यवेशयत् । तत्रस्थः पञ्चमंवक्त्रमूर्ध्वमेतदजायत ॥
एषएवंरूपवह्निरुकाराग्निः प्रतिष्ठितः । तस्मादग्निश्चसूर्यश्च रुद्रावेतौविनिर्दिशेत् ॥
भवाग्निरूपः परमो ब्रह्माणमिदमब्रवीत् । ममाऽपिरुचिरंस्थानं प्रयच्छस्वयथातथम्
ब्रह्मातमाहकतमत् स्थानंतेरोचतेतल्ले । अग्निस्तुप्रत्युवाचेदंस्थानंकथयमेपरम् ॥

स्थानं नैवाऽस्ति नो भव्यं ततो ह्येवं भविष्यति ।
अत्र त्वास्थातुमिच्छामि यदि संरोचते तव ॥ ५२ ॥

ब्रह्मोवाच

लोकेनित्यसमाचार लोकसंस्थितिहेतुक !। सम्भवार्थमिहासत्वंनिजसत्त्वपराक्रमः
यदिहत्वंमहाज्वालस्ताभिःकलितशोभनः ।प्राप्स्यसेसर्वजन्तूनांभासुरस्त्वंसमुत्तमम्
तद्यौषधर्मश्चैवाद्यो मायामोहितकाम्यया । इत्युक्तोब्रह्मणासोऽपि प्रजज्वालसहस्रशः
ततोह्यनन्तज्वालाभिर्नानावर्णादिभिःश्रितः ।अकारेकारोकारैश्चब्रह्मातमथशान्तवान्

नैवासौशान्ततांयातिवह्निर्भूयोऽप्यवर्द्धत । व्याप्तंभवाग्निनासर्वंतिर्यगूर्ध्वमधस्तथा
ज्वालाभिरुपरिक्षिप्तं दृष्ट्वात्मानंसमन्ततः । चिन्तयित्वाततोब्रह्मा भीतश्चैवविशेषतः

शिरस्यञ्जलिमाधाय तुष्टावाऽथ प्रणम्य तम् ।
तेजोनिधिञ्च सर्वेशं ज्ञातुमिच्छन्प्रजापतिः ।
निगमोक्तरहस्यैश्च ऋग्यजुःसामभावितैः ॥ ५६ ॥

ब्रह्मोवाच

सत्यतेजोनमस्तेऽस्तु परस्परमहात्मने । अद्भुतानां प्रतिश्रोत्रे तेजसांनिधिरव्ययः ॥
वीजंयोविश्वभावानां संमोहनविमोहनम् । अन्धकारोयुगावर्तं कालेकालेचदुःसहम्
ऊर्ध्ववक्त्रनमस्तेऽस्तु सत्त्वात्मकधरात्मक !। ज्वलज्वालोत्पन्नजलजलजेशजलेश्वर
जलजोत्फुल्लपत्राक्ष ज्वलद्देवहुताशन । कृष्णकान्तः कृष्णमार्गः स्वर्गमार्गप्रदायकः
यज्ञाहुतिसमाचार यज्ञरूपनमोनमः । स्वर्णगर्भशमीगर्भजयदेवसनातन !॥ ६४ ॥
नमोहारमहाहार स्वाहाप्रियतमोहर । प्रदीप्तरोचिषेदेव चित्रभानोनमोऽस्तुते ॥
वैश्वानरानलविभो ऊर्ध्वपावकसर्वग !। विभावसोमहाभाग कृष्णवर्त्म! नमो नमः ॥

सनत्कुमार उवाच

एवंस्तुतस्तदासोऽग्निर्विरञ्चिमब्रवीद्वचः । तुष्टोऽहंभवताब्रह्मन्भवत्कर्मप्रसिद्ध्यतु॥
एवमुक्तस्तदाब्रह्मा नमस्कृत्वापुनःपुनः । ज्ञातुमिच्छाम्यहंदेव कोऽसित्वंभगवानिति
अब्रवीत्सोऽथब्रह्माणं पुरुषस्त्वंप्रजापतिः । यज्ज्ञेयंपरमं रूपं तेन योगेन पश्य मे ॥
अथापश्यत्सदिव्येन भगवन्तं सनातनम् । सर्वज्ञंविधिकर्तारमीश्वरंसदसत्परम् ॥
ज्वलनंगगनम्भूमिर्दृश्यादृश्यस्परम्पदम् । भूतम्भव्यं भविष्यञ्चजगत्स्थावरजङ्गमम्
सदेवः कुरुतेविश्वं भुङ्क्तेसर्वंयतः प्रभुः । ततःसम्भूतिभव्येनस्तोत्रेणापिप्रजापतिः

तुष्टाव देवः प्रणतः पुराणमजमव्ययम् ।
ततो निरुक्तवर्णञ्च दृष्ट्वा देवः प्रजापतिः ॥ ७२ ॥

विश्वतोबाहुचरणंविश्वतोऽग्निशिरोमुखम् । व्यक्ताव्यक्तप्रणेतारंप्रणम्यशिरसास्वयम्
तुष्टावचनमस्तेऽस्तु तुभ्यंविश्वभवात्मने । पृथिवीवायुराकाशं यच्चान्यद्भुवनत्रयम्

लोकालोकेश्वरंचैव जगत्स्थावरजङ्गमम् । तत्त्वसर्गंभूतसर्गंभावसर्गंतथैवच ॥ ७६ ॥

ब्रह्मतेजो मयाऽऽत्मानं सम्पश्यंश्चक्षुषा स्वतः ।

यत्किञ्चिद्वस्तुजातं हि तत्सर्वंनश्वरं चरम् ॥ ७७ ॥

एवंस्तुतः स तु तदा अनादिर्भगवान्प्रभुः । अथेशः प्राहब्रह्माणं त्वयादृष्टंयथातथम् ॥

सृजेदानीं प्रजाः सर्वाः स च त्वं विनयान्वितः ।

कर्ताहमनुकर्तात्वं लोकानांस्थितिकारणे ॥ ७९ ॥

कुरुष्व तत्तथाभाव्यं मयापूर्वंविनिर्मितम् । इत्युक्तोदेवदेवेशो ब्रह्मावचनमब्रवीत ॥

नमस्तुभ्यंमहादेव भवशर्वनमोऽस्तुते । त्वत्प्रसादात्प्रजासर्गं कुर्वतोमेमहेश्वर !॥८१

सखायं प्राप्तुमिच्छामि त्वया दत्तं जगत्पते !।

महेश्वर उवाच

तुष्टस्ते ध्यायतः पुत्रकामस्य भगवन्नहम् ॥ ८२ ॥

विधातःकल्पितां देव! ममोत्पत्ति यदीच्छसि ।

पुत्रत्वं प्राप्य हीशस्ते छेत्स्यामि पञ्चमं शिरः ॥ ८३ ॥

तत्र चोत्पादयिष्यामि नरनारायणावुभौ ।

ब्रह्मोवाच

कथं नारायणो देवस्तपसाऽनन्यचेतनः ॥ ८४ ॥

कीर्तयस्वसखा धन्यःसमेपूज्योभविष्यति । अथापश्यत्ततोब्रह्मातेजसाहरिमच्युतम्

तंसर्वगामिनंगम्यं शिवनारायणात्मकम् । महेश्वरस्यतेजोहि सत्त्वंनारायणःप्रभुः

चकार स ततस्तत्र श्रीयुक्तः शक्तिसम्मितः ।

अङ्गुल्या संस्पृशन् देवो ब्रह्माणमब्रवीद्वचः ॥ ८७ ॥

ब्रह्मा तेपरमंनाम ऋषिर्नारायणानुगः । भवितालोकवीक्षार्थंश्रेष्ठः सर्वधनुष्मताम् ॥

नारायणमहावीर्य! शक्तिरेषामदीयका । इत्युक्त्वाभगवान्देवस्तमग्निपाणिनाग्रहीत्

दक्षहस्ताङ्गुलिनखमध्यस्थंसमचीकरत् । इति संस्कृत्य सततं नरश्चैव महेश्वरम्

ब्रह्मणोदर्शयित्वाऽथ तत्रैवान्तरधीयत । अथाऽब्रवीत्ततोब्रह्मा अग्नितश्चयुगक्षये ॥

स्पृशन् दक्षिणवामाभ्यां शान्तयन्निव तं गिरा।
पुत्रौ च भृग्वङ्गिरसौ भवितारौ न संशयः ॥ ६२ ॥
वंशविख्यातकर्माणावत्रैवभवतांतव । द्विधासम्भज्यतेनाग्निस्त्वष्टेर्यज्ञोभविष्यति
भवन्तौ तिष्ठतस्तत्र पृथिव्यां दानमाश्रितौ।
तस्मादेवं विधातव्यौ निर्मथ्य विधिपूर्वकम्।
अतोऽश्वत्थे शमीगर्भे संयोगस्तत्र पठ्यते ॥ ६५ ॥
भार्गवोऽङ्गिरसश्चैव द्विविधो देवउच्यते।
तस्मात्सुरहितः श्रेष्ठश्चतुर्थ इति कथ्यते ॥ ६६
एवंव्याससमुत्पन्नोनरोऽसौपूर्वजन्मनि। एवंतुब्रह्मणोवक्त्रं पञ्चमं समपद्यत ॥ ६७॥
एवं विबुद्ध्यते यो वै तेजः सर्गमनुत्तमम्।
ब्रह्मणो याति सालोक्यं शान्तो दान्तो जितेन्द्रियः ॥ ६८ ॥
एतद्योऽग्निसमुद्भवं पशुपतेर्माहात्म्यसंसूचकं,
चित्ते साधुमतिः शृणोति सततं यःश्रद्धया भावितः।
यो व्यासद्विजदेवताप्रमुखतः संश्रावयेद्भक्तितः,
सोऽत्यर्थं भवभावितः शिवपुरे सम्पूज्यते दैवतैः ॥ ६९ ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
ऽग्नेरुत्पत्तिर्नामचतुर्थोऽध्यायः ॥ ४ ॥

———

## पञ्चमोऽध्यायः

### देवागमनवर्णनम्

व्यास उवाच

युद्धेनिवारितेतत्र रक्तस्वेदजयोःपुरा । किंकृतंब्रह्मणातत्र प्रायश्चित्तंह्यकर्मणा ॥ १ ॥
जनार्दनेनकिंकर्म शङ्करेणचयन्मुने ! । एतत्सर्वंसमाख्याहि प्रसीदवदतांम्वर ! ॥ २ ॥

सनत्कुमार उवाच

ब्रह्माऽकरोदग्निहोत्रं वनौषधिफलच्छदैः । शस्तैः कुशसमिद्भिश्च यथोक्तंहरिणापुरा
बदर्याश्रममासाद्य नरनारायणावृषी । तेपतुस्तौतपश्चोग्रं हितार्थंसर्वदेहिनाम् ॥ ४ ॥

कपालपाणिर्देवेशः पर्यटन् वसुधामिमाम् ।
कुशस्थलीं समासाद्य प्रविष्टस्तद्वनोत्तमम् ॥ ५ ॥

नानाद्रुमलताकीर्णं नानापुष्पोपशोभितम् । नानापक्षिसमाकीर्णं नानामृगसमाकुलम्
द्रुमपुष्पभरामोदवासितं यत्सुवायुना । बुद्धिपूर्वमिवन्यस्तफलपुष्पैस्सुपूजितम् ॥
नानागन्धरसाढ्यैश्च पक्वापक्वफलोद्भवैः । फलैस्सुवर्णरूपाढ्यै रासमन्तान्मनोरमैः ॥
जीर्णपत्रतृणादीनिशुष्ककाष्ठफलानिच । बहिःक्षिपतिजातानिमारुतोऽनुग्रहादिव ॥
नानापुष्पसमूहानां गन्धमादायमारुतः । शीतलो वाति तं भूमिदेशंयत्रविवासयन् ॥
हरितस्निग्धनिच्छिद्रद्रुमाणांतत्रकोटरैः । वृक्षैरनेकसङ्ख्यैश्च भूषितंशिखरान्वितैः
अरोगिदर्शनीयैश्च सुवृत्तैःक्वचिदुद्गतैः । कुटुम्बमिव विप्राणां सिद्धिर्वैभाति सर्वतः
शोभनैर्वायुसङ्कीर्णैरङ्कुरैश्चावृताद्रुमाः । कुलीनैरिवनिच्छिद्रैः स्वगुणैः प्रावृतानराः

पवनोद्धूतशिखरैः स्पर्शयन्ति परस्परम् ।
आरात्पतन्ति चान्योन्यं पुष्पाः शाखावतंसकाः ॥ १४ ॥
नागवृक्षाःक्वचित्पुष्पैर्भ्रमरानीलकेशरैः ।
नयनैरिव शोभन्ते धवलैः कृष्णतारकैः ॥ १५ ॥

पुष्पसम्पन्नशिखरा कर्णिकारद्रुमाः क्वचित् । यथैवह्विविवाहेच शोभतेसाधुदम्पती
सुपुष्पविभवाटोपैःसिन्धुवारस्यपङ्क्तयः । मूर्तिमन्त्यइवाभान्ति पूजितावनदेवताः
क्वचित्क्वचित्कुन्दलताः सुपुष्पाभरणोज्ज्वलाः ।
दिक्षु दिक्षु च शोभन्ते बालचन्द्राइवोदिताः ॥ १८ ॥
अतीवदुर्गमार्गेषु कान्ताराद्दुत्थिता लताः ।
पुष्पिताःपुष्पविटपैर्वीजयन्ति इवोत्थिताः ॥ १९ ॥
शालार्जुनाः क्वचिद्भान्ति वनोद्देशेषु पुष्पिताः ।
धौतकौशेयवासोभिः प्रावृताः पुरुषोत्तमाः ॥ २० ॥
अभियुक्ताः सुवल्लीभिः पुष्पितास्तु द्रुमास्तथा ।
उपगूढा विराजन्ते नारीभिरिव सुप्रियाः ॥ २१ ॥
चूताश्चतिलकाश्चैवमञ्जरीभिःकरैरिव । वायुनुन्नाभिरन्योन्यंढौकन्तीव हिसज्जनाः
परस्परपञ्चसंयुक्तैस्तिलकाशोकपल्लवैः । हस्तैर्हस्तान्स्पृशन्तीव सुहृदश्चित्तसङ्गताः
फलपुष्पनतावृक्षाः पैशल्येनेवसज्जनाः । अन्योन्यमर्पयन्तीव सुपुष्पाणि फलानिच
मारुताश्लिष्टनिर्मुक्तैः पादपाःशीतवारिभिः ।
आर्यान्समागताँल्लोके प्रीतिं दातुमिव स्थिताः ॥ २५ ॥
पुष्पाणामिवभारेण स्वशोभार्थं व्रजन्तिवै । समप्रभावमासाद्यपुरुषाःस्पर्द्धयेवहि ॥
पुष्पादिशोभामरणैःशिखरैःकम्रसंयुतैः । नृत्यन्तिपक्षिणोमत्तायुक्ताशोभनशेखरैः
भृङ्गाःपवनविक्षिप्ता मृतवल्ली लताश्रिताः । सवल्लीकाःप्रनृत्यन्ति मानवाइवसप्रियाः
पुष्टाभिः कुन्दवल्लीभिः पादपाःक्वचिदावृताः ।
भान्ति तारागणैश्चित्रैः शरदीव नभस्तलम् ॥ २६ ॥
द्रुमाणामप्यथाग्रेषु पुष्पिताः माधवीलताः । शिखराइवशोभन्ते रचिताबुद्धिपूर्वकम्
हरिताः काञ्चनच्छायाः फलिताःपुष्पिताद्रुमाः ।
सौहार्दं दर्शयन्तीव नराः साधुसमागमे ॥ ३१ ॥
पुष्पकिञ्जल्कबहुलाः किञ्जल्कबहुलोदराः । किञ्जल्कमत्तभ्रमरा विशदाइवसारिकाः

शिरीषपुष्पसङ्काशाः शुका;मिथुनतःक्वचित ।
कीर्तयन्ति गिरश्चित्राः पूजिता ब्राह्मणा यथा ॥ ३३ ॥
संयुक्ताःसहचारिण्यामयूराश्चित्रबर्हिणः । वनान्तरेसञ्चरन्ति लोकान्तइवसंस्थिताः
कूजन्ति पत्रिसङ्घाता नानाद्भुतचिराविणः ।
कुर्वन्ति रमणीयं हि रमणीयं वनं शुभम् ॥ ३५ ॥
नानामृगसमाकीर्णं नित्यंसमुदिताण्डजम् । तद्वनं नन्दनसमं मनोदृष्टिविवर्द्धनम् ॥
कपालपाणिर्भगवांस्तथारूपंवनोत्तमम् । ददर्शशङ्करोदृष्ट्या सौम्ययानन्दनोपमम्
तावृक्षपङ्क्तयस्सर्वा दृष्ट्वारुद्रंसमागतम् । निवेद्यशम्भवेभक्त्यामुमुचुःपुष्पसम्पदाम्
पुष्पप्रतिग्रहंकृत्वा पादपानां महेश्वरः । वरंवृणीध्वंभद्रंवः पादपानित्युवाचसः ॥
एवमुक्तेभगवता तरवोनिरवग्रहाः । ऊचुः प्राञ्जलयस्सर्वे नमस्कृत्वा महेश्वरम् ॥४०॥
वरंददासिदेवेश प्रपन्नजनवत्सल !। इहैवविपिनेनित्यं भगवन्सन्निहितोभव ॥४१ ॥
एष नः परमः कामोदेवदेवनमोऽस्तुते । त्वं चेद्वससिदेवेशवनेऽस्मिन् विश्वभावन ॥
सर्वात्मनाप्रसन्नास्त्वां याचामोह्युत्तमंवरम् । इत्युक्तःपादपैस्सर्वैश्शरणागतवत्सलः
वरं ददौपादपेभ्यः प्रोच्यमानं मया शृणु ।

महेश्वर उवाच

बाढम्मे मनसा वासो नित्यमत्र वनोत्तमे ॥ ४४ ॥
वरन्ददामिभूयोवो न वृथादर्शनम्मम । नाग्निर्नवायुर्नजलं नसूर्यकिरणातपः ॥ ४५ ॥
नविद्युदशनिश्शीतं रुजंवोजनयिष्यति । कामगाः कामरूपाश्च कामरूपफलप्रदाः ॥
कामसन्दर्शनाः पुंसां तपःसन्ध्याज्वलद्दृशाम् ।
श्रिया परमया युक्ता मत्प्रसादाद्भविष्यथ ॥ ४७ ॥
एवं सवरदः शम्भुरनुजग्राहपादपान् । स्थित्वावर्षसहस्रन्तु कपालं चाक्षिपद्भुवि ॥
क्षितिंनिपततातेन चकम्पेचरसातलम् । विवशास्तत्यजुर्वेलां सागराः क्षुभितोर्मयः
शक्राशनिहतानीव व्याघ्रव्यालान्वितानिच । शिखराणिव्यशीर्यन्तपर्वतानांसहस्रशः
देवसिद्धविमानानि गन्धर्वनगराणि च । प्रस्फुरन्तिविनिष्पेतुर्दिनेशुश्चधरातले ॥

कल्पान्तमेघाश्चात्यन्तं जगत् सञ्जातदर्शनाः ।
ज्योतिर्ग्रहाञ्छादयन्तो बभूवुस्तीर्णभास्कराः ॥ ५२ ॥
महतातस्यशब्देन जडान्धबधिरं कृतम् । बभूवव्याकुलं सर्वं त्रैलोक्यं सचराचरम्
सुरासुराणांसर्वेषां शरीराणिमनांसिच । अवसेदुश्चकम्पुश्च किमेतदितिवब्रिरे ॥
धैर्यमालम्ब्यसर्वेऽपि समागम्येन्द्रपूर्वकाः । ब्रह्मलोकंसमासाद्यब्रह्माणमिदमूचिरे ॥
किमेतद्भगवन्ब्रूहि निमित्तोत्पातदर्शनम् । त्रैलोक्यंकम्पितंयेन संयुक्तंकालकर्मणा
जातंकल्पावसानञ्च भिन्नमर्यादसागरम् । चत्वारोदिग्गजाःकिन्तुबभूवुरचलाश्चलाः
धरासमावृताकस्मात्सप्तसागरवारिणा । उत्पत्तिर्नास्तिसर्वस्यभगवन्निष्प्रयोजनम्
यादृशोऽयंश्रुतः शब्दो न भूतोनापिविश्रुतः । त्रैलोक्यमाकुलंयेन कृतंरौद्रेणभूयसा ॥
एवमुक्तोऽब्रवीद्ब्रह्मा परमेशानुभावितः ॥ ६० ॥
मत्पृष्टममराः सर्वे शृणुध्वं तत्र कारणम् । निश्चयेनाऽत्रविज्ञेयं श्रद्दधानैर्यथाविधि
सुखं छित्त्वा नखाग्रेण मद्देहात्पञ्चमं शिरः ।
कपालपाणिर्भगवान् विष्णोराश्रममभ्यगात् ॥ ६२ ॥
ययाचेपात्रमादाय भिक्षांनारायणम्प्रति । उत्पपातमुनिस्तत्र नरोनामधनुर्धरः ॥
ततः कुशस्थलीमेत्य भगवांस्तद्वनोत्तमम् । विवेशतरुमार्गेणपुष्पामोदाभिनन्दितम्
अनुग्राह्याथभगवान् वनंतत्सर्वगाण्डजम् । जगतोऽनुग्रहार्थाय तत्रवासमरोचयत् ॥
तत्कपालंकरस्थंयन्न्यस्तंभगवताक्षितौ । तेनैषाकम्पिताभूमिःकृतंत्रैलोक्यमाकुलम्
तद्रक्षार्थंविरूपाक्षं प्रापद्यतमयासह । आराध्यमानोभगवान् प्रदास्यतिवरंहिवः ॥
इत्युक्त्वाभगवान्ब्रह्मा सहतैर्देवदानवैः । जगामतद्वनोद्देशं यत्रास्तेवृषभध्वजः ॥
प्रहृष्टमनसस्सर्वे कोकिलालापलापितम् ।
पुष्पान्वितं वनं तद्वै विविशुश्शङ्करेप्सवः ॥ ६६ ॥
सम्प्राप्तं सर्वदेवैस्तद्वनंनन्दनसम्मितम् । सुवल्लीगृहशोभाढ्यं सुद्रुढंशुशुभेतदा ॥ ७०
दृष्ट्वा तद्वनमुत्तमं तनुभृतां प्रोल्लासकं चेतसां,
नानासत्फलपुष्पपादपवनैरासेवितंसर्वतः ।

ब्रह्मन्बर्हिणहंससारसरवैर्मण्डूकमत्स्यान्वितं,
द्रक्ष्यामो हरमत्र चेतसि सुराः प्रापुर्मुदं ते तदा ॥ ७१ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्ताखण्डे देवागमोनामपञ्चमोऽध्यायः ॥ ५ ॥

---

# षष्ठोऽध्यायः

## कपालमोक्षणवर्णनम्

### सनत्कुमार उवाच

प्रविश्याथवनंदेवाः सर्वपुष्पोपशोभितम् । इहदेवोऽत्रदेवोऽत्र विविशुस्तेदिदृक्षवः
अद्भुतस्यवनस्यान्तं ननेदद्भुशिरेसुराः । विचिन्वन्तोमहादेवं देवैर्बहुविलोकितम्
तानुवाचसुभद्रंवो नद्रक्ष्यथतपोविना । विचिन्वन्तोविरूपाक्षं नैवापश्यतशङ्करम् ॥
सुयुक्तहृदयेस्मृत्वा ब्रह्मादेवांस्ततोब्रवीत् । त्रिविधोदर्शनोपायस्तस्यदेवस्यसर्वदा
श्रद्धाज्ञानेनतपसा योगेनैवनिगद्यते । सकलंनिष्कलंवापि देवंपश्यन्तियोगिनः ॥
तपस्विनस्तुसकलं ज्ञानिनोनिष्कलंपरम् । समुत्पन्नेऽपिविज्ञानेमन्दश्रद्धोनपश्यति
भक्त्यापरमयोपेतः परंपश्यन्तियोगिनः । द्रष्टव्योनिर्विकारोऽसौ प्रधानपुरुषेश्वरः
नादीक्षितैरतोदेवाः शैवदीक्षांप्रपद्यथ । कर्मणामनसावाचा नित्ययुक्तामहेश्वरे ॥
तपश्चरथभद्रंवो रुद्राराधनतत्पराः । शिवदीक्षांप्रपन्नानां भक्तानांचतपस्विनाम् ॥
सर्वकालंविशेषेण दातव्यंदर्शनम्मया । ब्रह्मणोवचनं श्रुत्वाहितमेवतदाचते ॥ १० ॥
शिवेक्षाविष्टमतयो ब्रह्माणमिदमब्रुवन् । मार्गेणविधिनाचैव शिवदीक्षांसुरोत्तम
प्रयच्छब्रह्मन्सर्वेषां तत्र नः कारणंभवान् । श्रुत्वाथवचनंब्रह्मा प्रत्युवाचविचारितम्
सन्दिदीक्षयिषुः क्षिप्रममराञ्छिवदीक्षया । शिवयज्ञार्थसम्भारानानयध्वमलंसुराः
वेदीप्रकल्प्यतामत्र यष्टव्योऽष्टतनुश्शिवः । पद्मयोनिवचः श्रुत्वाचक्रुस्सर्वमतस्सुराः

विनीतवेशाः प्रणता अनेनोक्तंसमन्वगुः। शिवप्रसादसम्प्राप्त्यै पुष्कलज्ञानमीरितम्
यज्ञंचकारविधिना दीक्षांचन्द्रार्धधारिणः। पद्मयोनिपुरस्कृत्य तदादीक्षाप्रयोगतः

अनुजग्राह देवांस्तान् परेच्छाप्रेरितः क्वचित्।
ततो व्रतानां प्रवरं व्रतं दिव्यं महाप्रभुः॥ १७॥

तेभ्योददौदेवताभ्यो सतदप्यविरोधवित्। पठ्यतेशिवशाखायां महापाशुपतंव्रतम्
शैवंथोदितंयच्च आगमाचारचेष्टितम्। शिवाराधनमुख्यानां मुनीनांतीव्रतेजसाम्

सदानुग्राहकः शम्भुः सर्वदेवैः प्रकल्पितम्।
तदेवं प्रार्थितं बुद्ध्या व्रतं रौद्रशिवंसमम्॥ २०॥
नतेभ्यो विस्मयं त्यक्त्वा प्रायच्छत्कनकाण्डजः।
कामिकं भस्मनामानं सर्वदा कीर्तितं शुभम्॥ २१॥

पापघ्नंदुःखशमनं पुष्टिमाबलवर्द्धनम्। सिद्धिदंकीर्तिकृत्कान्तंकलिकल्मषमोक्षकम्

तस्मात्सर्वप्रयत्नेन भस्मस्नानं समाहिताः।
कुर्वन्तो मानवादान्ताः शान्ताश्च सुजितेन्द्रियाः॥ २३॥

सर्वेकमण्डलुधरास्सर्वेरुद्राक्षधारिणः। अनिष्टदर्शनालापसङ्गत्यागविवर्जिताः॥
एवंव्रतधरास्सर्वे वनेतस्मिन्महेश्वरम्। आराधयंस्तमीशानं व्रतेनैवउमाधवम्॥
भक्त्यापरमयायुक्ता विधिनापरमेणच। कालेनमहताध्यानाद्देवं ज्ञात्वामनोगतम्

रुद्रध्यानाग्निनिर्दग्धकल्मषाश्च श्रियान्विताः।
तदा गत्वा सुराञ्छम्भुः प्रत्यक्षो भगवानभूत्॥ २७॥

सनत्कुमार उवाच

ब्रह्मदत्तवरादेवास्सर्वेशर्वानुभाविताः। समचीकरंस्तपस्तत्र ब्रह्माऽपीशानभावितः
गतेवर्षसहस्रेसदिव्येदेवेश्वरेश्वरः। जातानुकम्पोदेवानांदीप्तोदर्शनमेयिवान्॥ २९॥

गणैर्नानाविधैस्सार्द्धं नानाभूषणभूषितैः।
स्वबलेनचदर्पघ्नैर्घोरैर्घोरविघातिभिः॥ ३०॥
कामरूपैरकामैश्चसर्वकामसमन्वितैः।

करीन्द्रकरटाटोपपाटने सिंहदेहिभिः ॥ ३१ ॥
अणिमादिगुणैर्दिव्यैर्योगैश्वर्यादिनामभिः । व्यालोलकेशरसनादंष्ट्राकटकटोग्रकैः ॥
व्याघ्रव्यालानलैरौद्रैः काककङ्कमुखैस्तथा । अरूपैः समरूपैश्च सुरूपैर्वहुरूपकैः ॥
एकद्वित्रिशिरोभिश्च वहुशीर्षैरशीर्षकैः । एकद्वित्रिशिखैश्चैव नानारूपविराजितैः ॥
वहुनेत्रैरनेत्रैश्च एकद्वित्रिविलोचनैः । एककर्णैर्द्विकर्णैश्च वहुकर्णैरकर्णकैः ॥ ३५ ॥
एकद्वित्रिसुनासैश्च वहुनासैरनासकैः । एकजङ्घैर्द्विजङ्घैश्च वहुजङ्घैरजङ्घकैः ॥ ३६ ॥
एकपादद्विपादैश्च वहुपादैरपादकैः । गौरश्यामैः श्यामगौरैः सितैःकर्बुरकैस्तथा ॥
भुजङ्गहारवलयैर्नागयज्ञोपवीतकैः । शूलासिपट्टिशधरैर्भुशुण्डिपरिघायुधैः ॥ ३८ ॥
चक्रक्रकचकोदण्डकालदण्डास्त्रपाणिभिः ।
गदामुद्गरपाषाणमुसलायुधहस्तकैः ॥ ३९ ॥
वज्रशक्त्यशनिप्रासकुन्तशस्त्रविधारिभिः । झम्भांभेरीर्वादयद्भिर्वीणापणवगोमुखान्
मृदङ्गमर्दलान्ढक्कामड्डुडिण्डिमझर्झरान् ।
हुड्डुकान्पणवाद्यांश्च वाद्यान्वादद्भिरर्चकैः ॥ ४१ ॥
एवं नानाविधैरौद्रैर्भीमैर्भीमपराक्रमैः । गणेश्वरैः सुदुर्द्धर्षैर्वृतः सूर्यो ग्रहैरिव ॥४२॥
आविर्बभूव भगवान् सगणैःपरिवारितः ।
सम्पश्यतां तदा व्यास! ब्रह्मादीनां दिवौकसाम् ॥ ४३ ॥
अथब्रह्मादयोदेवा दृष्ट्वाग्रेगणनायकम् । तेजसाध्यासितास्तस्य बभूवुर्भ्रान्ततेजसः ॥
ततोऽवलम्ब्यतेधैर्यं दृष्ट्वादेवंयथाविधि । षडङ्गवेदयोगेन हृष्टचित्तवपुर्धराः ॥ ४५ ॥
शिरोगतैरञ्जलिभिः पादेभ्यश्चमहींगतैः । तुष्टुवुः सृष्टिसंहारस्थितिकर्तारमीश्वरम्

देवा ऊचुः

नमःशिवायशान्ताय सगणायसनन्दिने । वृषासनायसौम्याय शक्तिशूलधरायच ॥
नमोदिक्चर्मवस्त्राय सुचेतस्तीव्रतेजसे । ब्रह्मणेब्रह्मदेहायब्रह्मणायोजिताय च ॥ ४८
नमोऽन्धकविनाशाय सुरेशाय नमोनमः । रुद्रायपञ्चवक्त्राय सर्वरोगापहारिणे ॥४९
गिरिशायसुरेशाय ईशानायनमोनमः । भीमायोग्रस्वरूपाय विजयाय नमोनमः ॥

सुरासुराधिपतये यतीनांपतयेनमः । शुण्डाय चण्डदण्डाय वरखट्वाङ्गधारिणे ॥
विरूपाक्षशुभाख्याय विश्वरूपायवैनमः । शान्तायघनमोज्ञाय त्रिनेत्राय नमोनमः ॥
वेधसे विश्वरूपाय विश्वसंहारिणेनमः । भक्तानुकम्पिनेऽत्यर्थं रुद्रज्ञानपरायच ॥५२
विरूपायसुरूपाय रूपानांशतधारिणे । पञ्चास्याय शुभास्याय चन्द्रास्यायनमोनमः
वरदायवरार्हाय सुकर्माय नमोनमः । त्रिनेत्रत्राणमस्माकं त्रिपुरघ्न ! विधीयताम्

वाङ्मनःकायभावैस्त्वां प्रपन्नानां महेश्वर !।

सनत्कुमार उवाच

एवं स्तुतस्तदा देवैर्विरञ्च्याद्यैस्तथा हरः ॥ ५६ ॥
शरीराणि विलोक्येशः कृशान्यथ दिवौकसाम् ।
दिव्यप्रतापधारेण विविधेनान्तरात्मनाम् ॥ ५७ ॥
आराधनं समीक्ष्याऽऽह ब्रह्मादीनां सुरेश्वरः ।
साधु साधु महाभागाः ! शश्वद्व्रतमुपासितम् ॥ ५८ ॥

देवेनानेन विधिना भृशमाराधितोह्यहम् । भवद्भिः श्रद्धयात्यर्थं मम दर्शनकाङ्क्षया

व्रतस्था मां हि पश्यन्ति मानुषादेवताअपि ।
यद्यहञ्च प्रयच्छामि कांश्चिद्वो हि वराञ्छुभान् ॥ ६० ॥
एकैकशोद्वित्रिशो वा समस्तेभ्यस्समेन तत् ।
सर्वकामप्रसिद्ध्यर्थं दास्यामि ह्येष देवताः ॥ ६१ ॥
हिताय भवतां देवा आगत्योज्जयिनीम्प्रति ।
क्षिप्तं कपालञ्च मया किम्पुनर्भद्रमस्तु वः ॥ ६२ ॥

देवा ऊचुः

किंकृतंहितमस्माकंकपालंक्षिपतात्वया । किमर्थंकम्पिताभूमिर्लोकंचैव्याकुलीकृतम्

नैतंन्निरर्थकन्देव! कथ्यतामत्र कारणम् । ६३

ईश्वर उवाच

युष्मद्धितार्थमेतद्धै भयं विनिहितं कृतम् ॥ ६४ ॥

देवानामनुरक्षार्थं श्रूयतामत्र कारणम् । असुरेन्द्रोहयोनाम बलवान्योगमायिकः ॥
अवस्थितोऽन्ववष्टभ्यरसातलतलाश्रयम् । तस्यदैत्यस्यबलिनो दैत्याः परपुरञ्जयाः

युष्माञ्ज्ञात्वा तपःस्थान्वै आययुर्वहवो हि ते ।
सेन्द्रान्निहन्तुमिच्छन्तो मायाप्रच्छन्नविग्रहाः ॥ ६७ ॥
पुरीं कनकशृङ्गाढ्यामेकामधिकुशस्थलीम् ।
समुद्ययुस्सुरान्हन्तुमुद्यता उद्यतायुधाः ॥ ६८ ॥

शब्देनचातिघोरेण भूमिनिष्कम्पनेनच । तेषांकपालपातेन देहात्प्राणाविनिर्ययुः ॥

लोकस्थितिविनाशार्थं तेषामासीत्समुद्यमः ।
राज्यैश्वर्येणदर्पिष्ठास्तेन ते निहता मया ॥ ७० ॥

देवा ऊचुः

विश्वस्तानांत्वयाचैव नोवाचानुग्रहःकृतः । देवाऽनुग्रहकर्त्तात्वं गुणस्मृतिनिषेवितः
दिव्यदृष्टिभिरत्यर्थं यशोऽर्थंभीमपूजितः । इत्युक्त्वाप्रणतान्देवानुत्थायोचेपुनर्भवः

शिव उवाच

परिचर्याभिसंयुक्तं नित्यमुग्रनिषेविणम् । ध्यानसाधननिष्पन्नं यदन्येषांनविद्यते
मनोवाक्कायभावेन दुष्करंदुश्चरन्तपः । अनेनतपसादेवा कष्टेनदुस्सहेन च ॥ ७४ ॥

समन्तादभिवर्धन्तां युष्मत्तेजस्तथाधिकम् ।

सनत्कुमार उवाच

इत्युक्ता देवदेवेन देवा ब्रह्मपुरोगमाः ॥ ७५ ॥

ऊचुरुन्नम्यवक्त्राणि स्थिताजानुभिरीश्वरम् । महतातपसातुष्टं बहुकालर्जितेन च

देवा ऊचुः

प्राणदस्त्वं कारणस्त्वं तपसादेवदृश्यसे । तदस्माकं प्रवृत्तानां तवध्यानेवरप्रदः ॥

रक्षां कुरुष्व देवेश! भक्तानामभयङ्कर !।

ईश्वर उवाच

यत्नेन विधिना दत्तं सुव्यक्तं दर्शनं हि वः ॥ ७८ ॥

व्रियताम्भोःसुरश्रेष्ठा दास्यामोवरान्बहून् । एवमुक्ते भगवता ब्रह्मावचनमब्रवीत् ॥
देवानामग्रतः स्थित्वा श्रुतशब्दोद्भवंभवम् । प्राप्तोऽयंचाद्यभगवन् सुपर्याप्तोमहावरः
दीयतान्नस्समैश्वर्यं तेषां स्थानमथाऽक्षयम् ।

शिव उवाच

लोकेऽस्मिन्समये भक्ता मया विनिहताश्च ये ॥ ८१ ॥
नैवतेदुर्गतिंयान्ति लभन्ते सुगतिंपराम् । सार्द्धंतत्र जटाजूटैः शिरोभिश्शूलपाणयः
भान्तिमद्वामपार्श्वस्थाइमेतेद्रोहिणाङ्गणाः । एषांविनिग्रहार्थाययुष्मत्सम्बोधनायच
सविकारंमयाक्षिप्तंकपालंधरणीतले । कृतोमेऽनुग्रहस्तेषां भक्तानां भक्तिमिच्छताम्
वनेऽस्मिन्नित्यवासो मे वृक्षैरभ्यर्थितेनच । महाकालवनेदेवा आगतस्य ममाऽनघाः
तपस्यताञ्च भवतां महाकालवनन्ततः । नामद्वययुतंगुह्यं लोके ख्यातं भविष्यति ॥
गुह्यंवनंश्मशानञ्चक्षेत्राणां प्रवरं महत् । कपालव्रतचर्या च मयाह्येषा प्रकीर्तिता ॥
कपालपात्रेभुञ्जानः कपालव्रतभूषणः । कपालपाणिसन्तुष्टो भिक्षाव्रतसमन्वितः
श्मशाननिलयो रौद्रो व्रतोन्मत्तविमूढधीः ।
नन्दितः सर्वभूतेषु प्रियाप्रियसमस्सदा ॥ ८४ ॥
भस्मभूषितसर्वाङ्गोज्ञानी चैवविशेषतः । जितेन्द्रियस्यसर्वसङ्गीमृद्भस्मोदकसङ्ग्रही
नित्ययुक्तसदाजापी जपार्थितवरासनः । पुण्यतीर्थाश्रमोपेतः शनैर्देवे समाहितः ।
लोकातीतं परंज्ञानं महापाशुपतं व्रतम् । कपालव्रतमास्थाय पुराचीर्णं मयास्वयम्
कपालं परमं गुह्यं पवित्रं पापनाशनम् । कपालव्रतमेतद्धि दुर्द्धरं परमाद्भुतम् ॥
अत्यन्तमुत्कटं रौद्रमघोरंरोमहर्षणम् । महाव्रतंद्विषन्मोहात्पापेनैवस्थितो नरः ॥
न मुच्यते स पापेन जन्मकोटि शतैरपि ।
महापाशुपतं तस्मान्न हन्यान्न च दूषयेत् ॥ ८५ ॥
एकस्मिन्निहते यस्मात्कोटिर्भवति घातिता ।
एकं महाव्रतं यस्तु भोजयेच्छ्रद्धयान्वितः ॥ ८६ ॥
तेनभुक्ताभवेत्कोटिर्विप्राणां वेददर्शिनाम् । कपालपूरणींभिक्षांयतीनांयःप्रयच्छति

विमुक्तस्सर्वपापेभ्यो नासौदुर्गतिमाप्नुयात् । कपालभोजनंश्रेष्ठंमार्गोऽयंब्रह्मसम्भवः
वन्दितंलोकवेदेषु पूजितं देवदानवैः । धारयिष्यन्तियेविप्राः कपालंभूतमोहनम् ॥
समतुल्यास्तुतेब्रह्मन् विचरन्तिमहीतले । महाव्रतेरताधीराः कपालकृतभूषणाः ॥
महापाशुपतालोके रुद्रास्संसारतारकाः । धर्माधर्मविमुक्तांश्च कृत्याकृत्यविवर्जिताः

दीक्षयाऽनेन योगेन प्राणिनस्तारयन्ति ते ।
यानि तीर्थानि लोकेऽस्मिन् यज्ञकोटिशतानि च ॥ १०२ ॥
विशुद्धस्य हि ज्ञानस्य कलां नार्हन्ति षोडशीम् ।
यथाऽहं सर्वदेवानां सम्पूज्योऽस्मि पितामह !॥ १०३ ॥

तथैवसर्वयोगेभ्यः सम्पूज्योऽयंमहाव्रतः । संसारबन्धमोक्षार्थं शिवगुह्यमिदंव्रतम्
यदेतत्सर्वधर्मेण अपुनर्भवकारणम् । कपालव्रतमादाय यस्त्यजेदजितेन्द्रियः ॥ १०५
रौरवंसप्रयात्याशु प्रणीतोयमकिङ्करैः । आलापयति भावेन नतुकर्मकरोतियः ॥१०६
सरागचित्तश्शृङ्गारी नवधर्मप्रियङ्करः । एकत्रभोजीमिष्टाशी नाकैतववचः प्रियः ॥
कुग्रामेनगरेवासी कृषिवाणिज्यसेवकः । इत्यादिदुष्टदोषस्य तस्य सम्भाषणादपि॥
नरोनरकगामीस्याद्यतोमद्व्रतदूषकः । दृष्ट्वातुदुष्टमथवा महाव्रतधरो नरः ॥ १०६ ॥

न स्पृशेदङ्गमङ्गेन स्पृष्ट्वा स्नायात्तु चाम्बुभिः ।
एवं वस्सर्वमाख्यातं कपालस्य च मोक्षणम् ॥ ११० ॥
यथा मयात्र निक्षिप्तं चाऽसुरानिहताः स्वयम् ।

सनत्कुमार उवाच

एवमुक्त्वा सभगवान् ब्रह्माद्यैरमरैस्सह ॥ १११ ॥

क्षेत्रंनिर्वासयामास यथावत्कथयामि ते । आद्यमेतच्छ्मशानञ्च पठ्यतेमुनिसत्तमैः ॥
महाकालवनं व्यास! यत्रसन्निहितोहरः । अनुग्रहस्यभुवनं भूमिभागेनशम्भुना ॥
अनुग्रहार्थं भूतानां क्षेत्रंतन्मृत्युधर्मिणाम् । सुवर्णवज्ररचिता वेदिकाचमहीकृता ॥
विचित्रकुसुमारत्नैः कारितासर्वशोधना । स्वर्णवज्राङ्किततरा श्रेष्ठाहरितशाद्वला ॥

त्रिंशच्चत्वारिसम्पूर्णाः कलशाः शोभनाः स्थिताः ।

द्वाराणि तत्र चत्वारि प्रवर्याणि तपन्ति च ॥ ११६ ॥

कुम्भाः शोभन्तितत्रस्था उदिताभास्कराइव । रमतेतत्रभगवान् वनानामुत्तमेवने ॥

त्रेतायांधर्मनिरतास्तापसाब्रह्मचारिणः । सनन्दीदेवगणपः संयुतःकालदण्डिना ॥

एतत्कृतयुगेसर्वं प्रत्यक्षं दृश्यते वने । द्वापरेधर्मशीलाश्च श्रुतिविज्ञानशालिनः ॥११९

कलौतुशुद्धविज्ञानशालिनः शङ्करं हरम् । तपोऽधिकाः प्रपश्यन्तिदेवदेवं महेश्वरम् ॥

महाकालवनेनित्यं शूलपट्टिशधारिणम् । एतत्तेतथ्यमाख्यातं लोकानुग्रहकारकम् ॥

संहितानुक्रमेणाऽत्र मन्त्रैश्च विधिपूर्वकम ।

समर्चयन्ति ये विप्रा भक्त्या शम्भुमघापहम् ॥ १२२ ॥

वसन्तीह समीपन्ते महाकालानुभावतः ॥ १२३ ॥

पठतियइहलोके तस्य संस्थानमेतत् प्रथितगुणगणौघैरर्चितंदोषहन्तृ ।

शुभनतिरभिषिक्तः सोऽमरैरर्च्यमानो व्रजति हरपुरंवै यः शृणोत्येकचित्तः ॥

इति श्रीस्कान्दमहापुराण एकाशीतीसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे

कपालमोक्षणंनामषष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः

### महाकालवननिवासविधिवर्णनम्

भगवन्केनविधिना महाकालवनेऽमरैः । रुद्रलोकमभीप्सद्भिर्वस्तव्यं क्षेत्रवासिभिः ॥

किमनुष्यैरुतस्त्रीभिः सिद्धयक्षाश्रमान्वितैः । वसद्भिःकिमनुष्ठेयं तत्सर्वंप्रब्रवीहिनः

नरैःस्त्रीभिश्चवस्तव्यं वर्णैश्चाश्रमवासिभिः । स्वधर्माचारनिरतैर्दम्भमोहविवर्जितै

किंकुर्वाणैर्नरैः कर्म रुद्रभक्तिं ब्रवीहि नः ।

सनत्कुमार उवाच

त्रिविधाकथिताह्यत्र मनोवाक्कायसम्भवा ॥ ४ ॥

लौकिकी वैदिकी चान्या भवेदाध्यात्मिकी तथा ।
ध्यानधारणया बुद्ध्या रुद्राणां स्मरणं हि यत् ॥ ५ ॥ य

रुद्रभक्तिकरीचेषा मानसीभक्तिरुच्यते । व्रतोपवासनियमैर्जितेन्द्रियनिरोधिनाम् ॥

रुद्रस्य कायिकीभक्तिर्ज्ञानध्यानस्थधर्मिणाम् ।
गोघृतक्षीरदधिभिर्गन्धरक्तकुशोदकैः ॥ ७ ॥

गन्धमाल्यैश्चविविधैर्धातुभिश्चोपपादिता । घृतगुग्गुलुधूपैश्च कृष्णागुरुसुगन्धिभिः
भूषणैर्हेमरत्नानां चित्राभिःस्रग्भिरेव च । वासःप्रतिसरस्तोत्रैः पताकाव्यजनादिभिः
नृत्यवादित्रगीतैश्च सर्वप्रत्युपहारकैः । भक्ष्यभोज्यानुपानैश्च यापूजाचाक्षतैर्नरैः ॥

महेश्वरं पुरस्कृत्य भक्तिः सालौकिकी मता ।
देवमन्त्रैर्हविर्योगैर्या क्रिया वैदिकी मता ॥ ११ ॥

दर्शेचपौर्णमास्यांवा कर्तव्यंचाग्निहोत्रकम् । प्राशनंदक्षिणादानं पुरोडाशश्चरुक्रिया
इष्टिवृत्तिः सोमपानं याज्ञिकंसर्व कर्मच । ऋग्यजुस्सामजाप्यानिसंहिताध्ययनानिच

क्रियन्ते रुद्रमुद्दिश्य सा भक्तिर्वैदिकीस्मृता ।
अग्निभूम्यनिलाकाशनिशाकरदिवाकरान् ॥ १४ ॥

समुद्दिश्यकृतंकर्मतत्सर्वंदैवतंभवेत् । आध्यात्मिकीतुत्रिविधारुद्रभक्तिःस्थितामुने

साङ्ख्या च यौगिकी चान्या विभागन्तत्र मे शृणु ।
चतुर्विंशतितत्त्वानि प्रधानादीनिसङ्ख्यया ॥ १६ ॥

अचेतनानियोज्यानि पुरुषः पञ्चविंशकः । चेतनः पुरुषोभोक्ता न कार्यंतस्यकर्मणा
रुद्रः षड्विंशकः कर्तासर्वज्ञश्चेतनः प्रभुः । अजन्मनित्यमव्यक्तमधिष्ठाताप्रयोजकः ॥
पुरुषोऽव्यक्तनित्यः स्यात्कारणश्चमहेश्वरः । तत्त्वसर्गोभवेत्पूर्वं भूतसर्गश्चतत्त्वतः ॥
संख्ययापरिसर्गाय प्रधानंत्रिगुणात्मकम् । साधर्म्यमात्स्यमैश्वरं प्रधानंवैविधर्मिच
कारणंतच्चरुद्रस्य काम्यत्वमिदमुच्यते । सर्वत्रकर्तृतारुद्रेपुरुषेचाप्यकर्तृता ॥ २१ ॥

अचैतन्यं प्रधाने च तच्च तत्त्वमिदं स्मृतम् ।
तत्वान्तरेण मुच्येते कार्यंकारणमेवच ॥ २२ ॥

प्रयोजके च वै जात्यं ज्ञात्वातत्वस्य सङ्ख्यया ।
संख्याऽस्तीत्युच्यतेप्राज्ञै रुद्रतत्वार्थचिन्तकैः ॥ २३ ॥
इति तस्यतस्वभावं तत्त्वसङ्ख्या च तत्त्वतः ।
रुद्रतत्त्वाधिकश्चापि ज्ञानतत्त्वं विदुर्बुधाः ॥ २४ ॥
साङ्ख्ये ततो भक्तिरेषा सद्भिराध्यात्मिकी मता ।
यौगिकीमपिमे भक्त्या शृणु भक्तिं महासुराः ॥ २५ ॥
प्राणायामपरोनित्यंध्यायेतनियतेन्द्रियः । धारणां हृदयेधृत्वा ध्यायते यो महेश्वरम्
हृत्कञ्जकर्णिकासीनं पञ्चवक्त्रंत्रिलोचनम् । शशाङ्कद्योतितजटं व्यालावृतकटीतटम्
श्वेतं दशभुजं भद्रं वरदाभयहस्तकम् । योगजामानसीव्यास रुद्रभक्तिःपरास्मृता ॥
यएवंभक्तिमान्रुद्रेरुद्रभक्तःसउच्यते । विधिन्तुशृणुमेव्यासयःस्मृतःक्षेत्रवासिनाम्
स्वयंरुद्रेणविहितो ब्रह्मादीनां समागमे । कथितो विस्तरात्पूर्वं पूर्वेषांतत्रसन्निधौ
निर्ममा निरहङ्कारा निस्सङ्गानिष्परिग्रहाः ।
बन्धुवर्गे च निःस्नेहाः समलोष्टाश्मकाञ्चनाः ॥ ३१ ॥
भूतानांकर्मभिर्नित्यं त्रिविधैरभयप्रदाः । साङ्ख्ययोगविधिज्ञाश्चधर्मज्ञाश्छिन्नसंशयाः
यजन्तेविविधैर्यज्ञैर्येविप्राः क्षेत्रवासिनः । महाकालवनेतेषां मृतानांयत्फलं शृणु ॥
व्रजन्त्येवसुदुष्प्रापं ब्रह्मसायुज्यमक्षयम् । सम्प्राप्यनपुनर्जन्म लभन्तेमोक्षमक्षयम् ॥
पुनरावर्तनं हित्वा विधिं माहेश्वरं स्थिताः । पुनरावृत्तिरन्येषां प्रपञ्चाश्रमवासिनाम्
गार्हस्थ्यविधिमासाद्य षट्कर्मनिरतास्सदा ।
वेदोक्तविधिनासम्यगमन्त्रस्तोत्रनियन्त्रिताः ॥ ३६ ॥
अधिकंफलमाप्नोति सर्वदुःखविवर्जितः । सर्वलोकेषुचान्यत्र गतिस्तस्यनहन्यते
दिव्यैनैश्वर्ययोगेन सुरूढः सुपरिग्रहः । बहुसूर्यप्रकाशेन विमानेन सुवर्चसा ॥ ३८ ॥
वृतः स्त्रीणां सहस्रैश्च स्वच्छन्दगमनालयः ।
विचरत्यविचारेण सर्वलोकान्दिवौकसाम् ॥ ३९ ॥
स्पृहणीयतमः पुंसां सर्ववर्णोत्तमो धनी । स्वर्गाच्च्युतःप्रजायेतकुलेमहतिरूपवान्

धर्मज्ञोरुद्रभक्तश्च सर्वविद्यार्थपारगः। तथैव ब्रह्मचर्येण गुरुशुश्रूषणेन च ॥ ४१ ॥
वेदाध्ययनसंयुक्तो भिक्षावृत्तिर्जितेन्द्रियः। नित्यंसत्यव्रतेयुक्तः स्वधर्मेचप्रमोदवान्
मृतः कामसमृद्धेन सर्वभोगावलम्बिना । सूर्येणेवद्वितीयेन विमानेनविराजितः ॥
गुह्यकानामरुद्रस्य गणाः परमसम्मताः। अप्रमेयबलैश्वर्या देवदानवपूजिताः ॥ ४४ ॥
तेषांचसमतांयाति तुल्यैश्वर्यसमन्वितः । देवदानवमर्त्येषु सचपूज्यतमोभवेत् ॥
वर्षकोटिसहस्राणि वर्षकोटिशतानिच । एवमैश्वर्यसंयुक्तोरुद्रलोकेमहीयते ॥ ४६ ॥
उषित्वाऽसौविभूत्यावै यदा वै च्यवतेनरः। रुद्रलोकाच्च्युतोभूमौवसतेनात्रसंशयः
महाकालवनेक्षेत्रे ब्रह्मचर्याश्रमेस्थितः । महेश्वरपरोनित्यंवसेद्वाम्रियतेऽथवा ॥ ४८
मृतोऽसौयातिदिव्ये वै विमानेसूर्यवर्चसि । पूर्णचन्द्रप्रकाशेन शशिवत्प्रियदर्शनः
रुद्रलोकं समासाद्य गुह्यकैस्सहमोदते। ऐश्वर्यंचमहद्भुङ्क्ते सर्वस्य जगतः प्रभुः॥

भुक्त्वा युगसहस्राणि रुद्रलोके महीयते।
प्रच्युतस्तु पुनस्तस्माद्रुद्रलोकात्क्रमेण तु ॥ ५१ ॥

नित्यंप्रमुदितस्तत्र भुक्त्वालोकमनामयम्। द्विजानामुत्तमेचैव कुलेमहतिजायते ॥
मानुषेषुचसर्वेषु वसेद्भूत्वासुरूपवान् । स्पृहणीयवपुः स्त्रीणां महाभोगपतिर्भवेत्
वानप्रस्थसमाचारो वनौषधिनिषेवकः । शीर्णपत्रसमाहारः फलपुष्पाम्बुभोजनः ॥
कणाशेनाश्मकुट्टेन दन्तोलूखलकेनच । येनकेनाऽप्युपायेन जीर्णवल्कलवस्त्रतः
जटीत्रिषवणस्नायी मुक्तकेशश्चदण्डवान्। जलशायीपञ्चतपा वर्षास्वभ्रशयीतथा ॥
कीटकण्टकपाषाणभूम्यान्तुशयनं तथा । स्थानवीरासनरतः संविभागीदृढव्रतः ॥
अरण्यौषधिभोक्ताच सर्वभूताभयप्रदः। नित्यं धर्मपरो मौनी जितक्रोधोजितेन्द्रियः
रुद्रभक्तः क्षेत्रवासी महाकालवनेमुनिः। तरुणार्कप्रकाशेन वेदिकास्तम्भशोभिना ॥
रुद्रभक्तोविमानेन यातिकामप्रचारिणा । विराजमानोनभसि द्वितीयइवचन्द्रमाः ॥
गीतवादित्रशब्देन संवृतोऽप्सरसांगणैः। वर्षकोटिशतंसाग्रं रुद्रलोकेमहीयते ॥६१

रुद्रलोकाच्च्युतश्चापि विष्णुलोकेमहीयते।
विष्णुलोकात्परिभ्रष्टो ब्रह्मलोकं स गच्छति ॥ ६२ ॥

तस्मादपि च्युतः स्थानाद्द्वीपेषु स हि जायते ।
स्वर्गेषु च तथाऽन्येषु भोगान् भुङ्क्ते यथेच्छया ॥ ६३ ॥
भुक्त्वैश्वर्यंनरस्तेषु मर्त्योमर्त्येषुजायते । राजावाराजतुल्योवा जायतेधनवान्सुखी
सुरूपः सुभगः कान्तः कीर्तिमान् रुद्रभावितः ।
ब्राह्मणाः क्षत्त्रिया वैश्याः शूद्रावा क्षेत्रवासिनः ॥ ६५ ॥
स्वधर्मनिरता व्यास! स्ववृत्त्याचारजीविनः । सर्वात्मनारुद्रभक्ताभूतानुग्रहकारिणः॥
महाकालवनंक्षेत्रं येवसन्तिमुमुक्षवः । मृतास्तेरुद्रभवनं विमानैर्यान्तिशोभनैः ॥ ६७
अप्सरोगणसंयुक्तैः कामगैः कामरूपिभिः । अथवाप्तसम्विदग्नौ शरीरं विजुहोतियः
रुद्राध्यायीमहासत्त्वः स रुद्रभवनेवसेत् । रुद्रलोकात्क्षये तेषां पिशाचोगुह्यकैस्सह
सर्वलोकोत्तमेरम्ये भवतीष्टाप्तिसाधकः । येत्यजन्तिमहाकाले प्राणाननशनेनराः ॥
तेषामप्यक्षयो व्यास! रुद्रलोको महात्मनाम् ।
साङ्ख्यास्तिष्ठन्ति ते रुद्रं सर्वदुःखविवर्जिताः ॥ ७१ ॥
सर्वामरयुतन्देवं नन्दीदेवगणैर्युतम् । अनाशकमृताः शूद्रा महाकालवने नराः ॥ ७२
सिंहयुक्तैस्तुतेयान्ति विमानैरर्कसन्निभैः । नानावर्णसुवर्णैश्च पुष्पगन्धादिवासितैः
अनौपम्यगुणैरम्यैरप्सरोगीतवाद्यकैः । रुद्रलोकेनरानार्यः सर्वेऽप्यनशनेमृताः ॥ ७४
तत्रोषित्वाचिरं कालंभोगान्भुक्त्वा यथेप्सितान् ।
धनी विप्रकुले भोगी जायते मर्त्यमागतः ॥ ७५ ॥
करीषंसाधयेद्यस्तु महाकालवनेनरः । सर्वरोगविनिर्मुक्तो रुद्रलोकं स गच्छति॥
रुद्रलोकेवसेत्तावद्यावत्कल्पक्षयोभवेत् । तत्रभुक्त्वा महाभोगानिहजातोमहीपतिः॥
पृथिव्यास्सकलायाश्च रूपवान्सुभगो नरः ॥ ७८ ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमे ऽवन्तीखण्डे
महाकालवननिवासविधिवर्णनंनामसप्तमोऽध्यायः ॥ ७ ॥

# अष्टमोऽध्यायः

## कलहनाशनादितीर्थवर्णनम्

व्यास उवाच

आचारः प्रथमोधर्मस्सर्वधर्मपरायणः । स्वधर्मेनिरतश्चैवजितक्रोधोजितेन्द्रियः ॥
रुद्रलोकेव्रजेदेव नात्रचिन्तामतेर्मम । असंशयश्चगच्छन्ति लोकानन्यान्छशिप्रभैः ॥
विनापिक्षेत्रवासेन तथैवनियमेनच । स्त्रियोम्लेच्छाश्च शूद्राश्च पशवःपक्षिणोमृगाः
मूकाजडान्धवधिरास्तपोनियमवर्जिताः । एतेषांकागतिर्विप्र! महाकालवनेमृताः ॥

सनत्कुमार उवाच

स्त्रियोम्लेच्छाश्च शूद्राश्चपशवःपक्षिणोमृगाः । कालेनैवमृताव्यासरुद्रलोकंव्रजन्तिते
शरीरैर्दिव्यरूपैश्च सर्वभोगसमन्विताः ॥ ६ ॥

सनत्कुमार उवाच

अस्मिन् महाकालवने शिवो वसति सर्वदा ।
एकस्मिन्दिवसे देवो लीलां कर्तुं शिवाम्प्रति ॥ ७ ॥

ऊचेकालिसमागच्छेत्यादीनिवचनानिसः । तयासहवसन्व्यास श्मशानेप्रेतसङ्कुले
इत्थमुक्तातुशर्वेण कालीतिपार्वतीयदा । तदासाकुपितादेवीकटूचेशङ्करम्प्रति ॥ ६ ॥
एवन्तुकलहोजातः शिवगौर्योर्हियत्रतु । देवस्तत्रसमुद्भूतो नाम्नाकलकलेश्वरः ॥
कृतमग्रेतदाकुण्डं नाम्नाकलहनाशनम् । स्नाने तत्रकृतेव्यास! नस्यात्कलहिनीप्रिया

तस्मिंस्तीर्थे नरः स्नात्वा पूजयित्वा महेश्वरम् ।
उपोष्य रजनीमेकां कुलानां तारयेच्छतम् ॥ १२ ॥

तत्रयच्छति यो दानं त्रुटिमात्रञ्चचन्दनम् । आत्मनातारितास्तेन दशपूर्वेदशापरे ॥
भूमिदानंचयस्तत्र प्रदास्यति नरोमुने !। अपिगोचर्ममात्रेण सर्वभूम्यधिपोभवेत् ॥
ग्रामेकांरककामेवभूमेरप्येकमङ्गुलम् । यः प्रदास्यतिभक्त्याहिसवैराजाभविष्यति

धेनुमश्वांस्तिलान् वस्त्रं भाजनं ताम्रदोहनम् ।
उपानहश्चछत्रञ्च तथा चैवेष्टपादुके ॥ १६ ॥
ये प्रदास्यन्ति विप्रेभ्यस्तेषां लोकाः सदाक्षयाः ।
तस्य दक्षिणपार्श्वे च पृष्ठमाता च देवता ॥ १७ ॥
सावैवसर्वलोकानां देवीदुरितहारिणी । तत्रतीर्थन्तुविज्ञेयं मणिकर्णिकमुत्तमम् ॥
तस्मिन्स्नात्वातु यः पश्येत्पृष्ठमातेतिसञ्ज्ञिताम् ।
स मुक्तस्सर्वपापेभ्यः सिद्धिमाप्नोति वाञ्छिताम् ॥ १६ ॥
तस्यास्तुदर्शनं कृत्वा मार्गेगमनमाचरेत् । नभयंतस्यचोरेभ्यो रक्षोभूतभयंतथा ॥
स्वदेशेपरदेशेवा पर्वतेष्वटवीषुच । नसमुद्रेभयंतस्य तथावैदुष्टभावनाम् ॥ २१ ॥
ग्रहपीडासुसर्वासु तथाराजभयादिषु । बस्तं वायदिवामेषं महिषंवापिघातयेत् ॥
देवीमुद्दिश्ययोविप्रःसोऽभीष्टंफलमश्नुते।आश्विनस्यसिताष्टम्यांपूजनंचार्द्धरात्रिके
यःस्नातिपुरतोदेव्याःससिद्धिंलभतेपराम् । मृतपुत्रातुयानारीकुण्डेस्नात्वासभर्तृका
स्नाति वै यदि कुम्भेन अग्रे देव्या विधानतः ।
स्नात्वा नान्यमुखं पश्येत् कुम्भस्नानं विना मुने ! ॥ २५ ॥
तस्यास्सञ्जायतेपुत्रो यथादेवः षडाननः । पृष्ठमातुः पुरा पुण्यं तीर्थमप्सरसां शुभम्
रूपसौभाग्यसम्पन्नस्तत्र स्नातो भवेन्नरः ।
उर्वश्यावै पुरा व्यास! तीर्थस्याऽस्य प्रभावतः ॥ २७ ॥
भर्त्ता पुरूरवा लब्धो लोके योऽसौ महीपतिः ॥ २८ ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे तीर्थमाहात्म्ये कलहनाशनादितीर्थमहिमवर्णनंनामाऽष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः

### अप्सरःकुण्डमहिमवर्णनम्

व्यास उवाच

कथमप्सरसांतीर्थं तत्रजातंमहामुने !। कारणे न यथा येन यस्मिन्कालेप्रतिष्ठितम्॥
तथातन्मेसविस्तारं सरहस्यंप्रकीर्तय। कथंपुरूरवाश्चासौ भार्य्यातेनवराप्सराः॥
उर्वशीनामकासातु केनजातावराङ्गना। सर्वमेतद्यथावृत्तं ब्रूहि कौतूहलंहिमे॥ ३॥

सनत्कुमार उवाच

नरनारायणौपूर्वं यत्रवैतेपतुस्तपः। बदरिकाश्रमस्थौतौ नेनेन्द्रोभयमागतः॥ ४॥

सर्वाश्चाप्सरसोहृद्या रूपयौवनदर्पिताः।
आदिष्टायामघवता विघ्नार्थं च समागताः॥ ५॥

तौदृष्ट्वाप्सरसस्तत्र रमन्त्योमदविह्वलाः। विघ्नार्थंरहआयातास्तदादेवौप्रजल्पतः॥

अस्माकन्नस्त्रियः सन्ति तेन वै विघ्नकारणम्।
एवं सञ्जल्प्य च नरो नारायणमुवाच ह॥ ७॥
करिष्याम्यहमेकान्तामासां वैरूपतोऽधिकाम्।
मञ्जर्या सहकारस्य स्त्रीमूरुभ्यां चकार ह॥ ८॥

रूपेणाप्रतिमांलोके सर्वाभरणभूषिताम्। उच्छ्रितांप्रमदांदृष्ट्वा ज्वलनाभांवराङ्गनाम्
गत्वाशशंसुस्ताःशक्रंनतौलोभयितुंक्षमाः। शक्रस्तासांवचःश्रुत्वागत्वादेवावुवाचह
प्रणामावनतोभूत्वाशिरस्यञ्जलिमादधन्। अहमर्थीस्त्रियश्चास्याःप्रसादःक्रियतामिति
ततस्तान्ददतुर्देवाविन्द्रायपरमेश्वरौ। अस्मद्वचनसामर्थ्याद्गृहाणेमांत्वमुर्वशीम्॥
ऊरुभ्यांजनितायस्मान्नरेणेयंवराङ्गना। मञ्जर्यासहकारस्य तेनेयमुर्वशीमता॥ १३॥
पुरन्दरोगृहीत्वातामुर्वशींपरमाङ्गनाम्। शिक्षाञ्चक्रियतांचित्रपथानृत्येविचक्षणा॥
क्रियतामचिरादेषा यत्नमास्थायशोभनम्। एवमुक्तेतुचित्रेण कृतातेन विचक्षणा॥

बहुप्रवीणासाजाता नृत्येगीतेचकोविदा । एवंसान्यवसत्तत्र पुरासद्मनिसुन्दरी ॥
गतेबहुतिथेकाले तत्रागात्सनरेश्वरः । इलस्यपुत्रोधर्मात्मानाम्नाचैवपुरूरवाः ॥ १७
इन्द्रस्यार्द्धासनगतो नृत्यंपश्यतितत्रह । नृत्यन्तींवासवस्याग्रे उर्वशींवीक्ष्यकामुकः
हृतचित्तस्तयाराजा नकिंचित्प्रत्यपद्यत । धैर्यंचित्तेसमावेश्य मुहूर्तंपर्यवस्थितः ॥
उर्वशीचतदातस्य दर्शनाहृतचेतसा । तत्प्रदेशाद्विनिष्क्रम्यकामार्ताचातिविह्वला

भूमौ सा पतिता बाला उच्छ्रिताद्रङ्गमण्डलात् ।
अथाऽऽत्मानञ्च सम्वेद्य उत्थिता भूमिमण्डलात् ॥ २१ ॥

दृष्टासाराजसिंहेन मन्मथेनप्रपीडिता । गतः पुरूरवाभूमिं तामेवमनसास्मरन् ॥
स्मरन्ती राजशार्दूलं गतासाप्युर्वशीगृहम् । चित्राङ्गदगृहेगत्वा दूतंसाथचकारह

चित्राङ्गदेन सा नीता रात्रौ यत्र पुरूरवाः ।
उर्वश्यारहितः स्वर्गः शून्योऽप्यासीद्दिवौकसाम् ॥ २४ ॥

रात्रावेवचसातेन आनीतात्रिदिवंपुनः । तयाविरहितस्सोपिशून्यचित्तःपरिभ्रमन् ॥
उन्मत्ततांगतोव्यास! षष्टिवर्षाणिपार्थिवः । परिभ्रमन्सर्वतीर्थानि महाकालवनंगतः
गन्धर्वेणोर्वशीस्वर्गे नीतासापरमाप्सराः । नापिशेतेनचाश्नाति हेराजन्नितिजल्पति
तावदप्सरसस्सर्वास्ताः प्राप्तायत्रचोर्वशी ।रम्भाचमेनकाचैव प्रम्लोचापुञ्जिकस्थली
जलपूर्णाशुकापूर्णावसन्ताचन्द्रिकातथा । सूर्यदत्ताविशालाक्षी चन्द्राचन्द्रप्रभातथा
आगत्यतास्तुसहिता उर्वशींवाक्यमब्रुवन् । किंरोदिषिवरारोहे! मर्त्यहेतोःसुलोचने

तद्वाक्यमुर्वशी तासां श्रुत्वा वचनमब्रवीत् ।
सौख्यं पण्डो (ढो?) न जानाति सङ्गात्स्त्रीपुंसयोर्हि यत् ॥ ३१ ॥
अनयोपमया ज्ञेया तस्याऽर्थे कृतनिश्चया ।
श्रुत्वा चेतिव चस्तस्यास्तास्सम्मन्त्र्य समाहिताः ॥ ३२ ॥

अज्ञातास्ताश्चदेवानां महाकालवनेगताः । नृपञ्चददृशुस्तत्रवृक्षच्छायानिषेवितम् ॥

दृष्ट्वाऽऽगत्य नृपं सर्वा भृशं जातास्सुविह्वलाः ।
दृष्ट्वा तथाविधास्सर्वाः कामार्तास्सुरयोषितः ॥ ३४ ॥

मूढचित्ताः प्रहस्यैवमुर्वशीवाक्यमब्रवीत् ।

उर्वश्युवाच

अयं सपुरुषव्याघ्रो विना येनाऽहमीदृशी । ३५

ऐलः पुरूरवानामा विख्यातोजगतीपतिः । एवंब्रुवन्त्यांवैतस्यामुर्वश्यामप्सरोगणः
मौनीभूतश्चिरंतस्थौलज्जयानतकन्धरः । एतस्मिन्नन्तरेप्रायाद्भगवांस्तत्रनारदः ॥

दृष्ट्वा तथागतास्सर्वा उर्वश्या सहितं नृपम् ।

सम्प्रेक्ष्य च ततःप्राह किं यूयमिह निःस्वनाः ॥ ३८ ॥

त्यक्त्वा तथाविधं रम्यमिन्द्रस्याऽऽलयमुत्तमम् ।

वरश्च व्रियतां शीघ्रं वियोगो न भविष्यति ॥ ३६ ॥

माहात्म्यञ्चाऽस्यतीर्थस्य कथयामास नारदः ।

अस्मिन्या दुर्भगा तीर्थे स्नायात्स्त्रीपुरुषोऽपिवा ॥ ४० ॥

सौभाग्यं लभते सम्यक् सर्वभोगांस्तथोत्तमान् ।

आत्मानन्तोलयेद्यस्तु तिलैर्वा लवणेन वा ॥ ४१ ॥

शर्कराभिश्चवल्लीभिर्वित्तशाठ्यविवर्जितः । गुडेन मधुनावापि देवीमुद्दिश्य पार्वतीम्
लवणेन स्वरूपाढ्या तिलैस्गुर्वाङ्गशोभना । द्रव्यवृद्धिःशर्करया गुडेनाङ्गेषु पूर्णता
मधुनाचैवसौभाग्यं तीर्थस्याऽस्यप्रभावतः । द्वादशैवतुयुग्मानिदेव्यादेवस्यभोजयेत्

काञ्चीं मुखरिणीं दद्यात् ताटङ्कं मुकुराञ्जनम् ।

क्षौमजां कञ्चुकीञ्चैव वस्त्रे कौसुम्भके तथा ॥ ४५ ॥

श्वेतानुलेपनं पुंसां स्त्रीणांदद्याच्चकुङ्कुमम् । आषाढे श्रावणे वापिमासिभाद्रपदेतथा
शुक्लाश्विनतृतीयायामुत्तमं व्रतमाचरेत् । उत्तमा जायते नारी यथा देवी तथैवच

उमामाहेश्वरौ कार्यौ सौवर्णौ च स्वशक्तितः ।

धार्य्यौ नार्य्या हि तौ देवौ तुलाशिक्ये विधानतः ॥ ४८ ॥

फलानि चैव देयानि शाकानि विविधानिच । तत्रदत्तंहुतंजप्तं सर्वंकोटिगुणम्भवेत्
एवं याकुरुते तत्र तीर्थेनारी समाहिता । गन्धर्वाप्सरसांलोके मृतायातिनसंशयः

अत्रतीर्थेचद्वेलिङ्गे पूजिते देवदानवैः । दृष्ट्वा ते परमां सिद्धिं प्राप्नुतोदम्पती तथा
कार्त्तिक्यान्तु विशेषेण कृत्वा तत्र प्रजागरणम् ।
सम्पूज्य गन्धपुष्पैश्च रुद्रलोकमवाप्नुयात् ॥ ५२ ॥
यथा देव्याःस्वरूपेण वियोगोनैव दृश्यते । तथातयोर्वियोगश्च दृश्यते न कदाचन
एवं कृत्वाःपिता विप्र सर्वाश्चत्रिदिवंगता । उक्तमप्सरसांतीर्थं तीर्थान्तरमथोच्यते
दक्षिणे पृष्ठदेव्या वै माहिषंकुण्डमुच्यते! । महिषोदानवः पूर्वं निहतो गणनायकैः
तत्र तीर्थेनरः स्नात्वा मातृःसम्पूज्ययत्नतः । प्रेतरक्षःपिशाचानांपीडयासविमुच्यते
इति श्रीस्कान्दे महापुराण एकाशीति साहस्र्या संहितायां पञ्चमे-
ऽवन्तीखण्डे ऽप्सरसः कुण्डमहिमवर्णनंनाम
नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः

### माहिषकुण्डरुद्रसरोवरमाहात्म्यवर्णनम्

व्यास उवाच

कथंतन्माहिषंकुण्डं मातृणामावृतिःकथम् । रुद्रेणतु कथंक्षेत्रे महिषोदानवोहतः ॥

सनत्कुमार उवाच

कपालंखण्डमादाय महादेवोऽप्यतिप्रभम् । ब्रह्मतेजोमयंदिव्यंज्वलन्तमिवचत्विषा
क्रीडमानोजगन्नाथोमोहयामासवैसुरान् । निमेषात्सइमंलोकं योगात्मायोगलीलया
प्राप्यपुण्यतमंक्षेत्रं यत्रातिष्ठन्महाप्रभुः । तत्र तत्र महादिव्यं कपालं देवताधिपः ॥४
स्थापयामास ःदीप्तार्चिर्गणानामग्रतः प्रभुः ।
तत्स्थापितमथो दृष्ट्वा गतास्सर्वे महौजसः ॥ ५ ॥
विनदन्तो महानादं नादयन्तोदिशोदश । क्षुब्धार्णवाशनिप्रख्यं नभोयेनविदीर्यते ॥

तेनशब्देनघोरेण दानवोदेवकण्टकः। हालाहल इतिख्यातो देशन्तमभिधावितः॥
अस्पृश्यमानःक्रोधार्तो दुरात्मादुर्जयस्सुरैः। ब्रह्मदत्तवरश्चैव माहिषंवपुरास्थितः॥
दैत्यैःपरिवृतोघोरैः कोटिभिः प्रोद्यतायुधैः। तमायान्तन्तुसक्रोधंमहिषंदेवकण्टकम्

समावेक्ष्याऽऽह वै देवो गणान्सर्वान्पिनाकधृक्।
मायावी गणपो दैत्यस्त्रैलोक्यस्याऽपि कण्टकः॥ १०॥

आयाति त्वरितोयूयंतस्मादेनंविनिघ्नथ। कपालस्यगतिंसर्वे आश्रितागणनायकाः
ततोदेवगणाभीतास्तमायान्तं महासुरम्। गर्जमानं महानादं भ्रममाणं महाप्रभम्
बिभिदुश्शूलसङ्घातैरसिभिर्मुसलैस्तथा। सम्मोह्यशरजालेन ततोभूमौन्यपातयन्
हतेतस्मिन्महादेवो देवान्प्रोवाच वै तदा। अहोदर्पोऽतिमूढस्य दर्पेण निधनं गतः॥

एतस्मिन्नन्तरे व्यास! तत्कपालात्सुभैरवाः।
दीप्तास्या मातरः सर्वाः प्रचण्डास्त्रामहाबलाः॥ १५॥
अभ्यधावंस्तमुद्देशं महादेवं न्यवेदयन्।
दैत्यान्ताभक्षयन्तिस्म भित्त्वा भित्त्वा महाबलम्॥ १६॥
कपालमातरस्तस्मात् ख्याताःक्षेत्रे महाबलाः।
महाकपालस्तस्माद्वै सद्भशः परिकीर्तितः॥ १७॥
स्थापितस्य कपालस्य भित्त्वा तदभवत्पुरा।
ख्यातं शिवतडागञ्च सर्वपापप्रणाशनम्॥ १८॥

तद्द्यापि महादिव्यंसरस्तत्रप्रकाश्यते। त्रिषुलोकेषु विख्यातं गन्धर्वगणसेवितम्
पात्रस्थमुद्धृतंवापि शीतोष्णंक्वथितंजलम्। पुनातिरौद्रसरसोऽश्वमेधावभृथोयथा
प्रागाद्ब्रह्मापितंदेशंदेवतानांशतैर्वृतः। स्वर्गलोकस्यनिश्रेणीकीर्तिताब्रह्मणास्वयम्

अत्र त्यजन्ति ये प्राणान् रुद्रलोकं व्रजन्ति ते।
धन्या व्यास नरा मर्त्ये महाकालवने स्थिताः॥ २२॥
रौद्रे सरसि ये स्नान्ति जलं वाऽपि पिबन्ति ये।
स्वधर्माचारनिरताः पश्यन्तीशानमीश्वरम्॥ २३॥

इति स्वर्गगता देवाः स्पृहां कुर्वन्ति नित्यशः ॥ २४ ॥

इदं शुभं दिव्यमधर्मनाशनं महाकपालं सुरपूजितं सदा ।
महाप्रभं पापहरं सनातनं सुरेशलोकादिषु दुर्लभं सदा ॥ २५ ॥
तपोरतैः सिद्धगणैरभिष्टुतं यथानभःस्थं दिननाथमण्डलम् ।
एकाग्रचित्तः शृणुयात्प्रसादतस्त्रिविष्टपं गच्छति सोऽभिनन्दितः ॥ २६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमे-
ऽवन्तीखण्डे माहिषकुण्डरुद्रसरोमाहात्म्यं नाम
दशमोऽध्यायः ॥ १० ॥

---

# एकादशोऽध्यायः

## कुटुम्बेश्वरतीर्थवर्णनम्

सनत्कुमार उवाच

अथाऽःतसम्प्रवक्ष्यामितीर्थंत्रैलोक्यविश्रुतम् । स्वर्गंभूतंमहेशस्यकुटुम्बेश्वरनामकम्
तस्मिंस्तीर्थेनरःस्नानं करोतिश्रद्धयान्वितः । मुच्यते सर्वपापेभ्यः सप्तजन्मकृतैरपि

शुचिःपश्यति यो देवं कृत्वा श्राद्धं यथाविधि ।
सर्वां ल्लोकानतिक्रम्य शिवलोकं स गच्छति ॥ ३ ॥
यस्तु सर्वाणि शाकानि कन्दानि विविधानि च ।
तीरे चास्य प्रयच्छेत्तु स प्राप्नोति परां गतिम् ॥ ४ ॥

पौषे सितप्रतिपदे अष्टम्यां वा समाहितः । एकेनैवोपवासेन अश्वमेधफलंलभेत् ॥

आश्विन्यां पौर्णमास्याञ्च शुचिः पश्यति मानवः ।
पट्टबन्धं महेशस्य सविपाप्मा दिवं व्रजेत् ॥ ६ ॥

चैत्रेमासि सितेपक्षे पञ्चम्यां समुपोषितः। कर्पूरंकुङ्कुमञ्चैव मृगनाभिसचन्दनम्
निवेदयति देवाय नैवेद्यं घृतपायसम्। सुरूपञ्चैवंविप्रेन्द्रं सभार्यंभोजयेद्द्विजम् ॥
रुद्रलोकमवाप्नोति यावदिन्द्राश्चतुर्दश। अतः परं प्रवक्ष्यामि तीर्थंविद्याधरस्यतु ॥
तत्र स्नात्वा शुचिर्भूत्वा विद्याधरपतिर्भवेत् ॥ १० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमे-
ऽवन्तीखण्डे कुटुम्बेश्वरतीर्थमाहात्म्यं नामै-
कादशोऽध्यायः ॥ ११ ॥

---

# द्वादशोऽध्यायः

## विद्याधरतीर्थमाहात्म्यवर्णनम्

व्यास उवाच

कथंतीर्थमिदंक्षेत्रं जातमत्रमहामुने!। प्रसादाद्ब्रूहिमेब्रह्मञ्छ्रोतुमिच्छामिसाम्प्रतम्

सनत्कुमार उवाच

विद्याधरपतिः कश्चिदासीद्रूपधरःपुरा। ग्रथितापारिजातस्य मालातेनमनोरमा ॥
गृहीत्वासचतांमालां गतोवासववेश्मनि। नृत्यन्तीवासवस्याग्रेदृष्टातेनचमेनका ॥
दत्तातस्यैतदातेन सामालानृत्यसंसदि। सामेनकातुतत्स्थाने मालयामोहितासती॥
कोपाविष्टेनशक्रेण शप्तोविद्याधरस्तदा। पृथिव्यांगच्छंपापिष्ठ!नृत्यभङ्गस्त्वयाकृतः
विद्याधरपदं त्यक्त्वा मम शापाच्च साम्प्रतम्।
एवमुक्तस्तु शक्रेण वाक्यं विद्याधरोऽब्रवीत् ॥ ६ ॥
अजानतामयानाथ अपराधःकृतोऽधुना। अनुग्रहमतोदेव कुरु मे त्वं प्रसादतः ॥ ७॥
एवमुक्तस्सशक्रोवै विद्याधरमुवाचह। गच्छावन्तीं त्वमद्यैव यत्रास्तेगाङ्गटीगुहा ॥

तस्याश्चोत्तरभागेतु विद्यतेतीर्थमुत्तमम् । ख्यातंतत्त्रिषुलोकेषु नाम्नाविद्याधरंशुभम्
भक्त्यातत्रकृतेस्नाने विद्याधरपतिर्भवेत् । अतस्त्वमपितत्रैव कुरु स्नानं प्रयत्नतः ॥
एवमुक्तःसशक्रेण आगतोऽवन्तिमण्डले । स्नानं कृतश्च तेनैव तीर्थे तस्मिन् मनोरमे

प्रभावात्तस्य तीर्थस्य स विद्याधरपोऽभवत् ।
एवं व्यास!समाख्यातं तीर्थं विद्याधरं शुभम् ॥ १२ ॥

तत्रपुष्पाणियोदद्याच्चन्दनञ्चविलेपनम् । लभेत्समस्तभोगान्सइहलोकेपरत्र च ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमे ऽवन्तीखण्डे
विद्याधरतीर्थमाहात्म्यंनाम द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः

### मर्कटेश्वरस्नानेनशीतलारोगभयनाशवर्णनम्

सनत्कुमार उवाच

अतःपरंप्रवक्ष्यामि मर्कटेश्वरमुत्तमम् । तत्रतीर्थं चविख्यातं सर्वकामप्रदायकम् ॥

तस्मिंस्तीर्थे नरः स्नात्वा गोशतस्य फलं लभेत् ।
विस्फोटानां प्रशान्त्यर्थं बालानाञ्चैव कारणे ॥ २ ॥
माषेण मिश्रितान्कृत्वा मसूरांस्तत्र कुट्टयेत् ।
शीतलायाः प्रभावेण बालाः सन्तु निरामयाः ॥ ३ ॥
ये पश्यन्ति नरा भक्त्या शीतलान्दुरितापहाम् ।
न तेषां दुष्कृतं किञ्चिन्न दारिद्र्यं द्विजोत्तम!॥ ४ ॥
न च रोगभयं तेषां ग्रहपीडा तथैव च ॥ ५ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
शीतलामाहात्म्यंनाम त्रयोदशोऽध्यायः ॥ १३ ॥

# चतुर्दशोऽध्यायः

## स्वर्गद्वारमाहात्म्यवर्णनम्

सनत्कुमार उवाच

स्वर्गद्वारेनरः स्नात्वा दृष्ट्वा देवञ्च भैरवम् । श्राद्धंतत्रैवकुर्वीत पितृनुद्दिश्य भक्तितः ।
पितृंश्चसनरोव्यास तारयेदात्मना सह । स्वर्गद्वारेणसोऽभ्येति रुद्रस्यपरमं पदम्
भैरवस्याऽग्रतोदेवी पूर्वेतिष्ठतिचाम्बिका । तां तु दृष्ट्वानरः स्त्रीवा मुच्यतेसर्वपातकैः
महानवम्यांपुरुषःकृत्वावस्तमयंबलिम् । महिषंवासुरांमांसं मालां विल्वमयींशुभाम्
भक्त्या निवेदयेद्देव्यै सर्वसिद्धिमवाप्नुयात् ।
तत्र स्नात्वा नरो भक्त्या पूजां कृत्वा शिवस्य च ॥ ५ ॥
स्वर्गद्वारेण सोऽभ्येति रुद्रस्य भवनं द्विज! ॥ ६ ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमे ऽवन्तीखण्डे स्वर्गद्वारमाहात्म्यंनामच्तुर्द्दशोऽध्यायः ॥ १४ ॥

---

# पञ्चदशोऽध्यायः

## राजस्थलसमीपेचतुःसमुद्रस्थितिवर्णनम्

सनत्कुमार उवाच

स्नात्वाचतुस्समुद्रेतुपश्येद्राजस्थलंशिवम् । यस्यदर्शनमात्रेण पुत्रवाञ्जायतेनरः ॥
समुद्रास्सन्तिचत्वारः क्षारक्षीरदधीक्षवः । समीपेतस्यदेवस्य सुद्यम्नेनप्रतिष्ठिताः

व्यास उवाच

लक्षयोजनपर्यन्तंजम्बूद्वीपं सुशोभनम् । मर्यादायांस्थापितोऽयंसमुद्रःक्षारसञ्ज्ञितः

शाकद्वीपेद्विलक्षेतु क्षीराब्धिस्संप्रतिष्ठितः । दध्यब्धिश्चकुशद्वीपे चतुर्लक्षेप्रतिष्ठितः
शालमले त्विक्षुजलधिर्ह्यष्टलक्ष प्रतिष्ठितः ।
चत्वारस्ते समाख्याताः समुद्रा भूमिमण्डले ॥ ५ ॥
राजस्थलसमीपे तु कथमेकत्रतां गताः ।

सनत्कुमार उवाच

सुद्युम्नो नामराजाऽऽसीत् पुरा कल्पेषु धार्मिकः ॥ ६ ॥
तस्यपत्नीवरारोहा नाम्नाख्यातासुदर्शना । सा दालभ्यंमुनिंदृष्ट्वा पप्रच्छसुतकाम्यया॥
भगवन्केनदानेन स्नानेनविधिनाऽथवा । सर्वलक्षणसम्पूर्णः पुत्रोलभ्यो मयाकथम्

दालभ्य उवाच

विहितस्त्वेपुरापुत्रि! सर्वपुत्रेषुसत्तमः । स्वयम्भूतेनदेवेन ब्रह्मणालोककारिणा ॥ ९॥
ते भर्ता शङ्करं देवमाराध्य तत्प्रसादतः ।
आनयिष्यत्यवन्त्यां चेच्चतुरोऽब्धीन्स्वरूपतः ॥ १० ॥
तेषुराज्ञाकृतेस्नाने तव पुत्रोभविष्यति । शङ्कराराधनेपुत्रितस्मात्प्रेरयवल्लभम् ॥ ११
दालभ्यस्यैववाक्येन विचित्राख्यानकेनच । प्रस्थापयामासपतिं शङ्कराराधनेषु च ॥
सगत्वातोषयामास शङ्करं गन्धमादने । सन्तुष्टः प्राह शशिसूर्याग्निलोचनः॥ १३ ॥
अवन्तीं गच्छ राजेन्द्र ! पुत्रं प्राप्स्यसि शोभनम् ।
मच्छासनाज्जलधरा गमिष्यन्ति कुशस्थलीम् ॥ १४ ॥
मरुरूपेस्थलेराजन् समीपेशङ्करस्यच। द्रक्ष्यसि त्वं नरश्रेष्ठ जलधींस्तत्रसङ्गतान्
अभ्यर्थितास्त्वया तत्र स्थास्यन्ति कलया सदा ।
एवमुक्त्वा महादेवो जगामाऽदर्शनं विभुः॥ १६ ॥
सुद्युम्नोभार्ययासार्द्धमाजगामकुशस्थलीम् । आगतांस्तुकुशस्थल्यांसमुद्रांश्चददर्शह
तांस्तुदृष्ट्वानमश्चक्रे राजस्थलसमीपतः । तंवैदृष्ट्वाचसुद्युम्नं प्रणतंभक्तवत्सलाः ॥ १८
प्रोचुर्वारिधयस्सर्वे वरं वरय सुव्रत !। सवव्रेमनसापुत्रं सर्वलक्षणसंयुतम् ॥ १९ ॥
उवाचचपुनाराजायावत्तिष्ठतिमेदिनी । स्थातव्यंतावदत्रैव राजस्थलसमीपतः ॥ २०

समुद्राऊचुः

तावत्स्थास्यामएवात्र यावत्कल्पावसानकम् । भविष्यतिचतेपुत्रः सर्वलक्षणसंयुतः

अत्र ते स्नानमार्गेण तस्मात्स्नानं समाचर ।

स्थले चात्रशुभे राजन्! स्थास्यामः कलया सह ॥ २२ ॥

एवंव्यास ! समुद्राश्च सुद्युम्नेनावतारिताः । कुरुतेतेषुयोयात्रां तस्यपुण्यफलंशृणु ॥

स्नानंकृत्वामहापुण्येसमुद्रेक्षारसञ्ज्ञके । कुर्याच्छ्राद्धंततोव्यास पितॄणांभक्तितत्परः

पूजयेच्चमहादेवं स्थलस्थं पार्वतीपतिम् । मण्डनानिततोदद्याद्ब्राह्मणे वेदपारगे ॥

पात्रंताम्रमयंकार्यं लवणेनप्रपूरितम् । सहिरण्यश्चदातव्यं ब्राह्मणेवेदपारगे ॥ २६ ॥

सप्तधान्यसमायुक्तं वेणुजंवस्त्रवेष्टितम् । सदक्षिणंफलैर्युक्तमर्घ्यं दद्यात्प्रयत्नतः ॥

क्षीराब्धिचततोगत्वा स्नानंकुर्याच्चपूर्ववत् । क्षीरंतत्रप्रदातव्यं ताम्रपात्रेप्रपूरितम् ॥

दध्यब्धौचतथाकृत्वा दद्याद्दध्योदनंशुभम् । इक्ष्वब्धौचतथाकृत्वादद्याद्विप्रेगुडंशुभम्

यात्रां कृत्वा तु वै व्यास! गाश्च दद्यात्पयस्विनीम् ।

एवं यः कुरुते यात्रां राजस्थलसमीपतः ॥ ३० ॥

भव्यां हि लभते लक्ष्मीं पुत्रांश्चाऽपि मनोरमान् ।

मृतःस्वर्गमवाप्नोति यावदिन्द्राश्चतुर्दश ॥ ३१ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे राजस्थलेश्वरसमीपेचतुस्समुद्रमाहात्म्यंनामपञ्चदशोऽध्यायः ॥१५ ॥

---

# षोडशोऽध्यायः

## शङ्करादित्यमाहात्म्यवर्णनम्

सनत्कुमार उवाच

श्रृणुव्यास! महातीर्थं नाम्नाशङ्करवापिका । क्रीडमानेनदेवेन निर्मितंतीर्थमुत्तमम् ॥
प्रक्षिप्तंदेवदेवेन कपालक्षालनंजलम् । वापीगतंकृतंयस्मादतः शङ्करवापिका ॥ २ ॥

अर्काष्टम्यां नरः स्नात्वा दिशासु विदिशासु च ।
पूर्वादिक्रमतोयाच्च वापीमध्ये तथैव च ॥ ३ ॥

हविष्यान्नयुतान्व्यासदद्याच्चकरकान्नवान् ।शाकमूलांश्चविप्रेभ्यस्तस्यपुण्यफलंश्रृणु

परत्र चेह ये लोकाः सर्वभोगसमन्विताः ।
तत्र तत्र समायान्ति भुक्त्वैश्वर्यमनुत्तमम् ॥ ५ ॥
ये नराः कीर्त्तयिष्यन्ति माहात्म्यमतिभावुकाः ।
रुद्रलोकेऽपि ते पूज्यास्तेभ्योऽस्तु सततं नमः ॥ ६ ॥

सनत्कुमार उवाच

ततो वैदेवदेवेशः पिनाकी वृषभध्वजः । तुष्टावप्रयतोभूप्वादेवदेवंदिवाकरम् ॥ ७ ॥

आजगाम दिवानाथः सन्तुष्टः प्राह शङ्करम् ।

सूर्य्य उवाच

वरं वरय भूतेश! वरदोऽस्मि ददामि ते ॥ ८ ॥

तमाहवरदश्चेत्त्वं याच्यमानं कुरुष्व मे । अंशेनस्थीयतामत्र हितार्थं सर्वदेहिनाम् ॥
अवतीर्णोरविस्तत्र श्रुत्वामाहेश्वरंवचः । ततोदेवाधिदेवेशो ययौख्यातिंमहामतिः

शङ्करादित्यनामेति लोकानां शान्तिकारकः ।
देवादैत्याश्च गन्धर्व्वा विस्मितास्सह किन्नरैः ॥ ११ ॥
अहोधन्यमिदं स्थानं यत्राऽऽस्ते त्रिपुरान्तकः ।

भास्करोऽपि च तत्रस्थस्तीर्थमाहात्म्यवर्णने ॥ १२ ॥
ततस्तुष्टाश्चतेसर्वे ब्रह्माद्यास्सुरसत्तमाः। देवेशंपूजयामासुर्देवमादित्यशङ्करम् ॥
मूर्त्तिमन्तश्च ते देवा अवतीर्य्य च शोभनम्।
स्थापयित्वाऽब्रुवन् वाक्यं ये त्वां स्तोष्यन्ति मानवाः ॥ १४ ॥
नदुःखंजायतेतेषांजरामरणदुःखजम्। सर्वयज्ञेषुयत्पुण्यंसर्वदानेषुयत्फलम् ॥ १५ ॥
तस्माच्चैवाधिकंह्यत्र शङ्करादित्यदर्शनात्। व्याधयोनाधयश्चैव दारिद्रयं नकदाचन
ऐश्वर्यञ्चातुलंतेषां जायतेभुविसर्वदा। नरोगोनचदारिद्रयं वियोगोनचबन्धुभिः ॥
जायतेमुनिशार्दूल! शङ्करादित्यदर्शनात्। इत्येवं देवदेवेन पुरा वै शूलपाणिना ॥ १८
स्थापितं परमं तीर्थं स्वनाम्ना मुनिसत्तम! ॥ १९ ॥

इति श्रीस्कान्देमहापुराणएकाशातिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे
शङ्करादित्यमाहात्म्यंनाम षोडशोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः

### नीलगङ्गागन्धवतीप्रभाववर्णनम्

सनत्कुमार उवाच

एकस्मिन्समयेव्यास! कपालक्षालनायवै। शुद्धोदकंगृहीत्वातु कपालेनमहेश्वरः ॥
प्रक्षाल्यचाक्षिपद्भूमौतत्रतीर्थमनुत्तमम्। नाम्नागन्धवतीपुण्यानदीत्रैलोक्यविश्रुता
ब्रह्मणो रुधिरेणाऽपि परिपूर्णाऽभवत् क्षणात्।
तस्यां स्नानं सदा शस्तं स्वयं देवेन भाषितम् ॥ ३ ॥
श्राद्धंकृतंतर्पणञ्च तत्सर्वंचाक्षयंभवेत्। वायुभूतास्तुपितरस्तस्यास्तीरेतुदक्षिणे ॥
तिष्ठन्ति मुनिशार्दूल! चिन्तयन्ति स्वगोत्रजम्।

आगमिष्यति पुत्रो नो नप्ता वा सन्तताविह ॥ ५ ॥

संयावंपायसंत्रापिश्यामाकंसन्निवारकम् । सक्तुक्षौद्रन्तिलैर्युक्तंपिण्डंदास्यतिचैकदा तेनपिण्डप्रदानेन तृप्तिर्भवतिचाक्षया । यस्तुस्नात्वात्रवैपिण्डं दद्याद्वैचन्द्रपर्वणि ॥

पितरो द्वादशाब्दानि तृप्तिं यास्यन्ति तस्य वै ।

येऽत्रागत्य सुविद्वांसो मानवा वै तथा द्विज! ॥ ८ ॥

पितृन्सन्तर्पयिष्यन्ति स्वर्गस्तेषांसदाऽक्षयः । तत्रयद्दीयतेदानंत्रुटिमात्रंतुकाञ्चनम् अक्षयंतत्पुनःप्रोक्तंब्रह्मणावैस्वयम्भुवा । गङ्गाद्वारे प्रयागे च कुरुक्षेत्रे च पुष्करे ॥

वाराणस्यां गयायाञ्च मासात्तृप्तिर्भविष्यति ।

तुष्टाश्चपितरो नृणां दास्यन्ति काङ्क्षितान्वरान् ॥ ११ ॥

योऽयमुद्दिश्यवैकाममिहश्राद्धंकरिष्यति । तस्यतज्जायतेसर्वंमृतस्यपरामागतिः अष्टमीनवमीचैवामावस्याचाथपूर्णिमा । सर्वास्वेतासुवैव्यामस्!स्वेः सङ्क्रमणेतथा ब्रह्मेन्द्ररुद्रदेवांश्च सूर्याग्निब्रह्मदेवताः । विश्वेदेवान्सगन्धर्वान् यक्षांश्चमनुजान्पशून्

सरीसृपान् पितृगणान् यच्चान्यद्भुवि संस्थितम् ।

श्राद्धं वै श्रद्धया कुर्वन् प्रीणयत्यखिलं जगत् ॥ १५ ॥

मासिमासिस्मितेपक्षे पञ्चदश्यांद्विजोत्तम! । इन्दुक्षयेयदामैत्रंविशाखाचैवरोहिणी श्राद्धेपितृगणास्तृप्तिंप्रयान्तिचतथार्चिताः। वासवाजैकपादर्क्षेपितृणांतृप्तिमिच्छताम् भक्त्या श्राद्धंप्रकुर्वीतपितरस्तेनतर्पिताः । अपिधन्याः कुले जाता अस्माकंतृप्तिहेतवे येकुर्वन्तिचवैश्राद्धं पिण्डान्येनिर्वपन्तिच । तेनपिण्डप्रदानेन तृप्तिर्नोभविताऽक्षया

इहैत्य वै पुण्यजलेषु सम्यक्स्नात्वा नरः स्वान्नुलभेत कामान् ।

यान् प्राप्य च प्रेतगणैः समेतः स मोदते देववृताऽर्थसिद्धः ॥ २० ॥

चित्तञ्च वित्तञ्च यशोविशुद्धं देशस्तुकालः कथितो विधिश्च ।

पात्रं यथोक्तं परमाञ्च भक्तिं नृणां प्रयच्छन्ति हि वाञ्छितानि ॥ २१ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे नीलगङ्गागन्धवतीप्रभाववर्णनंनामसप्तदशोऽध्यायः ॥ १७ ॥

# अष्टादशोऽध्यायः

## दशाश्वमेधमाहात्म्यवर्णनम्

सनत्कुमार उवाच

दशाश्वमेधिकेस्नात्वादृष्ट्वादेवंमहेश्वरम् । दशानामश्वमेधानांफलंप्राप्नोतिमानवः
मनुनामानवेन्द्रेण राज्ञाचैवययातिना । रघुणोशनसाचैवलोमशेनमहर्षिणा ॥ २ ॥
अत्रिणाभृगुणाचैव दत्तात्रेयेणधीमता । पुरूरवसापुण्येन नहुषेणनलेनच ॥ ३ ॥
अत्रस्नानेनसंप्राप्तं दशाश्वमेधिकंफलम् । संप्राप्तेद्वापरस्यान्ते राज्ञावाष्कलिनातथा
दशानामश्वमेधानां फलं प्राप्तंद्विजोत्तम !। कृष्णवर्णंतथालिङ्गं पूजितंभक्तितः सदा
दृष्ट्वास्पृष्ट्वाचतंदेवं प्रागुक्तंलभतेफलम् । चैत्रेमासिसिताष्टम्यां देवंसंपूज्यभक्तितः

अश्वं दद्याच्च विप्राय सुरूप च गुणान्वितम् ।
यावन्ति तस्य रोमाणि गण्यन्ते सङ्ख्यया द्विज ! ॥ ७ ॥

तावद्वर्षसहस्राणि शिवलोकेमहीयते । शिवलोकात्परिभ्रष्टः सार्वभौमोभवेद्भुवि ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे दशाश्वमेधमाहात्म्यंनामाऽष्टादशोऽध्यायः ॥ १८ ॥

---



# एकोनविंशोऽध्यायः

## एकानंशामाहात्म्यवर्णनम्

सनत्कुमार उवाच

एकानंशांनमस्कृत्य देवींत्रैलोक्यविश्रुताम् । पूजांकृत्वाविधानेनसर्वसिद्धिफलंलभेत् ।

अणिमादिगुणान् सर्वान् गुटिकां सिद्धमञ्जनम् ।

खड्गं च पादुके चैव बिलवासं रसायनम् ॥ २ ॥

सर्वं तुष्टा प्रयच्छेत्तु नाऽत्र कार्या विचारणा ।

सुरामांसोपहारैश्च भक्ष्यभोज्यैश्च पूजिता ॥ ३ ॥

सर्वान्कामान्नृणां देवी तुष्टा दद्याच्च सर्वदा । महानवम्यांयोदेवीं महिषेण प्रपूजयेत्

मेषेण च यथालाभं सर्वान्कामानवाप्नुयात् ।

व्यास उवाच

कथं देवी समुत्पन्ना एकानंशेति विश्रुता ॥ ५ ॥

तत्सर्वं श्रोतुमिच्छामि सर्वपापप्रणाशनम् ।

सनत्कुमार उवाच

पुरा कृतयुगस्यादौ ब्रह्मा लोकपितामहः ॥ ६ ॥

निशांसस्मारभगवान् स्वांतनुंपूर्वसम्भवाम् । ततोभगवताराात्ररुपतस्थेपितामहम्

तां विविक्ते समालोक्य ब्रह्मोवाच विभावरीम् ।

विभावरि!महाकाये!व्यवधाने ह्युपस्थिते ॥ ८ ॥

यत्कर्तव्यं त्वया देवि! शृणु चार्थस्य निश्चयम् ।

तारकोनाम दैत्येन्द्रः सुरशत्रुरनिर्जितः ॥ ९ ॥

तस्माद्भयेनवैदेवास्त्रस्ता सर्वेदिवौकसः । तस्माद्रुद्रे महेशोवै जनयिष्यतिचेश्वरम्

सुतंसभवितातस्य तारकस्यान्तकःकिल । शङ्करस्याऽभवत्पत्नी सतीदक्षसुतातुया

सापितुःकुपिताभद्रेकस्मिंश्चित्कारणान्तरे। भवित्री हिमशैलस्यदुहितालोकपावनी
विरहेण हरस्तस्या मत्वा शून्यं जगत्त्रयम्। अतएद्धिमशैलस्य कन्दरे सिद्धसेविते
प्रतीक्षमाणस्तज्जन्म किञ्चित्कालं वसिष्यति।
तस्मात्सुतप्ततपसो भविता यो महाप्रभुः॥ १४॥
सभविष्यतिदैत्यस्यतारकस्यनिवारकः। जातमात्रातुसादेवीस्वल्पसञ्ज्ञैवभामिनी
विरहोत्कण्ठिता वाढं हरसङ्गमलालसा। तयोःसुतप्ततपसोस्संयोगःस्यात्सुगुप्तयोः
पार्वती हरयोस्तस्मात्सुराणां शक्तिकारिणम्।
विघ्नं त्वया विधातव्यं यथा ताभ्यां तथा;शृणु॥ १६॥
गर्भस्थितेऽथतांदेवीं स्वेनरूपेणरञ्जय। ततो रहसिशर्वस्तां विभिन्नानन्दपूर्वकम्
भर्त्सयिष्यतिकालीति ततःसाकुपितासती। प्रयास्यतितपःकर्तुंततस्सातपसायुता
जनयिष्यति यं शर्वादिन्दुवज्ज्योतिमण्डलम्।
स भविष्यति हन्ता वै सुरारीणां न संशयम्॥ २०॥
त्वयाऽपिदानवा देवि!हन्तव्यालोकदुर्जयाः। यावच्चनसतीदेहे सङ्क्रान्तगुणसञ्चयः
तत्सङ्गमेनतावत्तु दैत्यवंशो भविष्यति। एवंकृते त्वयादेवि तपः कालीकरिष्यति
समाप्तनियमा सा च यदागौरीभविष्यति। तदातुचैवसारूप्यं शैलजासम्प्रदास्यति
ततस्तवाऽपि सहजा सैकानंशा भविष्यति।
रूपांशेन च संयुक्ता त्वमुमा सम्भविष्यसि॥ २४॥
एकानंशेतिलोकस्त्वां वरदे!पूजयिष्यति। भेदैर्बहुविधाकारैस्सर्वगांकामसाधनीम्
ॐङ्कारवक्त्रा गायत्री त्वमेव ब्रह्मचारिणी।
आक्रान्तरुचिराकारा राज्ञां चाहवशालिनाम्॥ २६॥
विशां त्वं कमला देवि! शूद्राणां जननी स्वयम्।
ज्ञानिनां ज्ञेयरूपा त्वं त्वं गतिः सर्वदेहिनाम्॥ २७॥
त्वञ्च कीर्तिमतां कीर्तिस्त्वं भूतिस्सर्वदेहिनाम्।
रतिदारक्तचित्तानां प्रीतिस्त्वं स्नेहवर्तिनाम्॥ २८॥

त्वं शोभाकृतभूषाणां त्वं शान्तिः शान्तिकर्मणाम् ।
त्वं भ्रान्तिस्त्वल्पबोधानां त्वं कीर्तिः क्रमयाजिनाम् ॥ २९ ॥
महावेला समुद्राणां विलासस्त्वं विलासिनाम् ।
सम्भूतिस्त्वं पदार्थानां स्थितिस्त्वं लोकशालिनाम् ॥ ३० ॥

इत्यनेकविधैर्देवि!रूपैर्लोकेषुचार्चिता । ये त्वां पश्यन्ति वरदे! पूजयिष्यन्तिवापिये ते सर्वकामानाप्स्यन्ति नियतंनात्रसंशयः । इत्येवंसासमुत्पन्नाब्रह्मणासंस्तुतासती

एकानंशा महादेवी ध्यातव्या साऽपि भक्तितः ॥ ३२ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे एकानंशामाहात्म्यंनामैकोनविंशोऽध्यायः ॥ १९ ॥

---

# विंशोऽध्यायः

## हरसिद्धिमाहात्म्यवर्णनम्

### सनत्कुमार उवाच

अथातःसम्प्रवक्ष्यामि हरसिद्धिंसुसिद्धिदम् । पार्वत्याहरणेयत्र सिद्धिःप्राप्ताहरेणच बलिनौदानवौजातौनाम्नाचण्डप्रचण्डकौ । उन्माद्यत्रिदिवंसर्वं गिरिकैलासमागतौ दृष्ट्वा तत्रगिरीशन्तु उद्यताक्षैकहस्तकम् । पिनाकं वरखट्वाङ्गं गृहीत्वा दक्षिणेकरे देविदेवीतिजल्पन्तंदासस्तेऽस्मीतिवादिनम् । यावदेकन्तुफलकंतावद्द्यूतंप्रवर्ततताम् ऋणीभूतेतदादेवेतौ प्राप्तौ देवकण्टकौ । उत्सादिताःशिवगणानन्दिनाप्रतिषेधितौ

ततस्ताभ्यां तदा नन्दी शूलाभ्यां प्रविदारितः ।
समं सव्यदक्षिणाभ्यां सुस्राव रुधिरं बहु ॥ ६ ॥

नन्दिनंताडितंदृष्ट्वातदासत्क्रियनन्दनम् । ध्याताहरेणसादेवीप्रणताप्राक्ततःस्थिता

वध्यतांतौ महादैत्यौ वधामीतिवचोऽब्रवीत् ।
तदा तया हतौ दुष्टौ दानवौ बलगर्वितौ ॥ ८ ॥

हरस्तामाह हे चण्डि! संहर्ता दुष्टदानवौ । हरसिद्धिरतोलोके नाम्नाख्यातिंगमिष्यसि
ततः प्रभृति सादेवी हरसिद्धिप्रदायिनी । हरसिद्धिरितिख्याता महाकाले बभूवह
यःपश्येत्परयाभक्त्याहरसिद्धिनरोत्तमः । सोऽक्षयांल्लभतेकामान्मृतःशिवपुरंव्रजेत्

आदिसिद्धिं महादेवीं नित्यं व्योमस्वरूपिणीम् ।
हरसिद्धिं प्रपश्येद्यःसोऽभीष्टं लभते फलम् ॥ १२ ॥

यःस्मरेद्धरसिद्धीति मन्त्रञ्च चतुरक्षरम् । न वैरिणोभयन्तस्य दारिद्र्यं नैवजायते
नरोमहानवम्यां यो हरसिद्धिं प्रपूजयेत् । महिषञ्च बलिं दद्यात्सभवेद्भूपतिर्भुवि
नवम्यां पूजिता देवी हरसिद्धिर्हरप्रिया । तुष्टा नृणां सदाव्यास! ददात्यनवमंफलम्
सापुण्या सापवित्राच सासर्वसुखदायिनी । स्मृता सम्पूजिता दृष्टा धनपुत्रसुखप्रदा
महानवम्यां ये व्यास! हन्यन्ते महिषादयः । सर्वेतेस्वर्गतिंयान्ति घ्नतांपापंनविद्यते

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
हरसिद्धिमाहात्म्यं नाम विंशोऽध्यायः ॥ २० ॥

---

# एकविंशोऽध्यायः

## वटयक्षिणीमाहात्म्यवर्णनम्

सनत्कुमार उवाच

मासमेकन्नरोभक्त्यापश्येद्योवटयक्षिणीम् । पूजयेत्स्वर्णपुष्पैश्चतस्यसिद्धिर्महीयते

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
वटयक्षिणीमाहात्म्यंनामैकविंशोऽध्यायः ॥ २१ ॥

---

# द्वाविंशोऽध्यायः

## चतुर्दशयात्रावर्णनम्

सनत्कुमार उवाच

पिशाचकेनरःस्नात्वाचतुर्दश्यांविशेषतः । तिलान्ददातियोभक्त्यानपिशाचः प्रजायते

येनचोद्दिश्ययद्दत्तं तदक्षयनरंभवेत् । तत्कुलंहिपिशाचत्वान्मुच्यतेनात्रसंशयः ॥ २ ॥

यस्य नाम्ना नरः स्नाति पिशाचत्वात्स मुच्यते

कुम्भान्वा करकान्वाऽपि योऽत्र दद्यात्समण्डकान् ॥ ३ ॥

तस्यवैशाश्वतीमुक्तिः कुलेप्रेतोनजायते । शिप्रागुप्तेश्वरंदृष्ट्वा रुद्रभक्तोजितेन्द्रियः

मुच्यते सर्वपापेभ्यः कञ्चुकेन फणी यथा ।

स्नात्वाऽगस्त्येश्वरं पश्येद्योऽतिभक्त्याऽथ मानवः ॥ ५ ॥

त्यक्त्वा यमगृहं व्यास!रुद्रलोकं स गच्छति ।

शिप्रायां यो नरः स्नात्वा पश्येड्ढुण्ढेश्वरं शिवम् ॥ ६ ॥

सोऽश्वमेधफलंव्यास! लभतेनात्र संशयः । देवेनात्रपुराव्यास वादितोडमरुर्यतः

देवस्तेनसमाख्यातो नाम्नाडमरुकेश्वरः । भक्त्यापश्येन्नरोयस्तु देवंडमरुकेश्वरम्

नैवव्याधिभयंतस्य मृतः शिवपुरंव्रजेत् । अनादिकल्पेशंयस्तु भक्त्यापश्यतिमानवः

राज्यंसलभतेस्वर्गं यथादेवः पुरन्दरः । देवानामप्यसौव्यास!स्पर्द्धनीयस्सदाभवेत्

कल्पकोटिशतंसाग्रं भोगयुक्तस्तुमोदते । पश्येत्सिद्धेश्वरंयस्तुवीरभद्रञ्चचण्डिकाम्

सोऽत्रैवलभतेसिद्धिं जयंसर्वत्रमानवः । स्वर्णजालेश्वरं दृष्ट्वा स्नात्वातीर्थेत्रिविष्टपे

स्वर्णेनपूजयेद्देवं सर्वपापैः प्रमुच्यते । स्नात्वापश्येन्नरोभक्त्या यःशिवंकर्कटेश्वरम्

सर्पतोनभयंतस्य दारिद्र्यंनैवजायते । यः पश्येत्परयाभक्त्या महामायांसनातनीम्

विष्णुमायाविनिर्मुक्तस्सयातिपरमंपदम् । अर्चयेत्परयाभक्त्या यः कपालेश्वरंनरः

समुच्यतेमहापापैर्यद्यपिब्रह्महाभवेत् । स्वर्गद्वारेनरस्स्नात्वा दृष्ट्वादेवञ्चभैरवम् ॥

दर्शनात्तस्यदेवस्य शतयज्ञफलं लभेत् ॥ १७ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुर्दशयात्रानामद्वाविंशोऽध्यायः ॥ २२ ॥

———

# त्रयोविंशोऽध्यायः

## हनुमत्केश्वरमाहात्म्यवर्णनम्

सनत्कुमार उवाच

अथान्यत्सम्प्रवक्ष्यामि देवंत्रिदशपूजितम् । हनुमत्केश्वरंनाम भुक्तिमुक्तिफलप्रदम्

शैवेसरसियः स्नात्वा पश्येद्धनुमत्केश्वरम् । कल्पकोटिसहस्राणिवायुलोकेसमोदते

व्यास उवाच

हनुमत्केश्वरोयस्तु ह्युक्तः पूर्वस्त्वयानघ! । कथांकथयह्यतस्य व्रतपूर्वांसनातनीम्

सनत्कुमार उवाच

त्रैलोक्यकण्टकः पूर्वो रावणोनामराक्षसः । विष्णुनारामरूपेण लङ्कायांविनिपातितः

घातयित्वातुतंदुष्टं सीतामादायजानकीम् । वानरैस्सहऋक्षैश्च नगरींस्वामुपागतः

तत्रराज्यमनुप्राप्य ऋषिभिः परिवारितः । कथावसानेरामेण ह्यगस्त्योमुनिसत्तमः

पृष्टोऽधिकोद्वयोर्वापिशम्भुर्वातजयोऽस्तुकः । तदादाशरथिंप्राहअगस्त्योमुनिसत्तमः

अनौपम्योयथादेवो युद्धेशौर्येमहेश्वरः । ज्ञेयोवायुसुतस्तद्वत्सत्यमेतद्ब्रवीमिते ॥

एवंश्रुत्वाथहनुमान्यच्छिवेनोपमामम । कृतामुनिवरेणेह प्रत्यक्षं राघवस्यहि ॥ ६ ॥

गमिष्येनगरींलङ्कां लिङ्गमेकं प्रयाचितुम् । राक्षसेन्द्रं महाभागं विभीषणमकल्मषम्

ततोगतस्सलङ्कायां विभीषणमुवाचह । देहिमेत्वंमहाभाग लिङ्गमेकञ्चशोभनम् ।

उक्तश्चराक्षसेन्द्रेण गृहाणैतद्यथारुचि । एतानिषड्वैलिङ्गानि रावणस्थापितानिवै

त्रैलोक्यविजयात्पूर्वं ममभ्रात्रामहात्मना । एतेषु यदभीष्टन्ते लिङ्गंकथय सुव्रत! ॥

तत्प्रयच्छामितेऽद्यैव सत्यमेतत्प्लवङ्गम! । ततोजग्राहहनुमाल्लिँङ्गंमौक्तिकसन्निभम्
यदेतद्दृश्यतेवीर! तत्पप्रच्छममानघ । श्रुत्वा हनुमत्तोवाक्यमथोवाचविभीषणः ॥
दत्तमेतन्महावीर लिङ्गंयत्कृतवानसि । श्रूयतेहिपुरावृत्तं लिङ्गमेतद्धनेश्वरः ॥ १६ ॥
रुद्रभक्त्यासमायुक्तस्त्रिकालमप्यपूजयम् । रावणेनयदाबद्धस्तदानींहिधनेश्वरः ॥ १७
लिङ्गस्यास्यप्रभावेण विमुक्तस्समपद्यत । प्रमादात्तस्यलिङ्गस्य धनेशोधनरक्षकः
गृहीत्वा तन्महालिङ्गं स्वस्थो जातोऽथ वानरः ।

सनत्कुमार उवाच

गृहीत्वा तु ततो लिङ्गं प्रस्थितो विमलेऽश्वरे ॥ १६ ॥
सप्तमेदिवसेचैवसम्प्राप्तोऽवन्तिकांपुरीम् । संस्थाप्यरुद्रसरसस्तीरेस्नानमथाकरोत्
महाकालस्यपूजार्थं गमनंप्रत्यचिन्तयत् । उद्धर्तुकामस्तल्लिङ्गमुद्धर्तुंनशशाकसः ।
ततो व्यवस्थितो देवः प्राह तं वायुनन्दनम् ।
अस्मिन् क्षेत्रे हनूमंस्त्वं स्वाम्ना स्थाप्य पूजय ॥ २२ ॥
हनुमत्केश्वरश्चाथ लोकेख्यातं भविष्यति । शैलवच्चोन्नतं लिङ्गं स्थापितंवायुसूनुना
शनौपश्येन्नरोयस्तु हनुमत्केश्वरंशिवम् । तस्यशत्रुभयंनास्ति सङ्ग्रामेजयमाप्नुयात
नचचौरभयंतस्य नदारिद्र्य नदुर्गतिः । तैलाभिषेकंयः कुर्याद्धनुमत्केश्वरं शिवम्
तस्यरोगाः प्रलीयन्तेग्रहपीडानजायते । येपश्यन्तिनराभक्त्यातेषांमोक्षोभविष्यति
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे
हनुमत्केश्वरमाहात्म्यंनामत्रयोविंशोऽध्यायः ॥ २३ ॥

———

## चतुर्विंशोऽध्यायः

### यमेश्वरमाहात्म्यवर्णनम्

सनत्कुमार उवाच

यमेश्वरन्तुयःपश्येत्स्नापयित्वातिलाम्भसा । कुङ्कुमेनसमालिप्य पूजयेदुत्पलैस्ततः

दहेत्कृष्णागुरुंधूपं दापयेत्तिलतण्डुलान् । यएवमर्चमेद्देवमीश्वरंशूलहस्तकम् ॥ २ ॥

यत्र कुत्र मृतस्यापि यमः पितृसमो भवेत् ॥ ३ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे

यमेश्वरमाहात्म्यंनामचतुर्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशोऽध्यायः

### रुद्रसरोमाहात्म्यवर्णनम्

सनत्कुमार उवाच

कथयामिपरंव्यास!तीर्थंतीर्थेषुचोत्तमम् । नाम्नारुद्रसरः प्रोक्तं त्रिषुलोकेषुविश्रुतम्

तत्र स्नात्वा शुचिर्भूत्वा पश्येत्कोटिवरं शिवम् ।

मुच्यते सर्वपापेभ्यो रुद्रलोकं स गच्छति ॥ २ ॥

श्राद्धंतत्रैवकृत्वातु शृणुयात्फलमाप्नुयात् । दशानामश्वमेधानां वाजपेयशतस्य च ॥

फलंकोटिगुणंव्यास!लभतेनात्रसंशयः । पितृनुद्दिश्ययत्किञ्चित्कोटितीर्थेप्रदीयते

तत्सर्वं कोटिगुणितं जायते नाऽत्र संशयः ।

कोटितीर्थे नरस्स्नात्वा ध्यायेद्यःपरमाक्षरम् ॥ ५ ॥

मुच्यतेसर्वपापेभ्यो निर्मोकेनयथोरगः । प्रातरुत्थाययोविप्र तत्रस्नानंकरोतिवै ॥ ६

कोटितीर्थेनरःस्नात्वा सप्तरात्रोषितः शुचिः॥ ७॥
चान्द्रायणसहस्रस्य फलंप्राप्नोति मानवः। जागरंतत्रकुर्याद्यो ह्यनन्तं फलमश्नुते
गन्धपुष्पार्चनं कृत्वा महास्नपनपूर्वकम्। यएवंनयतेरात्रिं सोपवासोजितेन्द्रियः
लभते सर्वकामित्वं यत्सुरैरपि दुर्लभम। कार्त्तिक्यामथवैशाख्यां देवंतत्रप्रपूजयेत्
गन्धपुष्पैश्चकालीनैस्तथावस्त्रैः सुशोभनैः। कर्पूरंकुसुमश्चैव श्रीखण्डमगुरुं तथा
समभागानिकृत्वातु शिलापृष्ठे च पेषयेत्। अनुलिप्य महाकालंरुद्रस्यानुचरोभवेत्

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रुद्रसरोमाहात्म्यंनाम पञ्चविंशोऽध्यायः॥ २५॥

---

## षड्विंशोऽध्यायः

### महाकालयात्रामाहात्म्यवर्णनम्

सनत्कुमार उवाच

अथ यात्रां प्रवक्ष्यामि महाकालस्य यत्नतः।
शिवश्रेयस्करीं पुण्यां पुण्यलोकप्रदायिनीम्॥ १॥
स्नात्वा सरसि रुद्रस्य दृष्ट्वा कोटीश्वरं शिवम्।
नमस्कृत्य ततो गच्छेन्महाकालं सनातनम्॥ २॥
गन्धैःपुष्पैर्नमस्कारैःसम्पूज्यत्रिदशेश्वरम्। प्रणिपत्यततोगच्छेद्देवंकपालमोचनम्॥
तत्रवैदेवदेवेशःकपालं न्यस्तवान्क्षितौ। कपालेतत्क्षणान्न्यस्तेतत्राभूल्लिङ्गमुत्तमम्
कपालमोचनंनाम सर्वपापप्रणाशनम्। तत्र वै स्नपनं कुर्यादाज्यंपलशतन्तुवै॥
तदर्धार्धेनपादेन वित्तशाठ्यविवर्जितः। कालेपूर्णे स विप्रेन्द्र!शिवलोके महीयते
नमस्कृत्य ततोगच्छेत्कपिलेश्वरमुत्तमम्। दर्शनात्तस्यदेवस्य मुच्यते ब्रह्मघातकः
हनुमत्केश्वरंदेवं ततोगच्छेत्समाहितः। ऐश्वर्यमतुलं व्यास! दर्शनादस्य जायते॥

ततोगच्छेन्महादेवंपिपपलादं सनातनम् । यस्यदर्शनमात्रेणमुक्तिःस्याद्द्विजसत्तम!
स्वप्नेश्वरंततोगच्छेद्भक्तिश्रद्धासमन्वितः । दर्शनादस्यदेवस्य दुःस्वप्नश्चविनश्यति

ततो गच्छेन्महादेवमीशानं विश्वतोमुखम् ।
यस्य दर्शनमात्रेण विश्वस्यैव पतिर्भवेत् ॥ ११ ॥

सोमेश्वरन्ततोगच्छेज्जितक्रोधोजितेन्द्रियः । कुष्ठरोगादिदोषेभ्योदर्शनादस्यमुच्यते
वैश्वानरेश्वरंव्यास ततोगच्छेत्समाहितः । तस्यवृद्धिस्सदालोकेजायतेतस्यदर्शनात्
बीजापूरकहस्तन्तु लकुलीशन्ततो व्रजेत् । रुद्रत्वं दर्शनात्तस्य जायते नात्रसंशयः
ततो गच्छेन्महादेवं गणपेश्वरमुत्तमम् । यस्य दर्शनमात्रेण जायन्ते सर्वसिद्धयः

अभ्यर्थितस्सदादेवैः पूजितस्सिद्धिकारणात् ।
तेनाभ्यर्थितपूरोऽयं विख्यातो विघ्ननायकः ॥ १६ ॥

वयोवृद्धं ततो गच्छेन्महाकालं सनातनम् । न रोगो नजराव्याधिर्दर्शनान्नात्र संशयः

विघ्ननाशं ततो गच्छेत्प्राणीशं देवमुत्तमम् ।
स्नानं शतघटैस्तस्य कुर्याद्भक्त्या समाहितः ॥ १८ ॥

तस्यचैवकृते स्नाने लभ्यन्ते सर्वसिद्धयः । स्वर्गश्चापिसदा व्यास!दर्शनादस्यजायते
मार्गेगतमनुल्लङ्घ्य दण्डपाणिं ततो व्रजेत् । यस्यदर्शनमात्रेण यमलोकोन दृश्यते
पुष्पदन्तं ततोगच्छेद्भक्तिश्रद्धासमन्वितः । यस्यदर्शनमात्रेण मुच्यते सर्वपातकैः ॥
गुह्यंचैवमहाकालं ततो गच्छेत्समाहितः । यस्यदर्शनमात्रेण गुह्यपापैः प्रमुच्यते
ततो गच्छेत्समाधिस्थो दुर्वासेश्वरमुत्तमम् । यस्यदर्शनमात्रेण कृतकृत्योनरोभवेत्

श्वासावरोधनं कृत्वा दुर्वासस्य समीपतः ।
गौरीं गत्वा महादुर्गां त्यजेच्छ्वासमनन्तरम् ॥ २४ ॥
तत्रोच्छ्वासो विमुक्तव्यस्तामर्चेत्सुसमाहितः ।
कालेश्वरं ततो गच्छेद्देवदेवं महेश्वरम् ॥ २५ ॥

यस्य दर्शनमात्रेण यमलोकं नपश्यति । बधिरेशं ततो गच्छेद्देवदेवं महेश्वरम् ॥
यस्य दर्शनमात्रेण बधिरत्वंनजायते । यात्रेश्वरन्ततो गच्छेद्यात्रापूर्णफलप्रदम् ॥

कीर्त्तयेदात्मनोनाम स्थानं गोत्रञ्चनत्रवै । न कीर्त्तयेद्यदानाम सायात्राविफलीभवेत्

देवस्याऽग्रे ततो व्यास!उपविश्य समाहितः ।
भक्तियुक्तः स्तुतिं ब्रूयान्नमस्कृत्वा पुनः पुनः ॥ २९ ॥
मया समर्पिता यात्रा त्वत्प्रसादान्महेश्वर! ।
संसारसागराद् घोरान्मामुद्धर जगत्पते! ॥ ३० ॥

अनेन विधिना यस्तु महाकालं प्रदक्षयेत् । प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा गोलक्षं द्विजवर्य्याय दत्वायल्लभनेफलम् । तत्फलंदेवदेवस्य सकृत्कृत्वाप्रदक्षिणम् भक्त्या परमयायुक्तो महाकालं प्रदक्षयेत् । पदेपदे यज्ञफलमितिमेशङ्करोऽब्रवीत् ॥ षष्टिकोटिसहस्राणिषष्टिकोटिशतानिच । पूजितानिभवन्त्यत्र यात्रेश्वरसमर्चनात् यएवंकुरुतेयात्रां शिवध्यानपरायणः । सवस्त्रन्दक्षिणां दद्यात्तस्यपुण्यफलंश्रृणु सप्तजन्मकृतात्पापान्मुच्यतेनात्र संशयः । एवं यात्रां समाप्याऽथगत्वाच स्वगृहंनरः

यात्रादैवतसंख्यान्वै षड्विंशतिद्विजोत्तमान् ।
भोजयेच्छिवभक्तांश्च शिवध्यानपरायणान् ॥ ३७ ॥
सवस्त्रां दक्षिणां दत्त्वा प्राप्यानुज्ञां विसर्जयेत् ।
यात्राक्रमेण चंकंकं तीर्थान्तरमनुव्रजेत् ॥ ३८ ॥

धर्मोपदेशकेपश्चात् सत्रोंपस्करसंयुताम् । धेनुस्पयस्विनींदद्याद्वित्तशाठ्यविवर्जितः

भुञ्जीताथ स्वयंव्यास! सर्वभृत्यसमन्वितः ।
दीनानाथदरिद्रान्धविकलांश्चापि भोजयेत् ॥ ४० ॥

यदत्रफलमुद्दिष्टं तद्वदामिश्रृणुष्वमे । कुलानां शतमुद्धृत्य मातापित्रोस्समाहितः

कल्पकोटिसहस्राणि शिवलोके स मोदते ॥ ४२ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे महाकालयात्रामाहात्म्यं नाम षड्विंशोऽध्यायः ॥ २६ ॥

———

# सप्तविंशोऽध्यायः

## वाल्मीकेश्वरमहिमवर्णनम्

सनत्कुमार उवाच

वाल्मीकेरीश्वरं व्यास! भक्त्या देवं प्रपूजयेत् ।
मौनी ध्यानपरोभूत्वा सुकवित्वमवाप्नुयात् ॥ १ ॥

व्यास उवाच

कथमत्रसमुत्पन्नो कोवाल्मीकेश्वरःप्रभुः । यस्यदर्शनमात्रेण कवित्वमुपजायते ॥

सनत्कुमार उवाच

आसीद्व्यासपुराविप्रःसुमतिर्भृगुवंशजः । रूपयौवनसम्पन्नातस्यभार्याऽथकौशिकी
तस्यपुत्रःसमुत्पन्नस्त्वग्निशर्मेतिनामतः । सपित्राप्रोच्यमानोऽपिवेदाभ्यासंनमन्यते
ततोबहुतिथेकाले अनावृष्टिरजायत । तदापि बहवश्चाऽसौ दक्षिणामाश्रितोदिशम्
ततोऽसौसुमतिर्विप्रः सभार्यःससुतस्तथा ।विदिशंकाननंप्राप्तःकृत्वाचाश्रममाश्रितः
आर्भारैर्दस्युभिः सार्द्धं सङ्गोऽभूदग्निशर्मणः ।
आगच्छति यथा तेन यस्तं हन्ति स पापकृत् ॥ ७ ॥
स्मृतिर्नष्टागतावेदा गतंगोत्रंगताश्रुतिः । कस्मिंश्चिदथकाले तु तीर्थयात्राप्रसङ्गतः
सप्तर्षयःपथा तेन सुव्रताः समुपस्थिताः ।
अग्निशर्माऽथतान्दृष्ट्वा हन्तुकामोऽब्रवीदिदम् ॥ ६ ॥
वस्त्राणीमानिमुञ्चध्वं छत्रकोपानहौतथा । हन्तव्याहिमयायूयं गन्तारोयमसादने
तस्यतद्वचनंश्रुत्वा अत्रिर्वचनमब्रवीत् । अस्मत्पीडनजंपापं कथंतेहृदिवर्तते ॥ ११ ॥
वयं तपस्विनो भूत्वा तीर्थयात्राकृतोद्यमाः ।

अग्निशर्मोवाच

ममास्ति माताऽथ पिता सुतो भार्या गरीयसी ॥ १२ ॥

पोषयामि सदातांस्तु एतन्मे हृदि संस्थितम् ।

अत्रिरुवाच

पित्रादीननुपृच्छत्वं स्वकर्मोपार्जितं प्रति ॥ १३ ॥

यद्युष्मदर्थंक्रियते पापंतत्कस्यकथ्यताम् । चेन्ननेकथयन्तिस्ममामृषाप्राणिनोवधीः

अग्निशर्मोवाच

नकदाचिन्मयातेतु संपृष्टाईदृशंवचः । युष्माकंवचसामेऽद्य प्रतिबोधः प्रवर्तते ॥ १५

गत्वा पृच्छामि तान्सर्वान् कस्य भावश्च कीदृशः ।

यूयमत्रैव तिष्ठध्वं यावदागमनं मम ॥ १६ ॥

इत्युक्त्वाताञ्जगामाशुपितरंस्वमुवाचह । धर्मन्यप्रतिघातेन प्राणिनांपीडनेनच ॥

सुमहद्दृश्यतेपापं कस्यैतत्कथ्यतांमम । पिताप्राहाथतन्माता नापुण्यमावयोरिह

त्वंजानासिकुरुषे यत्कृतंभोग्यंपुनस्त्वया । तयोस्तद्वचनंश्रुत्वा भार्यांवचनमब्रवीत्

तयाप्युक्तंनमेपापं पापमेतत्तवैवतु । तद्वाक्यमब्रवीत्पुत्रं बालोऽहमितिसोऽब्रवीत्

तज्ज्ञात्वाभाषितंतेषां चेष्टितञ्चैवतत्त्वतः । नष्टोऽहमितिमन्वानः शरणंमेतपस्विनः

क्षिप्त्वाथलकुटंकृष्णयेनवै जन्तवोहताः ।प्रकीर्यकेशांस्त्वरितोऋषीणामग्रतःस्थितः

प्रणम्य दण्डपातेन ततो वचनमब्रवीत ।

न मे माता न च पिता न भार्या न च मे सुतः ॥ २३ ॥

सर्वैस्तैः परित्यक्तोऽहं भवतांशरणंगतः । सुष्ठूपदेशदानान्मांनरकात्त्रातुमर्हथ ॥

एवंतंवादिनंदृष्ट्वा ऋषयोऽत्रिमथाब्रुवन् । भवतोवचनादस्य प्रतिबोधस्समागतः॥

भवताऽयमनुग्राह्यः शिष्योभवतुनेमुने! । तथेत्युक्त्वाथतम्प्राह इमंध्यानंसमाचर ॥

अनेनध्यानयोगेन पापपुञ्जंप्रणाशय । संस्थितोवृक्षमूलेत्वं परांसिद्धिंगमिष्यसि ॥

इत्युक्त्वा ते ययुस्सर्वे सकामः सोऽपि तत्र वै ।

तद्ध्यानस्थोऽभवद्योगी वत्सराणि त्रयोदश ॥ २८ ॥

निवृत्तास्तुयथानेन मुनयस्तत्प्रशुश्रुवुः । उदीरितध्वनिन्तेनवल्मीकेविस्मयान्विताः

ततस्तु दृष्ट्वा वल्मीकं काष्ठीभूतोलशङ्कुभिः ।

तं दृष्ट्वोत्थापयामासुर्मुनयो नयसंयुतम् ॥ ३० ॥

नमश्चक्रेऽथतान्सर्वान् समुनिमुनिपुङ्गवान् । तान्प्राहप्रणतोभूत्वातपसादीप्ततेजसः

प्रसादाद्भवतामद्य ज्ञानंलब्धंमयाशुभम् । दीनोऽहमुद्धृतस्सर्वैर्मग्नोऽहंपापकर्दमे ॥ ३२

श्रुत्वा तस्येति तद्वाक्यमूचुः परमधार्मिकाः ।

वल्मीकेऽस्मिन् स्थितः पुत्र! यतस्त्वमेकचित्ततः ॥ ३३ ॥

वाल्मीकिरिति ते नाम भुवि ख्यातं भविष्यति ।

इत्युक्त्वामुनयोजग्मुः स्वां दिशं तपसान्विताः ॥ ३४ ॥

गतेषुमुनिमुख्येषु वाल्मीकिस्तपताम्वरः । कुशस्थलयामथागम्य समाराध्यमहेश्वरम्

तस्मात्कवित्वमासाद्य चक्रे काव्यं मनोरमम् ।

रामायणञ्च यत्प्राहुः कथासु प्रथमं स्थितम् ॥ ३६ ॥

ततः प्रभृति देवेशो वाल्मीकेश्वरसञ्ज्ञकः ।

ख्यातोऽवन्त्यां ततो व्यास! कवित्वदायको नृणाम् ॥ ३७ ॥

इति श्रीस्कान्देमाहापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे वाल्मीकेश्वरमहिमवर्णनंनामसप्तविंशतितमोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशोऽध्यायः

### तीर्थमाहात्म्यवर्णनम्

सनत्कुमार उवाच

शुक्रेश्वरंसमभ्यर्च्य सितपुष्पंविलेपनैः । प्रणिपत्यततोभक्त्या रुद्रलोकेमहीयते ॥

भीमेश्वरंनरोदृष्ट्वा भक्त्यासम्पूज्ययत्नतः । नभयंलभतेव्यास! रणेरात्रौजलेऽनले ॥ २

गर्गेश्वरंस्नापयित्वा तिलतैलेनमानवः । बिल्वपत्रैस्तुसम्पूज्य धर्मवृद्धिमवाप्नुयात्

उपोषितश्चतुर्दश्यां तिलप्रस्थतिलाम्भसा ।

स्नापयित्वा तिलैरिष्ट्वासदा सौख्यमवाप्नुयात् ॥ ४ ॥

गोसहस्रंनरोदत्वाभावंकृत्वाविशेषतः । भवबन्धविनिर्मुक्तोरुद्रलोकेसगच्छति ॥ ५

कामेश्वरंसमभ्यच्र्य कुङ्कुमादिविलेपनैः । कामिकेनविमानेन यातिस्वर्गंनसंशयः ॥

चूडामणिंनमस्कृत्य नवम्यांकार्त्तिकेसिते । नवियोनिंनरोयाति धर्मबुद्धिस्तुजायते

चण्डेश्वरंसमभ्यर्च्यकृष्णाष्टम्यामुपोषितः । निर्माल्योल्लङ्घनोत्थेनसशोकेननलिप्यते

इत्यादितीर्थानि महेश्वरस्य पुण्यानि सर्वाणि नरोऽभिगम्य ।

विशुद्धचित्तो भुवि भावितात्मा प्रयाति शम्भोर्भवनं सुरम्यम् ॥ ६ ॥

इति श्रीस्कान्देमाहापुराणे एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे तीर्थमाहात्म्यंनामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

# एकोनत्रिंशोऽध्यायः

## तीर्थप्रसङ्गेपञ्चेशानीयात्रावर्णनम्

व्यास उवाच

गुह्यस्थानेपवित्राणि कीर्तितानित्वयामुने! । प्रमाणंकथयस्वाद्य महाकालवनस्यमे

सनत्कुमार उवाच

यथाश्रुतंमयापूर्वं गदतोब्रह्मणस्स्वयम् । तत्तेऽहंसम्प्रवक्ष्यामि श्रृणुत्वंगदतोमम

योजनस्यैवपर्यन्तं चतुर्दिक्षूपशोभितम् । सौवर्णैस्तोरणैश्चैव मुक्तादामविलम्बिभिः

द्वाराणि तत्र शोभन्ते काञ्चनैः कलशैः स्थितैः ।

सितपद्ममुखैर्द्वारैरनेकैर्मणिमण्डितैः ॥ ४ ॥

महेश्वरप्रयुक्ताश्च द्वाराध्यक्षामहाबलाः । द्वारेषुतेषुशोभन्ते लोकानुग्रहकारकाः ॥

पिङ्गलेशः स्थितः पूर्वे बालरूपोविभावसुः । तीर्थस्याभिमुखेगौरो गुरुर्गणरथानुगः

दक्षिणेऽपि महायोगी नाम्ना कायावरोहणः ।

बिल्वेशः पश्चिमे द्वारे क्षेत्रस्याभिमुखं स्थितः ॥ ७ ॥
नियुक्तो वै महेशेन वारुणीन्दिशमास्थितः ।
उत्तरान्दिशमाश्रित्य स्थितश्चैवोत्तरेश्वरः ॥ ८ ॥

साधकस्सर्वकार्याणामादिष्टश्शङ्करेणसः । मानवायेवसन्त्यत्र क्षेत्रमध्येसुधार्मिकाः
मृताहरपुरं यान्ति विमानैस्सर्वकामिकैः । कृष्णपक्षेचतुर्दश्यामथवार्केन्दुसङ्गमे ॥
पञ्चेशानींनमस्कृत्य प्रतिलोमानुलोमतः । उपोषितोदिनैकेन ध्यायमानोमहेश्वरम्
मुच्यतेसर्वपापैस्तु बहुजन्मकृतैरपि । एवंचविप्रयोयात्रां पञ्चेशानींसमारभेत् । १२
अनेनैवस्वदेहेन रुद्रलोकंसगच्छति । पञ्चेशानीमथान्यांते सुखेनक्रियतेयथा ॥
तथाश्रृणुप्रवक्ष्यामिसर्वपापप्रणाशिनीम् । प्रातःस्नात्वारुद्रसरस्येकादश्यांसमाहितः

श्राद्धं कृत्वा महाकालं नत्वा ईशानमीश्वरम् ।
पिङ्गलेशंततः प्राप्य स्नात्वा श्राद्धं समाचरेत् ॥ १५ ॥

उपगम्यततोदेवं गणेशंपिङ्गलेश्वरम् । गन्धैः पुष्पैश्च धूपैश्च तमभ्यर्च्यनिवर्तयेत् ॥
महाकालेश्वरम्प्राप्य भूयस्स्नातोजितेन्द्रियः । अर्चयेद्देवदेवेशं स्वयंभूतंसनातनम्
ईशानेगमयेद्रात्रिंकृत्वावैनक्तभोजनम् । ध्यायमानोमहेशानं भूमौविन्यस्यविग्रहम् ॥
द्वादश्यांपूर्ववत्सर्वं प्रातस्स्नात्वाव्रजेन्नरः । कायावरोहणेगत्वा पिङ्गलेश्वरवद्यजेत्
त्रयोदश्यामथाप्येवं बिल्वेशंपश्चिमेऽर्चयेत् । चतुर्दश्यांतथासौम्ये पूजयेदुत्तरेश्वरम्

अमायान्तुशुचिस्स्नातो महाकालेश्वरं व्रजेत् ।
गन्धैः पुष्पैश्चधूपैश्च नैवेद्यैर्विविधैस्तथ ॥ २१ ॥

गीतनृत्यादिकंकृत्वा प्रणिपत्यक्षमापयेत् । यात्रांकृत्वातुपूर्वोक्तां ततोनिजगृहंव्रजेत्

ब्राह्मणान् भोजयेत् पञ्च शिवभक्तिपरायणान् ।
प्रणम्य देवरूपांश्च महाकालेऽपि तान्द्विजान् ॥ २३ ॥

पूजयित्वाहिरण्येन सूक्ष्मवस्त्रैस्तथानवैः । रथंपिङ्गलकेदद्याद्गजंकायावरोहणे ॥ २४
दत्त्वाबिल्वेश्वरेचाश्वं वृषंदत्त्वाथचोत्तरे । धेनुं दद्यान्महाकाले सर्वोपस्कारसंयुताम्
यएवंकुरुतेव्यास तस्यपुण्यफलं शृणु । पितृकैर्मातृकैस्साद्धं कुलैस्सदिविमोदते

अप्सरोगीतनृत्याढ्यैर्विमानैस्सार्वकामिकैः ॥ २७ ॥

इति श्रीस्कान्देमहापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे पञ्चेशानीयात्रामाहात्म्यंनामैकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥

---

## त्रिंशोऽध्यायः

### सप्तदेवीनांमाहात्म्यवर्णनम्

सनत्कुमार उवाच

यस्तुप्रदक्षिणां कुर्यान्नियमेमकुशस्थलीम् । प्रदक्षिणीकृता तेन सप्तद्वीपावसुन्धरा
यस्तुपद्मावतींपश्येदर्चयेत्पङ्कजैर्नरः । दद्याद्गधूपंमनैवेद्यं मृतोब्रह्मपुरंव्रजेत् ॥ २ ॥

स्वर्णश्रृङ्गाटिकां व्यास! कुसुमैःस्वर्णसन्निभैः ।
समभ्यर्च्य महाभक्त्या स याति शिवमन्दिरम् ॥ ३ ॥

अवन्तिकान्तुयः पश्येद्देवींत्रैलोक्यविश्रुताम् । कामगेनविमानेनयातिपौरन्दरंपदम्
अर्चयेत्पङ्कजैर्भक्त्यायोदेवीममरावतीम् । अमरैस्सहसंहृष्टो मोदतेदिविसर्वदा।
देवीमुज्जयिनींभक्त्या यःपश्यतिसमाहितः । सर्वैश्वर्यसमायुक्तो रुद्रलोकेमहीयते
विशालांचैवयः पश्येद्रुद्रभक्त्यासमाहितः । मुच्यते त्रिविधैःपापैर्नात्रकार्याविचारणा

इति श्रीस्कान्देमहापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे सप्तदेवीनांमहिमवर्णनंनामत्रिंशत्तमोऽध्यायः ॥ ३० ॥

---

# एकत्रिंशोऽध्यायः

## अक्रूरेश्वरमहिमवर्णनम्

सनत्कुमार उवाच

शृणुव्यासमहातीर्थं पुण्यंयद्ब्रह्मणार्चितम् । अक्रूरेश्वरमित्याख्यंयत्रसिद्धःपितामहः

तत्र देवार्चनंकृत्वा कृष्णाष्टम्यामुपोषितः ।

जितेन्द्रियश्शुचिर्दान्तो रुद्रलोकमवाप्नुयात् ॥ २ ॥

न वदेत्केनचित्सार्द्धं नरः प्रातस्समुत्थितः । दृष्ट्वाऽक्रूरेश्वरंदेवं हेमदानफलं लभेत् ॥

इति श्रीस्कान्देमहापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डेऽक्रूरेश्वरमहिमवर्णनंनामैकत्रिंशोऽध्यायः ॥ ३१ ॥

---

# द्वात्रिंशोऽध्यायः

## मन्दाकिनीमाहात्म्यवर्णनम्

सनत्कुमार उवाच

यस्तु पश्यति ब्रह्माणं शुचिस्स्नातो जितेन्द्रियः ।

मुच्यते पातकाद्घोराद् ब्रह्मलोकमतो व्रजेत् ॥ १ ॥

पद्मासनस्थितोब्रह्मा ध्यायमानःपरम्पदम् । वशिष्ठाद्यैर्मुनिवरैर्विज्ञप्तः कर्मसम्भवात्

ऋषय ऊचुः

आदित्यामरुतस्साध्या वसवश्चाश्विनावुभौ ।

पितरो ये च लोकानां पूज्यन्ते भुवि मानवैः ॥ ३ ॥

ग्रहार्कास्तारकायक्षा दिग्गजाश्चानलानिलाः । अमीदेवावयंसर्वे प्रपठ्यन्तेत्वदंशतः

कं वै ध्यायसि देवेश! एतत्सर्वं ब्रवीहि नः ।

ब्रह्मोवाच

द्वे विद्ये तत्त्वरूपे ये परा चैवाऽपरा तथा ॥ ५ ॥

ज्ञेये मम स्वरूपेण मूर्त्तेमूर्त्तात्मिके सदा ।

ऋषय ऊचुः

पितामह!कथं विष्णो भवतः परमंविभुम् ॥ ६ ॥

येनास्माकं परासिद्धिर्जायते तव दर्शनात् ॥ ७ ॥

ब्रह्मोवाच

माहेश्वरंपरंक्षेत्रं कुशस्थलीतिशब्दितम् । यज्ञार्थिनामयादेवः श्रीकण्ठः पार्वतीपतिः
याचितस्तेनदेवेन उक्तोऽहंतत्रशम्भुना । समन्ताद्योजनंसाग्रं क्षेत्रमेतत्पितामह! ॥ ६
मयादत्तंतवविभो!महाकालवनाद्वते । वारितोऽपिमयातत्र वनेगुप्तोहिरोपतः ॥ १०
आरब्धोवैततोयज्ञो नारायणपरिग्रहात् । ज्ञातस्तथाऽपिमेयज्ञो देवदेवेनशम्भुना ॥
यज्ञवाटकपर्दीशस्ततोभिक्षार्थमागतः ।याज्ञिकैस्सोऽथतत्रोक्तोमाऽत्रतिष्ठजुगुप्सित!
कर्पार्दिनाच ते तत्र उक्तायास्यामतत्पुनः । एवमुक्त्वाकपालंतुभूमौसंस्थाप्य तत्र हि
स्नातुंनदींययौ शिप्रां कपर्दीपरमेश्वरः । उक्तं तस्मिन्गते शिप्रांकपर्द्दिनिद्विजातिभिः

कथं हि क्रियते होमः कपाले सदसि स्थिते ।

अकपालानि शौचानि पुरा प्रोक्तानि सूरिभिः ॥ १५ ॥

तत्कपालं सदस्येन उत्क्षिप्तं पाणिना स्वयम् ।

तस्मिन् क्षिप्तेऽभवच्चाऽन्यदक्षिप्तेक्षिप्तेऽभवत्पुनः ॥ १६

एवंतान्तःकपालानां प्राप्यतेमुनिसत्तमैः । रुद्रं कपर्दिनं नत्वा शरणं ते समागताः ॥
ततस्सदर्शनंप्रादाद्भक्त्यातुष्टोमहेश्वरः । कपालपाणिर्भगवान् मामुवाच पुनः प्रभुः
वरंवरयभोब्रह्मन्! यत्तेमनसिवर्तते । नास्त्यदेयं मया तुभ्यं सर्वं दास्यामि तत्त्वतः
ब्रह्मोत्तरमिदंस्थानं मया दत्तं चतुर्मुख! । कारयस्वयथाकामं तथावर्णचतुष्टयम् ॥२०
एवं वदन्तं वरदमीशानंपरमेश्वरम् । तथेतिचोक्त्वा सदसि नममान्योवरोवृतः ॥ २१

उज्जयनीति वैनाम कुशस्थल्यानिवेशितम् । कुण्डंमन्दाकिनीतत्र मयाकृतमनन्तरम्
तत्रविप्रकृतेस्नाने सर्वपा ैःप्रमुच्यते । तस्यां संस्थापयेद्दिक्षुचतुरोऽथ घटाञ्छुभान्

सतिलांस्तान्सवस्त्रांश्च सफलान् मण्डनैस्सह ।
कार्त्तिक्यामथ माघ्यांश्च चतुर्विद्भ्यःप्रदापयेत् ॥ २४ ॥

प्रथमंचऋग्वेदाय यजुर्वेदायदक्षिणम् । पश्चिमंसामवेदाय अथर्वणे तथोत्तरम् ॥ २५
वेदानुद्दिश्यचाप्येवं प्रीयतां मे पितामहः । कृतेचैवंहि यत्पुण्यं तच्छृणुध्वंसमाहिताः
सर्वतीर्थेषुयत्पुण्यं मन्दाकिन्यां तथाभवेत् । सहस्रगुणितंस्नानंजाप्यंलक्षगुणंभवेत्
दानंकोटिगुणंज्ञेयं मन्दाकिन्यांनसंशयः । कार्त्तिकेमासिसम्प्राप्ते गोदानंतत्रकारयेत्
घृतधेनुञ्चकार्त्तिक्यांमाघ्यांतिलमयींतथा । जलधेनुं तुवैशाख्यांदत्त्वामुच्येतपातकात्

वाचिकं मानसं पापं कर्मजं यच्च दुष्कृतम् ।
विनश्येत्किल्बिषं सर्वं मन्दाकिन्यास्तु दर्शनात् ॥ ३० ॥

मन्दाकिनीसमं तीर्थं पृथिव्यां नैवदृश्यते । यस्य दर्शनमात्रेण ब्रह्मलोके स मोदते

मन्दाकिन्यां तु यःस्नानं कृत्वा श्राद्धं प्रदास्यति ।
दर्शे च पूर्णिमायां वा पितृलोके स मोदते ॥ ३२ ॥

पितामहन्तुयोभक्त्यां नित्यं पश्यतिमानवः । अश्वमेधसहस्रेण राजसूयशतेन च ॥
युज्यतेनात्रसन्देहः सत्यमेतत्तपोधनाः! । ततोमन्वन्तरेऽतीते प्राप्तेवैवस्वतेपुनः ॥
तेनैवोन्मत्तवेषेण ऊर्ध्वशेफोमहेश्वरः । प्रविष्टोब्राह्मसत्रेतु दृष्टस्तैर्द्विजसत्तमैः ॥ ३५

तं ब्राह्मणाः शपन्तिस्म निन्दां कुर्वन्ति चापरे ।
अपरे पांशुभिः शिश्नं घ्नन्ति तस्याऽशपन्द्विजाः ॥ ३६ ॥

लोष्टैर्लगुडकैश्चान्ये घ्नन्तितंबलगर्विताः । जटामुकुटकंकेचिद्धृत्वाकर्षन्तिचापरे ॥
पृच्छन्तित्रतचर्यांवै व्रतं केनप्रदर्शितम् । अत्रचैवस्त्रियस्सन्ति कथमेवंत्वयाकृतम् ॥
ब्रह्मणाचेदृशीचर्या विष्णुनावाकृतास्वयम् । गिरिशेनाऽपिदेवेन केनेदंदुष्कृतंकृतम्
माविडम्बयदेवेशं बद्धोह्यसित्वमधनः । एवन्तैर्हन्यमानस्तु ब्राह्मणैस्तत्रशङ्करः ॥ ४०

स्मितं कृत्वाब्रवीत्सर्वान् ब्राह्मणान् परमेश्वरः ।

ममाभिघ्नन्ति किं यूयमुन्मत्तं नष्टचेतसम् ॥ ४१ ॥

यूयंकारुणिकास्सर्वे मित्रभावेव्यवस्थिताः । तमेवंवादिनंदेवं जालमरूपधरंहरम्

माययातस्यदेवस्य मोहितास्तेद्विजातयः । पुनः कपर्दिनं जघ्नुः पाणिपादेनवैद्विजाः

ताड्यमानस्तुतैर्विप्रैः परंकोपमुपागमत् । ततोदेवेननेशप्ता यूयंवेदविवर्ज्जिताः ॥

ऊर्ध्वजूटास्सलगुडाः परदारोपजीविनः । रताद्यूतेचवेश्यायां पितृमातृविवर्ज्जिताः

नपुत्रेपितृवित्तंच विद्यावाऽपिभविष्यति । शेफोममहतोयैश्च तेसर्वेन्द्रियवर्ज्जिताः

रौद्राभिक्षान्तु भिक्षन्तः परपीडोपर्जीविनः ।

आत्मानं वर्णयिष्यन्ति धनधान्यविवर्जिताः ॥ ४७ ॥

यैश्चनत्रकृताविप्रैर्न्यमानेकृपामयि । तेषांधनञ्चपुत्राश्च दासीदासादयश्चवै ॥ ४८ ॥

कुलोत्पन्नाश्चवैनार्यो भविष्यन्तिवरान्मम । एवंशापंवरं दत्त्वा गतोऽन्तर्द्धानमीश्वरः

ततोद्विजागनेदेवे मत्वातंशङ्करंविभुम् । अन्वेषयन्तोयत्नेन महाकालवनंगताः ५० ॥

स्नात्वा सरसि रुद्रस्य जपन्तः शतरुद्रियम् ।

जाप्यावसाने तान्देवोऽशरीरिण्या गिराऽब्रवीत् ॥ ५१ ॥

अनृतंनमयाप्रोक्तं क्लेशेष्वपिकुतस्सुखे । भूयोऽप्यनुग्रहं विप्रायुष्माकं करवाण्यहम्

शान्तादान्ताश्चयेविप्रा भक्तिमन्तो मयि स्थिताः ।

न तेषां छिद्यते वंशो न धनं न च सन्ततिः ॥ ५३ ॥

अग्निहोत्ररतायेच भक्तिमन्तोजनार्दने । पूजयन्तिचब्रह्माणं तेजोराशिन्दिवाकरम् ॥

नाशुभं विद्यते तेषां येषां साम्ये स्थिता मतिः ।

एतावदुक्त्वा देवेशो तूष्णीमासीज्जगत्प्रभुः ॥ ५५ ॥

एवंशापंवरंलब्ध्वा देवदेवान्महेश्वरात् । आजग्मुस्सहितास्सर्वे यत्रदेवः पितामहः

विरञ्चिमथ ते जाप्यैस्तोषयन्तः पुरः स्थिताः ।

तुष्टस्तानब्रवीद् ब्रह्मा मत्तोऽपि व्रियतां वरः ॥ ५७ ॥

ब्रह्मणस्तेनवाक्येन तुष्टाः सर्वेद्विजोत्तमाः । कोवरोयाच्यतांविप्राः परितुष्टेपितामहे

एकेतत्राब्रुवन्विप्रा वेदान्वैवृणवामहै । ततोऽन्यैश्चधनंधान्यं कृतमेवाविशङ्कितैः ॥ ५९

अन्ये प्राहुः किमस्माकं धनैस्तुष्टे पितामहे ।
अग्निहोत्रादिर्वेदाश्च शास्त्राणि विविधानि च ॥ ६० ॥
शान्ताआढ्याश्चयेलोका वरदानाद्भवन्तुनः । एवंप्रजलपतांतत्र विप्राणांकोपआविशत्
परस्परंवरार्थेऽथ युद्धंकर्तुंमुद्यताः । युध्यन्तेसायुधाः केचित्केचित्तत्रोपसर्पकाः
उदासीनाश्चयेविप्रास्ते चमौनेनसंस्थिताः । दृष्ट्वैवंभगवान्प्राह विप्रान्युद्धंप्रकुर्वतः
यस्माद्रुपद्रुतं विप्रैः शालायां वाह्यसंस्थितैः ।
तस्मादामूलतो विप्रा गुल्मो युद्धेविसर्प्पकः ॥ ६४ ॥
उदासीनस्तु यो गुल्मो वृत्तिहीनोभविष्यति।
वेदास्तस्यभवेयुर्वै यस्त्वासीन्मौनसंस्थितः ॥ ६५ ॥
तृतीयस्सायुधो गुल्मो योद्धुकामस्तु यः स्थितः ।
चातुर्विधस्सर्वेविप्रा वृत्तिहीनोभविष्यति ॥ ६६ ॥
परदारासु वेश्यायां द्यूतेचौर्येमदारतः । नज्ञानंनचमोक्षः स्यात्तेषांवैदुष्टचेतसाम् ॥
एवमुक्त्वाययौब्रह्मा वैराजं भवनोत्तमम् । एवंमेपरमंक्षेत्रं मुनयोऽवन्तिमण्डले ॥ ६८
यांदेवनगरींलोके प्रवदन्तीहमानवाः । तस्यान्तुयेद्विजाश्शान्ता वसन्तिक्षेत्रवासिनः
नतेषांदुर्लभंकिञ्चिन्ममलोकेभविष्यति । कोकामुखेकुरुक्षेत्रे नैमिषेपुष्करेषुच ॥
वाराणस्यांप्रयागेच तथाबदरिकाश्रमे । गङ्गाद्वारेप्रभासेच गङ्गासागरसङ्गमे ॥ ७१ ॥
रुद्रकोट्यांविरूपाक्षे मित्रस्याऽपितथावने । तीर्थेष्वेतेषुक्षेत्रेषुयासिद्धिर्द्वादशाब्दिका
प्राप्यतेमानवैर्लोके या मासेनैवलभ्यते । उज्जयिन्यांनसन्देहो ब्रह्मचर्येमनोयदि ॥
तीर्थानांप्रवरंतीर्थं क्षेत्राणामविनोत्तमम् । सदाभिरुचिरंमह्यमेतद्वैमुनिसत्तमाः ॥
मन्दाकिन्यास्तु माहात्म्यं क्षेत्रस्योत्पत्तिरुत्तमा ।
भूयः किमन्यदिच्छन्ति श्रोतुं वैद्विजसत्तमाः ॥ ७५ ॥

सनत्कुमार उवाच

एतत्तेब्रह्मणोवाक्यंश्रुत्वाव्यासतथाविधम् । वशिष्ठाद्याश्चमुनयःपरंध्यानमथोगताः
ध्यात्वा तु सुचिरं कालं तत्र वासे मनो दधुः ।

साग्निहोत्रास्सपत्नीका गताश्चावन्तिमण्डले ॥ ७७ ॥
महाकालवनंदृष्ट्वाशिप्राञ्चैवमहानदीम् । श्मशानमूषरञ्चैवनदींगन्धवतींतथा ॥ ७८ ॥
कोटितीर्थमुपस्पृश्यचक्रुर्वासञ्चतत्रवै । स्मृत्वातद्ब्रह्मणोवाक्यंरुचिस्तेषांतदाभवत्
अरुन्धत्यावशिष्ठश्च गमनंप्रतिमोदितः । उवाचतांमहात्मासौ स्वांभार्यांमुनिसत्तमः

महाकालः सरिच्छिप्रा गतिश्चैवसुनिर्मला ।
उज्जयिन्यां विशालाक्षीवासः कस्य न रोचते ॥ ८१ ॥

स्नानंकृत्वानरोयस्तु महानद्यांहिदुर्लभम् । महाकालंनमस्कर्ता नैवमृत्युंसशोचयेत्
मृतः कीटः पतङ्गो वा रुद्रस्यानुचरोभवेत् । यत्रैषाश्रूयतेमुक्तिः कथंसात्यज्यतेमया

एवं प्रजल्प्याथमुनिप्रधानस्तत्रैव वासं सहसा चकार ।
वनस्य व्युष्टिं परिकीर्तयंस्तु स्थितस्सहैवात्र मुनिप्रधानैः ॥ ८४ ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे मन्दाकिनीमाहात्म्यवर्णनंनाम द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥

---

# त्रयस्त्रिंशोऽध्यायः

## शङ्करादित्यमाहात्म्यवर्णनम्

सनत्कुमारउवाच

अवन्त्यामङ्कपादाख्ये पश्येद्रामजनार्दनौ । ययोर्दर्शनमात्रेण यमलोकंनपश्यति ॥

व्यास उवाच

कथंतावङ्कपादाख्ये यातावत्रमहामुने! । नपश्येद्यमलोकं स यद्यपिब्रह्महाभवेत् ॥ २

सनत्कुमार उवाच

भारावतारणार्थाय देवौरामजनार्दनौ । अवतीर्णौयदोर्वंशेदिव्यरूपौमहाद्युती ॥ ३ ॥
कंसंहत्वाथचाणूरमुग्रसेनंनराधिपम् । अभिषिच्यस्वयंराज्ये यदुसिंहउवाचतम् ॥

किंकार्यंतेमयाब्रूहि कर्तव्यन्तेसुतेहते ॥ एवमुक्तस्सराजावै उग्रसेनोऽब्रवीदिदम् ॥५
सर्वंसम्पत्स्यतेकृष्ण!भवतोहिनदुर्लभम् । विज्ञाताखिलविज्ञानौभवितारावुभावपि
गच्छेतामुज्जयिन्यांवै कृतविद्यौभविष्यथः । ततस्सान्दीपनिंविप्रं जग्मतूरामकेशवौ
कण्ठस्थांश्चक्रतुर्वेदानाचारमखिलञ्चतौ । सरहस्यंधनुर्वेदं ससंहारंतथैवच ॥ ८ ॥
अहोरात्रैश्चतुःषष्ट्यातदद्भुतमभूद्द्विज! । सान्दीपनिरसम्भाव्यं तयोःकर्मातिमानुषम्
विचिन्त्यतौतदामेनेप्राप्तौचन्द्रदिवाकरौ । ततःकिञ्चित्सनोवाचस्नातुंतीर्थमथोययौ

शिष्यैस्तु सहितो विप्रो महाकालमथाविशत् ।
शिष्यैस्सह प्रविष्टौ द्वौ तदा तौ रामकेशवौ ॥ ११ ॥

वन्द्यमानोमहाकालस्तदाकेशवमब्रवीत् । त्वयानाथेनदेवानां मनुष्यत्वेहितिष्ठता ॥
सुखमासीच्चसाधूनामज्ञानानाञ्चसर्वदा । जनपीडाकरायेतु सदा वा बलदर्पिताः ॥
युवाभ्यांतेहतास्सर्वेकंसप्रमुखतोनृपाः । मुनिसिद्धसुरादीनांस्थितिःकार्यात्वयानघ

करिष्यामि तमित्युक्त्वा स नमस्यस्ततो ययौ ।
दृष्ट्वा सान्दीपनिं शिष्या ऊचुरेवं दिनेदिने ॥ १५ ॥

कोपिनाश्रद्दधत्तेषांवचस्त्वत्यद्भुतंयतः । स्वयंययौततोद्रष्टुमाश्चर्यंशिष्यभाषितम्

ततस्तथोत्थितः शब्दः संश्लेषश्च तथा तयोः ।
तावागतौ गृहं तत्र गुरुर्वचनमब्रवीत् ॥ १७ ॥

नवैज्ञातौमयावांवायौयदिवृष्णिकुलोद्भवौ । ततस्सान्दीपनिंकृष्णःकृतकृत्योऽब्रवीद्वचः
गुर्वर्थंकिन्ददामीतिसहरामेणहर्षितः । तच्छ्रुत्वावचनंहृद्यं गुरुःप्रोवाचहर्षितः ॥ १९ ॥
पुत्रमिच्छाम्यहंत्वत्तोयोमृतो लवणाम्भसि । पुत्रएकोहिमेजातस्सचापितिमिनाहृतः
प्रभासेतीर्थयात्रायां त्वमेवतमिहानय । तथेतिचाब्रवीत्कृष्णो रामस्यानुमतेगतः ॥
तंसमुद्रउवाचेदं दैत्यः पञ्चजनोमहान् । तिमिरूपेणतंबालं ग्रस्तवान्मयिसंस्थितः
ततः पञ्चजनं हत्वा ग्राहरूपंमहाबलम् । तन्मध्यस्थंचजग्राह शङ्खंग्रस्तोहियः पुरा ॥
जलमध्यस्थितेनैवग्राहेणातीवलीलया । तस्योदरेयदाबालंनददर्शजनार्दनः ॥ २४ ॥
यमालयगतंमत्वा तदावरुणमब्रवीत् । भगवन्यादसामीश रथोमेदीयताम्महान् ॥

येनाहत्वेहिनाञ्जित्वापश्येयंप्रेनपंयमम् । पुराजिरेहतादैत्यादानवाबलदर्पिताः ॥ २६ ॥
मयायेनरथेनाद्य समह्यंदीयतांरथः । न्यासभूतोरथोयस्ते विधृतोपरतेरणे ॥२७ ॥
मयाधर्मंपुरस्कृत्यदीयतांसह्यपारम्पते! । एतच्छ्रुत्वाप्रहृष्टात्माज्ञात्वाकार्यार्थिनंहरिम्
ददौतुरथमक्षोभ्यं रणेतस्मैसुरासुरैः । ततोहरिस्समालोक्य रथंरत्नपरिष्कृतम् ॥
द्वीपिचर्मपरीधानं वैयाघ्रपरिवारितम् । नानाचित्रविचित्राङ्गं गरुडध्वजराजितम् ॥
संयुक्तंशैव्यसुग्रीवमेघपुष्पबलाहकैः । अजेयन्देवदेवेन्द्रदानवासुरराक्षसैः ॥ ३१ ॥
अनेकायुधसम्पूर्णंमणिविद्रुमभूषितम् । सहस्रसूर्यप्रतिमंचारुचक्रंचतुर्युगम् ॥ ३२ ॥

किङ्किणीशतशोभाढ्यं घण्टाचामरचन्द्रिकम् ।
संवर्त्ताकारविषमं खगेन्द्रवरकेतनम् ॥ ३३ ॥

दृष्ट्वाकृष्णस्सरामस्तु मुमुदे वीतविस्मयः । प्रदक्षिणमुपागत्य देवताभ्यः प्रणम्यच

आरुरोह रथं विष्णुर्विमानं साग्रजोऽजनः ॥ ३५ ॥
ततो जगाम त्वरितो जनार्द्दनो जगन्निवासो यमलोकमाश्रिताम् ।
दिशं सहस्रैः किरणैर्वृताम्पुरीं ददर्श शङ्खं परिगृह्य चाच्युतः ॥ ३६ ॥

तत्रप्रध्मापयामास शङ्खं खड्गधनुर्धरः । तेनशब्देनचित्रस्ताः कृतान्तालयवासिनः
नरकान्तर्गतामर्त्याः पापाचारपरायणाः । सुखमापुः प्रशान्ताश्चवह्नयःकृष्णदर्शनात्

शस्त्राणि कुण्ठतां प्रापुर्यन्त्राणि विविधानि च ।
विदीर्णानि तदा चाशु देवदेवस्य दर्शनात् ॥ ३९ ॥

असिपत्रवनंनाम शीर्णपर्णमजायत । रौरवंनामनरकमभैरवमभूत्तदा ॥ ४० ॥
अभैरवंभैरवाख्यं कुम्भीपाकमपाचिकम् । शृङ्गाटंशृङ्गसदृशं लोहसूच्यप्यसूचिका ॥
दुस्तरासुनराजाता नदीवैतरणानृणाम् । नरकान्तेतदाजातेगतेविश्वेश्वरेविभौ ॥
पापक्षयात्ततस्सर्वे तेमुक्तानरकान्नराः । पदमव्ययमासाद्य दृष्ट्वा विष्णुंतमोपहम् ॥
विमानेषुसहस्रेषु ह्यारूढास्तेसमन्ततः । समीक्ष्यपुण्डरीकाक्षं मुक्तास्तेसर्वपातकात्
ततश्शून्यंमुनेजातं सर्वंनिरयमण्डलम् । दर्शनात्तस्यदेवस्य विष्णोर्विश्वस्वरूपिणः
ततोदूताः कृतान्तस्यकृष्णञ्चयुद्धकारिणम् । वारयामासुरव्यग्रा विशन्तंनरकान्प्रति

किङ्करा ऊचुः

मावीरानेनमार्गेण रथमानयमानवाः । प्रयान्त्यधोगतिं पापात्परस्त्रीस्वापहारकाः

यमादिष्टानराः पापाद्ये मोच्या वर्षकोटिभिः ।

दृष्ट्वा तएवसद्यस्त्वां गतास्स्वर्गमघावृताः ॥ ४८ ॥

एतच्छ्रुत्वावचस्तेषां कृपयापीडितोभृशम् । पुनः प्रोवाचमधुहा मोक्षायाहमुपागतः

सर्वेषांस्वर्गदाताऽहं यमलोकनिवारकः । अञ्जसायमराड्दूता यमायाख्यातमेव च ॥

एतच्छ्रुत्वावचोदूतास्सत्वरायममागताः । सर्वमाचक्षिरेवृत्तं यथानारकिमोक्षणम् ॥

ततोयमोरुषाविष्टः प्राहतान्यमकिङ्करान् । यः कश्चिदागतोमर्त्यो मर्यादाभेदकृन्नरः

तंगत्वावारयध्वंवै गृहीत्वानीयतामिह । अयन्नरान्तकोयातु किङ्करस्सहकिङ्करैः

एवमुक्तो यमेनाथ किङ्करस्सनरान्तकः । गत्वातंवारयामास वाग्भिरुग्राभिरच्युतम्

यदानवारितस्तस्थौ तदाक्रुद्धोनरान्तकः । तदाशरैरतीवोग्रैस्ताडितस्तेनकेशवः ॥

बलदेवोऽपिसमरे ताडितोविविधैश्शरैः । तावुभौताडितौघोरैः समन्ताद्यमकिङ्करैः

आदायधनुषीदिव्ये जघ्नतुर्यमकिङ्करान् । बाणैरनेकसाहस्रैः क्रुद्धौरामजनार्दनौ ॥

नरान्तकोऽपिसमरे बलेनबलिनार्दितः । पपातगदयाभिन्नो मूर्ध्निनिर्गतलोचनः ॥

ततोनरान्तकेवीरे पतितेयमकिङ्करे । किङ्कराणामभूत्सैन्यमातंरणपराङ्मुखम् ॥

तेदूतारामकृष्णाभ्यां हन्यमानाभयातुराः । यमायकथयामासुर्नरान्तकनिपातनम् ॥

ततोयमोययौक्रुद्धः समन्तात्किङ्करैर्वृतः । ततः प्राह यमः क्रुद्धोनोजितोऽहंपुरापरैः

ततोवादित्रघोषैस्तु मुरजानकगोमुखैः । नानाडमरुकाद्यैश्चचित्रगुप्तेचगच्छति ॥

देवाविद्याधराः सिद्धा द्रष्टुं प्राप्ता महाबलम् ।

कृतान्तस्य रणेऽक्षोभ्यं कामपालं जगत्पतिम् ॥ ६३ ॥

ततस्तेकिङ्कराः सर्वेचित्रगुप्तेननोदिताः । रथामावृत्यबाणौघैः प्रबबाधुस्समन्ततः ॥

बलश्चकेशवं सङ्ख्ये जघ्नतुस्तावुभावपि । रणेचविविधैर्बाणैश्चित्रगुप्तस्यपश्यतः

विदार्यबलसहस्राणि किङ्कराणांसमन्ततः । कृतान्तानीकिनीमध्ये कृतान्तइवकेशवः

चचार रणदुर्द्धर्षः कामपालेन पालितः ॥ ६७ ॥

ततश्चित्रगुप्तोरणेकिङ्करौघं.विदीर्णं निरीक्ष्याऽर्त्तनादंचकार ।
शरैः पञ्चभिः कृष्णमायान्तमाजौ जघानाष्टभिर्वक्त्रदेशे सभिन्नः ॥ ६८ ॥
शरार्तोरथोपस्थआसीत्तदानीं तमालोक्यभिन्नं रणे नष्टसञ्ज्ञम् ।
रथं स्वं समादाय यातः कृतान्तस्ततश्चित्रगुप्तेशरार्ते प्रसुप्ते ॥ ६९ ॥
रणे कीर्त्तिलुप्तेभयक्षोभयुक्ताः स्वसैन्यैश्चयुक्ताभयार्तानिषण्णाः ।
प्रधानाश्चभग्नाविचित्राश्च भग्नास्ततश्चित्रगुप्तं निशम्याऽथ भग्नम् ॥ ७०॥
सकालस्तमायान्तमालोक्यदूराद्वरं सैन्यमादाय देवारिशत्रुम् ।
विनाशाय युध्यद्युगान्ते प्रजानां यथा वाडवो ज्वालवृद्धः प्रवृत्तः ॥ ७१ ॥
तमायान्तमालोक्य कालं करालं शरैरावृणोदन्तकं कालकल्पैः ।
स कालः करालं समादायदण्डं मुमोचाच्युते पश्यतान्देवतानाम् ॥ ७२ ॥
ततः कालदण्डः प्रजानां विनाशो हरेस्सन्निकाशं समभ्याजगाम ।
ततो देवगन्धर्वयक्षामुनीन्द्राः परं विस्मयं प्रापुरन्वीक्ष्य रामम् ॥ ७३ ॥
ज्वलन्तश्च जग्राह कालस्य दण्डं स रामो वरं लीलयानन्तमूर्तिः ।
कालदण्डे गृहीते बलेनाहवे मोक्तुकामे पुनः कालनाशाय वै ॥ ७४ ॥
तूर्णमभ्येत्य तत्रान्तरे पद्मजस्तं रणे वारयामास कृष्णंतदा ॥ ७५ ॥
मां मुञ्चेत्यब्रवीद्वेधाः कालं कालायुधं बल! ।
त्वयाबलवतावीर चराचरधराधरा! । ध्रार्यतेशिरसादेव संसारेनास्ति ते समः ॥ ७६
त्वयाविश्वपतिर्विष्णुरुत्सङ्गेनसदोह्यते । कोऽन्योऽस्तित्वत्समोरामयोजगद्वहनेक्षमः
जगत्स्रष्टाजगद्गोप्ताजगद्धर्ताजगत्पतिः । पाल्यतेयस्त्वयासोऽपिविष्णुर्विश्वैकनायकः
कस्ते स्तुतिकरोऽस्तीह को गुणान्वेत्तुमर्हति ।
ततो वयं त्वदङ्कस्था विष्णुनाभिभवायनाः ॥ ७९ ॥
इत्युक्त्वाबलदेवञ्च वासुदेवंपुनर्वचः । उवाच चतुरास्यस्तु स्तुतिपूर्वंवृतस्सुरैः ॥
कृष्ण!कृष्ण!करालास्य! कालस्यास्य कृपां कुरु ।
यतो भवन्तमायान्तं विष्णुं विश्वैकनायकम् ॥ ८१ ॥

वेत्तिनायंजगन्नाथ नरकार्णवतारकम् । त्वयावैभगवन्पूर्वंयमः संस्थापितः पदे ॥
नृणांदुष्कृतकर्तृणां नरकाययमः प्रभो! । तस्मादस्य जगन्नाथ क्षम्यतांपुरुषोत्तम!
विभो!कृतापराधस्यब्रूहियत्तेविवक्षितम् । एतच्छ्रुत्वाऽब्रवीत्कृष्णोधातःशृणुगुरोर्मम
सान्दीपनेस्समानीतस्सुतस्तेनागताविह । समर्प्यतांगुरुश्रेष्ठ श्रेष्ठायगुरुदक्षिणा ॥

आवाभ्यां या प्रतिज्ञाता तस्मात्सा पाल्यतां विभो! ।
एतत्पितामहः श्रुत्वा यमं समरनिर्जितम् ॥ ८६ ॥
समाहूयाऽब्रवीद्विष्णुर्य्यद्ब्रवीति कुरुष्व तत् ।
तच्छ्रुत्वा धर्म्मराजस्तु विरञ्चिमिदमब्रवीत् ॥ ८७ ॥

भगवन्विश्वकृल्लोकेनैनमार्ग्गस्त्वयाकृतः । यमलोकमनुप्राप्तः कायहीनः शरीरवान् ॥
शरीरसहितोयाति नैतदत्रप्रपद्यते । तच्छ्रुत्वाहिपुनर्ब्रह्मा विश्वस्यास्यविभुःस्वयम्

विश्वकृद्विश्वहृद्यस्माद्यदिच्छति करोतु तत् ।
तस्मादर्पय पुत्रं त्वं मुनेस्सान्दीपनेश्च वै ॥ ९० ॥

नरकायं पुनः कृत्वा तञ्चानयमहामते । तच्छ्रुत्वाधर्मराजस्तु पुत्रंसान्दीपनेस्तथा ॥
ससर्जबालरूपञ्चतदात्मानंतदुद्भवम् । अर्पयामासकृष्णायबालरूपसमन्वितम् ॥९२ ॥
समक्षंदेवतानाञ्च तदद्भुतमिवाभवत् । ततःप्राप्यगुरोः पुत्रं प्रभुःप्रीतःप्रजापतिम्

प्राह प्राप्तो मया ब्रह्मन् स्वरूपो द्विजदारकः ।

श्रीकृष्ण उवाच

अद्यप्रभृति लोकेश! देशे मच्चरणाङ्किते ॥ ९४ ॥

अवन्त्यामङ्कपादाख्ये मृतानेक्षन्तितेयमम् । महाकालोत्तरे देवमाद्यं वै पुरुषोत्तमम्
विश्वरूपञ्चगोविन्दं शङ्खोद्धारंचकेशवम् । येपश्यन्तिकुशस्थल्यामेतेषांमूर्तिपञ्चकम्
तेनरानगमिष्यन्तिविरञ्चेनिरयंक्वचित् । तथैवागमनादत्र मम रामस्य नारकाः ॥९७

विमुक्तास्ते त्वया घोरात् प्राप्नुवन्त्यखिला दिवम् ।
इत्युक्ते वचने वेधाः प्रोवाच प्रीतिमान्हरिम् ॥ ९८ ॥

यत्त्वयोक्तं वचःकृष्णतदस्तुसकलंसदा । ये च त्वामादिपुरुषं प्रथमंपुरुषोत्तमम् ॥

प्रणम्य ये च द्रक्ष्यन्ति स्नात्वा शिवसरस्यपि ।
अघोज्वलं महाकालं सोऽश्वमेधफलं लभेत् ॥ १०० ॥
एवमुक्तो हरिः पुत्रमादायबलेन ( हलिना ) सह ( ? ) ॥ १०१ ॥
आपृच्छ्यवेधसंदेवमारुरोहरथंततः । शङ्खमापूरयामास कृतकार्योजनार्द्दनः ॥ १०२ ॥
मोक्षायनिरयस्थानं नृणांवैपापकर्मणाम् । ततस्तेनशङ्खशब्देन स्मरणेनाच्युतस्य च
दिव्यान्विमानानारुह्य दिवमेवाखिलागताः ।
शून्यंतन्मण्डलं जातं नारायणसमागमे ॥ १०४ ॥
कालो पि दण्डमासाद्य बलदेवात्पुरःपुरम् ।
प्रविवेश ततो धाता तत्रैवान्तरधीयत ॥ १०५ ॥
कृष्णोऽपिबलवान्वीरः प्राप्तउज्जयिनींपुरीम् । बलदेवसहायस्तुसरथेनाशुगामिना ॥
ततस्सान्दीपनेः पुत्रमर्पयामासकेशिहा । गुरवेयत्प्रतिज्ञातं सतस्मादनृणोऽभवत्
एवंसान्दीपनेः पुत्रंदृष्ट्वात्रपुनरागतम् । नागरास्तत्रराजाच विस्मयंपरमंययुः ॥
तौवीरावर्चयामासुर्मत्वादेवोत्तमोत्तमौ । सान्दीपनिरुवाचेदं तौचरामजनार्द्दनौ ॥
इह स्थास्यति वः कीर्तिर्यावदाभूतसम्प्लवम् ।
स्थाने तु वयमेतस्मिन् स्थास्यामो यदुनन्दनौ ॥ ११० ॥
नविज्ञातौमयावीरौ यदुवृष्णिकुलोद्भवौ । नरनारायणौदेवौ देवकार्यार्थमागतौ ॥
नारभूग्युर्मरेत्तस्यनश्यात्रिनंत्रदुर्गतिः । प्राप्नोत्यत्रचस्नातश्चेत्स्वर्गलोकेमहीयते
शङ्खिनंविश्वरूपञ्चमाधवञ्चक्रिणंतथा । चत्वारिविष्णुक्षेत्राणि अङ्कपादस्तुपञ्चमः
एषां यात्रां प्रवक्ष्यामि यथा कार्या मनीषिभिः ।
मन्दाकिन्यां कृतस्नानो दृष्ट्वा रामजनार्दनौ ॥ ११४ ॥
शङ्खोद्धारे ततस्स्नात्वा प्रपश्येद्द बलकेशवौ ।
स्नानं कृत्वातनः कुण्डे गोविन्दञ्च समर्चयेत ॥ ११५ ॥
चक्रिणञ्चततोदृष्ट्वा विश्वरूपंततोव्रजेत् । तस्याग्रतः करीकुण्डेस्नानंकृत्वायथाविधि
पुनस्तेन प्रकारेण प्रपश्येद्द बलकेशवौ ।

स्नानं कृत्वा ततः कुण्डे गोविन्दञ्च समर्चयेत् ॥ ११७ ॥

तथैव चक्रहस्तौ तौ दृष्ट्वा केशवमाव्रजेत् ।

शिप्राम्भसि नर स्स्नात्वा भक्त्या सम्पूज्य केशवम् ॥ ११८ ॥

परावृत्याङ्कपादेतु तां रात्रिंगमयेच्छुचिः । प्रातर्वैभोजयेत्तत्र पञ्चविप्रांश्चसुव्रतान् ॥
गोदक्षिणाश्शङ्खिनेतु विश्वरूपायवैहयः । गोविन्दाय गजः प्रोक्तस्सर्वंदद्याच्चकेशवम्
उपोष्य द्वादशींविप्रायाङ्कपादंसमर्चयेत् । गन्धपुष्पैश्चधूपैश्चनैवेद्यैर्विविधैस्तथा ॥
श्राद्धंयःकुरुतेसर्वं तस्यपुण्यफलं शृणु । कुलानांशतमुद्धृत्य विमानैस्सार्वकामिकैः
गीतनृत्यादिभोगैश्च वैकुण्ठे सुचिरंवसेत् । पुनर्लोकमिमंप्राप्य पवित्रेजायतेकुले ॥

प्राप्नोत्यनन्तसन्तानं विष्णुलोकं पुनर्व्रजेत् ॥ २४ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डेऽ
ङ्कपादमाहात्म्यंनामत्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥

---

## चतुस्त्रिंशोऽध्यायः

### चन्द्रादित्यमाहात्म्यवर्णनम्

**सनत्कुमार उवाच**

अथान्यं सम्प्रवक्ष्यामि देवं त्रैलोक्यविश्रुतम् ।

चन्द्रादित्यमितिख्यातं चन्द्रादित्यार्चितम्पुरा ॥ १ ॥

यस्तंसमर्चयेद्देवं सुरासुरनमस्कृतम् । गन्धैः पुष्पैस्तथाधूपैर्नैवेद्यैर्विविधैस्तथा ॥

चन्द्रादित्यादिसालोक्यं प्रयाति सार्वकामिकैः ।

विमानैस्सूर्यसङ्काशैर्यावच्चेन्दुदिवाकरौ ॥ ३ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चन्द्रादित्यमाहात्म्यंनामचतुस्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥

६

# पञ्चत्रिंशोऽध्यायः

## करभेश्वरमाहात्म्यवर्णनम्

सनत्कुमार उवाच

करभेशंततोगच्छेद्देवदेवं महेश्वरम् । यस्य दर्शनमात्रेण कुयोनौ नैव जायते ॥ १ ॥

व्यास उवाच

करभेशकथांदेव श्रोतुमिच्छामितत्त्वतः । कथंदेवस्समुत्पन्नः करभेशेतिसञ्ज्ञितः

सनत्कुमार उवाच

पुरादेवगणैस्सार्द्धं देवदेवो महेश्वरः । वनेऽस्मिन् क्रीडयामास परमाह्लादसंयुतः ॥

क्रीडन्वहुतिथेकाले शङ्करः करभोऽभवत् । नज्ञायतेसर्वदेवैः शङ्करः करभाकृतिः ॥ ४

अन्वेषयन्तितंदेवास्ततोविस्मयसंयुताः । नपश्यन्तियदातत्र यं देवंशूलपाणिनम् ॥

देवैःपृष्टस्ततोब्रह्मा क्वास्तिदेवोमहेश्वरः । ध्यातोऽपिब्रह्मणादृष्टो गुप्तयोगप्रभुर्हरः ॥६

देवैस्सार्द्धंततोब्रह्मा पप्रच्छगणनायकम् । नदृष्टश्शङ्करोऽस्माभिर्गतः कुत्रविनायकः

कथयस्व नमस्तुभ्यं दास्यामो लड्डुकान् विभो! ।

एवमुक्तस्तदा हृष्टः प्रोवाच गणनायकः ॥ ८ ॥

करभोऽयंमहादेवो दृश्यतां विबुधोत्तमाः । श्रुत्वाचैवंवचोदेवाः प्रहृष्टाः करभंययुः

ज्ञातोऽस्माभिर्महादेवो जल्पन्त इति ते स्वयम् ।

गत्वा चैव ततः सर्वे चतुर्दिक्षुस्थितास्स्वयम् ॥ १० ॥

विचिन्त्येतिकथंज्ञातः शङ्करोविस्मयंगतः । त्यक्त्वाथकारभंरूपं देवदेवोमहेश्वरः ॥

लिङ्गमुत्पादयामास देवंयत्करभेश्वरम् । तंदृष्ट्वाथसुरास्सर्वे साष्टाङ्गंप्रणतिंस्थिताः

ततः प्रभृति विख्यातश्शङ्करः करभेश्वरः ।

स्नात्वा चैव शुचिर्भूत्वा यस्तमर्चयते शिवम् ॥ १३ ॥

गन्धपुष्पैश्चनैवेद्यैः शृणुतेषांचयत्फलम् । सर्वमेधेषुयत्पुण्यं सर्वदानेषुयत्फलम् ॥

ततोऽधिकं स लभते नात्र कार्या विचारणा ॥ १५ ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे करभेश्वरमाहात्म्यंनामपञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

## षट्त्रिंशोऽध्यायः

### गणेशमाहात्म्यवर्णनम्

सनत्कुमार उवाच

लड्डुकैश्चततोदेवैर्विघ्ननाथस्समर्चितः । तदाप्रभृतिविख्यातो विघ्नेशोलड्डुकप्रियः
यस्समर्चयतेभक्त्या तस्यविघ्नंनजायते । तस्मैददातिसन्तुष्टस्सर्वकामान्विनायकः
नक्ताहारश्चतुर्थ्यांच स्नात्वाशिप्रांविशेषतः । रक्ताम्बरधरोभूत्वा रक्तपुष्पैर्विनायकम्
रक्तचन्दनतोयेन मन्त्रैस्स्नपनपूर्वकम् । चन्दनेनापिरक्तेन तंविलेप्य प्रपूजयेत् ॥ ४
धूपंदद्यात्तथादिव्यं सुगन्धलड्डुकप्रियम् । नैवेद्येलड्डुकादेयाआज्यखण्डपरिप्लुताः
नतस्यजायतेव्यास भयंविघ्नं कदाचन । लभतेचतथाभीष्टं मृतश्शिवपुरंव्रजेत् ॥ ६
अवतीर्णः पुनर्लोके जायतेवसुधाधिपः । मतिमान् पुत्रवान्शूरो नात्रकार्याविचारणा

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे गणेशमाहात्म्यंनामषट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

# सप्तत्रिंशोऽध्यायः

## सोमेश्वरादिवर्णनम्

### सनत्कुमार उवाच

कुसुमेशंसुरद्वारे सुरासुरनमस्कृतम् । श्रद्धयापूजयेद्यस्तु शिवलोके स मोदते ॥ १ ॥
जयेश्वरन्तुयः पश्येद्देवदेवंमहेश्वरम् । जयीस्यात्सर्वकार्येषु शिवलोकंसगच्छति ॥
शिवद्वारेशिवलिङ्गमर्चयेन्मानवोयदि । त्रिदिवंयातियानेन गाणपत्यञ्चविन्दति ॥
अथान्यं सम्प्रवक्ष्यामि मार्कण्डेश्वरमुत्तमम् ।
मार्कण्डेयो मुनिर्यत्र तप्तवान्सुमहत्तपः ॥ ४ ॥
दृष्ट्वा तंशङ्करं देवं वाजपेयफलंलभेत् । सर्वपापविशुद्धात्मा चिरायुर्जायतेनरः ॥
शृणु व्यास!महास्थानमस्यां पुर्यां समुत्तमम् ।
यत्र तिष्ठति सा देवी ब्रह्माणी हंसवाहिनी ॥ ६ ॥
भक्तानांपूरयेदाशांपुत्रवत्परिपालयेत् । यथा माता तथादेवी दृष्टाशान्तिपरैरपि ॥ ७
अर्चिताब्रह्मणासातु स्तुतादेवीसुरोत्तमैः । अर्चयेद्गन्धपुष्पैश्च नैवेद्यैस्सर्वसिद्धिदाम्
अपियाब्रह्मणःपूर्वमभूद्देवीसुसिद्धिदा । यस्स्नात्वाब्रह्मसरसिपश्येद्ब्रह्मेश्वरंशिवम्
भवबन्धविनिर्मुक्तो ब्रह्मलोकेसमोदते । अथान्यत्सम्प्रवक्ष्यामि यज्ञवापीमनुत्तमाम्
यत्रवैब्रह्मणापूर्वमिष्टोयज्ञस्सदक्षिणः । यज्ञार्थंयत्कृतंकुण्डं यज्ञवापीचसास्मृता॥
पशुश्च पातितो यस्मात्तस्मात्पशुपतिःस्मृतः ।
तस्यां स्नात्वा शुचिर्भूत्वा पश्येत्पशुपतिं तु यः ॥ १२ ॥
उद्धरेत्सपितॄन्व्यास! पशुयोनिगतानपि । सुवर्णमणिमुक्ताढ्यैर्विमानैस्सर्वकामगैः
याति रुद्रपुरं दिव्यंयत्रदेवोमहेश्वरः । रूपकुण्डे नरस्स्नात्वा सुरूपोजायतेतथा १४
स्वर्गे सदैव गन्धर्वैस्स्पृहणीयवपुर्भवेत् ।
कुण्डेस्नात्वाऽप्यनङ्गे यश्शुचिर्भूत्वा समाहितः ॥ १५ ॥

पश्येच्च देवदेवेशमनङ्गेनार्चितम्पुरा । कामंसलभतेऽभीष्टं मृतोयाति शिवालयम् ॥
आषाढेतुसिताष्टम्यां जागरंयस्तुकारयेत् । केदारेयत्फलंप्रोक्तं तत्समानमवाप्नुयात्
करीकुण्डे नरस्स्नात्वा विश्वरूपन्तुयोर्चयेत् ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ १८ ॥
अजागन्धेनरः स्नात्वा दृष्ट्वाब्रह्मेश्वरंशिवम् । ब्रह्महत्यासमंपापं तत्क्षणात्सव्यपोहति
चक्रतीर्थेनरस्स्नात्वा चक्रस्वामिनमर्चयेत् । जायतेसनरोव्यास! चक्रवर्तीसदाभुवि
सिद्धेश्वरञ्च यः पश्येत् स्नात्वा सुविधिपूर्वकम् ।
कामिकेन विमानेन रुद्रलोकं स गच्छति ॥ २१ ॥
सोमवत्यांनरस्स्नात्वासोमेश्वरमथार्चयेत् । सोमवन्निर्मलोभूत्वासोमलोकेसमोदते

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
सोमेश्वरादिवर्णनंनामसप्तत्रिंशत्तमोऽध्यायः ॥ ३७ ॥

---

## अष्टत्रिंशत्तमोऽध्यायः

### सोमवतीतीर्थमाहात्म्यवर्णनम्

व्यास उवाच

तीर्थंसोमवतीनाम लिङ्गंसोमेश्वरंतथा । अभूदेतत्कथंनाम श्रोतुमिच्छामितत्त्वतः ॥

सनत्कुमार उवाच

शृणुव्यासयथोत्पन्नं सोमतीर्थंसुशोभनम् । सोमेश्वरंतथालिङ्गमेतत्सत्यंवदामिते
यो देवो भगवान्सोमो लोकस्याप्यायनं परम् ।
आसीत्तस्य पुरा व्यास! पिता विप्रो महातपाः ॥ ३ ॥
अवन्त्याञ्च महाभागो योऽत्रिनामातपोनिधिः ।
वर्षाणां त्रीणि दिव्यानि सहस्राणि तपो महत् ॥ ४ ॥

ऊर्ध्ववाहुस्सवैतेपे ब्रह्मध्यानपरायणः । ऊर्ध्वंगतंततोव्यास ब्राह्मंतेजोमहात्मनः ॥
नेत्राभ्यांतस्यसुस्राव काशयंश्चदिशोदश । तेजस्तत्सहसादृष्ट्वा ततोदेशोद्भवंस्वतः ॥
दिशश्च तद्यदा व्यास! सर्वान्धर्तुमशक्नुवन् ।
सुस्राव च तदा दिग्भ्यस्तद्धितेजोऽतिदुस्सहम् ॥ ७ ॥
लोकांश्चभासयन्सर्वान् धरण्यांवैपपातह । सोमोजातस्ततस्तेनशीतांशुश्चजनप्रियः
सरित्सोमासमुत्पन्ना व्यासतेनैवतेजसा । प्रविष्टासानदींशिप्राममृतेनातिपूरिता ॥
ततस्सोमवती शिप्रा विख्याता ह्यतिपुण्यदा ।
सोमयुक्तां नदीं शिप्रां दृष्ट्वा पापं व्यपोहति ॥ १० ॥
ख्याताचत्रिषुलोकेषु पापिनांपुण्यदायिनी । ब्रह्महावासुरापोवास्तेयोवागुरुतल्पगः
चत्वारोऽप्यत्रपापेन मुच्यन्तेदर्शनाद्ध्रुवम् । अमासोमौयदायुक्तौसोमवत्यांतदामुने
स्नानंदानंचयोधीमाञ्जपहोमंसमाचरेत् । अक्षयंतस्यतत्सर्वं यावच्चन्द्रदिवाकरौ ॥
तिलोदकप्रदानेनपिण्डदानेनकालिज! । अकालेकालिकींतृप्तिं पितॄणाञ्चयथोदिता ॥
सर्वत्रदुर्लभाशिप्रा सोमस्सोमग्रहस्तथा । सोमेश्वरस्सोमवारस्सकाराःपञ्चदुर्लभाः
शिप्रासोमजलंव्यास कोटितीर्थफलप्रदम् । अमासोमसमायोगेपितृतीर्थसमंस्मृतम्
अमायांसोमवारश्चेद्व्यतीपातोयदाभवेत् । शतगुणंगयायास्तुसोमवत्यांप्रकीर्तितः
एवंसोमवतीतीर्थं जातमत्रमहामुने! । सोमंदृष्ट्वाथपतितं क्षितौब्रह्माजगद्गुरुः ॥
रथे तं स्थापयामास लोकानां हितकाम्यया ।
स तु वेदमयो व्यास! धर्मज्ञस्सत्यसङ्ग्रहः ॥ १६ ॥
युक्तोवाजिसहस्रेण ब्रह्मणाप्रेरितस्तदा । दृष्ट्वासोमंततोदेवा रथे तंब्रह्मणायुतम् ॥
तुष्टुवुस्सर्वभावेन हृष्टाः सर्वे समाहिताः ।
तस्य संस्तूयमानस्य तेजस्सोमस्य भास्वरम् ॥ २१ ॥
आप्यायमानं त्रीँल्लोकान् पपातधरणीतले । ब्रह्मातेनरथेनाथ सागरान्तांवसुन्धराम्
त्रिःसप्तकृत्वोतिशयाच्चकारसप्रदक्षिणम् ।तस्ययत्पतितंतेजोव्याससोमस्यशीतलम्
तदेवौषधयोदिव्याजाताभुविसुनिर्मलाः । याभिर्धार्योह्ययंलोकः प्रजाश्चैवचतुर्विधाः

तुष्टोऽथभगवान्सोमो जगतस्सर्वदोमुने! । दशवर्षसहस्राणि तेपेऽतिदुस्सहंतपः
ततस्तस्मैददौस्वाम्यंब्रह्मालोकपितामहः । बीजौषधीनांविप्राणांसोमोराजाबभूवह
सप्तविंशतिसोमाय दाक्षायण्योमहाव्रताः । पत्न्यःप्राचेतसोदक्षोददौनक्षत्रसञ्ज्ञकाः
सतत्प्राप्यमहद्राज्यं सोमोभार्यायुतस्तदा । समारेभेराजसूयं सहस्रशतदक्षिणम् ॥
होताचभगवानत्रिरध्वर्युर्भगवान्भृगुः । हिरण्यगर्भश्चोद्गाता ब्रह्माब्रह्मत्वमेयिवान् ॥

सदस्यो भगवान् विष्णुस्सनकादिमुखैर्वृतः ।
ददौ स दक्षिणां सोमस्त्रीँल्लोकान्सुसमाहितः ॥ ३० ॥
सिनीवालीकुहूश्चैव द्युतिः पुष्टिः प्रभावसुः ।
कीर्तिर्धृतिश्च लक्ष्मीस्तं देव्यो दिव्यास्सिषेवरे ॥ ३१ ॥

प्राप्यावभृथमव्यग्रस्सर्वदेवर्षिपूजितः । अतीवराजतेचन्द्रो दश प्रोद्भासयन्दिशः ॥

तस्य तत्प्राप्य दुष्प्राप्यमैश्वर्यमृषिसंस्कृतम् ।
विवभ्राम मतिर्व्यास! तदामृतमयस्य च ॥ ३३ ॥
बृहस्पतेस्तदा भार्यां तारानाम्नीं यशस्विनीम् ।
जहार तमसा साध्वीमवमान्याङ्गिरस्सुतम् ॥ ३४ ॥
याच्यमानस्तदा सोमो देवैर्देवर्षिभिस्तथा ।
नैव व्यसर्जयत्तारां तस्मा आङ्गिरसाय च ॥ ३५ ॥

बृहस्पतेस्ततः पक्षं शक्रोजग्राहकोपतः । सहिशिष्योमहातेजाः पितुः पूर्वं बृहस्पतेः
ततोयुद्धमभूत्तत्र सुघोरंशक्रसोमयोः । देवानां दानवानाञ्च व्यासत्रासङ्करंमहत्
सर्वेभीतास्ततोदेवा ब्रह्माणंशरणंगताः । अग्रतोब्रह्मणोयुद्धं कथितंसोमशक्रयोः
देवानांवचनं श्रुत्वा सार्द्धंदेवैः पितामहः । आगत्य युद्धसमयेऽवारयद्देवदानवान् ॥

वारितास्ते स्थितास्तत्र युद्धं त्यक्त्वा सुरासुराः ।
तारामादाय स तदा ददावाङ्गिरसे द्विजः ॥ ४० ॥

ताञ्चसप्रसवां दृष्ट्वा आहभार्यांबृहस्पतिः । अन्यदीयोनतेयोन्यां गर्भोधार्यःकथञ्चन
उत्ससर्जततस्तारां कुमारंदेवरूपिणम् । ऐषिकास्तंसमादाय ज्वलन्तमिवपावकम्

स तेजो जातमात्रोऽपि देवानामाक्षिपद्यशः ।
ततस्संशयमापन्ना ऊचुस्तारां दिवौकसः ॥ ४३ ॥
कस्यायं ब्रूहिसुभगे!सोमस्याथबृहस्पतेः । नाचचक्षेदेवतानां वेधाः पप्रच्छतांपुनः
यदत्रसत्यंतद्ब्रूहि तारे!कस्यसुतोह्ययम् । साप्राञ्जलिरुवाचेदं ब्रह्माणं वरदं विभुम्
सोमस्येति महासौम्यः कुमारो देवसन्निभः ।
सोमस्य तं सुतं ज्ञात्वा परिष्वज्य पितामहः ॥ ४६ ॥
बुधइत्यकरोन्नाम तस्यपुत्रस्यवैतदा । परदारापहाराच्च यत्पापं तनुदुस्सहम् ॥ ४७
तेनसोमोऽभवत्कुष्ठीक्षयरोगयुतस्तदा । ततोराज्येस्वकं पुत्रंस्थापयित्वायथाविधि
अवन्तीमाजगामाशु सोमोदेवदिदृक्षया । सोमाहे सोमवत्याञ्च अमायोगेजितेन्द्रियः
स्नात्वा सम्पूजयामास सोमस्सोमेश्वरंततः ।
तस्य भक्त्या च सन्तुष्टः प्राह सोमं महेश्वरः ॥ ५० ॥
मत्प्रसादाद्वपुः कान्तं तव सोम!भविष्यति ।
सोमेश्वरमितिख्यातं भुक्तिमुक्तिप्रदायकम् ॥ ५१ ॥
एवंतुव्यास!तत्तीर्थं लिङ्गंचैवातिदुर्लभम् । कथितंतथ्यभावेन मयातुष्टेनसाम्प्रतम्
श्रावणं प्राप्य यो मासं सोमनाथं जितेन्द्रियः ।
नित्यं पश्येन्नरोव्यास! तस्यपुण्यफलं श्रृणु ॥ ५३ ॥
सौराष्ट्रे सोमनाथस्य पूजायाः प्रत्यहं फलम् ।
लभते स नरो व्यास! नात्र कार्या विचारणा ॥ ५४ ॥
इति श्रीस्कान्दे महापुराण एकाशीति साहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
सोमवतीतीर्थमाहात्म्यंनामाऽष्टत्रिंशत्तमोऽध्यायः ॥ ३८ ॥

———

# एकोनचत्वारिंशोऽध्यायः

## नरकेश्वरनरकतीर्थमाहात्म्यवर्णनम्

सनत्कुमार उवाच

तीर्थस्यनरकस्यास्य माहात्म्यंशृणुसाम्प्रतम् । तीर्थेचनरकेस्नात्वादृष्ट्वादेवंमहेश्वरम्

न पश्येन्नरकं क्वाऽपि यद्यपि ब्रह्महा भवेत् ।

व्यास उवाच

कियन्तो नरकास्तात! कस्मिन्स्थाने प्रतिष्ठिताः ॥ २ ॥

पतन्तिकेनपापेन पापिनस्तेषुदुःखिताः । तत्कथंप्राणिनस्तत्रगच्छन्तिपापकारिणः

एतत्सर्वं समाख्याहि यदि तुष्टोऽसि मे प्रभो! ॥ ४ ॥

सनत्कुमार उवाच

शृणुष्वनरकान्व्यास! यावन्तोयत्रसंस्थिताः । नलभ्यन्तेयथातेतु सत्यमेतद्वदामिते

पातालनिलयास्सर्वे विख्याता दुःखदास्सदा ।

पुण्यप्लावेन ते सर्वे तिर्यग्यान्ति स्वकर्मभिः ॥ ६ ॥

रौरवशूकरोरौद्रस्तालोविनशकस्तथा । तप्तकुम्भस्तुतप्तायो महाज्वालस्तथैव च

कुम्भीपाकः क्रकचनस्तथा चैवातिदारुणः ।

कृमिभुक्तिश्च रक्ताख्यो लालाभक्षश्च गण्डकः ॥ ८ ॥

अधोमुखश्चास्थिभङ्गो यन्त्रपीडनकस्तथा । सन्दंशोरुधिराङ्गश्च असिपत्रकुभोजनौ

इत्येवमाद्यस्सर्वेनरकाभृशदारुणाः । यमस्यविषयेसन्ति श्रुता हि भयदायिनः १०

पतन्तिपुरुषास्तेषु पापकर्मरतोश्चये । पतिताश्चप्रपच्यन्ते नराः कर्मानुरूपतः ॥ ११

यातनाभिर्विचित्राभी रौद्रकर्मक्षयोभृशम् । सुगाढंहस्तयोर्बद्ध्वा तप्तशृङ्खलयानराः

महावृक्षस्यशृङ्गेषु लम्ब्यन्ते यमकिङ्करैः ।

शोचन्तः स्वानि कर्माणि तूष्णीं तिष्ठन्ति निश्चलाः ॥ १३ ॥

अग्निवर्णैः शङ्कुभिश्च लोहदण्डैस्सकण्टकैः ।
हन्यन्ते किङ्करैर्घोरैस्समन्तात्पाकारिणः ॥ १४ ॥

ततःक्षणात्प्रतप्यन्तेवह्निना चविशेषतः । समन्ततः प्रक्षिप्यन्ते कृत्ताश्चजर्जरीकृताः
कूटसाक्ष्यंतथासम्यक् पक्षपातेनयोवदेत् । यश्चान्यदनृतंब्रूयात्सनरोयातिरौरवम् ॥
सुरापोब्रह्महा हर्ता सुवर्णस्यचशूकरम् । प्रयान्तिनरकश्चैव तैस्संसर्गमुपैति यः १७
भ्रूणहागुरुहन्ताच गोघ्नश्चमुनिसत्तम! । यान्त्येते नरकं रौद्रं ये च विश्वासघातकाः
स्वर्णस्तेयीचवैताले तथैवगुरुतल्पगः । करोतिकर्मवैनिन्द्यं यश्चगाः प्रतिषेधयेत्
नरोविनशकेयाति नरकेभृशदारुणे । स्वामिद्रोहीच योरौद्रस्तप्तकुम्भेसपात्यते ॥
तप्तलोहेषुपच्येत यस्तुभक्तंपरित्यजेत् । स्नुषांसुताश्चयोगच्छेन्महाज्वालेसपात्यते
कुम्भीपाकेप्रयात्येष पादैरूर्ध्वैरधोमुखः । देवदूषयितारश्च वेदविक्रयकास्तथा ॥ २२
परस्त्रीगामिनोयेच यान्तिक्रकचनेतुते । चौरोऽतिदारुणेयाति मर्यादाभेदकस्तथा
देवद्विजपितृद्वेष्टा रत्नदूषयिताच यः । सयातिकृमिभक्षेवै रक्ताख्येच पतन्तिवै ॥ २४
पितृदेवगुरूणाञ्च सपर्यां न करोति यः । लालाभक्षेसयात्युग्रे कूटकर्मकरोतियः
अन्त्यजेभ्योग्रहीताच नरकेयात्यधोमुखे। अस्थिभङ्गेप्रयात्येव एकोमिष्टान्नभुङ्नरः
कृतघ्नः पिशुनः क्रूरः कूटमानीविडम्बकः । यन्त्रपीडनके याति परगुह्यप्रकाशकः ॥
लाक्षामांसरसानाञ्च तिलानाञ्चरसस्यच । विक्रयीब्राह्मणोयाति सन्दंशेनात्रसंशयः
मधुहाग्रामहन्ताच यातिवैतरणींनदीम् । वर्णाश्रमविरुद्धंच कर्मकुर्वन्तियेनराः ॥ २६
कर्मणामनसावाचा महानद्यांप्रयान्तिते । गुरूणामवमन्ताच शास्त्रदूषयिताचयः ॥
असिपत्रेप्रयात्येव तथापर्वविलङ्घकः । धनयौवनमत्ताये मर्यादाभेदिनो नराः ॥ ३१
ते यान्ति नरके घोरे असिपत्रे तिदारुणे । असंस्कृतश्चयो विप्रो वृषलींसेवतेऽतुवै
वृषलीमिथुनाच्चैव पततस्तावुभावपि । उच्छिष्टायेस्पृशन्तीह गामग्निंजननींद्विजान्
तेपच्यन्तेकुभोज्येहि मित्रद्वेषीविशेषतः । पङ्क्तिभेदंदिवास्वप्नं येनराब्रह्मचारिणः
पुत्रैरध्यापितायेवै तेपतन्तिकुभोजने । एतेचान्येच नरकाः शतशोऽथसहस्रशः ।

तत्र दुष्कृतकर्माणः पच्यन्ते यातनागताः ।

नृणां स्वर्गाश्च यावन्तस्तावन्तो निरयास्तथा ॥ ३६ ॥

पापं कृत्वा तु बहुलं प्रायश्चित्तपराङ्मुखाः ।

कृते पापे च वै तापो यस्य पुंसः प्रजायते ॥ ३७ ॥

प्रायश्चित्तन्तुतस्यैकं शिवसंस्मरणंपरम् । तस्मादहर्निशंशम्भुं संस्मरन्पुरुषोत्तमम्

नयातिनरकंशुद्धस्सङ्क्षीणाखिलपातकः । कार्त्तिकस्यासितेपक्षे याभवेच्चचतुर्दशी

तस्यां दीपः प्रदातव्यो देवदेवस्य चाग्रतः ॥ ४० ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे नरकेश्वरनरकतीर्थमाहात्म्यं नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

# चत्वारिंशोऽध्यायः

## दीपदानमाहात्म्येशिवशिवासम्वादवर्णनम्

व्यास उवाच

दीपेऽस्मिन्यत्फलंदत्तं विधिनायेनदीयते । तत्सर्वंब्रूहिमेतात!दीपोत्पत्तिश्चशोभनम्

सनत्कुमार उवाच

पुराकृतयुगेशम्भुः पार्वतींशङ्करोयदा । अभिरयाचितुंयातस्तयापिसोऽभियाचितः

पार्वत्युवाच

शरीरेकृष्णताशम्भो ममास्तेरूपहारिणी । तस्माद्याचेभृशंशम्भोप्रसीददिव्यलोचन

भवेनवर्णितासावैअतीवशोभनामम । लोचनेपक्ष्मपङ्क्त्येव शोभतेऽतितरांसदा

सिताब्जसंस्थितो भृङ्गो यथा शोभयते च तम् ।

तया तथा याचितोऽसौ धूर्ज्जटिर्वृषभासनः ॥ ५ ॥

विरूपरूपकर्ता त्वं नश्रृणोषिवचोयदा । तदात्वहंसुवैराग्याच्चरेयं दुष्करंतपः ॥

भवस्तथापि चोक्तस्तु तस्या वै पाणिमग्रहीत् ।

कदाचिच्छङ्करो देवो रतिं याचितवान् प्रियाम् ॥ ७ ॥

रतिंदत्तवतीसातु जहासनामकीर्तयन् । सुदुःखिताभवत्सातु तंविहायपराङ्मुखी
उवाचरोषसंयुक्ता स्मरन्तीदेवभाषितम् । तपोवनंव्रजाम्यद्य सुगौरत्वोपलब्धये ॥
सुवर्णरूपरूपिणी यदा पुनर्भवामि चेत्तदातवानुरागिणी भवामि चैव नान्यथा ॥१०
इतीदमेव जल्पती जगाम विन्ध्यपर्वतं हरश्शुशोच तां ततो गताक साविहाय माम्
स्मरत्तदेव चेष्टितं यदेव पूर्वभाषितं तदैव मे वृथामतिर्मुदा यदा नमानिता ॥
यतोमया हिमाद्रिजा समस्तलोकसुन्दरी पुरैवनाभिनन्दितागताविहायमामिति ॥
इतीदमेव सोऽवदद्गतस्त्वदर्शनं ततः प्रियावियोगमीदृशं गुरुंनसोढुमुत्सहे ॥ १४ ॥
ततोजगत्तदाभवन्महाभयेनसंयुतम् सुरासुरामहर्षयः परंविषादमभ्ययुः ॥ १५ ॥
विहायमन्दिराणितेपरंविषादमागताः । हरेस्तुतिंपराञ्चतेप्रचक्रुरद्भुतोपमाम् ॥ १६ ॥

सनत्कुमार उवाच

नदृश्यतेयदारुद्रो देवोबालेन्दुशेखरः । नष्टालोकं जगत्सर्वं कान्तारमभवत्तदा ॥ १७
त्रीणिनेत्राणि रुद्रस्य यतस्सूर्येन्दुवह्नयः । गतेरुद्रे न ते भान्ति जगत्यस्मिंश्चराचरे

ततस्तमसि दुस्तारे सम्भूते लोमहर्षणे ।
अन्योन्यं हि न पश्यन्ति सुरा दैत्यास्तमोवृताः ॥ १६ ॥

एषाबुद्धिस्ततस्तेषामुत्पन्नाकार्यसिद्धये । ययाबुद्ध्याजगन्नाथो ज्ञायतेपार्वतीपतिः
नष्टालोकोविनातेनशशिसूर्याग्निचक्षुषा । परस्परंब्रुवन्तिस्मदुःखितास्तेविसञ्ज्ञया
हेदेव!हेमुने!सिद्ध हेऋषे हेनिशाचर! । हेदैत्यहेदनुश्रेष्ठ! हेमनुष्यनिदेशक! ॥ २२

गतोऽसि कां दिशं तात ! को वा लब्धस्त्वया विभो! ।
क्व च विश्रामभूमिस्ते किंस्विदालम्बनंतव ॥ २३ ॥

पाथेयमस्ति किञ्चित्तेदैशिकोवाथकुत्रचित् । प्रकाशं वाहनं छत्रमशनं शयनं गृहम्

क्व च वासः कथं ते चाप्यथवा चित्तनिर्वृतिः ।
बन्धुः पुत्रोऽस्ति वा तात वृक्षच्छाया सुशीतला ॥ २५ ॥

एवंप्रकारंकरुणं समाभाष्यपरस्परम् । भूयश्चिन्तापराःसर्वे देवाश्चेन्द्रपुरोगमाः

भूमेर्विवरमाश्रित्य प्राणिनोयेवसन्त्यपि । रसातलेचदैतेयास्सं स्थिताः पन्नगाश्चये
नतेषांविद्यतेसूर्योनेन्दुर्नान्येमहाग्रहाः । नाग्निर्देवमुखंविद्युन्नैव तारककोटयः ॥ २८

केनालोकेन पश्यन्ति समानि विषमाणि च ।
नरकस्था नरा लोकं केन पश्यन्त्यलोकनात् ॥ २९ ॥

विचरंस्तु सनःकोवा मनोरथशतप्रदः । तृष्णाम्भः क्षुधितान्नञ्च श्रान्तानामथवाहनम्
श्रमे शय्याजलेनौश्च रोगेसत्परिचारकः । श्रेष्ठौषधिरसद्रोगे सम्पदोव्याधिसङ्कटे ॥
सुहृद्विदेशेछायोष्णेनिर्धूमशिशिरेशिखी । महाभयेपरित्राणं प्रकाशश्चमहानिशि ॥
सर्वदाचैवसर्वेषां मनोरथशतप्रदः । एकएवभवेद्योनस्तन्नजानीमहे वयम् ॥ ३३ ॥
ब्रुवन्तस्त इतिव्यास!शुश्रुवुर्मधुरांगिरम् । श्रुतपूर्वांनभोमध्याद्विष्णोरतुलकर्मणः ॥

न जानन्ति स्थितः कुत्र भाषते केशवो विभुः ।
शृणुध्वमिति मे वाक्यं सर्वे चैव समाहिताः ॥ ३५ ॥
दानमेकं सदा सम्यक् चिन्तामणिसमं स्मृतम् ।
सर्वेषामेव दानानां दीपदानं प्रशस्यते ॥ ३६ ॥

तच्चदेयमतःसर्वे शृणुध्वंतत्त्वतोभृशम् । मयारसातले पूर्वं नागानामनुकम्पया ॥ ३७
उत्पादितोदीपवरो येनध्वस्तमिदंतमः । एवंभूतस्तुवायूनामप्रधर्ष्योमहाप्रभः ॥

निष्कम्पो निर्मलो हृद्यःसुन्दरो भास्करप्रभः ।
नात्युष्णो नातिशीतश्च दिव्ययोगसमुद्भवः ॥ ३९ ॥

तेदीपप्रकाशेनगोकर्णानिर्वृतिंययुः । नागा शेषादयः सर्वे नोद्यमानाश्चसङ्घशः ४०
तदादीपसहस्राणिददुस्तेवैशिवाग्रतः । पर्वतेषुसमुद्रेषु वनेषूपवनेषुच ॥ ४१ ॥
नदीतीरेषु सर्वत्र दीपान्प्रज्वाल्यरेमिरे । भुञ्जानाः फलमूलानि दिव्यानीक्षुरसंतथा
परमान्नञ्च मांसानि मकरन्दं घृतोदनम् । चन्द्रशालिभवंभक्तं ताम्बूलंसप्तधागतम्
मद्यमष्टप्रकारंतु भार्यापीतावशेषकम् । शयनेषु महार्हेषु हृद्यासु वनराजिषु ॥ ४४ ॥
वृक्षमूलेषुसर्वेषु वनच्छायोपशोभिषु । रमन्तेस्मचतेसर्वेउद्वेष्टन्तःपरस्परम् ॥ ४५ ॥

कामतन्त्रोपदिष्टैस्तु चेष्टितैश्चुम्बनादिभिः ।

सूर्यतापभयान्मुक्ताश्चन्द्ररश्मिभयाच्च ते ॥ ४६ ॥
विमुक्ताश्च भयाद् घोरात् पिपीलिकोद्भवात्तथा ।
सूर्यतापेन दाहःस्याच्छीतं चन्द्रमरीचिभिः ॥ ४७ ॥
मयूरनकुलाद्यैश्च पिपीलीसरणाद्भयम् । सौवर्णान्दीपकान्कृत्वाद्विजेभ्यस्तेददुःपुनः
तेन पातालमाश्रित्य कृत्वा भोगवतीम्पुरीम् ।
वसन्ति सुखिनस्तत्र स्वर्गादष्टगुणान्सदा ॥ ४९ ॥
एवमन्धतमोदेवाः पातालाद्दीपतोगतम् । एतद्गुह्यंमयाख्यातं भवतांचानुकम्पया ॥
दीपदानमतो यूयं कुरुध्वं सुसमाहिताः ।
दीपाग्निना विना नैव तमो दारु प्रदह्यते ॥ ५१ ॥
नारायणपरादेवा निशम्याथ समाहिताः । पप्रच्छुस्तेपुनः सर्वे हृष्टादामोदरम्विभुम्
ब्रूहि नोग्निं जगन्नाथ! सदीपोयेन जायते । घोरेतमसिवैमग्ना नाग्निंजानीमहेवयम्
देवानांमानसोवह्निरथकृष्णो नकीर्तितः । तेनदीपं च प्रज्वाल्य देवाःशिवपरायणाः
ददुस्ते शिवमुद्दिश्य सर्वाभीष्टफलप्रदम् ।
दत्ते दीपे ततो देवैर्नष्टो हृष्टो महेश्वरः ॥ ५५ ॥
तिमिरंतद्गतश्चापि जगद्येनजडीकृतम् । ततोदेवाः सुखम्प्रापुः स्वर्गेसेन्द्रपुरोगमाः
दीपदानफलं ज्ञात्वा दैतेयाश्चापि विस्मिताः ।
राज्यं भोगान्वितम्प्राप्य सार्द्धं स्त्रीभिश्च रेमिरे ॥ ५७ ॥
तथैवतत्फलंज्ञात्वा व्यास!यक्षाश्चविस्मिताः । पूजयित्वामहादेवंपुष्पैश्चनिर्मलेर्जलैः
ददुर्दीपसहस्राणि सर्वेशिवपरायणाः । स्वस्थानेचाभवन्सर्वे दीपदानाच्चशोभनात्
स्वेच्छया भुञ्जते भोगान् बन्धुभृत्यादिसंयुताः ।
निराहारास्ततो व्यास! पिशाचा वै निराश्रयाः ॥ ६० ॥
दीपदानफलंज्ञात्वा सर्वे तेपरिविस्मिताः । चाण्डालादग्निमानीय ददुर्दीपंशिवेरताः
दीपदानफलात्तेवै पुत्रदारसमन्विताः । लिह्यमानंगतरसं पूतिपर्युषितं तथा ॥ ६२ ॥
उच्छिष्टं सूतिकास्पृष्टममेध्यञ्चातिलङ्घितम् ।

भुञ्जानास्ते सदाहृष्टा रमन्ते दुष्टभूमिषु ॥ ६३ ॥

विद्याधरास्तथामर्त्याः सिद्धाश्चशिवमानसाः। दीपदानफलंज्ञात्वाददुर्दीपंशिवाग्रतः
दीपदानात्ततःसर्वे सर्वभोगसमन्विताः । स्थानेषुमुदिताःस्वेषु रमन्ते सुखिनः सदा
तिमिरंतद्गतञ्चैव व्यास!लोकेषुदीपतः । ततोघोरंस्थितंसम्यक् प्रेतलोकेषुसर्वदा
प्रेतलोकंतदा दृष्ट्वा घोरेणतमसावृतम् । दामोदरंजगन्नाथमूचुः सर्वे सुरोत्तमाः॥
घोरञ्चैवतमोहत्वाप्रसन्नास्तेसदाविभो । गन्धर्वाश्चतथायक्षाः सिद्धाविद्याधरोरगाः
वयञ्चैवतथामर्त्याःसर्वेभोगैश्चसंयुताः । स्थानेषुच सदास्वेषु रमन्ते सुखिनोभृशम्
प्रेतलोके नरायेवै घोरेणतमसावृता । वसन्ति च जगन्नाथ ! वर्तन्तेऽत्यातिदुःखिताः
नतैःकृतंशुभंकर्म कृष्णालंपापमोहितैः । नतेषां विद्यतेकिञ्चिद्यत्प्रकाशंकरोति च ॥
घोरेतमसितेमग्नास्तत्रनार्केन्दुवह्नयः । नसहायोनजायेयं नालम्बोनच दैशिकः॥

न वाहनं न शय्या च केवलं तु महत्तमः ।
तत्राष्टाऽविंशतिः ख्याता घोरा नरकभूमयः ॥ ७३ ॥
तमोमयाश्च ता सर्वाः पापिनां भयदाः सदा ।
सुखं तत्र कथं कृष्ण! लभन्ते दुःखिता नराः ॥ ७४ ॥
दारिद्र्य दुःखरोगैश्च मायामोहैश्च सर्वदा ॥ ७५ ॥

सनत्कुमार उवाच

इतिश्रुत्वातु देवानां प्रार्थनांगरुडध्वजः । उवाचवचनंहृद्यं मनोरथफलप्रदम्॥
शृणुध्वं त्रिदशास्सर्वे यत्प्रवक्ष्यामिवोवचः । अवन्त्यांवर्ततेतीर्थं सद्यःपापहरंपरम्
अनर्काख्यंमहापुण्यंसर्वतीर्थोत्तमोत्तमम् । कार्तिकस्यासितेपक्षेचतुर्दश्यांसमाहितः

तत्र स्नात्वा नरो यस्तु यमध्यानपरायणः ।
संगृह्य वै तिलान्कृष्णान् पितृभक्तो जितेन्द्रियः ॥ ७६ ॥

दक्षिणाभिमुखोभूत्वा मध्याह्नेसुरसत्तमाः !।अपसव्यंतथाभूत्वा मन्त्रैःसन्तर्पयेद्यमम्
यमाय धर्मराजाय मृत्यवेचान्तकायच। वैवस्वताय कालाय दक्षाय मनवेतथा॥
कृष्णाय कृष्णगुप्ताय प्रेतलोकपरायच। हरयेरविपुत्राय कालिन्दीसोदराय च॥

तथा वै श्राद्धदेवाय पितॄणां पतये तथा ।
मन्त्रैरेभिर्नमःप्रान्तैरोङ्काराद्यैस्सुशोभनैः ॥ ८३ ॥
जलाञ्जलिंसदर्भाम्वै दद्यात्तुतिलसंयुताम् । सन्तर्पयेद्यमंदेवं तिलपात्रं समाहितः ॥
प्राज्ञोविप्रायवैदद्याद्वित्तशाठ्यविवर्जितः । अनेनविधिनायस्तु तर्पयेच्चयमं विभुम्
पितरस्तस्यमुच्यन्ते निरयेयेगताअपि । रात्रिंतत्राथसम्प्राप्य मानवः कीर्तिसंयुतः
नमः पितृभ्यः प्रेतेभ्यो नमोधर्मायविष्णवे । नमस्सूर्यायरुद्राय कान्तारपतयेनमः
एभिर्मन्त्रैर्यमंदीपं योदद्याद्घृतपूरितम् । कार्त्तिकन्तु समग्रन्तु वर्द्धन्तेतस्यसम्पदः
सम्पूर्णे कार्त्तिके चैवदीपोद्यापनमारभेत् ॥ ८९ ॥
दिवाकराहेऽस्तमिते च सूर्ये दीपस्य वृत्तिं पुरुषप्रमाणम् ।
यूपाकृतिं यज्ञियदारुणा च करोति धीमान्यमभक्तिचित्तः ॥ ९० ॥
निक्षिप्य भूमावथहस्तमात्रं मूर्ध्नि द्विहस्ताष्टदलान्विताञ्च ।
धार्याश्चतस्त्रश्शुभपट्टिकाश्च छिद्रे प्रयुक्ताश्चतुरङ्गुलेन ॥ ९१ ॥
तत्कर्णिकायान्तु महाप्रकाशो देयो हि दीपः परया च भक्त्या ।
दिगुन्मुखा दीपवरास्तथाष्टौ दलेषु तस्याघृतपूर्यमाणाः ॥ ९२ ॥
अनङ्गवल्ल्याङ्कितवस्त्रखण्डं नवं सुरक्तं ह्यथवा सुशुक्लम् ।
वर्त्यैं प्रदेयञ्च ततो हि दद्यात्स्निग्धे त्वखण्डे सुसमे प्रशस्ते ॥ ९३ ॥
तच्छालिपिष्टो परिसन्निधाय यथा न निर्याति न कम्पते च ।
कृत्स्नात्प्रकार्यस्त्रिगुणप्रमाणो मध्यस्थितःस्यादथ दीपराजः ॥ ९४ ॥
दलेषु शोभार्थमतीव कुर्यान् मनोरथप्रत्युपलब्धये च ।
घण्टाष्टकं लम्बितपुष्पदामसवस्त्रशोभान्वितमत्रकार्यम् ॥ ९५ ॥
सँल्लिप्य भूमिं त्वथ गोमयेन पुनः सुगन्धेन जलेन लिप्त्वा ।
कुर्याद्विचित्रं त्वथ मण्डलञ्च दलाष्टकम्वै कमलञ्च रम्यम् ॥ ९६ ॥
ततो जलं शीतलमानयित्वा आपूर्य चाष्टौकलशांस्तु रम्यान् ।
निधाय मूर्ध्निक्रमशो हि धीमान् फलानिमूलानितथेक्षुकाणि ॥ ९७ ॥

मध्वाज्ययुक्तादधिदुग्धपूपा नैर्ऋत्यकोणादथ दक्षिणान्तम् ।
धर्माय दद्यादथ शङ्कराय दामोदरायाप्यथ वेधसे च ॥ ९८ ॥
प्रजापतिभ्यःक्रमशो हि भक्त्या प्रेतेभ्यइन्द्राय तथा पितृभ्यः ।
हेमादिपात्रं तिलपूर्णमेव दद्याद् द्विजानाञ्च सदक्षिणञ्च ॥ ९९ ॥
गावो हिरण्यं रजतञ्च वस्त्रं फलादिमूलानि यवाश्चधान्यम् ।
गृहं रथं कुञ्जरमश्वमेव मनोज्ञमन्यं हृदये हि यच्च ॥ १०० ॥
विद्याधिकेभ्यो द्विजसत्तमेभ्यः पौराणिकेभ्यश्च तथा द्विजेभ्यः ।
एकैकसम्प्रीणनमत्र कुर्याद्दीपैर्दलस्थैश्च यमादिकानाम् ॥ १०१ ॥
धर्माय देयस्त्वथ मध्यदीप आज्ञाञ्च लब्ध्वा स्वगुरोः सकाशात् ।
नृत्येन गीतेन सुशोभनेन युक्तं सुवाद्येन च कारयेच्च ॥ १०२ ॥
एतत्समग्रं विधिवच्चकुर्यात्स्वशक्तिमादौ स्वधनं समीक्ष्य ।
आहूय विप्राञ्छुभभावयुक्तान् वदेच्चधीमान्परया च भक्त्या ॥
दीपान् समग्रानपि वर्जयित्वा सर्वं नयेयुः स्थितमत्र विप्राः ॥ १०३ ॥
प्रदक्षिणीकृत्य विसृज्य विप्रांस्ततो भवेद्वै स च नक्तभोजी ।
एवं कृते नागलोकाद् विशिष्टं सुखम्भवेत्प्रेतलोके स्थितानाम् ॥ १०४ ॥
एवमेव नरो व्यास! दीपदानं करोति यः ।
तस्यैव यत्फलम्प्रोक्तं तदिहैकमनाः शृणु ॥ १०५ ॥
विमानैःकामिकैर्दिव्यैरप्सरोगणसेवितैः । उह्यमानोदिवं यातियावच्चन्द्रदिवाकरौ

इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे
दीपदानमाहात्म्यं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

# एकचत्वारिंशोऽध्यायः

## रामेश्वरतीर्थमाहात्म्यवर्णनम्

सनत्कुमार उवाच

अथान्यं सम्प्रवक्ष्यामि केदारेश्वरमुत्तमम् । प्रवरं सर्वतीर्थानां सर्वलोकेषु विश्रुतम्
तत्रस्नात्वाशुचिर्भूत्वा यःपश्यतिमहेश्वरम् । केदारेयत्फलं प्रोक्तं तदत्रापिलभेन्नरः
सर्वपापविनिर्मुक्तः स्वकीयकुलसंयुतः । विमानेनार्कवर्णन शिवलोकेसमोदते ॥ ३
जटाश्रृङ्गेनरः स्नात्वा शुचिर्भूत्वाजितेन्द्रियः । दृष्ट्वा जटेश्वरं देवं ततःपापाद्विमुच्यते
महास्नपनमादौच कृत्वागच्छेच्छिवम्प्रति । मातृकंपैतृकंचैव कुलानांतारयेच्छतम्
इन्द्रतीर्थेनरः स्नात्वा दृष्ट्वाचेन्द्रेश्वरं शिवम् । विमुक्तः सर्वपापेभ्यः शक्रलोकेमहीयते
कुण्डेश्वरं तु यः पश्येच्छिवध्यानपरायणः। लभतेसनरोव्यास! शिवदीक्षाफलंशुभम्
गोपतीर्थेनरः स्नात्वा दृष्ट्वागोपेश्वरंशिवम् । शिवलोकं सवैयाति ह्यमृतादमरोयथा
स्नात्वातुचिपिटातीर्थे शिवंदेवंप्रणम्यच । तिर्यग्योनिंनरो नैव प्रयातिमुनिपुङ्गव! ॥
विजयेचनरः स्नात्वाआनन्देश्वरपूजनात् । विमुक्तःसर्वपापेभ्यःस्वर्लोकेविजयीभवेत्

अथान्यं सम्प्रवक्ष्यामि कुशस्थल्यां विनिर्मितम् ।
देवं रामेश्वरं व्यास! भुक्तिमुक्तिप्रदायकम् ॥ ११ ॥

चित्रकूटात्पुरारामो मैथिल्यालक्ष्मणेनच । अत्ररामं समागत्य पप्रच्छमुनिसत्तमम् ॥

रामोवाच

कानितीर्थानिपुण्यानि किंवाक्षेत्रंमहामुने! । यत्रगत्वानचाप्नोतिवियोगःसहबान्धवैः
अनेनवनवासेन मरणेनपितुः प्रभो । भरतस्यवियोगेन प्रतप्येऽहं त्रिभिर्मुने! ॥ १४ ॥
तद्वाक्यं राघवेणोक्तं श्रुत्वाविप्रर्षभस्तदा । ध्यात्वातुसुचिरं कालमिदंवचनमब्रवीत्
साधुपृष्टंत्वयावीर रघूणां वंशवर्धन । ममपित्राकृतं क्षेत्रं प्रयाच्यशिवमादरात् ॥

अवन्तीविषये राम पुरा तस्मिन् कुशस्थली ।

उज्जयिनीति वै नाम्ना ख्यातिं लोके गता विभो! ॥ १७ ॥
तस्यांगत्वादशरथं पिण्डदानेनतर्पय । सुरासुरगुरुस्तत्र महाकालोव्यवस्थितः ॥
देवःसदाशिवोराजन् वाञ्छितार्थफलप्रदः । दृष्टेतस्मिञ्जगन्नाथे वियोगोनैवजायते
तत्र गच्छन्तियेविप्राः राजानोवैमहाबलाः । लभन्तेतेपरं स्थानं यत्रदेवोमहेश्वरः ॥
तीर्थानामपि तत्तीर्थं भोविष्णोऽवन्तिमण्डले ।
आजगाम ततोऽवन्तीं सा शिप्रा यत्र पुण्यदा ॥ २१ ॥
तस्यांस्नात्वाततोरामस्तर्पयामासपूर्वजान् । महाकालं यदाद्रष्टुं प्रतस्थेरघुनन्दनः
वाण्या ततोऽशरीरिण्या देवदेवेन भाषितम् ।
भोभोराघव! भद्रन्ते स्वनाम्ना स्थापयस्व माम् ॥ २३ ॥
अत्रस्थानं मयादत्तं माविचारय राघव! । ततोहृष्टमनारामो लक्ष्मणंवाक्यमब्रवीत्
अनुगृहीतः सौमित्रे देवदेवेनशम्भुना । तस्मात्स्थापयतीर्थेऽस्मिल्लिङ्गंरामेश्वरंशुभम्
वाक्यं तल्लक्ष्मणः श्रुत्वा स्थापयामास शङ्करम् ।
दृष्ट्वा देवं पुरो रामो लक्ष्मणं वाक्यमब्रवीत् ॥ २६ ॥
एहिलक्ष्मणशीघ्रन्त्वं शिप्रायाजलमानय । करिष्यामियतोभ्रातर्देवस्यस्नपनं शुभम्
लक्ष्मणस्त्वब्रवीद्वाक्यं सीतयाकिंकरिष्यसि । रामनाऽहंसर्वकालंदासभावंकरोमिते
इयंचपुष्टासुदृढा पावराचममाप्यतः । वद राघवसत्येन अनया किंकरिष्यसि ॥ २६
श्रुत्वापूर्वंहितद्वाक्यं लक्ष्मणेनप्रभाषितम् । विमनाराघवस्तस्थौ सीताचापिवरानना
यदुक्तंलक्ष्मणेनाथ तच्चसीताचकारह । स्नात्वाभुक्त्वाचतौवीरौ महाकालमुपागतौ
नीत्वाविभावरींतत्र गमनायमनोदधे । उत्तिष्ठवत्ससौमित्रे व्रजामोदक्षिणां दिशम्
सौमित्रिरब्रवीद्वाक्यं नाऽहं गन्ताकथञ्चन । व्रजत्वमनयासार्द्धं भार्ययाकमलेक्षण
नाहमग्रेवनं यामि नवायोध्यांकथञ्चन । एवं ब्रुवाणंसौमित्रिमुवाचरघुनन्दनः ॥
कथंपूर्वमयोध्यायाः निर्गतोसिमयासह । वने वसाम्यहंराम नववर्षाणिपञ्चच ॥ ३५
प्रसादः क्रियतांमह्यं नयमामपिराघव । इदानींत्वमर्द्धपथे कथंस्थातासिशत्रुहन् ॥
लक्ष्मणस्त्वब्रवीद्वाक्यं नाऽहं गन्ता वनं पुनः ।

लक्ष्मणं विकृतं ज्ञात्वा रामो वचनमब्रवीत् ॥ ३७ ॥

मामनुव्रज सौमित्रे! एको यास्यामि काननम् ।

द्वितीया च त्वियं सीता उक्तो रामेण लक्ष्मणः ॥ ३८ ॥

धनुःसंगृह्यविमना उत्तस्थौलक्ष्मणस्तदा । प्राप्तौप्राकारमर्यादां क्षेत्रसीमां परन्तपौ

त्वंनिवर्तस्वसौमित्रे समर्पयस्वमेधनुः । रामवाक्यमुपश्रुत्य सीतांचैलक्ष्मणोऽब्रवीत्

किमर्थं हि परित्यक्तः कोऽपराधः कृतो मया ।

रामेण च परित्यक्तः प्राणांस्त्यक्ष्यास्यसंशयम् ॥ ४१ ॥

रामंततोऽब्रवीत्सीता किमर्थंलक्ष्मणस्त्वया । देवसन्त्यज्यतेवीरःसुमित्रानन्दवर्धनः

राघवस्त्वब्रवीत्सीतां नाऽहं त्यक्ष्यामि लक्ष्मणम् ।

न कदाचिदपि स्वप्ने लक्ष्मणस्येदृगप्रियम् ॥ ४३ ॥

श्रुतपूर्वन्तु सुश्रोणि! क्षेत्रस्यास्य विचेष्टितम् ।

अस्मिन् क्षेत्रे न सौभ्रात्रं सर्वो हि स्वार्थतत्परः ॥ ४४ ॥

परस्परं न मन्यन्ते स्वार्थनिष्ठैकहेतवः । न शृण्वन्तिपितुः पुत्राः पुत्राणाञ्चतथापिता

नच शिष्योगुरोर्वाक्यं गुरुर्वा शिष्यकर्म च ।

अर्थानुबन्धिनी प्रीतिर्न कश्चित्कस्यचित्प्रियः ॥ ४६ ॥

एवमुक्त्वाययौरामो लक्ष्मणोजानकीतथा । लिङ्गंतत्रप्रतिष्ठाप्य।स्वनाम्नारघुनन्दनः

रामतीर्थे नरः स्नात्वा दृष्ट्वा रामेश्वरं शिवम् ।

विमुक्तः सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ४८ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे,

रामेश्वरतीर्थमाहात्म्यंनामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

# द्विचत्वारिंशोऽध्यायः

## सौभाग्यतीर्थमाहात्म्यवर्णनम्

सनत्कुमार उवाच

तीर्थे सौभाग्यके स्नात्वा दृष्ट्वा सौभाग्यकेश्वरम् ।
सर्वपापविनिर्मुक्तः सौभाग्यं परमं लभेत् ॥ १ ॥
घृततीर्थेनरः स्नात्वा घृतेनस्नापयेच्छिवम् । घृतमग्नावथोहुत्वा रुद्रलोकेमहीयते ॥
देवींयोगेश्वरींप्रार्च्य सुरासुरनमस्कृताम् । सर्वपापविनिर्मुक्तः परंयोगमवाप्नुयात्
शङ्खावर्तेनरः स्नात्वा सर्वपापविवर्जितः । धनधान्यसमायुक्तो जायतेनिर्मलेकुले ॥
शुद्धोदकेचतुर्दश्यां मुक्त्यर्थंस्नानवान्नरः । शिवंसुरेश्वरंदृष्ट्वा ततोमोक्षगतिर्भवेत् ॥
तथान्यत्संप्रवक्ष्यामि तीर्थं त्रैलोक्यविश्रुतम् ।
किंपुनरिति विख्यातं ब्रह्महत्याविमोचनम् ॥ ६ ॥
पूर्वंत्रेतायुगेव्यास! सुनेत्रोनामवैद्विजः । तस्यपुत्रः समुत्पन्नोविश्वावसुरितिस्मृतः
यवक्रीतस्य शापेन स पिता तेन घातितः ।
ब्रह्महत्यान्वितो व्यास! तीर्थात्तीर्थं परिभ्रमन् ॥ ८ ॥
तीर्थे किं पुनके स्नात्वा धारातीर्थे गतो द्विजः ।
ततः कपिलधारायां चिन्तयित्वाऽऽत्मना स्वयम् ॥ ९ ॥
कथं मे ब्रह्महत्याया यायात्पापं प्रशान्तिताम् ।
एवं हि चिन्तयन् सोऽथ पुनरायादवन्तिकाम् ॥ १० ॥
अत्र तीर्थे पुनः स्नाति यावद्वाणीं ततोऽशृणोत् ।
किंपुनर्ध्यायसे ब्रह्मन्!येन स्नातो द्विजोत्तमः ॥ ११ ॥
नतेऽस्तिब्रह्महत्यावै तीर्थस्नानेननाशिता । गच्छशीघ्रं गृहंविप्र!पापहीनोयथासुखम्
पुनरन्यं प्रवक्ष्यामि पत्तनेश्वरमुत्तमम् । तत्रस्थित्वा महेशेन पुनःपत्तनमीक्षितम् ॥

पत्तनेश्वरइत्याख्यो देवदेवोमहेश्वरः । यस्तुगन्धैश्चपुष्पैश्च धूपैर्दीपैर्मनोरमैः ॥ १४ ॥
भावयुक्तो नरो व्यास! पूजयेद्विधिवत्सदा । यथावत्तिष्ठतेलिङ्गं वंशच्छेदोनजायते
हंसयुक्तेनयानेन शिवलोकंसगच्छति । तथान्यत्संप्रवक्ष्यामि तीर्थंत्रैलोक्यविश्रुतम्

दुर्धर्षमिति विख्यातं ब्रह्महत्याविमोचनम् ।
पुरा दिवाकरो व्यास! चक्रे दुर्धर्षनामतः ॥ १७ ॥

तीर्थमस्मिन्नदीतीरे विख्यातंसूर्यसंस्कृतम् । तेजःपुञ्जोऽभवल्लिङ्गंगणगन्धर्वपूजितम्
सप्तम्यामथवाष्टम्यांसंक्रान्तौरविवासरे । तत्रस्नात्वाशुचिर्भूत्वासुत्रिरात्रमुपोषितः
दृष्ट्वामहेश्वरंतत्र शिप्राकूलेव्यवस्थितम् । पूजयित्वातुभावेन यत्फलंतच्छृणुष्वमे ॥
पितृमातृकुलंसर्वं समुद्धृत्यशिवंव्रजेत् । तत्रयच्छतियोदानं गोहेमादिविशेषतः ॥
तावत्तदक्षयंलोके यावच्चन्द्रदिवाकरौ । तथान्यत्संप्रवक्ष्यामि गोपीन्द्रंतीर्थमुत्तमम्
गौतमेनपुरायत्र इन्द्रःशापाद्भगीकृतः । भगत्रीडायुतः शक्रः प्रविश्य वनमुत्तमम् ॥

अतोषयत्तदोग्रेण तपसा शङ्करम्पुरा ।
तुष्टेन शम्भुना विप्र! ये भगास्तच्छरीरगाः ॥ २४ ॥
गोसहस्रीकृतास्तेन गोपीन्द्रमिति कथ्यते ।
तत्र स्नात्वा दिवं याति शक्रतुल्यपराक्रमः ॥ २५ ॥

येमृतास्तेपुनर्जन्मनाप्नुवन्तिमहीतले । गङ्गातीर्थेनरःस्नात्वापुण्यंप्राप्नोतिपुष्कलम्

ज्येष्ठशुक्लदशम्यान्तु गङ्गायाः फलमादिशेत्
गङ्गातीर्थे नरः स्नात्वा दृष्ट्वा पुष्कररण्डकम् ॥ २७ ॥

पुष्पकेणविमानेन प्रयातिदिविमोदते । नरकादुद्धरत्याशु नरः स्नात्वोत्तरेश्वरे ॥
इष्टभोगसमापन्नो यातिस्वर्गंनसंशयः । भूतेश्वरेनरः स्नात्वा भूतेश्वरमथार्चयेत् ॥

गन्धपुष्पादिनैवेद्यैर्मृतः सुरपुरं व्रजेत् ।
शिप्रायां तु नरः स्नात्वा कैलासं तु नमस्यति ॥ ३० ॥

सूर्याहतंतमोयद्वत्तद्वत्पापंप्रणश्यति । अम्बालिकांचयः पश्येत् समाधिनियमेनच ॥
समुक्तः सर्वपापेभ्यः कञ्चुकेनफणीयथा । घण्टेश्वरंप्रवक्ष्यामि यत्सुरैरपिपूजितम् ॥

यत्रकूपोदकम्पीत्वा सौभाग्यमतुलंलभेत् । अर्चयेद्यस्तुदेवेशं गन्धपुष्पैरनुक्रमात् ॥
शिवलोकेवसेत्तावद्यावदिन्द्राश्चतुर्दश । पुण्येश्वरंतुयःपश्येच्छुचिःस्नातोजितेन्द्रियः
सगाणपत्यमाप्नोति यत्सुरैरपिदुर्लभम् । लुम्पेश्वरेनरःस्नात्वासमभ्यर्च्यमहेश्वरम्
नयातिनरकंमर्त्यः स्वर्गलोकेमहीयते । तथान्यत्संप्रवक्ष्यामि यत्सुरैरपिदुर्लभम् ॥

पूजितं ब्रह्मणा पूर्वं स्थविराख्यं विनायकम् ।
तत्र स्नात्वा शुचिर्भूत्वा पूजयेद्यो विनायकम् ॥ ३७ ॥
गन्धधूपैश्च पुष्पैश्च भक्ष्यैर्भोज्यैः फलं शृणु ।
समीहिता भवेत्सिद्धिर्मृतः शिवपुरं व्रजेत् ॥ ३८ ॥

नवनद्याः समीपे तु पार्वतीम्पूजयेद्बुधः । गन्धपुष्पैश्चधूपैश्च सौभाग्यमतुलंलभेत्

कामोदके नरः स्नात्वा दृष्ट्वा कामं रतिप्रियम् ।
स्वर्गे च देवगन्धर्वस्पृहणीयवपुर्भवेत् ॥ ४० ॥

प्रयागेतुनरः स्नात्वा प्रयागेशंतु पश्यति । सर्वलोकानतिक्रम्य शिवलोकेमहीयते ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
सौभाग्यतीर्थमहात्म्यं नाम द्विचत्वारिंशत्तमोऽध्यायः ॥ ४२ ॥

---

# त्रिचत्वारिंशत्तमोऽध्यायः

## नरादित्यमाहात्म्यवर्णनम्

### सनत्कुमार उवाच

अथान्यंसंप्रवक्ष्यामि नरादित्यंदिवाकरम् । यस्यदर्शनमात्रेण सर्वरोगैर्विमुच्यते ॥

स्थापनान्ते प्रवक्ष्यामि नरादित्यस्य यादृशी ।
युद्धे निवारिते तस्मिन् रक्तस्वेदजयोः पुरा ॥ २ ॥

नरनारायणौदेवाववतीर्णौधरातले । कुन्त्यांदेव्यांसुदेवक्यां मथुरायांसमागतौ ॥

एवं तौ भवतो लोके कान्तौ वृद्धिंपरां गतौ ।
अन्यस्मात्कारणात् कृष्णोऽन्यस्माज्जातो धनञ्जयः ॥ ४ ॥
कंसादीन् दानवान् सर्वान् निजघान रणे हि सः ।
स्वर्गं गतस्ततः पार्थो वासवादस्त्रसिद्धये ॥ ५ ॥
कृतास्त्रेणतुवीरेण देवराजस्तुदक्षिणाम् । संस्तुतोदेवराजेनदक्षिणासातुयाचिता ॥
निवातकवचाह्युग्रा हिरण्यपुरवासिनः । वध्यतामर्जुनक्षिप्रमेषा मे गुरुदक्षिणा ॥ ७
अर्जुनेनप्रतिज्ञातो वधस्तेषांदुरात्मनाम् । रौद्रंसरथमास्थाय गृहीत्वासशरंधनुः ॥
निहत्य तांस्ततः पार्थः कृत्वा कर्म सुदुष्करम् ।
प्रीतिमुत्पादयामास सर्वेषां च दिवौकसाम् ॥ ९ ॥
कृतकार्यंतदाशक्रस्त्वर्जुनंवाक्यमब्रवीत् । यत्तेऽभिरुचिरंवीरमर्त्यलोकेसुदुर्लभम् ॥
मनसाकाङ्क्षितम्पार्थ वरंतंवरयोत्तमम् । सवव्रेप्रतिमेद्वेतुयेऽर्चितेब्रह्मणास्वयम्
ब्रह्मणाप्रीतियुक्तेन दक्षायप्रतिपादिते । दक्षेणार्घ्ययुगंसाग्र्यं पूजिते तिमिरापहे
सुराणामसुराणाञ्च विग्रहेसमुपस्थिते । दानवैर्निर्जितः शक्रोहृतराज्योवनंगतः ॥
तपश्चचारदुर्धर्षमेकपादः शतक्रतुः । दिव्यंवर्षसहस्रंतु धिषणस्तंददर्शह ॥ १४ ॥
दृष्ट्वातंदेवराजन्तु बृहस्पतिरुवाचह । हित्वात्रिदिवमायातः कथंशक्रत्विदंवनम् ॥
एकाकिना वनस्थेन न साध्याः शत्रवस्त्वया ।
ज्ञात्वैवं देवराज!त्वं शीघ्रं दक्षाश्रमं व्रज ॥ १६ ॥
पूजार्थेब्रह्मणादत्ते पारिजातसमुद्भवे । चकारविश्वकर्मायेते याचस्वप्रजापतिम् ॥
शत्रूणांचक्षयोभावी प्रसादादर्चनात्तयोः । गुरोस्तुतेनवाक्येन हृष्टोदेवश्शतक्रतुः ॥
जगामसत्वरस्तत्र यत्रदक्षः प्रजापतिः । विनयावनतोभूत्वा ययाचेप्रतिमेह्युभे ॥
ददौयस्मैततोदक्षः शक्रायप्रतिमेशुभे । पूजितेप्रतिमेव्यास शक्रेणशरदांशतम् ॥
तयोस्तुतेजसासर्वे विनाशंदानवागताः । प्रतिमेचोचतुः शक्रं वरयस्ववरोत्तमम् ॥
भक्त्याऽनयापरंतुष्टा आवांजानीहिवासव । वरंवव्रेतदाशक्रः प्रसन्नात्माद्विजोत्तम
अस्माकं प्रतिपक्षा ये दानवाः पापचेतसः ।

सर्वे ते नाशमायान्तु वरएष मतो मम ॥ २३ ॥
युवां पूजितुमिच्छामि यावदिन्द्रो भवाम्यहम् ।
तथेति चोक्त्वा प्रतिमे ते नाकं प्रतिजग्मतुः ॥ २४ ॥
तत्तु याच्यमवश्यार्थे वरार्थे प्रतिमाद्वयम् ।

इन्द्र उवाच

साधु पार्थ!पुनः साधु यतश्चेत्थं त्वयोच्यते ॥ २५ ॥
इमेचप्रतिमेपार्थ! शङ्करेण महात्मना । सुरक्तैः शतपत्रैश्च पूजितेब्रह्मणो दिनम् ॥२६॥
त्रैलोक्यपालनार्थञ्च पूजितेविष्णुनापुरा । नीलोत्पलैःसुगन्धैश्च सहस्रपरिवत्सरान्
ततःप्रजापतिःसृष्टिं कर्तुकामःसमाहितः । पूजयामासप्रतिमे पद्मैरक्तोत्पलैश्शुभैः ॥
त्वमेव हि कथं पार्थ! मृत्युलोकं नयिष्यसि ।
एताभ्यां रहितस्स्वर्गस्तृणतुल्यो भविष्यति ॥ २६ ॥
आदातुकामं देवेन्द्रं प्रणिपत्यतमर्ज्जुनः । उवाचचाहमर्थ्योऽस्मि वरेणानेनवैप्रभो ॥
ततः शक्रः पुनः पार्थमुवाच मुनिपुङ्गव! । गृहीत्वात्वमिमेवीर कुशस्थल्यांनिवेशय
शिप्रायाउत्तरेतीरे केशवार्कंतुकेशवः । स्थापयिष्यतिवैतत्र सर्वपापप्रणाशनम् ॥
भविष्यति सदा यात्रा आषाढी चाथ कार्त्तिकी ।
आगमिष्याम्यहं तत्र सहितोऽप्सरसां गणैः ॥ ३३ ॥
मरुतश्चागमिष्यन्ति मेघाश्चैवसविद्युतः । मेघखण्डे समुद्भूते मयि तत्र प्रवर्षति
प्रवदिष्यन्तिवैलोकाः प्राप्तोदेवःपुरन्दरः । भास्करंतुनमस्कृत्यब्रह्माद्यैःपूजितं विभुम्
प्रतियामितुबीभत्सो पुनरेव यथागतम् । एवंमूर्त्तिद्वयंशौरिर्दत्त्वापार्थाय वासवः ॥
भूर्लोकंप्रेषयामास सुतेन सहपाण्डव! । नारदोद्धारकायांतु कृष्णास्याह्वानकारणात्
देवराजस्य तद्वाक्यं सरहस्यञ्च केशवम् ।
श्रावयामास विप्रेन्द्र! एहि कृष्ण!कुशस्थलीम् ॥ ३८ ॥
अर्चस्व पारिजातस्य विश्वकर्मसुकारिते । इन्द्रेणाथप्रदत्तेवै तेतुभ्यंपाण्डवायच ॥
श्रुत्वा शौरिस्तु तद्वाक्यं प्रतस्थेऽवन्तिकाम्पुरीम् ।

अवातरच्च ह्याकाशात्तमालिङ्ग्य च पाण्डवम् ॥ ४० ॥
प्रीतःप्रोवाचवचनं परिष्वज्यच फाल्गुनम् । जन्म मे सफलंजातं प्रीतिर्मेह्यतुलार्जुन
यतो मे प्रीतिरतुला क्रियतां कार्यमुत्तमम् ।
इत्युक्त्वा तौ तदा व्यास! समायातौ कुशस्थलीम् ॥ ४२ ॥
पार्थंप्राहतदाकृष्णःसुसम्पूर्णमनोरथः । गत्वाऽर्जुनदिशंप्राचीं मूर्त्तिमेकांनिवेशय ॥
पूर्वाह्णेहिशुभंलग्नं भविष्यति मनोरमम् । अहमप्युत्तरां यास्ये स्थापनार्थे नदींमुने
ममशङ्खस्यनादेन प्रतिष्ठापयभास्करम् । पूर्वंगत्वा ततः पार्थः शुभंस्थानंव्यलोकयत्
व्यास!तां स्थापयामास दिननाथस्य सुस्थिरः ।
क देवं स्थापयामीति यावद्दध्यौ च पाण्डवः ॥ ४६ ॥
तावत्साह्यब्रवीद्देव स्थानंकारणशोभनम् । दर्शयामासपार्थाय तेजसास्वेनदुःसहम्
सव्यसाची ततोभीतो दृष्ट्वार्चा तां प्रजल्पतीम् ।
तेजस्त्वसहमानो वै देवं वचनमब्रवीत् ॥ ४८ ॥
क देवत्वांप्रमुञ्चामि किं स्थानंतवरोचते । सौम्यरूपःसुदर्शश्च प्रजाभ्योभवगोपते
दिविसंस्थाश्चयेदेवा नागाःपातालसंश्रयाः । भुविस्थामानवाःपूताभवन्तुतवदर्शनात्
सोऽर्जुनमब्रवीद्देवो माभैस्त्वंममदर्शनात् । दक्षिणेनकरेणाथ ह्यभयेनाभयप्रदः ॥
समाश्वास्याथ तं शान्तःसौम्यमूर्तिर्बभूव ह ।
प्रभाकरेण देवेन निजन्तेजः प्रदर्शितम् ॥ ५२ ॥
ततस्सूर्योऽब्रवीत्स्थानमेतद्देवाचलं मम । प्राप्तेलग्नेच हरिणा शङ्खश्चापूरितोमहान्
नरेण च स वै सूर्यःस्थापितोऽमरसंस्तुतः ॥ ५४ ॥

अर्जुन उवाच

नयति किरणमाली भासुरस्सत्सलसिसकलभुवनधामा प्राग्दिगन्ताट्टहासः ।
भवति विगतपापं कीर्तनादेव यस्य प्रचुरकलुषदोषैर्ग्रस्तमङ्गं नराणाम् ॥ ५
ब्रह्माद्यैर्मुनिभिरभिष्टुतं पतङ्गं कःस्तोतुं कविरभिवाञ्छति प्रकामम् ।
स्तोष्येऽहं तदपि सुविस्तरात्सुबुद्धः किं दीपो ज्वलति हि प्रोदिते शशाङ्के ॥

शास्त्रार्थकामनिपुणैर्मुनिभिःस्तुतस्य किं वस्तु यन्न रचितं विविधैः प्रयोगैः ।
द्वैपायनप्रभृतिभिर्मुनिभिःपुराणैरापीतसारमिह भाति जगत्समस्तम् ॥ ५७ ॥
कामं तथाऽप्यहमतीव विचार्य बुद्ध्या भानो त्रिलोकगुरुपूजितपादयुग्मम् ।
वृत्तैस्फुटार्थमधुराक्षरसन्धियुक्तैस्त्वां वै विचित्रगतिभिः परिकीर्त्तयिष्ये ॥
तावज्जगद्भवति निश्चलमेव सर्वं तावत्क्रियाश्च विविधा न च यान्तिसिद्धिम् ।
यावज्जनाथकमलामलमण्डलस्त्वं नोत्तिष्ठसेव्यपनयन्किरणैस्तमांसि ॥ ५६ ॥
यावन्नभान्ति शिखराणि महीरुहाणां गुच्छान्यफुल्लतनुमीलितलोचनानि ।
सुप्तानि बोधयसि षट्चरणाकुलानि यावन्नभाभिरमलाभिरनुत्तमाभिः ॥ ६०
उद्यन्तमम्बरतलेसुरसिद्धसङ्घाः सब्रह्मदैत्यमुनिकिन्नरनागयक्षाः ।
त्वामर्चयन्ति विबुधाः प्रणतैःशिरोभिश्चञ्चत्किरीटमणिभाभिरनुत्तमाभिः ॥६१
अस्तङ्गते त्वयि जगद्भवति प्रसुप्तं भूयस्त्वयिप्रतपति प्रतिबोधमेति ।
एवं सदा वरद!लोकहितार्थहेतोरेकस्त्वमेव भगवंस्तिमिरस्य हन्ता ॥ ६२ ॥
उत्साहशक्तिनयशौर्यसमन्वितानां सेवाप्रयोगरचनाविधितत्पराणाम् ।
कार्याणि यन्नफलदानि भवन्तिपुंसां हेतुस्त्वभक्तिरिह नाथ!तवेतिनूनम् ॥६३
यत्संयुगेषु रथकुञ्जरकुन्तशक्तिनाराचचक्रशरतोमरभीमखड्गैः ।
क्षिप्रं नरास्समुपयान्ति विजित्य शत्रून्सर्वं सदा प्रणतवत्सल चेष्टितं ते ॥ ६४
कान्तारदुर्गविषमेष्वपि वर्तमाना ऋक्षेभसिंहबहुकण्टकतस्करेषु ।
कष्टान्विताश्च बहुशोकविमूढचित्तास्त्वत्कीर्तनाद्विगतमृत्युभया भवन्ति ॥६५॥
तेजोराशे!त्वमिह शरणं सर्वतो दुःखितानां
त्वत्तुल्योऽन्यो जगति सकले नास्ति कश्चिद् दयालुः ।
त्वय्येकस्मिन्भवति सकला भक्तिरन्विष्यमाणा
त्वामासाद्य प्रभवति कुतो व्याधिदुःखं नराणाम् ॥ ६६ ॥
कः कुष्ठाभिहतोनरोऽरिभिरपि व्याध्यादिभिः पीडितः
के पङ्गवन्धजडाश्च शीर्णचरणाः कोवाऽधनः कोऽक्रियः ।

इत्येवं प्रसमीक्ष्य देव! कृपया दोषात्परित्रायसे
कस्याऽन्यस्य परोपकारनिरता चेष्टा यथैका तव ॥ ६७ ॥
धर्मःपरत्र किल तिष्ठति सेवितोऽसौ कालान्तरेणविबुधावरदा भवन्ति।
त्वं सेवितः प्रणतवत्सलभूतिकामैः सद्यःप्रयच्छसि फलं यदभीप्सितंतैः ॥६८
विभ्रान्तकान्तहरिणीसदृशेक्षणाभिरङ्गेषु हारमणिकुण्डलमेखलाभिः।
तेषां भवन्ति भवनानि विलासिनीभिर्येषां नृणांत्वमसिवै वरदः प्रसन्नः ॥ ६९
यैस्त्वन्नरैःसकृदपिप्रणतः कथंचिद्ध्यातोऽथवा भुवननाथ!तथान्तकाले।
निष्कल्मषा जगति दुष्कृतिनो भवन्ति ते निर्मला सुकृतिनो गतिमाप्नुवन्ति
ये त्वां कुतर्कमतिभिर्नंनमन्ति भक्त्या रोमाञ्चकञ्चुकशताकुलितैश्शरीरैः।
ते निर्धनाःपरगृहेष्ववभूतमन्नं क्षुत्क्षामकण्ठवदनाः परितङ्क्‌यन्ति ॥ ७१ ॥
उदधिजलतरङ्गक्षोभलोलाक्षियुग्मैःसुमणिशतमयूखोद्भासितैर्लेलिहद्भिः।
प्रणिपतितशिरोभिर्नागमुख्यैरजस्रं श्रुतिभिरनुपमाभिःस्तूयसे पुष्कलाभिः ॥ ७२ ॥
तव सुरवर!गच्छतोऽप्युदेतुं त्रिदशनदीकमलोद्भवानि वातैः।
कनककमलरेणुरञ्जितानि भ्रमरकुलानि पतङ्ग उत्पतन्ति ॥ ७३ ॥
तत्त्वध्यानंकर्तुं जलनिधिमध्ये स्थित्वा किरणकनिवहैः।
आजीवार्थं प्रतपसि भगवन्!कस्ते तुल्यस्त्रिभुवनमध्ये ॥ ७४ ॥
उदयाद्रिनितम्बसंस्थितस्य ह्यदयेष्वस्तमयेषु चावृतस्य।
किरणास्तपनीयसम्प्रभास्ते विलसन्तस्तडितो विडम्बयन्ति ॥ ७५ ॥
यथा यथा व्रजतिरथस्तवाम्बरे विपाटयन् घनतिमिरौघसञ्चयान्।
तथा तथा क्षुभितमहानिलेरितः प्रतीयते मुहुरिव दुन्दुभिर्यथा ॥ ७६ ॥
चारुपद्मविनिमीलितेक्षणां चक्रवाककलहंसमेखलाम्।
कामिनीमिव रतिश्रमालसान्तां विबोधयसि पद्मिनीं करैः ॥ ७७ ॥
नीललोलमतिकान्तमुत्पलं भृङ्गतुङ्गचरणाकुलीकृतम्।
त्वत्प्रभाभिरनुरागरञ्जितं पद्मरागमिव शोभते भृशम् ॥ ७८ ॥

स्फुरच्छशाङ्कहारनिर्मलं त्वदंशुपूरितम् ।
विभात्यतीवकान्तमम्बरं वृहच्च पाटलम् ॥ ७८ ॥

हरसि त्वमेव तापमिह तावदुदैन्यनृणां भवतिचयावदेवकिरणैस्तवपूर्णमिदम् ।
ऋषिमुनिभिरुदारधीभिरनिशं श्रुतिमार्गपरै-
र्वरद न शक्यते तव गुणस्तुतिराश्रयितुम् ॥ ८० ॥

त्वंविष्णुस्त्वं शशाङ्कस्त्वमसुरमथनः षण्मुखस्त्वं धनेश-
स्त्वंकालस्त्वञ्च धाता क्षितिधरभृदपामाश्रयस्त्वं हुताशः ।
ॐङ्कारस्त्वंद्विजानां त्वमिहजलनिधिस्त्वंयमस्त्वंचरुद्र-
स्त्वंशक्रस्त्वं पयोदो व्रतयमनियमास्त्वं जगत्सर्वमेव ॥ ८१ ॥

त्वमनिन्द्यगोपते!त्रिपुरमथन!मन्मथदाहकस्त्वमसुरभामदर्पहा ।
त्रिदशाधिप!कमलवराननस्त्वमिह!देवगुरुर्भगवं-
स्त्रिभुवनमण्डलेऽस्तिकतमस्तव तुल्यगुणः ॥ ८२ ॥

आदित्य!भास्कर!दिवाकर!सप्तसप्ते!मार्तण्ड सूर्य!हरिदश्व!पतङ्ग!भानो! ।
अश्रान्तवाहनस्वरूप!गभस्तिमालिंस्त्वां लोकनाथ!शरणं प्रणिपद्यतेऽसौ ॥
प्राग्दिग्वधूतिलक भासुरकर्णपूर!मन्दाकिनीदयितनाथ!जगत्प्रदीप! ।
हेमाद्रितापन!नभस्तलहाररत्न!सन्ध्याङ्गनावदनराग!नमोनमस्ते ॥ ८४ ॥
ब्रह्मण्य!सत्य!शुभ!मङ्गललोकनाथ! व्योमाम्बुजेश!मुनिसंस्तुत!विश्वमूर्ते! ।
आर्तस्य!शोकहरकिङ्करपालकश्च त्वम्मे प्रसीद!भगवञ्छरणागतस्य ॥ ८५
कृत्वाञ्जलिं शिरसिपङ्कजकुड्मलाभ्यांयत्संस्तुतस्त्वमिहदेवमयाद्यभक्त्या ।
तेन प्रभो!भव ममोपरि सौम्यमूर्त्तिर्धर्मे मतिं कुरु सदा श्रियमूर्जिताञ्च ॥
नमःसवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे विरञ्चिनारायणशङ्करात्मने ॥ ८७ ॥

सूर्य उवाच

तुष्टोऽहमधुनापार्थ स्तोत्रेणाऽनेनसुव्रत । वरंदास्यामि यत्तेन यत्तेमनसि वर्त्तते ॥

मद्दर्शनंहिविफलं नकदाचित्प्रजायते । शूराणाञ्चविशेषेण ह्यदेयंनास्तियत्नतः ॥

अर्जुन उवाच

एषोह्यथवरोमह्यं वराणामुत्तमोत्तमः । अत्र सन्निहितोदेव सर्वकालंभवप्रभो! ॥ ६०

ये च त्वां मानवा भक्त्या स्तोष्यन्ते प्रणताःसदा ।

तेषां धनञ्च धान्यञ्च पुत्रदारादिकं वसु ॥ ६१ ॥

मनसश्चेप्सितंसर्वंदातव्यंहिवरोमम । अथादित्यो नरं देव उवाच वचनंशुभम् ॥ ।

येमांस्तुवन्त्यनेनाङ्ग पूजयित्वातिभक्तितः । श्रियानविच्युतिस्तेषांभवेदेषवरोमम

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे नरादित्यमाहात्म्यं नामत्रिचत्वारिंशत्तमोऽध्यायः ॥ ४३ ॥

---

# चतुश्चत्वारिंशोऽध्यायः

## केशवादित्यमाहात्म्यवर्णनम्

सनत्कुमार उवाच

नारायणोऽपि संस्थाप्य शङ्खं प्रध्माय यत्नतः ।

तुष्टाव प्रयतो भूत्वा स्तोत्रेणानेनभास्करम् ॥ १ ॥

आदित्यंभास्करंभानुं रविंसूर्यंदिवाकरम् । प्रभाकरंदिवानाथं तपनंतपतांवरम् ॥

वरेण्यंवरदंविष्णुमनघंवासवानुजम् । बलंवीर्यंसहस्रांशुं सहस्रकिरणद्युतिम् ॥

मयूखमालिनं विश्वं मार्तण्डं चण्डरोचिषम् ।

सदागतिं सुभास्वन्तं सप्तसप्तिं सुखोदयम् ॥ ४ ॥

देवदेवमहिर्बुध्न्यं धाम्नांनिधिमनुत्तमम् । तपोब्रह्ममयालोकं लोकपालमपाम्पतिम्

जगत्प्रबोधकंदेवं जगद्दीपंजगत्प्रभुम् । अर्कं निःश्रेयसपरं कारणंश्रेयसाम्परम् ॥

इनंप्रभाविनंपुण्यं पतङ्गंपतगेश्वरम् । दातारंवाञ्छितार्थानां दृष्टादृष्टफलप्रदम् ॥

अहंग्रहकरंहंसं हरिदश्वंहुताशनम् । मङ्गल्यंमङ्गलंमेध्यं ध्रुवंधर्मप्रबोधनम् ॥ ८ ॥
भवसम्भावितंभावं भूतभव्यंभवात्मकम् । दुर्गमंदुर्गतिहरं हरनेत्रंत्रयीमयम् ॥ ६ ॥
त्रैलोक्यतिलकंतीर्थंतरणिंसर्वतोमुखम् । तेजोराशिंसुनिर्वाणंविश्वेशंधामशाश्वतम्
कल्पंकल्पानलंकालं कालचक्रंक्रतुप्रियम् । भूषणंमरुतं सूर्यं मणिरत्नंसुलोचनम् ॥
त्वष्टारंविष्टरंविश्वं सदसत्कर्मसाक्षिणम् । सवितारंसहस्राक्षं प्रजापालमधोक्षजम्
ब्रह्माणंवासरारम्भं रक्तवर्णंमहाद्युतिम् । सूक्तंमध्यदिनेरुद्रं श्यामंविष्णुं दिनक्षये ॥
नाम्नामष्टशतंदिव्यं विष्णुनासमुदाहृतम् । यइदंप्रयतोभूत्वा पठेद्भक्त्यासमाहितः ॥
नतस्यविपदः क्वापि सर्वत्रापिशुभागतिः । धनधान्यसुखावाप्तिः पुत्रलाभश्चजायते
तेजः प्रज्ञापरंज्ञानं बुद्धिश्चपरमागतिः । एवंश्रुत्वाजगन्नाथो जगामादर्शनंततः ॥
केशवार्कमुखं दृष्ट्वा पद्मरागसमप्रभम् । विमुक्तःसर्वपापेभ्यःसूर्यलोके महीयते ॥ १७
दशाश्वमेधमध्ये तु रेणुतीर्थं प्रचक्ष्यते । तद्दृष्ट्वा सर्वपापेभ्यो मुच्यतेनात्रसंशयः ॥
केशवार्कसमीपे तु रेणुतीर्थं प्रकीर्त्तितम् ॥ १६ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
केशवादित्यमाहात्म्यं नाम चतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥

---

# पञ्चचत्वारिंशत्तमोऽध्यायः

## शक्तिभेदतीर्थवर्णनम्

### सनत्कुमार उवाच

तीर्थमन्यत्तथावक्ष्येशक्तिभेदमितिस्मृतम् । स्कन्दस्यचजटाभद्रंचक्रेऽथात्रपुराशिवः
तारकश्चतथादैत्यं हत्वातत्रसुरद्विषम् । शक्तिस्कन्दःस्वयंक्रुद्धो निचिक्षेपमहीतले ॥

### व्यास उवाच

भगवन्ब्रूहियत्नेन संशयोमेमहामुने । कथंस्कन्दःसमुत्पन्न एतदिच्छामिवेदितुम् ॥

सनत्कुमार उवाच

पुरादेवासुरेयुद्धेनिर्जितादानवैस्सुराः । दिवंत्यक्त्वादिशोयाताःशक्राद्याभयविह्वलाः

ततस्तुदेवराजेन तपसोग्रेणकालिज! । आराधितोमहादेवस्त्र्यम्बकस्त्रिपुरान्तकः

ततस्तुष्टोमहादेवः शक्रस्याभिमुखःस्थितः । उवाचवचनंश्लक्ष्णंवरमिष्टंददामिते ॥

शक्र उवाच

यदितुष्टोऽसिभगवन्कारुण्यान्ममशङ्कर! । महासेनापतिंदेव प्रयच्छ परमेश्वर! ॥ ७

हर उवाच

उत्पादयामिदेवेन्द्रं सर्वार्थादूर्जितंसुतम् । नामतो यो महासेनस्सुराणां भयहारकः

सनत्कुमार उवाच

इत्युक्त्वान्तर्दधेदेवस्सर्वभूतपतिर्हरः । सुतचिन्तापरोदेवो जगामचहिमालयम् ॥

देवदारुवनेतस्थौ ज्ञानध्यानपरोऽभवत् । ब्रह्मादयोपियंदेवं योगिनोध्यानचिन्तकाः

ध्यायन्ति नियतात्मानः प्राणायामपरा मुने! ।

लिङ्गमूर्तिश्च यो नित्यं पूज्यते सर्वजन्तुभिः ॥ ११ ॥

स ध्यायतिकिमर्थंतं नविद्मः परमार्थतः । एवं ध्यानपरेदेवे देवीहिमवतोगृहे ॥

मध्येवयसिवर्तन्ती यासीद्दाक्षायणीसती । पितुर्गृहेनिजोदेहो ययायोगाद्विसर्जितः

निमन्त्रितोनमेभर्ताइतिकोपं चकार या, । तांदेवींहिमवाञ्छ्रुत्वा पूर्वंदेवर्षिनारदात्

भव भार्या भवित्रीति नान्यं वरमचिन्तयत् ।

या तपस्यति रुद्राय सा सखिभ्यां समन्विता ॥ १५ ॥

कथंहिशङ्करोदेवो:भमभर्ताभविष्यति । यावदेवं गता देवं देवी हिमवतस्सुता ॥ १६

ततस्समागतादेवाः कृत्वाग्रेबलसूदनम् । जग्मुर्ब्रह्मसदः पुण्यं द्रष्टुं ब्रह्माणमव्ययम्

तेसुराश्चस्तुतिंकृत्वा वाक्यमेतत्समब्रुवन् । शरणं भवदेवानां दानवैर्विजितात्मनाम्

ततोऽवोचत्सुरान्ब्रह्मा ज्ञातं कार्यं मयाखिलम् ।

नैतच्छम्भोर्विना वीर्यात्कार्यसिद्धिर्भविष्यति ॥ १९ ॥

तथा यतध्वं देवेशो यथा वाञ्छति पार्वतीम् ।

इत्युक्त्वान्तर्दधे ब्रह्मा स्वप्ने लब्धं धनं यथा ॥ २० ॥
ततोमेरुं समागत्य पुनर्मन्त्रं प्रचक्रिरे। तेषामाहेदृशं शक्रस्तुष्टः शम्भुः पुरा मम ॥ २१
प्रतिज्ञातश्चदेवेन स्वाङ्गात्सेनापतिम्प्रति । तस्मादेवंगतेकार्ये कारणंमकरध्वजम् ॥
इतिसञ्चिन्त्यदेवेशो काममाहूयसत्वरम् । उवाच वचनं हृद्यं देवानामनुकम्पया
यथा देवोभजेद्देवीं तथा कामं विधीयताम्। कारणंमहदेतद्धैदेवानां समुपस्थितम्
कामोवाक्यंहरेः श्रुत्वा प्रहस्यैवमुवाचह। करिष्येसर्वमेवंहि सखाचेन्मे भवेन्मधुः
तस्मिन् क्षणेऽथ शक्रेण कामवाक्यादनन्तरम्।
समादिष्टो मधुःक्षिप्रं कामस्यानुचरो भव ॥ २६ ॥
लब्ध्वा कामो मधुं मित्रं प्रतस्थे भार्यया सह।
कृत्वा सज्जं धनुर्बाणं पौष्पं पाणौ समाहितः ॥ २७ ॥
यत्रदेवाधिदेवेशो देवदारुवनेस्थितः । नन्दीश्वरः प्रतीहारः कृतध्यानोऽवतिष्ठते
चूतवृक्षाश्रितः कामो यावद्बाणं समोहनम्।
सन्दधत्यन्तरे चास्मिन् देवी प्राप भवाश्रमम् ॥ २६ ॥
त्यक्तध्यानव्रतोदेवो हृष्टश्चाह्लादचेतनः। ततोविलोकयामास दिशःसर्वाःप्रयत्नतः ॥
चूतवृक्षाश्रितं काममपश्यत्स रुषान्वितः।
भस्मीकृतस्तृतीयाक्ष्णा वह्निज्वालाकुलेन सः ॥ ३१ ॥
देवोऽप्यन्तर्दधे तस्मात् स्थानादाशु गणैस्सह।
पार्वती विस्मिता साध्वी लज्जिता दुःखिताऽभवत् ॥ ३२ ॥
हिमवांस्तां समुत्थाप्य निनायाशु निजंगृहम्।
गते देवे च देव्याश्च कामपत्नी सुदुःखिता ॥ ३३ ॥
भस्मीकृतंपतिंदृष्ट्वा विललापसुदुःखिता। दृष्ट्वा रतिसुदुःखार्त्तां वागुवाचाशरीरिणी
आश्वासयन्ती कृपया सखीमिव सुदुःखिताम्।
मा रोदीस्त्वं शुभापाङ्गि!तव भर्ता करिष्यति ॥ ३५ ॥
सर्वकार्याण्यनङ्गोऽपि मित्रकार्यविधानतः। यदाचापंमहादेवः परिणेष्यतिपार्वतीम्

तदाशम्भोरनुध्यानादुत्थास्यतिनसंशयः । द्वारकायांयदाकृष्णोद्वापरान्तेनिवत्स्यति
तत्पुत्रो भविता देवि! प्रद्युम्नो नाम ते पतिः ।
इत्युक्त्वा साऽजहाच्छोकमाकाशाज्ज्ञातया गिरा ॥ ३८ ॥
अचिन्तयत्तदादेवी उमापि हिमवद्गृहे । कामस्यदहनं तेजःशम्भोर्यत्तदनुत्तमम्
कथंभर्त्ताभवेदीशःकामस्योत्थापनंकथम् । नैतत्तपोविनाकार्यंकचित्कस्यापिसिद्धये
एवंसञ्चिन्तयित्वाथ सखीभिःसहिताततः । तपश्चकारसुमहत् पित्रादेशाच्छुभव्रता
वर्षास्वभ्रावकाशस्था हेमन्ते जलशायिनी ।
ग्रीष्मे पञ्चाग्नितप्ताङ्गी तपस्युग्रे समास्थिता ॥ ४२ ॥
तां दृष्ट्वा तपसोपेतां ब्रह्मचारिवपुर्हरः ।
आजगामाश्रमं देव्याः कृतातिथ्योऽब्रवीदिदम ॥ ४३ ॥
कृशमध्येकृशापाङ्गि! किमर्थंनवयौवने । तपः करोषि कल्याणि कस्यार्थेकारणंवद
उवाचचोत्तरंसावै सत्यञ्चमधुरंतथा । बटोतपस्समारम्भः क्रियतेशङ्करासये ॥ ४५
विचार्यचहरः श्रुत्वा निन्दयन् कार्यमात्मनः । उमाभक्तिपरीक्षार्थंनसहेतगिरेस्सुता
गन्तुकामामुमां मत्वा तस्मात्स्थानान्महेश्वरः ।
स्वं वपुर्दर्शयामास त्रिनेत्रं शूलपाणिनम् ॥ ४७ ॥
लज्जिताभूद्भवानीशं दृष्ट्वातस्थावधोमुखी । विवाहायार्थयागेन्द्रं यथामेत्वांसयच्छति
इत्युक्त्वाऽन्तर्दधे देवो देव्यगाच्च पितुर्गृहम् ।
देवीलाभाय सप्तर्षीन् सस्मार स्मरशासनः ॥ ४६ ॥
प्रणेमुस्तेतथागम्य संस्मृताःपरमेश्वरम् । ऊचुश्चप्राञ्जलिपुटाः कुर्मःकिंशाधिनोद्रुतम्
ततोऽब्रवीन्मुनीनीशस्समस्तांश्च गिरेर्गृहम् ।
गत्वा तथा कुरुध्वम्मे पार्वती स्याद्यथा प्रिया ॥ ५१ ॥
तथेति च प्रतिज्ञाय सङ्केतं शम्भुनास्वयम् ।
कृत्वा जग्मुस्सपत्नीका गिरीन्द्रस्य निवेशनम् ॥ ५२ ॥
दत्तार्घाभूधरेन्द्रेण कृतासनपरिग्रहाः । ऊचुरद्रिमुमांयच्छ शङ्करायार्थिनेप्रियाम् ॥

दत्तेत्युक्तागिरीन्द्रेणनिरूप्योद्वाहवासरम् । लब्ध्वानुज्ञांसमायाता यत्रास्तेसमहेश्वरः
ऊचुस्तेशङ्करंसर्वे दत्ताहिमवताशिवा । कृतकार्याश्च सर्वेऽपि यन्रजुस्तेयथागताः ॥
चक्रुर्विवाहसामग्रीं ब्रह्मवस्विन्द्रनारदाः । वृषासनं जगामाशु नन्दीशप्रमुखैर्गणैः ॥
मातृदुन्दुभिनादैश्च ब्रह्माद्यैरमरैस्सह । प्राप्यागेन्द्रालयं शम्भुः कृतकौतुकमङ्गलः ॥
विवाह्यैनां विधानेन जगाम स्वालयम्पुनः ।तत्रैकान्तरतिर्देवो यावत्तिष्ठतिकामवान्
तावत्त्रस्तैस्सुरैरग्निः प्रेषितोऽगान्महेश्वरम् । अग्नौतत्रगतेदेवो रतिंत्यक्त्वामहेश्वरः
निचिक्षेपमुखेवह्नेः स्वरेतोव्रीडितोभृशम् । रेतसातेनतप्तोऽग्निर्गङ्गातोयेव्यचिक्षिपत्

हररेतोऽग्निनोद्गीर्णं गङ्गामध्ये पपात ह ।
तया तु स्वतटे न्यस्तं दग्धया तस्य तेजसा ॥ ६१ ॥
सप्तर्षीणाञ्च षट्पत्न्यः स्नानार्थं जाह्नवीं ययुः ।
शीतार्तास्ताः कृतस्नाना दृष्ट्वा तेजस्तटे ज्वलत् ॥ ६२ ॥

मत्वाग्निमितिताःसर्वास्तप्तुकामाःसमाययुः । तपन्तीनाञ्चवैतासां तद्वीर्यमभवन्मुने
षडाननंसमारूढंश्रोणिद्वारेण सत्वरम् । यदान्योन्यमुत्पतितुंशक्तानाग्नेःपुरःस्थिताः

चिन्तामगुस्तदा सर्वा मुनित्रासात्ततो भयात् ।
ततश्च तपसो वीर्याद्विकृष्य स्वोदरात्ततः ॥ ६५ ॥

षड्भिरेकत्वमापन्नं श्वेतपर्वतमस्तके । मध्येशराणांवैकृत्स्नं निक्षिप्तंवीर्यमुत्तमम्
शुक्लायांप्रतिपद्यासीद्द्वितीयायांसमीकृतः । तृतीयायांवसाकारस्सर्वलक्षणलक्षितः

चतुर्थ्यां परिपूर्णाङ्गः षण्मुखो द्वादशेक्षणः ।
अलङ्कृतस्तु पञ्चम्यां षष्ठ्याञ्च ससमुत्थितः ॥ ६८ ॥

तेजसास्वेनतीव्रेण ततापसजगत्त्रयम् । जातमित्थं समाकर्ण्य सर्वेशक्रमुखाःसुराः
समागत्यास्यसंस्कारं ब्रह्माचक्रेयथाविधि । तुष्टेनपार्वतीशेन शक्तिर्दत्तादृढा शुभा
ततोगौर्य्यामयूरश्च वाहनेपरिकल्पितः । छागश्चैवाग्निनादत्तःकुक्कुटं सरितांपतिः
ततःसकृत्तिकाभिश्च वर्द्धितः पुत्रकाम्यया । ततस्तुप्राप्तसंस्कारो ब्रह्माद्यैरभिवन्दितः
शक्तिहस्तोऽभिषिक्तस्तुदेवसेनासमावृतः। वित्ताधिपोमहासेनःपावकःषण्मुखोऽजशः

गाङ्गेयः कार्त्तिकेयश्च गुहस्स्कन्द उमासुतः ।
देवसेनापतिः स्वामी सेनानी च शिखिध्वजः ॥ ७४ ॥
कुमारः शक्तिधारी च तस्य नामानि षोडश ।
यः पठेन्मानवो भक्त्या बाधा तस्य न जायते ॥ ७५ ॥

एवंजातोमहासेनोदानवानांक्षयङ्करः । कुशस्थल्यांसमानीतःशम्भुनास्थानकारणात्
अभिषिक्तः स तेनासौ भद्रितःसजटःपुरा । तेनभद्रजटोनाम देवतीर्थश्चकथ्यते
कृताभिषेकं लब्ध्वाऽत्रं महासेनं महेश्वरः । तमुवाच स मधुरं सर्वदेवसमागमे ॥
रक्षाकार्या त्वयापुत्र सामरस्यशतक्रतोः । देवानां बाधकाःसर्वे निहन्तव्याःसुरद्विषः
इत्थं महोत्सवे जाते तत्र प्रथमसागरे । मातरोन्वागताःसर्वाःपातालतलसंस्थिताः

तासामाहारसंज्ञाभिश्चक्रे नामानि शङ्करः ।
यानि तानि प्रवक्ष्यामि श्रृणु त्वं मुनिपुङ्गवः ॥ ८१ ॥

वटभोजनकामाया ज्ञेयास्ता वटमातरः । भुक्तातुचिर्भटीयाभिस्तावैचिर्भटमातरः

क्रीडार्थं शम्भुना चाथ प्राप्ता याःपलभोजनैः ।
षण्णवतिर्मातरश्चासन् सर्वास्ताःपलमातरः ॥ ८३ ॥

सर्वासांदर्शनंपुण्यं गृहभूतविनाशकम । तायत्नस्तसदादेव्यो द्रष्टव्या मानवैर्मुने ॥
लब्ध्वा शक्तिमहासेनो देवसेनासमावृतः । जघानदानवेन्द्रंतं तारकं तरसातदा ॥
दत्त्वाराज्यंतथेन्द्रायस्फीतंनिहतकण्टकम् । कुशस्थलींसमागम्यतत्रवासंसमाचरत्
एवं निहत्यदैत्येन्द्रं सगाङ्गेयो महाबलः । भक्तिशिप्राजलेमुश्चत्पातालंचबिभेदसा
ततो भोगवतीव्यास! शक्तिभेदेननिर्गता । वन्दिता सर्वदेवैश्च मुनिभिश्चतपोधनैः

पृथिव्यां यानि तीर्थानि समुद्रादिगतानि च ।
शक्तिभेदे तु न्यस्तानि शतकोटिसहस्रशः ॥ ८६ ॥
अतोऽतिपुण्यं त्रैलोक्ये कोटितीर्थमुदाहृतम ।
ब्रह्मणा स्थापितस्तत्र कोटितीर्थेश्वरः शिवः ॥ ९० ॥
कोटितीर्थे नरस्स्नात्वा दृष्ट्वा कोटीश्वरं शिवम् ।

मुच्यते सर्वपापेभ्यो निर्मोकादिव पन्नगः ॥ ६१ ॥

श्राद्धंकरोतियस्तत्र पितृभक्तोनरोमुने! । दशानामश्वमेधानां प्राप्नोति सकलम्फलम्

पितृनुद्दिश्ययत्किञ्चित्कोटितीर्थेप्रदीयते । तत्सर्वंकोटिगुणितं जायतेनात्रसंशयः

तत्र तीर्थे नरो यस्तु गां ददाति पयस्विनीम् ।

सर्वलोकानतिक्रम्य स गच्छेत्परमां गतिम् ॥ ६४ ॥

यावन्त्यङ्गेऽपिरोमाणि तत्प्रसूतिकुलेषुच । तावद्युगसहस्राणि ब्रह्मलोकेमहीयते ॥

पौर्णमास्याममावस्यां पश्येच्छक्तिधरं तु यः ।

नाऽपुत्री ( त्रो ) नाधनो रोगी सप्तजन्मनि जायते ॥ ६६ ॥

जलप्रवेशंयःकुर्यात्तत्रतीर्थेनरोत्तमः । सोऽक्षयं लभतेलोके यावच्चन्द्रार्कयोःसुखम्

वृषोत्सर्गंतु यः कुर्यात् पितृभक्तोनरोमुने । सोक्षयंलभतेस्थानं यत्सुरैरपिदुर्लभम्

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे शक्तिभेदमाहात्म्यवर्णनं नाम पञ्चचत्वारिंशत्तमोऽध्यायः ॥ ४५ ॥

---

# षट्चत्वारिंशोऽध्यायः

## अगस्त्येश्वरमाहात्म्यवर्णनम्

### सनत्कुमार उवाच

स्वर्णक्षुरेनरस्स्नात्वा दृष्ट्वादेवं महेश्वरम् । कपिलाशतदानस्य फलमप्यधिकंभवेत्

वाप्यास्पितामहस्यापि यःस्नायाद्विजितेन्द्रियः । हंसयुक्तेनयानेनब्रह्मलोकंसगच्छति

तैलाभिधानमातृणां रात्रौ यो यच्छते बलिम् ।

तस्य सिद्धिर्भवेत्सद्यो मृतः शिवपुरं व्रजेत् ॥ ३ ॥

विष्णुवाप्यां नरः स्नात्वा चैत्रे वा फाल्गुने तथा ।

जागरं यस्तु कुर्वीत सोपवासो जितेन्द्रियः ॥ ४ ॥

मुच्यतेसर्वपापेभ्यो विष्णुलोकंसगच्छति। अभयेश्वरदेवस्य भक्त्यानियतमानसः
पट्टबन्धमथोदृष्ट्वा रुद्रलोकं स गच्छति । लोकेतु जायतेदाता सर्वभौमो महीपतिः
यस्त्वगस्त्येश्वरंगच्छेदेकचित्तोनरोमुने । दृष्ट्वागस्त्येश्वरंदेवंलोपवासोजितेन्द्रियदेः

अगस्त्योदयवेलायां मुच्यते सर्वपातकैः ।
कृत्वाऽगस्त्यञ्च सौवर्णं रौप्यं वाथ स्वशक्तितः ॥ ८ ॥

पञ्चरत्नसमायुक्तं वस्त्रेणच समन्वितम् । तत्कालीनैःफलैःपुष्पैः पूजनीयोविधानतः

विधानं तस्य वक्ष्यामि चातुर्वर्ण्यं द्विजोत्तम ।
सप्तधान्यानि मुख्यानि तावन्त्येव फलानि च ॥ १० ॥

एकंधान्यं फलञ्चैकमग्रे त्याज्यंभवेन्मुने । यावद्वैसप्तवर्षाणि व्रतमेवं समाचरेत्॥
काशपुष्पप्रतीकाश!वह्निमारुतसम्भव! । मित्रावरुणयोःपुत्र! कुम्भयोने! नमोऽस्तुते
दत्तेऽर्घेयत्फलं व्यास! तद्वैह्येकमनाः शृणु । पुत्रवान्धनवांश्चैव जायतेनात्रसंशयः
मृतःस्वर्गमवाप्नोति सम्पन्ने जायतेकुले । मर्त्यलोके पुनःप्राप्य महायोगीश्वरोभवेत्
यश्चैतच्छृणुयान्नित्यं पठेद्वासुसमाहितः । सर्वपापविनिर्मुक्तो मुनिलोकेसमोदते

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमे-
ऽवन्तीखण्डेऽगस्त्येश्वरमाहात्म्यं नामषट्चत्वारिंशत्तमोऽध्यायः ॥४६ ॥

---

## सप्तचत्वारिंशोऽध्यायः

### विष्णुमाहात्म्यवर्णनम्

व्यास उवाच

महाकालं किमर्थंतु किंवाशिवपदंस्मृतम् । कोटीवरंकिमर्थंतुपावकंतत्किमुच्यते
नरदीपःकिमर्थंतु द्वितीयावटमातरः । अभयेश्वरंकिमर्थंतु शङ्खोद्धारणमेवच ॥२॥

शूलेश्वरं किमर्थं तु किमोङ्कारस्तु कथ्यते ।

धूतपापं किमर्थं तु किमङ्कारेश्वरं तथा ॥ ३ ॥

पुरीचोज्जयिनीदिव्या सप्तकल्पाकथंस्मृता । कथयस्वमुनिश्रेष्ठतस्यास्तामानियानिच

सनत्कुमार उवाच

शृणु व्यास!यथा ख्याता पुरी दिव्या सुपुण्यदा ।

स्वर्णशृङ्गा तु प्रथमे द्वितीये तु कुशस्थली ॥ ५ ॥

तृतीयेऽवन्तिकाप्रोक्ता चतुर्थेत्वमरावती । विख्यातापञ्चमेकल्पे पुरीचूडामणीतिच

षष्ठेपद्मावतीज्ञेयोज्जयिनीसप्तमेपुरी । पुनरन्तेतुकल्पस्य स्वर्णशृङ्गादिकास्मृता ॥

एतानि सप्तनामानि प्रातरुत्थाय यः पठेत् ।

सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ॥ ८ ॥

उज्जयिन्यां पुराराजा बभूवकिलचान्धकः । तस्यपुत्रोमहावीर्यो नाम्नाकनकदानवः

युद्धार्थेसमहावीर्यः शक्रंयुद्धेसमाह्वयत् । क्रोधादिन्द्रेणसंग्रामेयुद्ध्यमानोनिपातितः

निहत्यदानवंशक्रो भयादन्धासुरस्यतु । जगामशङ्करान्वेषी कैलासंशङ्करालयम् ॥

दृष्ट्वाप्रणम्यदेवेशं चन्द्रार्द्धकृतशेखरम् । भीतोविज्ञापयामास सहसाकुललोचनः ॥

अभयंदेहि मेदेव!दानवादन्धकाच्चवै । शक्रस्येत्थंवचः श्रुत्वा शरणागतवत्सलः ॥

ददावभृथमेवासौ माभैस्त्वमन्धकाद्धिवै । कृत्वारूपंमहादेवो विश्वरूपंसुभैरवम् ॥

सर्पैर्लिहद्भिरत्युग्रैस्तीक्ष्णदंष्ट्रैर्विषोल्बणैः ।

पातालोदररूपैश्च भैरवारावनादिभिः ॥ १५ ॥

भुजैरनेकसाहस्रैर्बहुशस्त्रधृतैस्तथा । सिंहचर्मपरीधानं व्याघ्रत्वगुत्तरीयकम् ॥ १६ ॥

गजाजिनकृताटोपं चन्द्राग्निरविलोचनम् । महामहीध्रतुल्याभिर्जङ्घाभिर्भूषितंसदा

क्षोभयंश्चालयन्सर्वान् पातालस्यतलावधि । ईदृग्रूपंविधायेशो दनुदैत्यभयावहम् ॥

अवातरन्महींभीमः पादेनैकेनशङ्करः । तत्रैवहिह्रदोजातः सर्वदैवतवन्दितः ॥ १९ ॥

ख्यातंशिवपदंतद्धियत्पदाक्रान्तवान्विभुः । यस्मादत्रपुराकोटिःपादाङ्गुष्ठस्यधारिता

कोटितीर्थमतःख्यातंसर्वपापप्रणाशनम् । अगस्त्येनतथाकोटिस्तीर्थानामत्रधारिता

अतोऽपीदृक् शुभं लोके कोटितीर्थं सदा स्मृतम् ।

दृष्ट्वा तु त्रिदशाः सर्वे स्नाता वै हितकाम्यया ॥ २२ ॥

महाकालंकृतंरूपं महाकालस्ततःस्मृतः । अन्धासुरोपिदनुजः पुत्रंश्रुत्वाहतंयुधि ॥

क्रोधेनमहताविष्टोरणतूर्याण्यवादयत् । ससैन्योनिर्गतःप्राप्तोयत्रतेत्रिदशाःस्थिताः

महत्यासेनयासार्द्धं रथवारणयुक्तया । तदैवदानवान्वीक्ष्य महाहवकृतोद्यमान् ॥

वेपन्तस्तेसुसन्नद्धाः शम्भुं शरणमाययुः । माभैषतमहाकालो देवानूचेत्रिलोचनः

गृहीत्वाशूलमातिष्ठद्दंष्ट्रादष्टाधरोरुषा । कोपयुक्तेविरूपाक्षे ज्वालाभिः पूरितन्नभः ॥

अन्धकेनाथ रुष्टेन शरकोटिस्तु दुःसहा ।

मुक्ता जगाम देवानां नाशाय शलभाकृतिः ॥ २८ ॥

विस्फुलिङ्गार्चिषं वह्निं मुञ्चमानः पिनाकधृक् । शतशश्शकलीचक्रेतञ्चबाणैरताडयत्

अन्धकोऽपि हि युद्धस्थो शिथिलः शिथिलायुधः ।

निरुद्धश्शम्भुना बाणैरलिभिः पङ्कजं यथा ॥ ३० ॥

तस्य सैन्यञ्च बहुधा स्वगणैर्युद्धयोधिभिः ।

योधृवरैर्हतं दिव्यैः स्थाणुसान्निध्यमाश्रितैः ॥ ३१ ॥

ततोऽन्धकेन सैन्यं स्वं भिन्नं दृष्ट्वा तथा सुरैः ।

आत्मानञ्च महेशेन विद्धं च बाणकोटिभिः ॥ ३२ ॥

विकलीकृतदेहोऽसौ भयमाश्रित्यवेगतः । चकारतामसींमायां मायाशतविशारदः

तयान्तर्हितदेहोऽसौ जगामदिशमुत्तराम् । शम्भोर्भीतिहरंबिभ्रद्बभ्रामभुविभिन्नहृत्

येनाध्वनागतोदैत्यस्तेनदेवोजगामह । वदन्नदृश्यतेक्वासौ गतोदुष्टःपुनः पुनः ॥

उवाचचान्धकश्शब्दं तथोवाचमहेश्वरः । तत्रतीर्थमथोत्पन्नं वागन्धकमितिश्रुतम्

तत्र स्नात्वा शुचिर्भूत्वा यो वै दद्यात्सशर्करम् ।

नवम्यां मार्गशीर्षस्य शुक्लायां श्रद्धयान्वितः ॥ ३७ ॥

अक्षयंतद्भवेत्सर्वं दाता शिवपुरं व्रजेत् । पितॄनुद्दिश्ययत्किञ्चिद्दीयतेभक्तितःशिवे

तृप्तास्तिष्ठन्ति ते तावद्यावदाभूतसम्प्लवम् ।

तमसा छादितादेवाः सम्बभूवुः समाकुलाः ॥ ३९ ॥

सम्भ्रान्तमनसस्सर्वे नकिञ्चिदपिमेनिरे । एतस्मिन्नन्तरेव्यासनरादित्यःस्वतेजसाः

उत्तस्थौ नररूपेण कुर्वन्वितिमिरा दिशः ।

नष्टे तमस्मि दैत्येऽपि प्रकाशे प्रकटे सति ॥ ४१ ॥

देवामुदमवापुस्ते दृष्ट्वाऽनन्तंनुलोचनैः । स्तुवन्तोविविधैःस्तोत्रैर्नररूपंदिवाकरम्

उत्तस्थौनररूपेण दीप्तोयस्माद्दिवाकरः । तेनास्यनामतेचक्रुर्नरदीपइतीश्वराः

यःपश्यतिनरोभक्त्या नरदीपं दिवाकरम् । मुच्यतेसर्वपापेभ्योयद्यपिब्रह्महाभवेत्

षष्ठ्यामर्कदिनेविप्र सप्तम्यामुपवासकृत् । दिनक्षयेऽथसंक्रान्तौ ग्रहणेविषुवत्यथ

कुण्डेस्नात्वाशुचिर्भूत्वा जपन्नियनमानसः । नरदीपंनरः पश्येत्स्तोत्रवादित्रमङ्गलैः

गन्धैर्धूपैस्तथादीपैर्नैवेद्यैर्विविधैस्तथा ।

गीतं वाद्यं पुरा कृत्वा प्रणम्याष्टाङ्गमेव च ॥ ४७ ॥

प्रातर्मध्येपराह्णे वा कृत्वार्कस्यप्रदक्षिणाम् । समुक्तस्सर्वपापैस्तु सप्तजन्मकृतैरपि

सूर्यकोटिप्रतीकाशैर्विमानैः सार्वकामिकैः ।

सूर्यलोकं प्रयात्याशु यत्सुरै रपि दुर्लभम् ॥ ४६ ॥

शक्रात्प्राप्यपुरायस्माद्भानुरत्रप्रतिष्ठितः ।नरेणैव प्रसादेन नरदीपस्ततो ह्ययम् ॥ ५०

तदैवास्यपुराव्यास! यात्रा शक्रेणनिर्मिता । आगमिष्याम्यहंपार्थसार्द्धंदेवैःसमाहितः

ज्येष्ठेऽतीतेद्वितीयायां नरदीपेतुसर्वदा । तत्राहमागतोज्ञेयो लोकैर्देवस्यवर्षणात्

ततोऽनन्तरमागम्य देवा ये त्रिदशालये । दृष्ट्वा देवं तथारूढं नरदीपंसुदीपनम् ॥ ५३

कृत्वायात्राश्चतेयान्तिदेवयात्रात्ययेततः । यःपश्येन्मानवोभक्त्यानरदीपंरथस्थितम्

सर्वपापविनिर्मुक्तः सूर्यलोके महीयते ।

रथयात्रामथो वक्ष्ये नरदीपस्य या पुनः ॥ ५५ ॥

तां कृत्वा चैव तत्पुण्यं मुनिभिः परिकीर्तितम् ।

ज्येष्ठेऽतीते द्वितीयायां रथस्थो हि दिवाकरः ॥ ५६ ॥

कुशस्थल्यां द्विजश्रेष्ठैर्बाहुक्षेपैः प्रणीयते ।

उत्तरां दिशमायान्तं यः पश्यति दिवस्पतिम् ॥ ५७ ॥

अग्निष्टोमस्ययज्ञस्य लभतेसोऽखिलंफलम् । निवृत्तंकेशवाक्रांद्योरथंपश्यतिमानवः ।
मुण्डीरस्वामिनोयात्रा कृतातेननसंशयः । रथमाकर्षतेयस्तु रज्ज्वाकर्षेणवैमुने! ।

कुलमुद्धरते सोऽपि पूर्वान्पितृपितामहान् ।
दक्षिणाभिमुखं यान्तं नरदीपं द्विजोत्तम! ॥ ६० ॥
ये संयताः प्रपश्यन्ति ते यान्ति च त्रिविष्टपम् ।
सूत्रेण वेष्टते क्षेत्रं रथं देवमथापिवा ॥ ६१ ॥

सर्वकामानवाप्नोतिकृतपुण्यस्सजायते । प्रदक्षिणांतुसूर्यस्य भक्त्याकुर्वन्तियेनराः
प्रदक्षिणीकृतातैस्तुसप्तद्वीपवसुन्धरा । प्रातरुत्थाययोभक्त्या मौनीयातिदिवाकरम्
दृष्ट्वातुपूर्वद्वारेण नमस्कृत्यद्विजोत्तम । प्रविश्य दक्षिणेनैव रथचक्रं प्रपूजयेत् ॥ ६४
तेनद्वारेण निष्क्रम्य प्रणिपत्यव्रजेत्ततः । पश्चिमंद्वारमाश्रित्य रथस्थंसूर्यमर्चयेत् ॥

चामरे च वितानञ्च घण्टां वापि निवेदयेत् ।
पूर्वद्वारे तु गौर्देया तथाऽश्वश्चैव दक्षिणे ॥ ६६ ॥

पश्चिमेचगजःप्रोक्त उत्तरेरथएवच । कुर्यादेवंतु योयात्रां रथदीपस्य मानवः ॥

गोसूर्यशिवशक्राणां स्वालोक्यं लभते सुखम् ।
प्रदक्षिणा महामेरोः कृता तेन भवेन्मुने! ॥ ६८ ॥

दद्याद्गवां सहस्रंयो व्यतीपातशनेनच । अश्वानाञ्च सहस्रेणयात्रायांतत्फलंलभेत्
नरदीपेरथारूढे वपनंकारयेत्तुयः । श्रिया न विच्युतिस्तस्य सूर्यलोके महीयते ॥

सूर्यस्य पुरतो वाप्यां मासं नित्यं विगाह्य च ।
यस्तमालोकते मर्त्यो दुस्स्वप्नं तस्य नश्यति ॥ ७१ ॥

भक्त्यायोनुदिनंव्यास! नरदीपंप्रपश्यति । उत्तमंस्थानमासाद्य पुत्रपौत्रसमन्वितः
प्रक्रीड्यबन्धुभिःसार्द्धं मृतः सूर्यपुरम्व्रजेत् । प्रणष्टे तिमिरेविप्र जातेसर्वत्र सुप्रभे
हतेऽन्धके महेशेन शूलेनत्रिशिखेनवै । प्रहृष्टाश्च सुरास्सर्वे ब्रह्मेन्द्रप्रमुखास्तदा ॥

शङ्खं दध्मौ तदा विष्णुः सुराणां हितकाम्यया ।
तत्र तीर्थमथोत्पन्नं शङ्खोद्धारणसञ्ज्ञकम् ॥ ७५ ॥

तत्र सन्निहितोविष्णुर्लिङ्गश्चैवचतुर्मुखम् । अनाद्यश्चैवविप्रेन्द्रलिङ्गस्यच समीपतः
देवस्य दक्षिणे भागे शूलेनालक्षितः स्थितः ।
चतुर्दश्यां तथाऽष्टम्यां ये पश्यन्ति जितेन्द्रियाः ॥ ७७ ॥
ते क्षीणाशेषपापौघाः प्राप्स्यन्ति परमां गतिम् ।
योगिनीनां बलिं यस्तु यथावत्सम्प्रदास्यति ॥ ७८ ॥
भूतप्रेतपिशाचाद्यैर्नासौकेनापिबाध्यते । द्वादशीं समुपोष्यैव स्नात्वादेवंजनार्द्दनम् ॥
यः पश्येच्छङ्खिनं देवं सोऽच्युतं स्थानमाप्नुयात् ॥ ८० ॥
यःस्थूलसूक्ष्मः प्रकटप्रकाशो यस्सर्वभूतो न च सर्वभूतः ।
विश्वं यतश्चैव हि विश्वहेतुर्नमोऽस्तु तस्मै पुरुषोत्तमाय ॥ ८१ ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
विष्णुमाहात्म्यवर्णनं नाम सप्तचत्वारिंशत्तमोऽध्यायः ॥ ४७ ॥

---

# अष्टचत्वारिंशोऽध्यायः

## अङ्गारेश्वरमाहात्म्यवर्णनम्

### सनत्कुमार उवाच

भिन्नेऽन्धके त्रिशूलेन ध्वनीरुद्रस्यनिर्गतः । तत्रोङ्कारःसमुत्पन्नो देवदेवोमहेश्वरः ॥
तत्रस्नात्वाशुचिर्भूत्वा समाधिनियमेनच । दृष्ट्वोङ्कारं महादेवं मुच्यते सर्वपातकैः
हत्वाऽन्धकं त्रिशूलस्तु भोगवत्याजलेययौ । दृष्ट्वाशूलंसुनेजस्कंहाटको विस्मयंगतः
पप्रच्छकेनकार्येण भवानिह समागतः । कथयामास शूलोसौ शङ्करेणाहमीरितः
अन्धकस्यवधार्थाय पापवृत्तेःसुदुर्मतेः । भित्त्वातमहमायातो भोगवत्याजले शुभे॥
गमिष्यामि पुनस्तत्र यत्र तिष्ठति शङ्करः ।
शूलोक्तं वचनं श्रुत्वा परमेशदिदृक्षया ॥ ६ ॥

हाटकश्शूलमार्गेण निर्जगामजवेनसः । वहुवक्त्रसमाकीर्णं सुप्रभं सुमनोहरम् ॥
तंदृष्ट्वा त्रिदशास्सर्वे शूलेशंहाटकेश्वरम् । प्रणम्य हृष्टरोमाणो यथाप्रोत्फुल्लपङ्कजम्

तुष्टुवुर्विविधैः स्तोत्रैर्ब्रह्मविष्णुपुरोगमाः ।
हाटकेश्वरनामासीत् पाताले यो व्यवस्थितः ॥ ६ ॥

निर्गतश्शूलमार्गेण तेनशूलेश्वरःस्मृतः । धूतपापश्चतीर्थञ्च देवदेवस्य चोत्तरे ॥ १० ।
तत्र पापस्सदैत्येन्द्रो धूतश्शूलेनवीर्यवान् । तेनतीर्थमिदंव्यास धूतपापम्प्रचक्ष्यते ॥

अष्टम्यां वा पौर्णमास्यां चतुर्द्दश्यां शनौ तथा ।
उपोष्य रजनीमेकां शिवभक्तो जितेन्द्रियः ॥ १२ ॥

धूतपापंतुयः पश्येद्देवदेवं महेश्वरम् । विमुक्तस्सर्वपापेभ्यः सप्तजन्मकृतैरपि ॥
कुलानांशतमुद्धृत्यशिवलोकंसगच्छति । कृत्वाभिषेकंयःपश्येत् पौषेमासिसवैनरः
शूलेश्वरप्रभावेण मुच्यते ब्रह्महत्यया । विमानानां सहस्रेण मृतोयाति परम्पदम्
इतिचान्धकशूलोयं यावद्भोगवतींगतः । तावत्समुत्थिताघोरा असुरारुधिरोद्भवाः

खड्गहस्ता महावीर्या अनेकशतसङ्ख्यया ।
चतुर्द्दिक्षु स्थितैर्घोरैर्हन्यमानो महेश्वरः ॥ १७ ॥

सिंहनादंमुमोचाथ पीडितस्तैर्दुरात्मभिः । सिंहनादेनतेपापा मूर्च्छिताःपतिताभुवि
पुनःसमुत्थिताजग्मुर्देवदेवं महेश्वरम् । वित्रस्ताश्च ततोदेवा ब्रह्मविष्णुपुरोगमाः

असाध्यांस्तांस्तथा मत्वा मन्त्रं कृत्वा हितैषिणः ।
ततो देवा विचार्याथ स्त्रीं सृजाम इति स्वयम् ॥ २० ॥
इत्युक्त्वोपादयामास ब्रह्मा हंसासनां शुभाम् ।
चतुर्वक्त्रां चतुर्हस्तां ब्रह्माणीरूपधारिणीम् ॥ २१ ॥

कुमारश्चैवकौमारीं मयूरवरवाहनाम् । रक्तमाल्याम्बरधरां शक्तिखड्गंचधारिणीम्
पुनःकुमारः कौमारीं पक्षीन्द्रवरवाहनाम् । कृष्णांकरालदशनां धर्मराजस्तथासृजत्
दैत्यदेहप्रमथिनीं दण्डमुद्गरधारिणीम् । ललाटलोचनां नीलां कपालकरभूषिताम्

सिंहाननधरां कृष्णां सर्वभूषणभूषिताम् ।

कर्तृहस्तां सखट्वाङ्गां खड्गखेटकधारिणीम् ॥ २५ ॥

चर्मास्थिकेशवपुषं चामुण्डामसृजत्प्रभुः । वटस्यनिकटेपूर्वं निर्मितालोकमातरः

ततो लोकेषु विख्याताः प्रत्यक्षा वटमातरः ।

तत्र स्नात्वा शुचिर्भूत्वा यस्तु पश्यति मातरः ॥ २७ ॥

समुक्तस्सर्वपापेभ्यो मातृलोकेमहीयते । सिंहनादोऽपिदेवेन कृतो यत्र महावने ॥

तत्र सिंहेश्वरो देवस्सर्वदुष्कृतनाशनः । दर्शनात्तस्यदेवस्य सिंहवत्सबलीभवेत् ॥

सिंहनादेकृते यत्र जातंकण्टकितस्वपुः । तत्र कण्टेश्वरोदेवो भक्तानां सर्वदासदा ॥

तत्र तीर्थे नरः स्नात्वा दृष्ट्वा कण्टेश्वरं शिवम् ।

गृहभूतपिशाचेभ्यो न भयं प्राप्नुयात्क्वचित् ॥ ३१ ॥

तत्रतामातरस्सर्वा आदिष्टास्तुहरेणवै । अन्धासुरस्य रौद्रस्य पिबध्वंरुधिरंद्रुतम्

एतस्मिन्नन्तरे व्यास! प्रज्वलज्ज्वलनोपमम् ।

अभयं शक्र!मा भैस्त्वं यत्रोवाचेति शङ्करः ॥ ३३ ॥

तत्र लिङ्गं समुद्भूतमभयेश्वरमुत्तमम् । वन्दितंदेवगन्धर्वैः सिद्धविद्याधरोरगैः

तत्र स्नात्वा शुचिर्भूत्वा सोपवासो जितेन्द्रियः ।

अर्चयेद्देवदेवेशमश्वमेधफलं लभेत् ॥ ३५ ॥

भूतप्रेतपिशाचेभ्यो न भयं विद्यतेक्वचित् । सिंहयुक्तेनयानेन शिवलोकंसगच्छति

अन्धकस्यतुयामाया रक्तासुरसमुद्भवा । मातृभिर्युध्यमानाभिः क्षयमाशुजगामसा

देव्यःपिबन्त्योरक्तं वै दैतेयतनुतस्स्रुतम् । तृप्तिंपरमां जग्मुर्नतुतृप्ताललाटजाः ॥

हतमायः शिघ्रकस्तु भिन्नशूलतनुच्छदः । उत्तराभिमुखं शूलमन्धकोऽकर्षयद्बली

संनिरुद्धोमहादेवो वारितोगणपेनसः । महाविनायकः ख्यातस्तस्माल्लोकेऽभवन्मुने

दर्शनात्तस्यदेवस्य नविघ्नैः पीड्यतेनरः । मासेमासेचतुर्थ्यांयो गणेशंपूजयेद्द्विज

नतस्यविघ्नं जायेदि ( तह ) हलोकेपरत्र च । स्वेदबिन्दुरथोतस्य ललाटादपतद्भुवि

तस्मादङ्गात्ततो जातो रक्तमाल्यानुलेपनः ।

आवन्त्ये विषये जातो लोहिताङ्गो धरासुतः ॥ ४२ ॥

अङ्गारकस्तुरक्ताक्षो महादेवसुतस्तथा । नामभिर्ब्राह्मणैस्स्तुत्वाग्रहमध्येऽपिरोपितः
तत्रतीर्थमथोत्पन्नमङ्गारेश्वरमुत्तमम् । ब्रह्मणास्थापितं लिङ्गं गणगन्धर्वसेवितम्
शुचिस्तत्र च यस्स्नाति नरस्त्वङ्गारवासरे ।
दृष्ट्वाऽङ्गारेश्वरं सोऽथ मुच्यते सर्वपातकैः ॥ ४६ ॥
चतुर्थ्यांमङ्गलदिने नक्तेचार्घंनिवेदयेत् । यावत्पूर्णाश्चतस्रः स्युस्तावत्कार्यंनप्रयत्नतः
पञ्चवैकरकाः कार्यास्ताम्रपात्रेणसंयुताः । गुडपिण्डमयाःकार्या रक्तवस्त्रसमन्विताः
रक्तचन्दनसंयुक्तारक्तपुष्पैश्च पूजिताः । तिलतण्डुलसम्पूर्णमेकं तत्रैवकारयेत् ॥
द्वितीयं लड्डुकैश्चैव तृतीयं पयसा तथा ।
तीर्थाम्बुभिश्चतुर्थश्च पञ्चमं मूलकैस्तथा ॥ ५० ॥
कृत्वाह्येवंविधानेन मन्त्रेणार्घ्यं निवेदयेत् । कुजायलोहिताङ्गाय ग्रहमध्यस्थितायच
कार्त्तिकेयानुरूपाय सुरूपायनमोनमः । शिवलालाटसम्भूत! धरणीगर्भसम्भव ॥ ५२
रूपार्थं त्वां प्रपन्नोऽस्मि गृहाणार्घ्यं नमोऽस्तु ते ।
ज्वलिताङ्गारवर्णाभ!स्निग्धविद्रुमभासुर! ॥ ५३ ॥
पुत्रार्थं त्वां प्रपन्नोऽस्मि गृहाणार्घ्यं धरात्मज ।
आवन्त्यमण्डले जातो धरण्याञ्च शिवेन वै ५४ ॥
धनंदेहियशोदेहि रूपंदेहि नमोऽस्तुते । एवं सम्पूजिते भौमे चतुर्थ्यां द्विजसत्तम
भुक्त्वा भोगांस्तथा पुत्रान् प्राप्य वै क्षितिमण्डले ।
मृतस्स्वर्गमवाप्नोति यावदिन्द्राश्चतुर्दश ॥ ५६ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डेऽ
ङ्गारेश्वरमाहात्म्यं नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

———

# एकोनपञ्चाशत्तमोऽध्यायः

## अन्धकवृत्तान्तवर्णनम्

सनत्कुमार उवाच

नास्तिशेषंयदारक्तंपीयमानञ्चरक्षसाम् । चामुण्डायास्ततोरक्तमभूदास्यञ्चभास्वरम्
कृष्णंभूतान्तकल्पान्तकरालदशनाधरम् । प्रज्वलद्वह्निकेशान्तंज्वलज्ज्वालनलोचनम्

घोरघुर्घुरनिर्घोषस्फीतफेत्कारविस्वरम् ।
तार्क्ष्यपक्षकृतापीडं तीक्ष्णदंष्ट्राङ्कुरोज्ज्वलम् ॥ ३ ॥

तस्मिन्मुखेकपालाग्रं निधायरुषितानना । अपिबद्रुधिरञ्चण्डी चण्डदोर्दण्डमण्डिता
तयापिबन्त्यादैत्येन्द्रशरीरेकृशतांगतः । सर्वाःसंहृत्यमायाया वलक्षीणमथाकरोत् ।
तीव्रंभयंसमासाद्य प्राणत्राणपरायणः । दृष्ट्वानान्यांगतिंलोके दैत्यस्तुष्टावशङ्करम्
कृताञ्जलिपुटोभूत्वारोमाञ्चितशरीरकः । सात्त्विकंभावमापन्नस्त्यक्त्वाचैवरजस्तमः

लोकानां कारणं देवं विबुधाधिपतिं विभुम् ।
शश्वद् बुध्यान्वितो भक्त्या निर्मलेनान्तरात्मना ।
श्लाघ्यं शिवं च तुष्टाव देवं चन्द्रार्द्धशेखरम् ॥ ८ ॥

कृत्स्नस्य योऽस्यजगतः सचराचरस्य कर्ता कृतस्य चतथा सुखदुःखदाता ।
संसारहेतुरपि यः पुनरन्तकालस्तं शङ्करं शरणदं शरणं व्रजामि ॥ ९ ॥
यं योगिनोविगतमोहतमोरजस्का भक्त्यैकतानमनसो विनिवृत्तकामाः ।
ध्यायन्ति चाखिलधियोऽमितदिव्यमूर्त्तिं तं शङ्करं शरणदं शरणं व्रजामि १०
यश्चन्द्रखण्डममलं विलसन्मयूखं बद्ध्वा सदा सुरधुनीं शिरसाबिभर्ति ।
वामाङ्कके विधृतवान्गिरिराजपुत्रीं तं शङ्करं शरणदं शरणं व्रजामि ॥ ११ ॥
यस्सिद्धचारणनिषेवितपादपद्मो गङ्गांमहोर्मिविषमां गगनात्पतन्तीम् ।
मूर्ध्नादधेस्रजमिव त्रिजगत्पुनन्तीं तं शङ्करं शरणदं शरणं व्रजामि ॥ १२ ॥

कैलासगोत्रशिखरेपरिकम्पमाने कैलासशृङ्गसदृशेनदशाननेन ।
यःपादपद्मपरिपीडनसेव्यमानस्तं शङ्करं शरणदं शरणं व्रजामि ॥ १३ ॥
दक्षाध्वरे तु नयने च तथा भगस्य पूष्णस्तथादशनपङ्क्तिमशातयद्यः ।
व्यस्तम्भयत्कुलिशहस्तमथेन्द्रमीशं तं शङ्करं शरणदं शरणं व्रजामि ॥ १४ ॥
येनासकृद्दितिसुताश्चदनोस्सुताश्च विद्याधरोरगगणाश्च वरैः समग्राः ।
संयोजिता मुनिवराः फलमूलभक्षास्तं शङ्करं शरणदं शरणं व्रजामि ॥ १५ ॥
एवंकृतेऽपि विषयेष्वपि सक्तभावा ज्ञानेनचश्रुनगुणैरपि येन युक्ताः ।
यं संश्रितास्सुखभुजः पुरुषाः भवन्ति तं शङ्करं शरणदं शरणं व्रजामि ॥ १६
ब्रह्मेन्द्रविष्णुमरुतां च सषण्मुखानां योऽदाद्वरान्सुबहुशोऽभगवान्महेशः ।
सूतश्च मृत्युवदनात्पुनरुज्जहार तं शङ्करं शरणदं शरणं व्रजामि ॥ १७ ॥
आराधितस्तु तपसा हिमवन्निकुञ्जे धूम्रावृतेन तपसाऽपिपरैरगम्यः ।
सञ्जीविनीमदितयोभृगवेमहात्मा तं शङ्करं शरणदं शरणं व्रजामि ॥ १८ ॥
क्रीडार्थमेव भगवान्भुवनानि सप्त नानानदीविहगपादपमण्डितानि ।
सब्रह्मकानि ससृजे सुकृताभिधानि तं शङ्करं शरणदं शरणं व्रजामि ॥ १९ ॥
यःसव्यपाणिकमलाग्रनखेन देवस्तत्पञ्चमं प्रसभमेव करालरन्ध्रम् ।
ब्राह्मयं शिरस्तरणिपद्मनिभश्चकर्त तं शङ्करं शरणदं शरणं व्रजामि ॥ २० ॥
ये त्वां सुरोत्तमगुरुं पुरुषा विमूढा जानन्ति नास्यजगतः सचराचरस्य ।
ऐश्वर्यमानविगमेन महेश! पश्चात्ते यातनामनुभवन्ति यथा हमेव ॥ २१ ॥
यःपठेत्स्तवमिदं शुचिकर्मा यः शृणोति सततं शिवभक्तः ।
विप्रसंसदि सदाशुभकर्मा स प्रयाति शिवलोकमखण्डम् ॥ २२ ॥

सनत्कुमार उवाच

तस्यैवंस्तुवतोदेवः शूलपाणिर्वृषध्वजः । पूर्णेवर्षशतस्यान्ते प्रीतःप्रोवाचशङ्करः ॥
पुत्र!तुष्टोस्मिभद्रन्तेजातस्त्वंनिर्मलोऽधुना। दिव्यंददामितेचक्षुर्वै पश्यमांविगतज्वरः
यच्च ते मनसा वापि किञ्चिच्चाकाङ्क्षितं फलम् ।

तत्ते ( तत्तत् ) सर्वं प्रदास्यामि ब्रूहि दानवसत्तम! ॥ २५ ॥

अन्धक उवाच

ब्राह्मश्च वैष्णवमैन्द्रं वापद्मावृत्तिलक्षणम् । विदितं मम तत्सर्वं मनागपिनकाङ्क्षये
यदितुष्टोऽसिदेवेश गाणपत्यंददस्वमे । सविशेषं विशुद्धञ्च तदक्षरञ्चसर्वदा ॥ २७

शिव उवाच

अमरोजरयात्यक्तःसर्वदुःखविवर्जितः । भविष्यसिगणाध्यक्षस्सर्वलोकनमस्कृतः
कामरूपोमहायोगी महासत्त्वोमहाबलः । अणिमादिगुणैर्युक्तः प्रियश्च ममसर्वदा

सनत्कुमार उवाच

ततश्च सोऽन्धकः श्रीमान् वराँल्लब्ध्वा सुदुर्लभान्
महादेवगणो भूत्वा तत्रैवान्तरधीयत ॥ ३० ॥

गतेऽन्धके ततो देव्यो ब्रह्माण्याद्यास्समागताः । स देवोयत्रभगवानन्धकस्यवरप्रदः
तास्तुष्टुवुर्महादेवमथतुष्टो महेश्वरः । चामुण्डापि महेशेन समाश्वस्ताशिवाभवत्
शङ्करंप्रणतंदृष्ट्वातासामग्रेव्यवस्थितम् । ब्रह्मादयोऽपि ते देवास्तुष्टुवुर्विविधैस्स्तवः

प्रशान्तास्ता यदा दृष्टाः शम्भुना रुधिराशनाः ।
तदावोचदिदं वाक्यं तासां स्थित्यर्थमुत्तमम् ॥ ३४ ॥
आवन्त्यविषये सर्वा यस्माज्जाता महाबलाः ।
आवन्त्यमातरस्तस्मात् ख्याता लोके भविष्यथ ॥ ३५ ॥
अवन्त्यां प्रीतिसम्पन्नास्सर्वपापप्रणाशिकाः ( नीः ? ) ।
स्थिरा वसन्त्यो लोकानां वरदाश्च भविष्यथ ॥ ३६ ॥
श्रावणस्य तु मासस्यामावस्यायां समाहिताः ।
ये द्रक्ष्यन्ति सदा भक्त्या ते गां लोका महोदयाः ॥ ३७ ॥

अपुत्रोलभते पुत्रान् धनार्थी लभते धनम । रूपवान्सुभगोभोगी सर्वशास्त्रविशारदः
हंसयुक्तेनयानेन पितृलोके महीयते । पुरीमिमाञ्चरक्षध्वं कल्पे कल्पे क्रमेण तु
एवमुक्त्वाच देवेशो गतःकैलाशपर्वतम् । स्तूयमानोगणैरौद्रैर्दैत्यामरगणेश्वरैः ॥

९

असुरसुरगणानां नायकस्यानुकीर्त्तिं कथयति कथनीयां श्रद्धया यः शृणोति ।
सकलसुखनिधानं रुद्रलोकं सकान्तं सुरगणदनुनाथैरर्चितं यात्यनन्तम् ॥ ४१ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डेऽन्धकवृत्तान्तं नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

---

## पञ्चाशत्तमोऽध्यायः

### महाकालमाहात्म्यवर्णनम्

व्यास उवाच

भगवन्!क्षेत्रमाहात्म्यंकथितञ्चयथातथम् । तीर्थानामुत्तमंतीर्थंपुण्यानांपुण्यवर्द्धनम्
कतिसन्त्यत्रतीर्थानिलिङ्गानिचतथाकति । कथयस्वप्रसादेनपृच्छतोममसाम्प्रतम्

सनत्कुमार उवाच

षष्टिकोटिसहस्राणि षष्टिकोटिशतानिच । महाकालवनेव्यास! लिङ्गसंख्यानविद्यते
अकामोवासकामोवा जायते योऽत्रमानवः । महाकालवनेरम्ये शिवलोके महीयते
कृतकामादितीर्थानिप्रासादायतनानिच । तेषुस्नात्वाशुचिर्भूत्वा शिवलोकेमहीयते
पुण्यानि सर्वतीर्थानिसिद्धक्षेत्राणिसर्वतः । तेषांमुख्यतमंविद्धिक्षेत्रंतीर्थंतथोत्तमम्
यः शृणोति महाभक्त्या स याति परमां गतिम् ॥ ७ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे महाकालमाहात्म्यवर्णनं नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

# एकपञ्चाशत्तमोऽध्यायः

## उज्जयिन्याःकनकशृङ्गेतिख्यातिहेतुवर्णनम्

व्यास उवाच

भगवन्भवता सर्वं भवभीतिविनाशकम् ॥ १ ॥

ईश्वरस्थानमाख्यातं समंतात्साग्रयोजनम् । यत्रक्षेत्रेमृतामर्त्या सदाचारास्तथेतरे
विमानस्थाःपुरेनूनमैश्वरे ते वसन्ति च । यत्र कीटपतङ्गाद्या मृतायान्तिपरांगतिम्
किं तीर्थंपुण्यमन्यच्च महाकालवनादृते । तस्माद्ब्रूहिममैकंतु प्रश्नंतथ्येनसाम्प्रतम्
कथं कनकशृङ्गेतिख्याताह्येषापुरामुने! । कुशस्थलीकथन्नामतथाऽवन्तीकथंस्मृता
पद्मावती कथं साधो! कथमुज्जयिनी तथा । नाम्नांहेतुमथाप्येषां ब्रूहित्वंमुनिसत्तम

सनत्कुमार उवाच

शृणु व्यास प्रवक्ष्यामि यथापूर्वं विरञ्चिना । कथितंवामदेवाय गौरकल्पे पुरातने
महेश्वरश्च भगवान् विधाता चात्र हेतुषु । ( महेशेन भगवता विधिश्चैवात्रहेतुतः )

व्यास उवाच ( ? )

जगत्यां स्वश्च्युतानाञ्च कुतोनिवसतां सुखम् ॥ ८ ॥

स्वर्गप्राप्तिश्च भवति स्वेच्छाचारविहारिणाम् ।

कोऽति पुण्यतमः श्रेष्ठः प्रदेशः पापहारकः ॥ ९ ॥

कुतोनिर्वृतिर्भगवन्जायतेवसतांक्वचित् । वसतामपिलोकेऽस्मिन्नैहिकीपारलौकिकी

एतन्मे भगवन्ब्रूहि हितार्थं सर्वदेहिनाम् ।

सनत्कुमार उवाच

एवमादौ पुराकल्पे प्रोक्तःपृष्टः स शम्भुना ॥ ११ ॥

प्रोवाच पार्वतीकान्तं प्रभुः प्रीतः पितामहः । भगवन्सर्वकर्तात्वं सर्वदर्शीसदाशिवः
अजानन्निवत्वं सर्वं मांपृच्छसिसनातन । यत्रकल्पान्तकोवह्निरधिज्वालःप्रतिष्ठितः

स त्वमेव महाकाल सर्वं चज्ञायते त्वया । नाथ!ये मानवास्तत्र सदाचारास्तथापरे
निवसन्तिनतेमर्त्या सुरास्ते न च मानुषाः । लभन्तेचपुनः स्वर्गं मृतावैकालपर्यये
वर्ततेचपुरीतत्ररम्यहर्म्यासुशोभना । तस्यांभान्तिचिचित्राणिहर्म्याणिविविधानिच

स्वर्णश्रृङ्गाश्च प्रासादाः विहिता विश्वकर्मणा ।
देवास्सन्ति सदा यत्र तर्थानी विविधानिच ॥ १७ ॥

पूर्वकल्पेस्थितोऽहञ्च यत्रत्वं केशवस्तथा । तामेवचपुरींद्रष्टुं सर्वेलोकाह्यवन्तिकाम्
तथादेवर्षयःसिद्धा यक्षकिन्नरदानवाः । आजग्मुस्स्थाणुनासार्द्धंवेधसा पद्मयोनिना
तथैवचवरानार्य्यो देवानामपिवल्लभाः । समापेतुःसहस्राणि द्रष्टुमत्यद्भुताम्पुराम्
आगत्यचतदादेवः सहदेवैर्महेश्वरः । वीक्षितुंनगरींरम्यामपश्यदावृतांतथा ॥ २१
प्रासादैस्स्वर्णश्रृङ्गाढ्यैर्मणिरत्नविभूषितैः।विश्वरूपोहिभगवान्राजाविश्वैकनायकः
तत्रास्ते शोभनेदिव्येप्रासादेमणिभूषिते । सेव्यमानस्सुरैस्सिद्धैर्मुनिविद्याधरोरगैः

ततो महेशश्च पितामहश्च समेत्य तं विश्वपतिं ववन्दतुः ।
समर्चितौ तौ विधिना समादरात् सहानुगावागमनंत्वपृच्छत् । २४ ॥
किमागतौ वै त्रिदिवान्महीतलं सहानुगावीशकजेश कथ्यताम् ।
ततस्तु तावूचतुरब्जजेश्वरौ भवान्नहो यत्र च तत्र नौरतिः ॥ २५ ॥
त्वया विना नैव सुरालये सुखं मही तले वापि रसातलेऽस्ति ।
कदा त्वया काञ्चनशेखरापुरी निवेसिता वेश्मवती विचित्रा ॥ २६ ॥

हरिरुवाच

त्वदर्थमेवेश विशेषशालिनी सृष्टाहिवै सर्वगुणाकरा मया ।
प्रयच्छ स्थानं त्वमिहावयोरिह ततो जगादाशु प्रसन्नमानसः ॥ २७ ॥
ददाम्यभीष्टं युवयोरिहालयं प्रजापतेरुत्तरतस्तव स्थितिः ।
महेश्वर!त्वं व्रजदक्षिणालयं स्थानं सुदत्तं युवयो सुशोभनम् ॥ २८ ॥

महाकालोह्यघोज्वाल अगादात्मप्रभुम्मदा । गणैरनेकसाहस्रैरावृतः परमेश्वरः॥
क्रीडितां नगरींसृष्टां सर्वभूतहितैषिणा । मयायद्वयुवयोर्दत्ता विहायाचलमात्मनः

भवद्भ्यां हेमश्रृङ्गेति यस्माच्च समुदीरिता ।
पुरी कनकश्रृङ्गेति लोके ख्याता भविष्यति ॥ ३१ ॥
एवं कनकश्रृङ्गेति प्रथमन्नाम कथ्यते । जपन्तश्च स्थितायत्र ब्रह्मविष्णु महश्वराः ॥
नित्यं रमन्ति भक्तानां सर्वाभीष्टफलप्रदाः ॥ ३३ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे कनकश्रृङ्गाभिधानवृत्तान्तवर्णनंनामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

---

# द्विपञ्चाशत्तमोऽध्यायः

## कुशस्थलीनामकथाहेतुवर्णनम्

सनत्कुमार उवाच

श्रृणु व्यास!यथेयन्तुप्रोच्यते हि कुशस्थली । कल्पेतत्पुरुपे पूर्वंवेदविद्भिर्मनीषिभिः
वेधसासृजितंविश्वं दैत्यदानवराक्षसम् । अन्योन्यमदसंमत्तमन्योन्यद्वेषिणंसदा ॥
देवाश्चदानवासङ्ख्येनित्यंस्पर्द्धासमन्विताः।मनुष्यामनुजैःसार्द्धंसिद्धाविद्याधरैस्सह
चारणाःकिन्नरैस्सार्द्धंवर्तन्तेद्विषतत्पराः । युद्धंकुर्वन्तिसततं संविस्पष्टार्थयागिरा
सर्वेचैवंतुबलिनो दुर्बलैर्मनुजै सहः । पशवः पशुभिस्सार्द्धं पक्षिणस्सह पक्षिभिः
एवमन्योन्यमन्यैश्चनिर्मर्यादमिदञ्जगत् । तस्माद्विश्वस्यकर्तारंविष्णुंविश्वेश्वरंपरम्
व्रजामि शरणं देवं शरणार्त्तिहरं हरिम् ।एवं मनसि सन्धाय दध्यौध्यानेन माधवम्
ततो ध्यातोमहायोगी विश्वरूपधरोहरिः । लोहदण्डधरःश्रीमानिदमाहपितामहम्
ब्रह्मन्ध्यातस्त्वया सम्यक् ध्यानयोगेन पश्य माम् ।
समायान्तं यथाध्यातं जनतां पातुमुद्यतम् ॥ ९ ॥
ततो धाता निशम्यैतत्त्यक्त्वा ध्यानमवेक्ष्य च ।
समुत्थायैकमनसा नमश्चक्रेऽर्चयन्पुरः ॥ १० ॥

पाद्येनाचमनायेन मधुपर्केणकेशवम् । पूजयित्वा पुनर्वाक्यमुवाचाच्युतमब्जजः॥

ब्रह्मोवाच

देवदेवजगन्नाथ जगत्सृष्टमिदं मया। ऋतेत्वया हरेविष्णो! नैवावस्थातुमर्हति॥

शास्ता त्वमस्य विश्वस्यविशुद्धस्य च नापरः।
त्वत्तोस्तीदं जगत्सर्वं तस्मात्त्वमनुशासय ॥ १३ ॥

देवदानवगन्धर्वाः सयक्षोरगराक्षसाः। परस्परंविनिघ्नन्ति तांश्चत्वंरक्षितुंक्षमः॥

त्वामृने पुण्डरीकाक्ष! व्यापिताशेषविग्रहम् ॥ १४ ॥
त्वमस्य विश्वस्य चराचरस्य स्थितःसदाप्राणभृदात्मरूपी ।
त्वया धृतं सर्वमिदंजगद्वै यतस्ततोऽसि त्वमुपेन्द्रसञ्ज्ञः॥ १५ ॥
प्रवेशनव्याप्तिविधायकोऽसि त्वमुच्यसे विष्णुरतो मुनीन्द्रैः।
निवासितं विश्वमिदंत्वयायद्वसेश्चधातोरिति वासुदेवः॥ १६ ॥
तवानुगं विश्वमिदं विभुस्त्वमशेषविश्वस्य विभासि राजा।
सेनानुरूपं जगदेव यस्मादतः स्मृतस्त्वं किल विश्वसेनः॥ १७ ॥
विलेखनादस्य चराचरस्य कृषेश्च धातोस्त्वमतोऽसि कृष्णः।
जितन्त्वयादेवजगत्त्रयं यज्जयेश्च धातोस्त्वमतोऽसिजिष्णुः॥ १८ ॥
तस्मात्समस्तं ग्रहलोकपालं जगत्तवैतह्लयसर्वकालम्।
त्वमस्य सर्वस्य भवादिराजा ( जस्त ) वास्तुभद्रासनमद्वितीयम् ॥ १९ ॥
प्रदक्षिणावर्त्तन अस्ति शङ्खः करस्थितोऽतः पुरुषोत्तमोऽसि।
सुदर्शनन्नामतवास्तिचक्रं चक्री ह्यतस्त्वं ह्यपरस्त्वचक्री॥ २० ॥
ध्वजोऽस्ति देवस्यसुपर्णसेवितस्तथासुवर्णच्छदनोस्तिवाहनम्।
तुरङ्गमाःसन्ति तवारिसंहसस्तथा हृषीकेश!सुमत्तदन्तिनः॥ २१ ॥
किरीटनिष्काङ्गदकर्णपूर केयूरहारोत्तमहेमसूत्रैः।
विचित्रवस्त्रोत्तररक्तमाल्यैर्विभूषितस्त्वं भवभीमसेन (ः) ॥ २२ ॥
श्रिया कदाचिच्च न मुच्यते भवान् भवन्ति ते नित्यमनन्तसम्पदः।

तवानुगा भक्तिरिहास्तु वै सतांमुकुन्द भक्तो!त्वमतः प्रसीद ॥ २३ ॥

सनत्कुमार उवाच

स एव मुक्तस्तु पुरो दिवौकसां विभुःप्रसन्नस्त्विदमब्रवीद्धरिः ।
विरञ्चि मे दर्शय शुद्धमण्डलं त्वया विमुक्तं च सदाशिवं विभो! ॥ २४ ॥
स्थिरःस्थितोयत्र जगत्करोम्यहं ततो विरञ्चिःकुशमुष्टिमाददे ।
पवित्रदेशस्य निदर्शनाय जगाम पुण्यश्च ( ञ्च्य ) वनाश्रमं तदा ॥ २५ ॥
संमन्त्र्य देवैःसहितोमुकुन्दस्ततः स्थलीमुच्चतरामवाप्य वै ।
पितामहः केशवमाहत्वादरात्त्वदुद्भुवा यात्रपवित्रमण्डलम् ॥ २६ ॥
त्वमेवविष्णुर्विबुधार्चितस्सदास्मृतोमुनीन्द्रैःस च विष्टरश्रवाः ।
निषीदविश्वेशकुशैः कुशेश्वर! तदाश्रितो माधव एवमुक्तः ॥ २७ ॥

ततो विधाता भगवान् पुराणःपुरुषोत्तमः ।
कुशस्थली तु तस्यास्तु चक्रतुर्नाम तावुभौ ॥ २८ ॥
तत्र विश्वपतिः श्रीमान् विश्वेशो विश्वकृद्विभुः ।
विश्वं शशास विश्वात्मा सर्वविश्वविनायकः ॥ २९ ॥
एवं कुशस्थली ख्याता हेमश्रृङ्गेति या पुरा ।
व्याप्ता कुशैर्यतो धात्रा कुशस्थली ततः स्मृता ॥ ३० ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
कुशस्थलीनामहेतुकथनं नाम द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

---

# त्रिपञ्चाशत्तमोऽध्यायः

## अवन्तीक्षेत्रमाहात्म्येऽनन्त्यभिधानकथामाहात्म्यवर्णनम्

सनत्कुमार उवाच

पुरा चेशानकल्पे तु स्मृताऽवन्ती यथापुरी। तथाशृणुसुरैःसर्वैर्दैत्यसैन्यपराजितैः
आश्रितम्मेरुशिखरंवनकुञ्जगुहावृतम्। तत्र गत्वाद्विजश्रेष्ठ! मन्त्रंचक्रुःसमुद्यताः॥
अन्योन्यञ्च समासाद्य समभ्यर्च्य परस्परम्। जग्मुःसर्वेसुरगणा यत्रब्रह्माप्रजापतिः
वेदयाञ्चक्रिरेसर्वं तत्रागमनकारणम्। तेषांतद्वचनं श्रुत्वा देवानां स प्रजेश्वरः॥

जगाम त्रिदशैःसाकं देवदेवं महेश्वरम्।
स चापि ह्यगमत्तत्र वैकुण्ठे धाम यत्र वै॥ ५॥

ऋद्धिसिद्धिप्रदंनित्यं मुनिचारणसेवितम्। किन्नरैर्गीयमानञ्च ह्यप्सरोगणसेवितम्
ऋषिभिर्भार्गवाद्यैश्च देवर्षिनारदादिभिः। सिद्धगन्धर्वमुख्यैश्च कुमारैःसनकादिभिः
प्रजापतिगणाकीर्णं मानवैश्चचतुर्द्दशैः। वसुभिर्विश्वदेवैश्च पितृणामुत्तमैर्गणैः॥
सदासेव्यंसदाचारैःपुण्यवद्भिर्जनैस्तथा। दिव्यंदिव्याद्यभिप्रायंदिव्यपादपशोभितम्
मणिभीरत्नसोपानैःसरोदिव्यंसुशोभितम्।हंसकारण्डवाकीर्णंयत्रतिष्ठतिभास्वरम्
षडूर्मिरहितंस्थानं निर्वैरपशुपक्षिकम्। तत्र गत्वा सुराः सर्वे वासुदेवदिदृक्षया॥

स्तुतिमारेभिरे कर्तुं देवदेवजगत्पतेः।

देवा ऊचुः

नमोऽनन्ताय बृहते कूर्माय वै नमोनमः॥ १२॥

नृसिंहरूपायोग्राय नमोवाराहरूपिणे। राघवायच रामाय ब्रह्मणेऽनन्तशक्तये॥ १३
वासुदेवाय शान्ताय पशूनाम्पतयेनमः। नमोबुद्धायशुद्धायकल्किम्लेच्छान्तकारिणे

इति स्तवाभियुक्तानां वागुवाचाशरीरिणा।
श्रूयताम्भोसुरास्सर्वे सम्भूयैकाग्रमानसाः॥ १५॥

महाकालवनंरम्यं ब्रह्मर्षिगणसेवितम् । तत्रपुण्यापुरीह्येका सर्वकामफलप्रदा ॥१६॥

नाम्ना कुशस्थली रम्या सिद्धगन्धर्वसेविता ।
कल्पादौ कल्पमध्ये वा यत्र सन्निहितो हरः ॥ १७ ॥

कल्पक्षयेक्षयंयान्तिस्थावराणिचराणिच । तीर्थानिचैवसर्वाणिपुण्यान्यायतनानिच
सरितःसागराःसर्वे सरांस्युपवनानिच । औषधीर्वृक्षवल्यश्च यन्त्रमन्त्रशुभाशुभम्
ज्योतींषिचन्द्रसूर्यौच सर्वंविष्णुमयंजगत् । तेषांबीजंचपुण्यञ्च जीवकर्माशयंतथा
सर्वमादायभगवाञ्छङ्करस्तत्रतिष्ठति । सर्वतीर्थमयीगङ्गा सर्वदेवमयोहरिः ॥
सर्वयज्ञमयोवेदःसर्वधर्ममयीदया । रेवाचसरितांश्रेष्ठा भुविपुण्यमयाधिका ॥ २२ ॥
तस्माद्धितकरंक्षेत्रं कुरूणांवैसुरोत्तमाः । तस्माद्दशगुणंमन्ये प्रयागंतीर्थमुत्तमम् ॥

तस्माद्दशगुणा काशी काश्या दशगुणा गया ।
ततो दशगुणाप्रोक्ता कुशस्थल्यतिपुण्यदा ॥ २४ ॥

उपरागसहस्राणि व्यतीपातायुतानिच ।
अमालक्षं कुशस्थल्याः कलां नार्हन्ति षोडशीम् ॥ २५ ॥

लक्षमिन्दुक्षयेदानं सहस्रंचायनद्वये । व्यतीपातेचकोटिःस्याद्राकायाञ्चह्यनन्तकम् ॥

तस्माद्धितकरी देवाः पुरी ह्येषा कुशस्थली ।
अनन्तानन्तसङ्ख्यातं दानं किञ्चित्कृतंनरैः ॥ २७ ॥

श्रूयताम्भोसुरश्रेष्ठाःसर्वंतच्चाक्षयंभवेत् । तस्मात्सर्वप्रयत्नेन यूयंयातहिमाचिरम् ॥
क्षीणपुण्याभवन्तोवैबाधन्तेतेन वःसुराः । महाकालवनेरम्ये पुरीह्येषाकुशस्थली ॥

तत्र गत्वा भवन्तोवै स्नानदानादिकम्भुवि ।
आचरध्वं सुविधिना पुण्यात्स्वर्गमवाप्स्यथ ॥ ३० ॥

एतच्छ्रुत्वा वचस्तस्याः वाण्याश्चाकाशगाहिते ।
प्रणम्य शिरसातस्यै ब्रह्माभवपुरोगमाः ॥ ३१ ॥

पुनर्जग्मुसुरासर्वे यत्रमाहेश्वरंवनम् । पुरीञ्चैवद्विजश्रेष्ठ! सर्वकामफलप्रदाम् ॥ ३२ ॥
चतुर्वर्णसमाकीर्णामृषिगन्धर्वसेविताम् । पुण्यवद्भिर्जनैः पूर्णांसिद्धचारणसेविताम्

दरिद्रोऽन्धजडोमूर्खो न रोगीनचमत्सरी। नव्याधिर्नापकारीच जनःक्वचित्प्रदृश्यते
दान्ताःशान्ताःसुशीलाश्च जरारोगविवर्जिताः।
स्वधर्मनिरतानित्यं सदाचारातिथिप्रियाः॥ ३५॥
निवसन्तिनरायत्र नार्यश्चैवपतिव्रताः। महोत्सवसुगीतानि हव्यकव्यंगृहेगृहे॥
इदृशीश्चपुरींदृष्ट्वा देवाहर्षपरंगताः। तत्रतीर्थंसमाख्यातं नाम्नापैशाचमोचनम्॥ ३७
पुण्यवद्भिःसदा सेव्यं सर्वतीर्थनिषेवितम्।
तस्मिन्स्नात्वा च जप्त्वा च हुत्वा दत्त्वा च देवताः॥ ३८॥
पुण्यं चाप्यक्षयं लब्ध्वा पुनर्याता सुरालयम्।
जित्वा सुरान्महादुष्टान् स्थानं प्राप्ता स्वकं स्वकम्॥ ३९॥
येऽवन्त्यान्तुमहाभागास्नानंदानंतथार्चनम्। हवनंतर्पणंचैव तत्सर्वंस्यादनन्तकम्
तस्मात्सर्वप्रयत्नेन एतत्कार्यंसदाबुधैः। देवतीर्थौषधीबीजं भूतानाञ्चैवपालनम्॥
कल्पेकल्पेचयस्यांवैतेनावन्तीपुरीस्मृता। अद्यारभ्यपुरीह्येषानाम्नावन्तीकुशस्थली
इत्युक्त्वा वै तदा देवाःस्वधामपरमं गताः।
तदारभ्यद्विजश्रेष्ठ! ह्यवन्ती भुवि विश्रुता॥ ४३॥
यएताश्चकथांदिव्यांपुण्यांवैपापहारिणीम्। शृणुयाच्छ्रावयेद्योवैसर्वपापैःप्रमुच्यते
अपुत्रोलभतेपुत्रमधनोधनमाप्नुयात्। वाजपेयसहस्राणां राजसूयशताधिकम्॥
पुण्यं लब्ध्वा नरो नित्यं शिवलोके महीयते॥ ४६॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
ऽवन्त्यभिधानकथनंनामत्रिपञ्चाशत्तमोऽध्यायः॥ ५३॥

———

## चतुःपञ्चाशत्तमोऽध्यायः

### उज्जयिनीतिप्रथाहेतुवर्णनम्

सनत्कुमार उवाच

एतस्मिन्नन्तरेऽन्यासयथासोज्जयिनीस्मृता ।तथाहंसम्प्रवक्ष्यामिश्रूयतांतत्समाहितः
त्रिपुराख्योमहादैत्यो सर्वदैत्यजनेश्वरः । तपस्तेपेसुदुर्द्धर्षं ब्रह्मणस्तुष्टिकारणात् ॥

आतपे चाग्निसेवी वै प्रावृष्याकाशसुस्थिरः ।
दमयित्वा तदात्मानं शीतकाले जलाशये ॥ ३ ॥

शीर्णपत्रजलाहारो वायुभक्षीनिराश्रयः । गायत्रीव्रतमास्थाय त्यक्तसर्वपरिग्रहः ॥
एवंवर्षसहस्रंतु तपस्तत्तंसुदुश्चरम् । पूर्णेवर्षसहस्रेतु ब्रह्माप्रीतमनाब्रवीत् ॥ ५ ॥
व्रियताम्भोसुरश्रेष्ठवरंमत्तोऽभिकाङ्क्षितम् । तत्सर्वंसाम्प्रतंलोकेवरंतुभ्यंददामिते
एवमुक्तःसविधिना दैत्यस्त्रिपुरसञ्ज्ञितः । उवाचवचनंसद्यो ब्रह्माणंशंसितव्रतम् ॥

त्रिपुर उवाच

यदितुष्टमनाः ब्रह्मन्वरम्मेदातुमिच्छसि । देवदानवगन्धर्वपिशाचोरगराक्षसैः ॥
अवध्योऽहं भवेयं वै वरमेतद्वृणोम्यहम् ।

ब्रह्मोवाच

एवं भवतु भोवत्स! विचरस्वाकुतोभयम् ( यः ) ।

इत्युक्त्वासहसाब्रह्मातत्रैवान्तरधीयत । तदारभ्यमहादैत्यो देवानांकदनंमहत् ॥
चकारकोपपूर्णोवै पूर्ववैरमनुस्मरन् । वासयित्वायत्रतत्र ग्रामाणिनगराणिच ॥

तत्र ये न्यवसन्सर्वे वर्णाश्रमपराजनाः ।
तेषां वै कदनञ्चक्रे नानोपायेन पापधीः ॥ १२ ॥

तस्मिन्पुरेदुष्टवासे ब्राह्मणावेदपारगाः । नजुह्वत्यग्निहोत्रंवै सोमपानंनकर्हिचित् ॥
कुतश्चित्सुकृतंकर्म नैवकुर्वन्तिभैरवाः । स्वाहाकारस्वधाकारवषट्कारविवर्जिताः

नोत्सवो दृश्यते गेहे कस्यचिद् भुवि विस्तृतम् ।
देवतायतनं नास्ति यत्र नो शिवपूजनम् ॥ १५ ॥
नास्ति यज्ञो न दानानि न गोब्राह्मणपूजनम् ।
सदाचारो जनो नास्ति दयादानविवर्जितः ॥ १६ ॥
नदानीनोपकारीचतपस्वीनैवदृश्यते। एवंव्यासपुरेतस्मिन्नष्टप्रायमिदंजगत् ॥ १७ ॥
प्रजानांब्राह्मणामूलं वेदमूलाहिब्राह्मणाः । वेदमूलपरायज्ञायज्ञमूलाहिदेवताः ॥
तस्माद्व्यासहतंसर्वं कृतंनेनदुरात्मना । तेनदेवगणाः सर्वे हृतप्रायाहतौजसः ॥
विचरन्ति यथा मर्त्या भुवि तेन पराजिताः ।
अन्योन्यकृतसन्धाना मन्त्रं कृत्वा समाहिताः ॥ २० ॥
जग्मुस्तेतत्रयत्रास्ते प्रजापतिरकल्मषः । त्रिदशाः कथयामासुरात्मव्यसनकारणम्
तज्ज्ञात्वा सहसोत्थाय ब्रह्मा लोकपितामहः ।
जगाम त्रिदशैःसार्द्धं महाकालवनोत्तमम् ॥ २२ ॥
यत्रास्तेसततंदेव उमयासहितःशिवः । यत्रावन्तीपुरीदिव्या सर्वतीर्थनिषेविता
तत्रागत्यसुरैःसाकं स्वयम्भूश्चतुराननः । स्नानंदानंजपंहोमं कृत्वारुद्रसरेतदा ॥
पूजयित्वा महाकालं ब्रह्मा वचनमब्रवीत् ।

ब्रह्मोवाच

देवदेव!महादेव! भक्तानामभयङ्कर! ॥ २५ ॥
श्रूयताम्भोसुरश्रेष्ठ! देवकार्यमनुत्तमम् । त्रिपुरोनामदैत्येन्द्रो देवानांकदनंमहत् ॥
करोतिसततंदैत्यो वेदब्राह्मणनिन्दकः। वासयित्वापुरत्रीणिविस्तीर्णानिचरत्यथ
तत्र स्थितानि भूतानि नाशं यान्ति दुरात्मना।
एवं कृत्वा प्रजाःसर्वाः क्षयं नीताश्चराचराः ॥ २८ ॥
उद्वासितानिद्वीपानिग्रामाणिनगराणिच। ऋषीणामाश्रमाःसर्वेयतीनामाश्रमास्तथा
एवं कृत्वा सुराःसर्वे भ्रष्टराज्याः पराजिताः ।
विचरन्ति यथा मर्त्यास्त्रिपुरेण दुरात्मना ॥ ३० ॥

ब्रह्म ( मत्तो ) लब्धवरो नित्यं व्रजत्येवाकुतोभयम् । ( यः )
तस्मात्सर्वप्रयत्नेन वधस्तस्य विचिन्त्यताम् ॥ ३१ ॥
इति श्रुत्वा वचस्तस्य ब्रह्मणःशंसितात्मनः ।
चिरं ध्यात्वा महादेवो ब्रह्माणं तमुवाचह ॥ ३२ ॥

महादेव उवाच

श्रूयताम्भोसुरश्रेष्ठा ब्रह्मशक्रपुरोगमाः । जयोपायंकरिष्यामिदैत्यस्यास्यदुरात्मनः
तपश्चरतयूयंवै आत्मनोजयकाङ्क्षिणः । अवन्त्यांयद्द्युतंदत्तंतत्सर्वंचाक्षयम्भवेत्
इत्युक्त्वासर्वदेवानां तत्रैवान्तर्हितःशिवः । गत्वाश्मशाननिलये भूतप्रेतनिषेविते
जयार्थंतस्यदैत्यस्य त्रिपुरस्यदुरात्मनः । उपासाञ्चक्रिरेतत्र चामुण्डायाःसुरेश्वराः
महिषैश्चमहामेध्यैः पशुपुष्पार्घतर्पणैः । बलिभिर्विविधैर्दानैर्धूपदीपाग्निहोत्रकैः
पूजयित्वातदादेवीं तामीडे वृषभध्वजः । दुर्गांभगवतींभद्रां दुर्गसंसारतारिणीम्
त्रिपुरान्तकरीं ( कारिणीं ) कृत्यां चण्डमुण्डवधोद्यमाम् ।
दैत्यान्तकां मदोन्मत्तां रक्ताख्यां रक्तदन्तिकाम् ॥ ३९ ॥
रक्ताम्बरधरांवीरांरक्तपुष्पावतंसिनीम् । महिषवाहिनीं श्यामां पद्मासनपरिग्रहाम्
द्वीपिचर्मपरीधानां शुष्कमांसातिभैरवाम् ।
पूजयित्वा प्रसन्नात्मा ध्यानमादाय ( मास्थाय ) संस्थितः ॥ ४१ ॥
तदा भगवती भद्रा ययेदंधार्यतेजगत् । प्रसन्नवदनाभूत्वा प्रत्यक्षं प्राहचण्डिका ॥

देव्युवाच

व्रियताम्भोसुरश्रेष्ठ! वरं मत्तोऽभिवाञ्छितम् ।
ददामि सर्वं त्वयोक्तं जगतामुपकारकम् ॥ ४३ ॥

श्रीहर उवाच

परितुष्टासिचेद्ददेवि देहिमेवरमुत्तमम् । येनहन्मिमहादैत्यं त्रिपुरं देवकण्टकम् ॥

श्रीदेव्युवाच

जयस्वेनंमहादैत्यं गृहाणपाशुपतंपरम् । मयादत्तंसुरश्रेष्ठदैत्यनाशकरम्परम् ॥ ४५ ॥

महापाशुपतं शस्त्रं करेकृत्वाच शङ्करः । उज्जहार तदाशम्भुर्दैत्यनाशायसत्वरम्
महाडम्बरिको भूत्वासर्वप्राणिभयङ्करः । स्तुतिंकृत्वाजयैःशब्दैः पृष्ठतोऽनुययुःसुराः
शरेणैकेनवैरुद्रो जघानतंमहासुरम् । मायिनंतंत्रिधाभित्त्वा मायायुद्धेनशङ्करः ॥
पुनरागात्पुरीमेतामवन्तींसुरसेविताम् । जयाशिषंप्रयुञ्जाना ऋषयःसिद्धचारणाः
तुष्टुवुश्चतदादेवं जयशब्देनहर्षिताः । अप्सरानन्नृतुस्तत्र गन्धर्वाललितंजगुः ॥
ववौतदापुण्यतमो वायुःसुखप्रदोनृणाम् । जयशब्दस्तदाजातः प्राणिनाञ्चगृहेगृहे

जज्वलुश्चाग्नयःशान्ताःशान्तादिग्जनितस्वनाः ।
प्रवर्तन्ते तदा यज्ञा महोत्सवसदक्षिणाः ॥ ५२ ॥
देवाः प्रपेदिरे स्थानं स्वकीयं पुनरावृतम् ।
उज्झितो दानवो यस्मात् त्रैलोक्यं स्थापितं यतः ॥ ५३ ॥
तस्मात्सर्वैःसुरश्रेष्ठ! ऋषिभिःसनकादिभिः ।
स्थापितं नामावन्त्याख्यं शाश्वतां पापनाशनम् ॥ ५४ ॥

अवन्तीचपुराप्रोक्ता सर्वकामवरप्रदा । तत्प्रभृतिपुरीव्यास उज्जयिनीसमाश्रिता ॥

येऽमुष्यां स्नानदानानि भुवि कुर्वन्ति मानवाः ।
न तेषां दुष्कृतं किञ्चिद्देहे तिष्ठति पापजम् ॥ ५६ ॥
विद्यार्थी गिरिशं धनार्थी धनेशं सुतार्थी सुरेशं दिनेशं सुखार्थी ।
धियोऽर्थी गणेशं प्रियार्थी चशेषं गिरापूजमानोजनश्चोज्जयिन्याम् ॥ ५७
य एतस्यां महाभाग! सदा वसति मानवः ।
भुक्त्वा कामान्मनोभीष्टान्मृतःशिवपुरं व्रजेत् ॥ ५८ ॥
तत्रैव वसते नित्यं कल्पकोटिशताधिकम् ।
येनैषा च कथा पुण्या पठ्यते श्रूयतेऽथवा ॥ ५९ ॥
मुच्यते सर्वपापेभ्यो गोसहस्रफलं लभेत् ॥ ६० ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्ड-
उज्जयिन्यभिधानकथनंनामचतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

# पञ्चपञ्चाशत्तमोऽध्यायः

## पद्मावत्यभिधानहेतुकथनवर्णनम्

### सनत्कुमार उवाच

अथातःसम्प्रवक्ष्यामि यथापद्मावतीतिसा । श्रूयतामाद्रतोव्यासबहुपुण्यकृतांकथाम्
एकदासर्वरत्नानां हानिर्जातादुरात्मभिः । धर्मग्लानिनिरोधश्चजातस्तैर्दुष्टदानवैः ॥
तदासुरासुरैःसर्वैर्मिलित्वामथितोऽर्णवः । मेरुर्वंशोऽर्णवः पात्रं रज्जुर्वासुकिपन्नगः
कूर्मपृष्ठेऽचलंकृत्वारत्नानिदुदुहुस्तदा । आदौलक्ष्मीविनिर्याताकृष्णायप्रतिपादिता
तेनैवचविवादोऽभूद्देवदानवयोस्तदा । एतस्मिन्नन्तरे प्राप्तोनारदोदेवदर्शनः ॥ ५ ॥
पारितः कलहस्तेन देवदैत्यसमुद्भवः । महाकालवनेतत्र पद्मासिन्धुसमुद्भवा ॥ ६ ॥
सागरान्तेचरत्नानितिष्ठन्तिविविधानिच । तानिसर्वाणिचादाययावत्तुभ्यंददाम्यहम्
मथ्यतामुदधिःशीघ्रं नात्रकार्याविचारणा । पुनस्तेतूद्यमंचक्रूरत्नार्थंवैसुरासुराः ॥
मथ्यमानेनिर्धौतेषांमणिःप्राप्तश्चकौस्तुभः । पारिजाततरुःपश्चात्सुराजातातततःपरम्
धन्वन्तरिरथोत्पन्नश्चन्द्रोजातोपिवैततः । कामधेनुःसमाप्राप्तागजरत्नं ततः परम् ॥
उच्चैःश्रवाहयश्रेष्ठःसुधारम्भाततस्ततः । ततः परं शारङ्गं धनुःसर्वास्त्रसम्भवम् ॥
पाञ्चजन्यनामाशङ्खः करेतिष्ठन्मुरद्विषः । निधिरेषमहापद्मो विषंहालाहलन्ततः ॥
चतुर्दशानिरत्नानि प्राप्तानिविविधानिच । समादायगतास्तत्रयत्रमाहेश्वरंवनम् ॥
गत्वातेतुसमासीना मन्त्रंचक्रुःसमुद्यताः । अहंपूर्वमहंपूर्वमितितेसमयन्त्रिताः ॥
कोलाहलोह्यथोत्पन्नः पुनर्नारदअभ्यगात् । तेषांकलिमलंदृष्ट्वा विष्णुमाराधयत्ततः ॥
मोहिनीरूपमास्थायनारीभूत्वाभ्यगाद्धरिः । अतिरूपवतींतन्वींतामालोक्यमहासुराः
विह्वलाङ्गाः कृताःसर्वे कामबाणवशंगताः । एतस्मिन्नन्तरेतेषां सुरान्दत्वासुरेश्वरः
हस्तलाघवयोगेन देवानाममृतंददौ । एतस्मिन्नन्तरेव्यास! राहुस्तद्रूपधारकः ॥
तेषामन्तरतोभूत्वापपौचामृतमुत्तमम् । तज्ज्ञात्वाचद्रुतंविष्णुःशिरश्चक्रेणप्राच्छिनत्

सुधास्पर्शप्रसङ्गेन नममारासुरस्तदा । राहुःकेतुरितिख्यातो क्षेत्रेऽस्मिन्भुविसत्तम
राहुकायात्समुद्भूतंबहुसुस्रावशोणितम् । तस्मिन्क्षेत्रमहोत्तीर्थंजातंतद्दोषनाशनम्
तत्रस्नात्वाशुचिर्भूत्वा राहोर्दर्शनतत्परः । नतस्यजायतेकाचिद्राहुपीडाकदाचन
वाञ्छितार्थमवाप्नोति गोसहस्रफलंभवेत् । ततस्तानिचरत्नानि महाकालवनेसुराः
विभज्यभागंतेसर्वे ततोरत्नभुजोऽभवन् । मणिपद्मांधनुःशङ्खं ददौसातत्रविष्णवे ॥
सूर्यायचददौचाश्वं मोहिनीसाब्धिसम्भवम् । ऐरावतंगजश्रेष्ठं वासवायसमर्पयत्
दिविषद्गणांश्चपीयूषंददौचन्द्रंचशम्भवे । पारिजातंतरुश्रेष्ठं रम्भाश्चैववराङ्गनाम् ॥
इन्द्रःक्रीडावने रम्येनन्दने च समर्पयत् । ऋषीणाञ्चाददाद्धेनुं कामदोग्ध्रींयज्ञसिद्धये
निधिरेषमहापद्मः कुवेरभवनेगतः । यत्तद्धालाहलंप्रोक्तं विषंकेनापिनाद्दृतम् ॥ २८ ॥
यतोयतः प्रसरति प्रलयंयान्तिजन्तवः । दधारतद्विषंशम्भुर्जगतां हितकाम्यया ॥
तत्प्रभृतिमहादेवो नीलकण्ठइतिस्मृतः । रत्नकुण्डेनरःस्नात्वा नीलग्रीवञ्चपश्यति
समुक्तःसर्वपापेभ्यो भवेच्चसर्वरत्नभुक् । शताश्वमेधिकंपुण्यं लब्ध्वाशिवपुरंव्रजेत्
तदादाय सुराःसर्वे ब्रह्मविष्णुपुरोगमाः । स्वयमूचुस्तदा व्यास!हर्षनिभरमानसाः
उज्जयिनीं समासाद्यजातारत्नभुजोवयम् । पद्मायाश्चनिवासेनयस्मात्सर्वसुखावहा
यस्मात्सर्वेषु कालेषु पद्मा वसतिनिश्चला ।
अद्यप्रभृतिपुर्य्येषा पद्मावतिरितिस्मृता । यएतस्यां महाभागा स्नानंदानंतथार्चनम्
तर्पणंचैवदेवानां पितॄणांवा विशेषतः । नतस्यदुष्कृतं किञ्चिन्नदारिद्र्यं न दुर्गतिः
शतंकुलानिसर्वाणि तारयेन्निरयार्णवात् । धनार्थीवाचपुत्रार्थी विद्यार्थीबहुकामुकः
यत्र कुत्र स्थितोभूत्वा पद्मावतिरिति स्मरेत् ।
सर्वान् कामानवाप्नोति शिवःसाक्षाद्भवेन्नरः ॥ ३७ ॥
एतद्व्यासफलंनाम्नःकिञ्चिरंसेवनेनवै । ये शृण्वन्तिकथांपुण्यांयःश्रावयतिनित्यशः
न तस्य पातकं किञ्चिदश्वमेधफलं लभेत् ॥ ३८ ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
पद्मावतीकथनं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

# षट्पञ्चाशत्तमोऽध्यायः

## कुमुद्वतीप्रभाववर्णनम्

सनत्कुमार उवाच

शृणुष्वावहितो व्यास कथां पापहरांपराम । एषाकुमुद्वतीजाता यथापद्मावतीपुरा
॥ ४ ॥ तथाहं सम्प्रवक्ष्यामि यथा मे लोमशोऽब्रवीत् ।

लोमश उवाच

शृणु वत्स! मया दृष्टा बहुपुण्यतमा पुरी ॥

एकदातीर्थयात्रायां गताहंवैकुशस्थलीम् । गुह्याद्गुह्यतमंस्थानं यत्रसन्निहितोहरः
यस्यदर्शनमात्रेण ब्रह्महत्या व्यपोह्यते । यत्रतत्र स्थिताविप्रा ब्रह्मघोषंच कुर्वते
यज्ञांश्चैवतथाचित्रानृत्विजोद्वारकर्मन्त्र । ऋषयश्च महाभागाः प्रकुर्वन्ति समाहिताः

ऋषिपत्न्यस्तथा साध्व्यः परिचारं ( चर्यां ) प्रकुर्वते ।

दश विष्णवश्च प्रख्यातास्तत्रैव निवसन्ति ते ॥ ७ ॥

रुद्राह्येकादशप्रोक्ता द्वादशार्कास्तथैवच । अष्टौचवसवः ख्याता विश्वेदेवास्त्रयोदश
अष्टौते दिग्गजाश्चैव मनवश्च चतुर्दश । मरुद्गणाश्च ते सर्वे तत्रचेन्द्रपुरोगमाः ॥

गन्धर्वाप्सरसश्चैव किन्नरोरगराराक्षसाः ।

सिद्धास्तपस्विनो व्यास! ( वत्स! ) तत्रैव समुपस्थिताः ॥ ८ ॥

अष्टौच भैरवाः ख्याताश्चत्वारः पवनात्मजाः ।

विनायकाः षडेते च ते ( ? ) देव्यश्च चतुर्विंशतिः ॥ ९ ॥

एतेदेवगणाः प्रोक्ता रौद्राश्चैव तथागणाः । ब्रह्मावेदविदांश्रेष्ठो मरीचिः कश्यपादयः

दक्षः प्रजापतिः श्रेष्ठोऽदितिर्वैदेवमातृकाः ।

श्रुतिभिः सम्मता गावः स्थावराणि चराणि च ॥ ११ ॥

तीर्थानियानिसर्वाणिनद्यःप्रस्रवणानि च । क्षेत्राणिचैवसर्वाणि भुविपुण्यतमानिवै

सप्तपुर्यस्त्रयोग्रामा नवारण्यानिचैवतु। चतुर्दशानिगुह्यानि मुक्तिद्वाराणि भूतले
समुद्राश्चैवचत्वारोरत्नानिविविधानि च। राजर्षयोऽमलाःशान्ता ब्राह्मणावेदपारगाः
वेदापुराणस्मृतयोगाथागीतिःप्रहेलिकाः। उपासाञ्चक्रिरेतस्यतदानींचाप्युमापतेः
तस्य दर्शनमात्रेण जातोऽहं विज्वरोऽमलः। दीर्घायुर्दीर्घतपसा जरारोगविवर्जितः
स्नातोऽहं सर्वतीर्थेषु शुचिर्भूत्वा समाहितः। प्रसन्नमानसोजातःसर्वपापपराङ्मुखः
दृष्ट्वा पद्मावतींशुभ्रां सर्वकामवरप्रदाम्। न यत्र दृश्यते कश्चिच्छोकरोगपरोनरः

न दुःखी न च दारिद्रो न मूर्खोनाजितेन्द्रियः
परस्परं विरोधी च (न) नाऽवर्णायत्र (वृतिर्यश्चुच) दृश्यते ॥ १९ ॥
अन्योन्यं सर्वमित्राणि अन्योन्यंश्चोपकारिणः।
सर्वे दान्ताश्च शान्ताश्च सर्वे विद्योपदंशिनः ॥ २० ॥

उद्यानानिचरम्याणिवनान्युपपनानि च। हर्म्याणिचैवशुभ्राणि श्रेणिबद्धानिसर्वशः
नानारत्नसमाकीर्णैर्हेमकुम्भैः सुशोभनैः। विराजन्तेविचित्राणि गीतवाद्यमहोत्सवैः
सदैववसते यत्र उमया सह शङ्करः। चन्द्रचूडाकृतिर्व्यास चिताभस्माङ्गलेपनः
चन्द्रज्योत्स्नाकलापूर्णमरीचिःसर्वतोबभौ। न यत्रकृष्णपक्षोऽभून्नामावस्यानवैतमः
सदैव पुष्पिताश्यामा बाल्येरूपवती यथा। हर्म्यपृष्ठे गवाक्षेच द्वाराजिरगृहन्तरे
गिरिगह्वरकुञ्जेषु गुहाध्वान्तान्तरेषु च। आश्रमेषुच रम्येषु वनेषूपवनेषु च ॥ २६

गृहदीर्घिकासु रम्यासु शालामालासु सर्वतः।
चन्द्रज्योत्स्ना समापूर्णा दृश्यन्ते धवलादिशः ॥ २७ ॥

कुमुद्वतीप्रफुल्लानि तडागानि विरेजिरे। ज्योतिर्गणसमाकीर्णं शरदीवनभःस्थलम्

नद्यः सरांसि सर्वाणि वापीकूपसुपल्वलाः।
कुमुद्वत्या समाकीर्णा आसीच्चान्द्रमसी मही ॥ २९ ॥

यस्मात्सर्वेषु कालेषु प्रफुल्लाःकुमुद्वती। तस्मात्पद्मावतीह्येषा पुरोज़ाता कुमुद्वती
कुमुद्वत्यां नरा येतु श्राद्धंकुर्युः समाहिताः। ततेषांपितरःस्वर्गाच्चयवन्तेवैकदाचन
अक्षयंलभते श्राद्धंपितृणांदत्तमक्षयम्। स्नानंदानं तथाहोमो देवताराधनं तथा॥

यत्किञ्चित्क्रियतेकर्म तत्सर्वंचाक्षयंभवेत् । एवंकुमुद्वतीजाता पुरीव्यास सनातनी
इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे
कुमुद्वतीप्रभावकथनं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

---

# सप्तपञ्चाशत्तमोऽध्यायः

## अमरावतीनामकथनम्

सनत्कुमार उवाच

अमरावतीयथाजातापुरीह्येषाकुशस्थली । शृणुव्यासमहाप्राज्ञ यथाब्रह्माब्रवीत्सुरान्
तथाहंसम्प्रवक्ष्यामि विस्तरेणतपोधन । एकदाब्रह्मणादिष्टः प्रजार्थंऋषिसत्तमः
मारीचःकश्यपस्तेपे तपः परमदुष्करम् । महाकालवनेरम्ये देव्यासह महानृषिः
शीर्णपत्राशनस्तेपे वायुभक्षी जितेन्द्रियः । पूर्णेवर्षसहस्रे तु वागुवाचाशरीरिणा
श्रूयतां भोद्विजश्रेष्ठ ममवाक्यमनुत्तमम् । यस्मात्तेऽस्तितपस्तीव्रं फलमुद्यम्यसुव्रत
तस्मात्तेसन्ततिस्तावद्यावच्चन्द्रदिवाकरौ । तावत्तिष्ठतुमेदिन्यांयशसापुत्रपौत्रकैः
अदितिस्ते सतीभार्यात्वयासहाचरत्तपः । तस्मात्सर्वेषुकालेषुछायाभूतायशस्विनी

भविष्यन्ति सुताः सर्वे विष्णुचन्द्रपुरोगमाः ।
अमरा निर्ज्जरादेवा दिवि ख्याता भवन्त्विति ॥ ८ ॥

त्वंचापिहिऋषिश्रेष्ठप्रजापतिरकल्मषः । भविष्यसिनसन्देहो ममवाक्याद्द्विजोत्तम
इत्युक्त्वाच पुनर्देवी तत्रैवान्तर्धीयत । तदारभ्यपुरींव्यास कुशस्थलीमनुत्तमाम्
कश्यपःसहदाक्षिण्या साग्निकःसमुपाश्रितः । प्रजापिववृधे तस्मात्सदेवासुरमानुषः
मरीचेःकश्यपोजज्ञे ततःसर्वंप्रतिष्ठितम् । सुधापानकरादेवाव्यासतेनामराः कृताः ॥
नन्दनंप्राप्यतत्रैव महाकालवनोत्तमे । कामधेनुःसमाख्याता मनोरथवरप्रदा ॥ १३ ॥
साप्यत्रैवसदासेत्रेनमहाकालंमहेश्वरम् । पारिजाततरुश्रेष्ठं तथाचाम्लानपङ्कजम् ॥

बिन्दुसरः समाख्यातंमानसंसरउत्तमम् । हंससारससङ्कीर्णं सदासिद्धनिषेवितम्
मुक्तामणिगणासक्तं रत्नसोपानशोभितम् । निधिरेषमहापद्मः कल्हारकुमुदोज्वलः
यानि यानि च दिव्यानि सन्ति ब्रह्माण्डगोलके ।
तानि सर्वाणि तिष्ठन्ति महाकालवने शुभे ॥ १७ ॥
तेनतेनात्मयोगेनमानवाश्चात्रसंस्थिताः । तत्तद्देहास्तदाचारास्तद्रूपास्तत्पराक्रमाः
अन्योन्यंचसमाकीर्णाः सर्वेचामरसन्निभाः । विचरन्तियथादेवाःपुरीमेतांजनाभुवि
सुराङ्गनासमानार्यः सदैवस्थिरयौवनाः । ईदृशींचपुरींदृष्ट्वा भुविव्याससनातनीम्
देवदानवगन्धर्वैः किन्नरोरगराक्षसैः । भुक्तिमुक्तिप्रदानित्या बहुकालफलप्रदा॥
अमराणां स्थितिर्ह्यत्र तस्माज्जातामऽमरावती ।
यएतस्यां महाभागाः प्रसङ्गेन समागताः ॥ २२ ॥
स्नानदानादिकंकृत्वा पश्यन्त्येवंमहेश्वरम् । नतेषांदुर्लभंकिञ्चित् पुत्रतोधनतोपिवा
सर्वभोगानवाप्नोति मृतःशिवपुरं व्रजेत् ।
पठनाच्छ्रवणाद्वापि शतरुद्रीफलं लभेत् ॥ २४ ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
ऽवन्तीक्षेत्रमाहात्म्येऽमरावतीनामकथनं नामसप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

---

## अष्टपञ्चाशत्तमोध्यायः

### विशालाभिधानवर्णनम्

सनत्कुमार उवाच

शृणुव्यासमहाभाग पुरीह्येषामरावती । विशालाचसमाख्याता सर्वलोकेषुगायते
तथाहंसम्प्रवक्ष्यामि ब्रह्मणाकथितम्पुरा । गुह्याद्गुह्यतरंक्षेत्रं सर्वपापप्रणाशनम् ॥
उमयासहितोदेव एकएवाचरद्वने । ततोभूतगणाःसर्वे पश्चात्सर्वे सुरासुराः ॥ ३ ॥

विष्णुर्दशाकृतिर्यत्रदेव्यस्त्रैलोक्यमातरः । विनायकाश्चवैतालाः कूष्माण्डाभैरवादयः

कल्पोद्भेदाश्चलिङ्गाश्च चतुराशीतिज्यौतिषाः ( सङ्ख्यकाः )

क्षेत्राणि क्षेत्रपालाश्च ऋद्धिःसिद्धिःस्तथैवच ॥ ५ ॥

पितरो लोकपालाश्च सिद्धाःसिद्धिप्रदाश्च ये ।

ऋषयश्च महाभागा ऋषिपत्न्योऽमलाशयाः ॥ ६ ॥

किन्नरादेवगन्धर्वा अप्सरसोवराङ्गनाः । मरुद्गणाश्चयेसर्वे साध्यानां चगणाश्चये ॥

यक्षागुह्यकसंज्ञाश्च पिशाचोरगराक्षसाः । स्थावराजङ्गमाःसर्वेध्यानंमानसमाश्रिताः

उपासाश्चक्रिरेतत्र देवदेवमुमापतिम् । तान्दृष्ट्वासातदादेवी पार्वतीगिरिजातदा ॥

उवाच श्लक्ष्णया वाचा शङ्करं जगदाश्रयम् ।

पार्वत्युवाच

देवदेव!जगन्नाथ!जगद्धार!जगत्प्रभो! ॥ १० ॥

पश्य एतान्महाभागान् ध्यायमानांस्तवाश्रितान् ॥

नतूपेक्ष्यान् पिता त्वञ्च तपमानांस्तपोर्दितान् ॥ ११ ॥

कल्पयत्वंमहाभाग एनेषामात्मनोहितम् । यथायोग्यंवासनार्थं स्थानंपरमशोभनम्

पुरींकल्पयमेनाथ वासार्थंसर्वकामदाम् । एषामेवासनास्वामिन् भवतांयदिरोचते

इति श्रुत्वा वचस्तस्याः पार्वत्याः परमेश्वरः ।

कल्पयामास च पुरीं रम्यां सर्वमनोरमाम् ॥ १४ ॥

आत्मनोपमितां पुण्यां शम्भुःसर्वात्मना तदा ।

बहुयोजनविस्तीर्णां दिव्यां दिव्यजनप्रियाम् ॥ १५ ॥

दिव्याभिप्रायसंयुक्तां दिव्यस्थानमनोरमाम् ।

दिव्यसर्वगुणोपेतां विशालां विरजां शुभाम् ॥ १६ ॥

क्रयविक्रयसम्पन्नांहट्टाट्टालकचत्वराम् । बहुहर्म्यगृहाकीर्णांसौधपङ्क्तिविराजिताम्

स्फाटिकाभित्तिरचितां वैडूर्यमणिभूमिकाम् ।

प्रवालस्तम्भप्रवरां हेमाभरणसम्भराम् ॥ १८ ॥

आरक्तमणिदेहल्यां द्वारशाखाभिमण्डिताम् ।
जाम्बूनदकपाटाभ्यां वज्रार्गलसुसंस्कृताम् ॥ १६ ॥
मणिरत्नसमाभूमिद्वाराजिरगृहान्तराम् ।
घोषजालानि रम्याणि मुक्तादामविलम्बिनीम् ॥ २० ॥

हेमस्तम्भध्वजोपेता पताका चगृहेगृहे । कलशाश्चविराजन्ते मणिहेमाचितागृहे
वापीकूपतडागानिसरांसिविमलानिच । पद्मकिञ्जल्कगन्धीनिराजन्तेजलजन्तुभिः

हंसकारण्डवाकीर्णां शिखण्डिगणसेविताम् ( शोभिताम् ) ।
जलयन्त्रकृताधारां गृहवापीवनाकराम् ॥ २३ ॥
क चिन्मयूरानृत्यन्ति क्वचित्कूजन्ति कोकिलाः ।
भ्रमरावलीढपुष्पाढ्यलवकावनराजयः ॥ २४ ॥

नरनारीगणाकीर्णां वर्णाश्रमनिषेविताम् । सुहर्म्यान्तर्गतानार्यो विलोकनपराबभुः
चन्द्रशालाकृताश्रेणी तोरणानीवशोभते । एवंव्यासपुरीरम्या आत्मयोगेनवासिता
यत्रालकापुरीरम्या कुवेरभवनाङ्किता । धवलापुण्यजनैः कीर्णापक्षिभिरुपशोभिता
तत्रभोगवतीदिव्या वरुणालयमुत्तमम् । नागकन्याभीरुद्राभिर्नागस्त्रीभिश्चसंकुला
संयमिनीपुरीश्रेष्ठा धर्मराजेनपालिता । अनाचारजनैः पूर्णा कृताभूतविगर्हितैः
देवतानांपुरीरम्यावासवेनाभिपालिता । पुण्यस्त्रीनृगणाकीर्णा किन्नरोद्गीतमण्डिता
एवंविधानिरम्याणि वहुपुण्यतराणिच । क्वचिद्रम्भाकृतद्वारा यवाङ्कुरघटाशुभा ॥

क्वचिद्गायन्तिगन्धर्वाः क्वचिन्नृत्यन्तिनर्तकाः ।
क्वचिद्व बालाः पठन्तिस्म वेदाध्ययनकाद्विजाः ॥ ३२ ॥
क्वचिद्यज्ञान् यजन्तिस्म यजमानाःसऋत्विजः ।
क्वचिच्चावभृथस्नाने तद्दानानि प्रकुर्वते ॥ ३३ ॥

क्वचिचित्तूपनयनंक्वचिवाहाग्निपरिग्रहम् । क्वचिदारामपूर्तंवै क्वचिद्यात्रावधारणम्
वापीकूपतडागानां तथैवविधिपूर्वकम् । क्वचित्कथाप्रसङ्गाश्च परिशंसन्ति वाचकाः
क्वचिद्गाथाः प्रकुर्वन्ति कवयःपुरउत्तमे । क्वचिन्मल्लाविरुध्यन्तिनटानाट्यपराःक्वचित्

तडागाश्च विराजन्ते मणिसोपानपङ्क्तयः ।
चञ्चला चपला बाला श्यामा षोडशवार्षिकी ॥ ३७ ॥
वारिहारपरात्र मणिहेमघटोत्कटा । एवंव्यासपुरीरम्या निर्मितायोगमायया ॥
शम्भुना सर्वपापघ्नी प्रियाप्रियचिकीर्षया ।
विशाला बहुविस्तीर्णा पुण्या पुण्यजनाश्रया ॥ ३९ ॥
तस्मात्सर्वेषुकालेषु सर्वलोकेषुगीयते । विशालेतिसमाख्याता पुरीरम्यासनातनी
यत्र कुत्र स्थितोवापि सर्वावस्थाङ्गतोऽपिवा ।
विशालेतिवदन्नित्यं शिवलोके महीयते ॥ ४१ ॥
ईदृशीनपुरीव्यासभुविब्रह्माण्डगोलके । विशालासदृशीवान्याभुक्तिमुक्तिप्रदानृणाम्
पितॄनुद्दिश्य कुर्वन्ति श्राद्धकाले नरास्तु यत् ।
तदक्षयं भवेत्तेषां पितृकल्पे च गीयते ॥ ४३ ॥
स्नानदानादिकंयैस्तुविशालायांप्रसङ्गतः । यत्रकुत्रगतास्तेवै मृतायान्तिशिवक्षयम्
धन्याः पुण्यतमा लोके प्रीतिर्येषां सदाचला ।
विशालायाः फलं शश्वच्छेषो वक्तुं न शक्नुयात् ॥ ४५ ॥
कथाश्रवणमात्रेण वाच्यमानेन तत्क्षणात् ।
महापापोद्भवं पापं मुच्यते नात्र संशयः ॥ ४६ ॥
एवंव्यासपुरीजाता विशालाच कुशस्थली । प्रतिकल्पंयथाजाता तथामेश्रृणुभाषतः
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
ऽवन्तीक्षेत्रमाहात्म्येविशालाभिधानकथनं नामाऽष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

# एकोनषष्टितमोऽध्यायः

## प्रतिकल्पाभिधानवर्णनम्

सनत्कुमार उवाच

श्रृणुष्वावहितोव्यास कथामेकाग्रमानसः। मयाव्यासमुखात्प्राप्ता कल्पभेदेकथाशुभा
गुह्याद्गुह्यतराश्रेष्ठादेयायस्यनकस्यचित्। नास्तिकायकृतघ्नायनाशिष्यायकदाचन
एषापुण्यतमा व्यास! कथापापहरापरा। यस्याःश्रवणमात्रेण कल्पदोषो न बाधते
प्रमाणं कल्पपर्यन्तं ब्रह्मणः परमेष्ठिनः। मन्वन्तरेषु सर्वेषु कल्पकल्पान्तरेषु च

यावत्सङ्ख्या परिमिता तावती श्रृणु सत्तम!।
अहोरात्रं विभजते सूर्यो भानुपदे पदम ( मानुषदैवतम् )॥ ५॥
तामुपादाय गणनां श्रृणु सङ्ख्यां द्विजोत्तम।
निमिषैःपञ्चदशभिः काष्ठास्त्रिशत्तु ताःकलाः॥ ६॥
त्रिंशत्कलो मुहूर्तस्तु त्रिंशद्भिस्तैर्मनीषिणः।
अहोरात्रमिति प्राहुश्चन्द्रादित्यगतिस्तथा॥ ७॥

स्वैर्गतिविशेषेण सर्वेष्वेतेषुनित्यशः। तदहस्तु मनुष्याणां रात्रिश्चैवतुतादृशी
पक्षामासाऋतूरब्दमयनंच प्रकीर्तितम। पितृणाञ्चैव देवानां ब्रह्मणश्च यथातथम्

यावत्सङ्ख्या समाख्याता आयुरन्तश्च तादृशः।
अहोरात्राः पञ्चदश पक्ष इत्यभिशब्दितः॥ १०॥

पक्षौ द्वौ तौकृतोमासो मासौद्वावृतुरुच्यते। अयनंतत्त्रिभिःप्रोक्तमब्देद्वेअयनेस्मृतः
दक्षिणंचोत्तरञ्चैवं सङ्ख्यातत्त्वविशारदैः। मानेनानेनयोमासः पक्षद्वयसमन्वितः
१ पितृणांतदहोरात्रमितिकालविदोविदुः। शुक्लपक्षस्त्वहस्तेषां कृष्णपक्षस्तु शर्वरी
कृष्णपक्षेत्विहश्राद्धं पितृणांवर्तते ततः। मानुषेणतुमानेन योवैसंवत्सरस्स्मृतः

देवानां तदहोरात्रं दिवाचैवोत्तरायणम्।

दक्षिणायनं स्मृता रात्रिःप्राज्ञैस्तत्त्वार्थकोविदैः ॥ १५ ॥

दिव्यमब्दंशतगुणमहोरात्रं मनोःस्मृतम् । अहोरात्रं दशगुणं मानवः पक्षउच्यते ॥
पक्षाद्दशगुणोमासोमासैर्द्वादशभिर्गुणैः । ऋतुर्मनूनांसम्प्रोक्तःप्राज्ञैस्तत्त्वार्थदर्शिभिः

षड्भिस्तैर्वर्ष आख्यातस्तेन सङ्ख्या निबध्यते ।
चत्वार्येव सहस्राणि वर्षाणान्तु कृतं युगम् ॥ १८ ॥
तावतीतु भवेत्सन्ध्या सध्यांशश्चतथाविधः ।
त्रीणि वर्षसहस्राणि त्रेतायाःपरिमाणतः ॥ १९ ॥
तस्याश्चतावतीसन्ध्या सन्ध्यांशश्चतथाविधः ।
तथा वर्षसहस्रे द्वे द्वापरं परिकीर्तितम् ॥ २० ॥
तस्यापि तावती सन्ध्या सन्ध्यांशश्चतथाविधः ।
कलिर्वर्षसहस्रन्तु संङ्ख्यातोऽत्र मनीषिभिः ॥ २१ ॥
तस्य तावतिका सन्ध्या सन्ध्यांशश्चतथाविधः ।
एषाद्वादशसाहस्री युगसङ्ख्या प्रकीर्तिता ॥ २२ ॥

दिव्येनानेनमानेन युगसङ्ख्या निबोध मे । ससर्जसपुनस्तात जगत्सर्वमिदंततम्
कृतंत्रेताद्वापरञ्च कलिश्चैव चतुर्युगम् । युगंतदेकसप्तत्या गुणितं द्विजसत्तमम् ॥
मन्वन्तरमितिप्रोक्तंसङ्ख्यानार्थविशारदैः । अयनंचापि तत्प्रोक्तं द्व्ययनेदक्षिणोत्तरे
मनुःप्रलीयतेह्यत्र सम्प्राप्ते जगतःप्रभो । ततोपरोमनुःकालमेतावन्तं भवत्युन ॥
समतीतेतुराजेन्द्र! प्रोक्तस्संवत्सरस्सवै । तदेवचायनंप्रोक्तं मुनिनातत्त्वदर्शिना ॥
ब्रह्मणस्तदहःप्रोक्तः कल्पश्चेति समुच्यते । सहस्रयुगपर्य्यन्तं सानिशाप्रोच्यतेबुधैः
निमज्जत्यथ तत्रोर्वी सशैलवनकानना । तस्मिन् युगसहस्रेतु पूर्णे भरतसत्तम

ब्राह्मे दिवसपर्यन्तं कल्पो निश्शेष उच्यते ।
युगानि समतीतानि साग्राणि कथितानि ते ॥ ३० ॥

कृतत्रेतानियुक्तानि मनोरन्तरमुच्यते । चतुर्दशैतेमनवः कथिताः कीर्तवर्द्धनाः ॥
वेदेषु स पुराणेषु सर्वेषु प्रभविष्णवः । प्रजानाम्पतयोव्यास धन्यमेषांप्रकीर्तितम्

मन्वन्तरेषु संहाराः संहारान्तेषु सम्भवाः। नशक्यमन्तस्तेषांवै वक्तुंवर्षशतैरपि
विसर्गश्च प्रजानांवै संहारम्न्यत्र भारत!। मन्वन्तरेषु संहारः श्रूयते भरतर्षभ ॥ ३४
यत्र तिष्ठन्तिवैदेवाः सर्वैसप्तर्षिभिस्सह। तपसा ब्रह्मचर्येण श्रुतेनच समन्विताः

पूर्णे युगसहस्रे तु कल्पो निश्शेष उच्यते।

तत्र सर्वाणि भूतानि दग्धान्यादित्यरश्मिभिः ॥ ३६ ॥

ब्रह्माणमग्रतः कृत्वा सहादित्यगणैर्द्विजाः। प्रविशन्तिसुरश्रेष्ठं हरिंनारायणंप्रभुम्
स स्रष्टासर्वभूतानां कल्पान्तेषु पुनः पुनः। अव्यक्तःशाश्वतोदेवस्तस्यसर्वमिदञ्जगत्
स एव विद्यतेव्यास महेशविधिसंयुतः। महाकालवनेरम्ये वासं चक्रे स ईश्वरः
प्रलयोनबाधते व्यास! महाकालवनोत्तमे। कल्पेकल्पेचवैरम्या पुरीह्येषाकुशस्थली

निरामया निरातङ्का निर्विकारा युगेयुगे।

मार्कण्डेयोपदिष्टानि कल्पानि सम्भवन्ति च ॥ ४१ ॥

अत्रैवचवनेरम्ये ब्रह्मा लोकपितामहः। प्रजानां पतयो ये ते दक्षःप्राचेतसस्तथा ॥
मरीचिः कश्यपोरुद्रोयेचान्ये भार्गवादयः। कल्पादौसृजतेलोकाञ्चराचरान्यथातथा
एवमादौपुराव्यास कल्पंकल्पान्तकंसदा। वाराहोवामनोविष्णुः पितृणांवैतथैवच
कल्पभेदास्समाख्याता महाकालवनेशुभे। चतुराशीतिकल्पानिसञ्जातानिद्विजोत्तम

तावन्ति ज्योतिर्लिङ्गानि वने तिष्ठन्ति सत्तम!।

पुनर्जाता पुनर्नष्टा महीसागरपर्वताः ॥ ४६ ॥

पुनः पुनर्भविष्यन्तिपुरीह्येषाऽचलास्मृता। तस्मात्सर्वेषुकालेषुसर्वलोकेषु गीयते

प्रतिकल्पेति सञ्ज्ञा सा भुवि व्यास!भविष्यति।

यस्याञ्च मानवा दान्ताः स्नानदानादिकं तथा ॥ ४८ ॥

जपंहोमं तथा श्राद्धं पितृनुद्दिश्यदीयते। नतेषाम्पुनरावृत्तिः कोटिकल्पशतैरपि
प्रतिकल्पाम्मनुप्राप्य द्रष्ट्वादेवं महेश्वरम्। वैशाखेपौर्णमास्यांवै स्नापयेदेकवासरम्

प्रसङ्गतो रजःक्रान्तो क्षिप्राम्भसि च मानवः।

न तस्य दुष्कृतं किञ्चिद्विष्णुलोकं स गच्छति ॥ ५१ ॥

मन्वन्तरसहस्रेषु काशीवासेनयत्फलम् । तत्फलं प्राप्नुयाज्जन्तुःप्रतिकल्पंक्षणादपि

प्रतिकल्पे च कल्पान्ते सदैवाऽऽसीत्पुरी शुभा ।

तस्मात्सर्वजनैःख्याता प्रतिकल्पा द्विजोत्तम! ॥ ५३ ॥

य एतस्यां महाभागाः प्रीतिं कुर्वन्ति मानवाः ।

न तेषां कल्पभेदोऽयं स्वप्नवज्जायते क्षणात् ॥ ५४ ॥

यः शृणोतिकथां पुण्यां प्रतिकल्पोद्भवां शुभाम् ।

श्रावयेद्वा प्रयेत्नेन ब्रह्महत्यां व्यपोहति ॥ ५५ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-ऽवन्तीक्षेत्रमाहात्म्यप्रतिकल्पाभिधानकथनं नामैकोनषष्टितमोऽध्यायः ॥ ५६ ॥

---

## षष्टितमोऽध्यायः

### शिप्रामाहात्म्येज्वरानुग्रहवर्णनम्

सनत्कुमार उवाच

एवंव्यासपुरीरम्या नामभूतासनातनी । युगेयुगेयथाजाता तथाख्यातामयानघ ॥

व्यास उवाच

भूयस्तु श्रोतुमिच्छामि त्वत्तो वेदविदांवर! ।

शिप्रायाश्च कथां पुण्यां पवित्रां पापहारिणीम् ॥ २ ॥

सुन्दरकुण्डं समाख्यातं पिशाचमोचनं तथा ।

नीलगङ्गा इतिप्रोक्ता कर्कराजमतः परम् ॥ ३ ॥

पुष्कराणिचसर्वाणि गयातीर्थमनुत्तमम् । गोमतीकुण्डमाख्यातंनाम्नाधर्मसरस्तथा

ख्यातंसङ्गमजंतीर्थं शनेर्जन्मकथाशुभा । च्यवनाश्रमेचयावार्ता तथानागालयेशुभे ॥

पुरुषोत्तममहिमानंकालेकेनकथंभवेत् । एतद्वेदितुमिच्छामि यत्तेमनसिवर्तते ॥ ६ ॥

सनत्कुमार उवाच

शृणुव्यास!महाभाग कथांपापहरांपराम् । यस्मिन्कालेयथाजाता महाकालवनेशुभे
नास्ति वत्स!महीपृष्ठे शिप्रायाः सदृशी नदी ।
यस्यास्तीरे क्षणान्मुक्तिः किञ्चिरात्सेवनेनवै ॥ ८ ॥
वैकुण्ठेजायतेशिप्राज्वरघ्नीत्रसुरालये । यमद्वारेचपापघ्नी पातालेऽमृतसम्भवा ॥ ९ ॥
वाराहकल्पेचैवप्रोक्ता विष्णुदेहेतिनामतः । शिप्रावन्त्यांसमाख्याता कामधेनुसमुद्भवा

व्यास उवाच

विचित्रमिदमाख्यातं भगवन्नृषिसत्तम! ।
वक्तुमर्हसि शिप्रायाःसमासेन कथां शुभाम् ॥ ११ ॥

सनत्कुमार उवाच

ब्रह्मकपालमादाय भिक्षार्थंव्यचरन्महीम् । महादेवोविशुद्धात्मा सर्वलोकेषुसर्वतः ॥
अप्राप्तभिक्षोभिक्षार्थीवैकुण्ठमगमद्विभुः । गतस्त्वातिथ्यवेलायांभ्रमन्देवोयतस्ततः
लोकनिन्दापरः क्रुद्धः क्षुधितोबहुवासरैः । भिक्षांदेहीतिभोब्रह्मन् क्षुधितोऽहंसमागतः
कपालंचकरे कृत्वा इत्युवाचपुनःपुनः । गृह्यतांहरभिक्षांते ददामीतिहरिस्तदा ॥
इत्युक्त्वाकरमुद्यम्य तर्जन्यङ्गुलिमदर्शयत् । तदारुद्रसमाध्मातस्त्रिशूलेनाहनद्रुषा ॥
तदाङ्गुलिसमुद्भूतं बहुसुस्रावशोणितम् । पूर्णंपात्रंचतेनाशुशङ्करस्यकरेस्थितम् ॥
तदोद्वेलितपात्राद्वैधाराजातासमन्ततः । तत्रस्थानात्समुद्भूताशिप्राऽसृग्धारसम्भवा
वैकुण्ठाच्चाभवत्सद्यो नदीत्रैलोक्यपावनी । एवंशिप्रासरिच्छ्रेष्ठा त्रिषुलोकेषुविश्रुता
ज्वरघ्नी च यथा प्रोक्ता तथा व्यास!ब्रवीम्यहम् ।
यदा बाणासुरोदैत्यः कृष्णेन सह संयुगे ॥ २० ॥
योधयामास दैत्येन्द्रोऽनिरुद्धकृतहेलनः । सहस्रबाहुभिर्वीरो नानाप्रहरणोद्यतः ॥ २१
तस्मात्क्रुद्धोवासुदेवः चक्रमादायसत्वरः । चिच्छेददोःसहस्रन्तुक्षुरप्रेणाशुमिगाना
सतदाभग्नसङ्कल्पश्छिन्नदोश्चरणार्दितः । युद्धात्पराङ्मुखोभूत्वा शङ्करंशरणंययौ
तदागतंमहादैत्यं समीपेभयविह्वलम् । विलोक्यकृपयाविष्टो गतःसङ्ग्राममूर्द्धनि ॥

छित्वाबाहुसहस्रं वै दैत्यराजस्यसंयुगे । क्रुद्धः कृष्णोमहाबाहुः परसेनान्तकोबली
स्थितोयत्राचलोव्यासगतस्तत्रमहेश्वरः । वारयामासकृष्णंवैशरौघांश्चसमाकिरन्
अन्योन्यंतौसमासाद्य युद्धंकृत्वाचदारुणम् । शस्त्रास्त्रैश्चमहाघोरैःसर्वप्राणिभयङ्करैः
वैष्णवास्त्रं तदाकृष्णसन्दधेहरजिघांसया । पाशुपतश्चनामास्त्रंसर्वसंहारकारकम् ॥
सन्दधेवैतदाशम्भुः कृष्णप्राणहरोत्सुकः । हाहाकारस्तदाजातःसर्वलोकेषुश्रूयते ॥
मोहनास्त्रंपुनःकृष्णोहरोपरिमुमोचह । तेनास्त्रेणतदाशम्भुर्मोहितोदैवमायया ॥ ३०॥

जृम्भमाणः स्थितः सङ्ख्ये किञ्चित्कालं मुहुर्मुहुः ।
लब्धसंज्ञःपुनर्जातो यदा रुद्रो महाहवे ॥ ३१ ॥

तदाक्रोधाभिभूतेन कृतोमाहेश्वरोज्वरः । ललाटफलकात्सद्यो वीरभद्रोमहाबलः ॥
त्रिनेत्रस्त्रिशिरोहस्वस्त्रिपादोवर्कराकृतिः ।क्षुद्रोजटिलभस्माङ्गोमहाव्याधिदुरत्ययः
कृष्णसेनांसमासाद्य महादेवेनप्रेरितः । प्राणिनांकदनंचक्रे सर्वेषांकृष्णसङ्गिनाम् ॥

पराङ्मुख पराभग्नाज्वराभिघात पीडिता ।
बभूव सहसा व्यास! सेना कृष्णेनपालिता ॥ ३५ ॥

तथाभूतांसमालोक्यजृम्भमाणांरुजार्दिताम् ।स्वसेनांभग्नमङ्कल्पांमाहेशज्वरपीडिताम्
ससर्जवैष्णवंतापं कृष्णः परमकोपनः । तेनसहवैष्णवस्य माहेश्वरज्वरंणच ॥
अन्योन्यमभवद्युद्धं घोरंघोरतरंमहत् । सङ्ग्रामंबहुलंकृत्वा भग्नोमाहेश्वरोज्वरः ॥

सर्वलोकेषु गत्वा वै न शान्ति प्रतिजग्मिवान् ।
महाकालवने रम्ये प्राप्तस्तेनाभिपीडितः ॥ ३६ ॥

निमग्नश्चैवक्षिप्रायां ततःशान्तिपरांययौ । दृष्ट्वामाहेश्वरंशान्तं ज्वरंपरमकोपनम् ॥

वैष्णवोऽपिसमासाद्य तस्यां मज्जनमाचरत ।
तस्याः प्रभावसन्नष्टौ ज्वरौ हरिहरोद्भवौ ॥ ४१ ॥
तस्मात्सर्वेषु कालेषु ज्वरघ्नी साऽभवत्क्षणात् ।
ज्वराभिभूता ह्यासाद्य जनाः परमदुःखिताः ॥ ४२ ॥

निमज्जन्तिचशिप्रायां वसन्तिचसमाहिताः । नतेषांबाधतेपीडाज्वरोद्भूताकदाचन

सत्यमुक्तं तदाऽव्याम ब्रह्मन् हरिहरेण च । येऽश्रृण्वन्तिकथां दिव्यां नराश्चैकाग्रमानसाः
न तेषां जायते किञ्चिज्ज्वरसन्तापजं भयम् ।
इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे क्षिप्रामाहात्म्येज्वरानुग्रहोनामषष्टितमोऽध्यायः ॥ ६० ॥

---

# एकषष्टितमोऽध्यायः

## दमननृपतेराख्यानवर्णनम्

सनत्कुमार उवाच

पापनाशिनीविख्यातायथाक्षिप्रापयस्विनी । तथाहंसम्प्रवक्ष्यामिसमासेनपरन्तप
पुराकृतयुगेव्यास दमनोनामवैनृपः । कीकटेषुसमाख्यातो राजा परमकोपनः ॥ २
उत्थायीसर्वधर्माणां गोब्राह्मणविनिन्दकः । सुरापानीहेमहारी गुरुतल्पगमत्सरी ॥
प्रजासर्वस्वहर्ताच परदाराभिमर्शकः । धूर्तकोधूर्तसङ्गीच पिशुनस्तस्कराकृतिः ॥
गोगृहपुरभेदीच निन्द्योनिन्द्यजनप्रियः । कुत्सितः कोपपूर्णश्च वेदशास्त्रविवर्जितः ॥
साधुसङ्गपरित्यागी दुष्टोदुष्टजनप्रियः । कुलाङ्गनापरित्यागी परस्त्रीवृषलीपतिः ॥
धर्मनिन्दाकरोनित्यमधर्मेरमतेमतिः । नहूयन्तेनपूज्यन्ते नश्रूयन्ते कथा बुधैः ॥ ७
वेदायज्ञाश्चदेवानां पुरंहट्टं चनाज्यते । एवंदुष्टतरोराजानभूतोनभविष्यति ॥ ८ ॥
सएकदावनेघोरे मृगयावनगोचरः । इतस्ततोभ्रममाणो व्याधैः परिवृतः खलः ॥
न लब्ध खेटकं किञ्चित्क्षुधार्तो दुःखितःखलः ।
एकाकी सङ्गविगतो महाकालवनान्तिके ॥ १० ॥
रात्रिस्समागतातत्र घोराघोरनिषेविता । वृक्षमूलमुपावृत्य शयनार्थीक्षुधार्दितः ॥
तत्राश्वं विटपेबध्वा स्वयमेवन्यषीदत । तदैवकाले वृक्षाद्वै तस्यशीर्षण्युरगोपतत्
किमिदंकुतआश्चर्यं कृत्वा हस्तेनवारितः । तेन दुष्टेन वैराजा दष्टोऽङ्गुष्ठे तदाहिना

दृष्टमात्रेतु नृपतिर्व्यथितः क्षितिमागतः। कियत्काले व्यथाविष्टोमुमोहक्षीणमङ्गलः
तत्क्षणात्प्रेतभूतोऽसौघोरेनरकसञ्चये। यमदूतैस्ताड्यमानोविविधास्त्रैःस्वकर्मजैः
हर्षिताश्चगणास्सर्वे यमराजस्य किङ्कराः। दृष्टो बहुतरेकाले पापिष्ठो यममन्दिरे

एतस्मिन्नन्तरे व्यास! क्रव्यादैः खादितं शवम्।
किञ्चिच्छेषतरं प्राप्तं वायसेनाभिलक्षितम्॥ १७॥

तत्र गत्वानयन्मांसं तुण्डेन वियदुद्गतः। ततोऽन्यैर्वायसैर्भग्नो भ्राम्यमाणइतस्ततः

तत्रागतो हि यत्रास्ते दिव्या क्षिप्रा पयस्विनी।
किञ्चित्कर्म विपाकेन वायसस्य गतं फलम्॥ १६॥

पतितंवैजलेतस्याःक्षिप्रायातस्यकायजम्। तेनपुण्यप्रभावेणतत्क्षणात्सोभवच्छिवः
त्रिनेत्रश्चजटाजूटी व्याघ्राम्बरपरीवृतः। शूलहस्तोवृषारूढो भालचन्द्रोह्युमापतिः॥
इत्याश्चर्यमयंरूपं दृष्ट्वा दूताश्चधर्षिताः। तद्गस्णैताडिमाभग्ना धर्मराजाय संसदि॥
श्रूयताम्भो महाराज धर्मराज नमोऽस्तुते। दूतानांयद्वचोरम्यं बह्वाश्चर्यमयम्परम्॥
कीकटाधिपतिर्मन्दो पापिष्ठोवृषलीपतिः। दमनोनामराजाऽभूत्समस्तेक्षितिमण्डले
यानिकानिच पापानि ब्रह्महत्यासमानिच। तानिसर्वाणितेनापि कृतानिभुविसत्तम
मर्यादाभेदकोमूढो वर्णाश्रमविभेदकः। कुसङ्गीधूर्तकोन्मादी बहुव्यङ्गभरःखलः॥
यमदण्डपरःपापी ह्यस्माकं हर्षवर्द्धनः। स कथं शिवरूपीस्यात् किमाश्चर्यमतःपरम्

यावन्तः पतिताः पूर्वे पापिनः सर्व एव हि।
कृष्णेन ताडितास्सर्वे ब्रह्मपुत्रार्थिना तदा॥ २८॥

तदाप्रभृतिसर्वाणि कुण्डानिनरकस्यवै। शुष्काणिचैवदृश्यन्ते ग्रीष्मान्तेवैह्रदायथा
नैवार्तानांरवः कश्चिच्छ्रूयते तव मन्दिरे। अस्माकं जीवनंनास्ति कमुपायंवदस्वनः

एक एवागतो लोके वृत्तिदो नो विधेर्बलात्।
सोऽपिशिवत्वमापन्नः कस्मान्नो जीवितं कथम्॥ ३१॥
धर्मराजस्तदाश्रुत्य किङ्कराणां परं वचः।
चिरंध्यात्वा स्वकान्प्रोचे देशकालोचितं वचः॥ ३२॥

धर्मराजोवाच

श्रृण्वन्तुभोगणास्सर्वे भूत्वा चैकाग्रमानसाः । येनपुण्यप्रभावेणपापिष्ठश्शिवतांगतः
भुविपुण्यतमेदेशे महाकालवनेशुभे । शिप्रानाम सरिच्छ्रेष्ठा सर्वपापहरापरा ॥ ३४ ॥
येषांक्षिप्रोदकस्पर्शो जायतेभुविकिङ्कराः । नतेषां पातकंकिञ्चिन्मृतस्सुरपुरंव्रजेत्
मनसावपुषावाचापापानिविविधानिच । तत्क्षणात्प्रलयंयान्तिक्षिप्रासरिन्निषेवणात्
क्षिप्राक्षिप्रेतियोब्रूते यत्रकुत्रापि मानवः । स एव शिवतांयातिनजानेस्नानजम्फलम्
यत्रकीटपतङ्गाद्याः क्षिप्रावारिचराश्चये । महापातकिनोयेते मृतायान्ति शिवालये
माधवेमासिसम्प्राप्ते निमज्जन्तिनरोत्तमाः । न तेषांनिरयनकिच्छिवरूपाश्चरन्तिते
वायसेनाहृतंमांसं तस्यराज्ञः कृतागसः । क्षिप्रागाधजलेक्षिप्तं कातत्र परिदेवना ॥

वापीकूपतडागादिष्वधिकं यत्फलं स्मृतम् ।
तस्माद्दशगुणं पुण्यं नदीषु ह्युपजायते ॥ ४१ ॥
तस्माद्दशगुणा तापी गोदा पुण्या ततोधिका ।
तस्माद्दशगुणारेवागङ्गापुण्याततोऽधिका ॥ ४२ ॥

तस्माद्दशगुणाक्षिप्रा पवित्रा पापनाशिनी । दमनस्यशरीरस्य मांसंक्षिप्रासमागतम्
तेन पुण्यप्रभावेन शिवरूपधरोऽभवत् । ईदृशीच नदीरम्या अवन्त्यां भुविवर्तते

वाञ्छन्ति देवतास्सर्वा दुर्ल्लभं तस्य दर्शनम् ।
धर्मराजवचश्श्रुत्वा गणा विस्मयमागताः ॥ ४५ ॥
मनसा च निरातङ्काः क्षिप्राशरणमागताः ।

सनत्कुमार उवाच

तदाप्रभृति समाख्याता शि ( क्षि ) प्रेयं पापनाशिना ॥ ४६ ॥
गीयतेचपुराणेषुतस्यामाहात्म्यमुत्तमम् । दमनस्यचनिर्मुक्तिःक्षिप्रामाहात्म्यमुत्तमम्
संवादं यमदूतानां श्रुत्वा मुक्तिर्न संशयः ॥ ४८ ॥

इति श्रीस्कान्देमहापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
क्षिप्रामाहात्म्यवर्णनं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

# द्विषष्टितमोऽध्यायः

## क्षिप्रायाअमृतोद्भवानामकथनम्

### सनत्कुमार उवाच

श्रणुव्यासमहाबुद्धे क्षिप्रामाहात्म्यमुत्तमम् । यथामृतभवाख्याता पातालेनागसम्मते
एकदारुद्रोभिक्षार्थं नागलोकेवुभुक्षितः । करेकपालमादाय भोगवत्यां समागतः
भिक्षांदेहिवचोदीनमित्युवाच गृहेगृहे । भिक्षाकेनापिनोदत्ता क्षुधितस्यवधूर्जटेः
तदाक्रोधाभिरक्ताक्षःशूलपाणिःक्षुधार्दितः । भ्रामयित्वापुरींसर्वांशनैर्बहिर्विनिर्ययौ

एकविंशतिकुण्डानि पीयूषस्य द्विजोत्तम! ।
यत्र तिष्ठन्ति सर्वाणि नागलोकस्य रक्षणे ॥ ५ ॥
तत्र गत्वा स भगवाञ्छम्भुस्सर्वात्मसम्भवः ।
अपिबन्नेत्रमार्गेण तृतीयेन च शङ्करः ॥ ६ ॥
रिक्तान्यमृतकुण्डानि कृत्वा तत्रैव सोत्थितः ।
कम्पितश्च तदा लोकं नागानां सर्वतोमुखम् ॥ ७ ॥
कस्येदं कर्मकिज्ञातं सुधा यस्मादितोगता ।
इत्युक्त्वा च ततस्सर्वे नागावासुकिपुरोगमाः ॥ ८ ॥

महदतिक्रमणेशङ्काः पुरात्तेचबहिर्ययुः । किंकुर्मःक्वचगच्छामः केनेदंहेलनंकृतम् ॥ ९
येनास्माकंप्रकुप्तेन हृतंचामृतमुत्तमम् । अस्माकं जीवनं तस्मात्कथंजीवामपन्नगाः
इत्युक्त्वापन्नगास्सर्वे सस्त्रीबालपरिग्रहाः । हरिंप्रजग्मुश्शरणं मनर्सापरिशङ्किताः
तेषामनुग्रहार्थाय वागुवाचाशरीरिणी । श्रूयतांचोरगास्सर्वे युष्माभिर्दैवहेलनम्
भिक्षार्थमागतश्शम्भुः क्षुधार्तश्च गृहेगृहे । विदित्वातिथिवेलां स कपालकरभिक्षुकः
सादत्ताहिनकेनापि भोगवत्यांपिनाकिनः । तदाबहिर्गतोनाथः क्षुधितोधर्मविग्रहः
तेननष्टासुधासर्वा कुण्डान्ते पन्नगोत्तमाः । यूयंप्रयातपातालान्महाकालवनोत्तमे ॥

तत्रैकावैसरिच्छ्रेष्ठा क्षिप्रानामेति विश्रुता। त्रैलोक्यपावनीह्येषा सर्वकामफलप्रदा
यस्यादर्शनमात्रेण सर्वपापक्षयो भवेत्। तत्रगत्वाभवद्भिश्च स्नानंकार्यं यथाविधि
भजनंदेवदेवस्य ततः पूताभविष्यथ। भजनाद्देवदेवस्य शिप्रासलिलमज्जनात् ॥

भविष्यति ततस्सद्यस्सुधालोकेतु वोरगाः ( पुरेव वः )।
इति सम्भाष्य तान्नागान् तत्रैवान्तरधीयत ॥ १६ ॥
वाणी ( णीं ) व्यास!तदा दिव्या ( म् ) सहसा लोकसाक्षिणी ( म् )
श्रुत्वा देवेरितां वाणीं तथेत्युक्त्वा च पन्नगाः ॥ २० ॥

सस्त्रियोबालवृद्धाश्च महाकालवनंययुः। तत्रगत्वाददृशुस्तेनदीं त्रैलोक्यवन्दिताम् ॥

सर्वत्र कुसुमाकीर्णां तरुच्छायागतश्रमाम्।
हंसकारण्डवाकीर्णां मणिमुक्ताप्रवालकाम् ॥ २२ ॥
मणिसोपानरचितां पद्मखण्डैश्च मण्डिताम्।
सायंप्रातः स्थिता विप्रास्सन्ध्योपासनतत्पराः ॥ २३ ॥

ऋषयश्चमहाभागा भृगुराङ्गिरसादयः। सगन्धर्वाश्च तत्रैव नारदाद्यास्सुरर्षयः ॥ २४
वसवश्चतथादित्याह्यश्विनौमरुतस्तथा। रुद्रास्साध्याश्चदेवाश्च पितरोविमलाशयाः
उपासतेचशिप्रांवै सन्ध्याकालेसमाहिताः। ऋषिपत्नीमहाभागादेवकन्याप्सरोगणाः
पतिव्रतामहाभागास्तत्रैव पतिनासह । उपासन्तेसदाचारा वर्णाश्रमपुरोगमाः ॥
राजर्षयस्समासीना निर्वाणपदवींगताः । कुर्वन्तेतत्र धर्माणि महादानानिसर्वशः ॥

सिद्धायोगेश्वराश्शान्तास्तापसास्संशितव्रताः।
नानादेशोद्भवालोका यात्रिणस्समुपागताः ॥ २६ ॥
शिप्राकूले समासीना नरनारीसमन्विताः।
एवंविधां समालोक्य व्यास!त्रैलोक्यवन्दिताम् ॥ ३० ॥

नदींसुधामयींसर्वा नागाः परमहर्षिताः । स्नानदानादिकं कृत्वा महादेवमुपासिरे ॥
वेदोक्तविधिनासर्वे चक्रुः पन्नगसत्तमाः । पञ्चाङ्गपूर्वकं स्नानं यक्षकर्दमलेपनम् ॥
अम्लानपङ्कजां मालां नानापुष्पाक्षतैस्तथा। वासः स्रगनुलेपाद्यैश्चन्दनैर्गन्धधूपकैः

दीपदानादिनैवेद्यैस्ताम्बूलमथदक्षिणाम् । कर्पूरार्तिकरास्सर्वे महादेवमुपागताः ॥
स्तुतिमारेभिरे कर्तुं सुधाकामास्तदोरगाः ।

सर्पा ऊचुः

नमोऽनन्ताय बृहते सर्वदेव! नमोनमः ॥ ३५ ॥
चन्द्रचूड! (चन्द्रमौले) नमस्तेऽस्तु जटामुकुटधारिणे ।
शेषहार! नमस्तेऽस्तु चिताभस्माङ्गधारिणे ॥ ३६ ॥
कृत्तिवासनमस्तेऽस्तुघस्मरायनमोनमः । त्रिपुरघ्न!नमस्तेऽस्तुस्मरान्तकनमोऽस्तुते
मृगव्याधनमस्तेऽस्तु गिरीशाय नमोनमः । शङ्करात्मन्नमस्तेऽस्तु सर्वकामफलप्रद
सर्वसाक्षिन्नमस्तेऽस्तु सर्वभूताशयाकृते । सर्वाधारनमस्तेऽस्तुसर्वशक्तिधरायच ॥
सर्वभोगनमस्तेऽस्तु सर्वबीजसमुद्भव । दिव्यहास!नमस्तेऽस्तु नमोऽमृतस्रवायच
काम्यकामनमस्तेऽस्तु सर्वकामवरप्रद । नमश्शिवायशान्ताय पशूनां पतयेनमः ॥
नमोमृडायदान्ताय शान्तरूपायवैनमः । एवंप्रसादितोनागैर्भगवान् वृषभध्वजः ॥
प्रसन्नवदनो भूत्वा प्रत्यक्षं (क्षः) प्राह पन्नगान् ॥ ४२ ॥

श्रीमहादेव उवाच

श्रूयतामुरगास्सर्वे वचस्तथ्यं वदामि वः ॥ ४३ ॥
एकदानागलोकेतुभिक्षणार्थंगतोऽस्म्यहम् । गृहेगृहेभोगवत्यांविचरन्क्षुधितोभृशम्
कपालं च करे कृत्वा धृत्वा कन्थां सुचीरकाम् ।
अप्राप्तभिक्षो भिक्षार्थी पुनरागां ततो गृहम ॥ ४५ ॥
तेनपापप्रसङ्गेन सुधानष्टातदालयात् । किञ्चित्पुण्यप्रसङ्गेन महाकालवनोत्तमे ॥ ४६
यूयं प्राप्ता महाभागा हित्वा नागालयोत्तमम् ।
बालवृद्धैःस्त्रिभिस्साकं दृष्टा शिप्रा सरिद्वरा ॥ ४७ ॥
यस्या दर्शनमात्रेणसुनिष्पापोऽस्म्यहं पुरा ।
शिप्रायाः स्नानजं पुण्यं वक्तुं शक्यं न केनचित् ॥ ४८ ॥
दर्शनाज्जायते शम्भुस्तत्क्षणाद्भुवि पन्नगाः ।

तस्मात्स्नानं कृतं सर्वैः शिप्रायां पन्नगोत्तमैः ॥ ४९ ॥
तेनपुण्यप्रभावेण सुधावोऽस्तुगृहेगृहे। नीत्वाक्षिप्रोदकंपुण्यं कुण्डेषुपरिषेचय ॥ ५०
तेनैतानि हि कुण्डानि अमृतेनैकविंशतिः।
सम्पूर्णानि भविष्यन्ति स्थिराणि पन्नगोत्तमः! ॥ ५१ ॥
तथेत्युक्त्वाचतेसर्वेधृत्वाक्षिप्रोदकंकरैः। गतास्तेवैस्वकंलोकं नमस्कृत्वामहेश्वरम्
ततः प्रभृतिसाशिप्रा जातानागेऽमृतोद्भवा।
सर्वलोकेषु विख्याता व्यास! शिप्रामृतोद्भवा ॥ ५३ ॥
यएतस्यांप्रकुर्वन्तिनराः स्नानादिकंशुचि। नतेषांदुष्कृतं किञ्चिन्नापदोनचदुर्गतिः
नवियोगोभवेत्तेषां पुत्रदारादिकैः कदा। नचमित्राणिदुष्यन्ति नरोगोनदरिद्रता
कथापापहरापुण्या सर्वकामवरप्रदा। पठनाच्छ्रवणाद्वापि गोसहस्रफलं लभेत् ॥

इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे क्षिप्राया अमृतोद्भवानामकथनं नामद्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

# त्रिषष्टितमोऽध्यायः

## क्षिप्रामाहात्म्यवर्णनम्

सनत्कुमार उवाच

भूयः श्रृणुमहाभाग शिप्रामाहात्म्यमुत्तमम्। यस्यश्रवणमात्रेण हयमेधफलंलभेत्
क्षिप्रासर्वत्रपुण्यातिपवित्रापापहारिणी। अवन्त्यांचविशेषेण क्षिप्रावैपापहारिणी
तथापितत्समुत्पत्तिं विस्तराद्वदतोमम। यथावाराहतनया विष्णुदेहोद्भवाशिवा ॥
श्रृणु व्यास!महापुण्यां कथाम्पौराणिकीं शुभाम्।
पुरा महासुरो जातो हिरण्याक्षो महाबलः ॥ ४ ॥
सचेमांसकलांपृथ्वीं वशीकृत्वाचकारह। राज्यंचसार्वभौमानां दानवैश्चदुरात्मभिः

जित्वा स सकलाँल्लोकान् सुरानिन्द्रपुरोगमान् ।
दिक्पालान्वसुपालांश्च तिरस्कृत्याऽसुराधिपः ॥ ६ ॥

सर्वांश्चसर्वकामेभ्यः स्वयमेवाधितिष्ठति । स्वर्गान्निराकृताः सर्वतेनदेवगणाभुवि
विचरन्तियथामर्त्या भ्रष्टराज्याःपराजिताः । अलब्धशरणाःसर्वेब्रह्माणंशरणंययुः ॥
तत्रगत्वानमस्कृत्वादैत्यकृत्यंन्यवेदयन् । भगवन्!किमिदंकार्यंभवतापरमेष्ठिना ॥ ९
येनदेवगणाःसर्वेनष्टप्रायाश्चतत्क्षणात् । हिरण्याक्षेणदैत्येन हृतंस्वर्गमकण्टकम् ॥
यज्ञभागाश्चयेसर्वे उपाश्नातिपृथक्पृथक् । केनोपायेनजीवामः कथंतिष्ठामभूतले ॥
इतिविक्लवितंश्रुत्वा देवानांसपितामहः । उवाचवचनंरम्यं तत्कालेसमयोचितम्

ब्रह्मोवाच

श‍ृण्वन्तुभोसुरश्रेष्ठा!यूयंसर्वेसमाहिताः । पुराऽयंपार्षदश्रेष्ठोद्वारपालः समाहितः ॥
वैकुण्ठभवनेरम्ये विष्णोरतुलतेजसः । जयोनाममहाबाहुर्विजयेन च संयुतः ॥ १४
द्वावेवसचिवौदान्तौ विष्णुवेषधरावुभौ । आत्तयष्टीचविक्रान्तौतिष्ठतोद्वारिसर्वदा
एकदावैमुनिश्रेष्ठा ब्रह्मणोमानसात्मजाः । स्वैरंचरन्तोलोकेषु विष्णोर्भवनमागताः
सनकादयो महाभागा विष्णुदर्शनलालसाः ।
ताभ्यां निवारिताः सर्वे प्रपेतुर्धरणीतले ॥ १७ ॥

मुमुहुश्चतदाऽत्यर्थं कुमाराभृशदुःखिताः । ततोऽगात्समहाबाहुर्भगवान्कमलेक्षणः ॥
ददर्शसहसाविष्णुःकुमारान्भुविदुःखितान् । उत्थाप्यैकंसमारोप्यसस्वजेमधुसूदनः
मूर्ध्निचाघ्रायबाहुभ्यां परिष्वज्य उवाचह ।
कस्माद्वःकश्मलमिदं केनापि दुःखिताभृशम् ॥ २० ॥
सर्वं तत्कारणं बाला ब्रूत नो धर्मवित्तमाः! ।

कुमारा ऊचुः

श्रूयताम्भोमहाराज! अस्माकं दुःखमीदृशम् ॥ २१ ॥

येनप्राप्तावयंब्रह्मन् दशामेतांसुसुव्रत । आयाताभ्रातरोह्येते चत्वारोलोकविश्रुताः ॥
दर्शनार्थंरमानाथसाभिलाषाःसुरार्दिताः । निवारिताश्चसहसा द्वारपालैर्बलोत्कटैः

तेन चेयं दशा प्राप्ता भवता परिपालिता ।
अतःप्रभृति स्थानेऽस्मिन् स्थितिर्नास्ति च शाश्वती ॥ २४ ॥
एतस्मादासुरीं योनिं प्राप्नुतां सुसमाहितौ ।
सद्यःप्राप्तौ तदा व्यास! आसुरीं योनिकुत्सिताम् ॥ २५ ॥
जयश्चविजयाख्यश्च दुष्टभावं समाश्रितौ । जन्मान्तरसहस्रेण तपोदानसमाधिभिः
नराणांक्षीणपापानां कृष्णेभक्तिःप्रजायते । दुष्टभावेनवैसद्यो जन्मभिर्जायतेत्रिभिः
भविष्यति च वां तस्माद्विष्णुभक्तिःपरा स्मृता ।
जन्मजन्मान्तरे जातौ तामसीं योनिमुद्धतौ ॥ २८ ॥
हिरण्यकशिपुश्चैवहिरण्याक्षोमहाबलः । तथैवकुम्भकर्णाख्योरावणोलोकरावणः ॥
दन्तवक्त्रःशिशुपालएवंजन्मत्रयेस्मृताः । योऽसौमहाबलोदैत्योहिरण्याक्षइतिस्मृतः
दुष्टभावंसमापन्नो देवब्राह्मणनिन्दकः । जित्वाचसकलान्देवान्स्वयमेवाधितिष्ठति
स्वर्गान्निराकृताः सर्वे भ्रष्टराज्याः पराजिताः ।
विचरन्ति यथामर्त्यास्तेन देवगणा भुवि ॥ ३२ ॥
स्वधाकारोवषट्कारः स्वाहाकारोनदृश्यते । देवपूजार्चनंनास्तिब्राह्मणानांविशेषतः
नैवतीर्थानिकाशन्तेपुण्यान्यायतनानिच । आश्रमेषुचसर्वेषु ऋषीणांचमहात्मनाम्
अत्यद्भुतंप्रकुर्वन्ति दुष्टदैत्याः प्रहारिणः । वर्णाश्रमचतांधर्माःस्त्रीणांचैवसुशीलता
उच्छिन्ना हि तदा जाता तस्मिन् राज्ञि दुरात्मनि ।
दुष्टाचारा दुरात्मानो मायिनो बहुमानिनः ॥ ३६ ॥
पाखण्डिनोविक्रमिणः सर्वधर्मबहिर्मुखाः । पशुधर्मगता ह्येते सर्वंब्रह्मेतिशंसिनः ॥
बहुम्लेच्छा बहुक्लेशा बहुबाधावनिष्कृता! ।
कोवेदः कास्मृतिः पुण्या कोयज्ञः का च दक्षिणा ॥ ३८ ॥
तमोभूतंजगत्सर्वं दृश्यतेवसुधातले । एवंव्यास!यदाजातं दृष्टंसर्वंजगत्त्रयम् ॥ ३९
यदायदाहिधर्मस्य ग्लानिर्भवतिभारत । अभ्युत्थानमधर्मस्य तदात्मानंसृजाम्यहम्
इतिज्ञात्वामहाविष्णुर्वाराहंवपुरात्मवान् । दधारलीलयादिव्यं श्वेतद्वीपोपमंशुभम्

यूपदंष्ट्रो हविर्गन्धो बीजौषधितनूरुहः ।
वेदपादः स्मृतिर्घोणा जिह्वाग्निस्तालु चाहुतिः ॥ ४२ ॥

अन्तरास्यस्रुचाटोपोयज्ञकायःसुदक्षिणः । उद्गमोघुघुरोनादोविहारोऋत्विजाकृतिः
श्वेतः श्वासपरोदक्षः सदस्यावयवःस्मृतः । पुच्छःकर्मासनोनित्यंयजतांबहुमानदः
वेदापल्वलसंतारो ब्रह्माध्वर्यूर्वनाकरे । लोककल्पोलोकसाक्षी परावरवहः शुचिः
आद्यःपुरुषईशानः पुरुहूतःपुरुष्टुतः । तेनासौनिहतोदैत्यो हिरण्याक्षोदुरासदः ॥

सङ्ग्रामान् सुबहून् कृत्वा बहुकष्टेन विष्णुना ।
दैत्येन पीडिता पृथ्वी रसातलतलं गता ॥ ४७ ॥

उद्धृताचवराहेणदंष्ट्रयाचन्द्ररेखया । हतास्तेदानवाः सर्वेशेषाः पातालमाययुः ॥

ववुः पुण्यास्तदा वाताः सुप्रभोऽभूद्दिवाकरः ।
जज्वलुश्चाग्नयः शान्ताः शान्तादिग्जनितस्वनाः ॥ ४६ ॥

सरितोमार्गवाहिन्यः सागराः प्रकृतिंगताः । दृष्ट्वादेवोऽखिलं व्यासप्रसन्नात्माबभूवह
वाराहमूर्त्तिर्भगवान् सर्वकामफलप्रदः । आनन्दनिर्भरोदेवो हतदैत्यो वरप्रदः ॥ ५१
तस्यापि हृदयाज्जातानदीह्येषासनातनी । आनन्दजलसम्पूर्णा सर्वानन्दवरप्रदा ॥

बहुयोजनविस्तारा बहुला कामचारिणी ।
पद्माकरसमाकीर्णा हंसकारण्डवाकुला ॥ ५३ ॥

सरलातरलामाया यक्षगन्धर्वसेविता । किन्नरीभिर्गीयमाना गीयमानाखगालिभिः ॥

नृत्यन्त्यप्सरसो नित्यं स्तूयमाना महर्षिभिः ।
हुताग्निभिर्युता नित्यं राजर्षिभिःसमाश्रिता ॥ ५५ ॥

तुङ्गस्तनभराक्रान्तवरस्त्रीभिः समावृता । क्वचित्करिवरान्दोलै रम्यमाणाविराजिता

वेदविद्भिर्द्विजैःसेव्या ऋषिभिश्शंसितात्मभिः ।
सर्वदा सर्वकाले च ऋद्धिसिद्धिप्रदा नृणाम् ॥ ५७ ॥

महाकालपुरेरम्ये रम्यापद्मावतीपुरी । सुन्दरंकुण्डमपरंव्यास रम्यंप्राचीनकंशुभम्
यत्रस्नात्वानरायान्ति शिवलोकंसनातनम् । तत्रलीनापराव्यास क्षिप्रात्रैलोकपावनी

वाराहेणकृतंसर्वं दुष्टदैत्यनिवर्हणम् । तेनदेवा निरातङ्काः कृता वाराहमूर्त्तिना ॥
भूत्वाप्राञ्जलयःसर्वे देवाइन्द्रपुरोगमाः । स्तुतिं महाविष्णुं सन्नताःपुरतः स्थिताः ॥

देवा ऊचुः

देवदेवजगन्नाथ पुण्यश्रवणकीर्तन। किं दानं किं तपः पुण्यं किं तीर्थंकाच देवता ॥
येन पुण्यप्रभावेन पुनःस्वर्गोह्यवाप्यते । एवंनिश्चित्यनोब्रूहि सर्वंगुह्यतरं विभो! ॥

श्रीवाराह उवाच

श्रूयतांभोसुराः!सर्वे युष्माकंसिद्धिकारणम् । गुह्याद्गुह्यतरंपुण्यंमहाकालवनेशुभम्
ममदेहोद्भवाक्षिप्रा यत्रलीना पयस्विनी । नीलगङ्गासरिच्छ्रेष्ठा यत्रप्राची सरस्वती
पुष्करंच गयातीर्थं पुरुषोत्तमसरःशुभम् । तद्यूयंगच्छतक्षिप्रं पुनर्लोकानवाप्स्यथ
इति श्रुत्वापरंवाक्यं देवदेवजगद्गुरोः । तत्रदेवगणाःसर्वे ब्रह्मइन्द्रपुरोगमाः ॥
महाकालवनेरम्ये यत्रक्षिप्रासरिद्वरा । स्नानदानादिकं कृत्वा श्राद्धंकृत्वायथोचितम्

तेन पुण्यप्रभावेण स्वकाँल्लोकान् गताः सुराः ।
एवं व्यास!समाख्याता क्षिप्रा वै लोकपावनी ॥ ६९ ॥

जातंसरोवराहस्य विष्णोरतुलतेजसः । यस्यदर्शनमात्रेण ब्रह्महत्या व्यपोह्यते ॥

तत्र स्नात्वा पयःपीत्वा श्राद्धं कृत्वा यथोचितम् ।
पयस्विनीं च गां दत्वा विष्णुलोके महीयते ॥ ७१ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-

ऽवन्तीक्षेत्रमाहात्म्ये क्षिप्रामाहात्म्यं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

# चतुःषष्टितमोऽध्यायः

## सुन्दरकुण्डपिशाचमोचनतीर्थवर्णनम्

सनत्कुमार उवाच

पृथिव्यां यानि तीर्थानि तानि सर्वाणि सुव्रत! ।
अवन्त्यां सुन्दरे तीर्थे तिष्ठन्ति सर्वदा भुवि ॥ १ ॥

व्यास उवाच

किमिदंसुन्दरंकुण्डंकदाकालेऽभवत्क्षितौ । निर्मितंकेनकोदेवःकिंवातस्यफलंस्मृतम्

सनत्कुमार उवाच

शृणुपुण्यतमेक्षेत्रे सुन्दराख्यं यदाभवत् । सर्वपापप्रशमनं वाञ्छितार्थफलप्रदम्॥
यस्य श्रवणमात्रेण ब्रह्महत्या व्यपोह्यते । अश्वमेधाधिकंपुण्यं वाजपेयशताधिकम्
पुराकल्पक्षये व्यास! नष्टकल्पा च मेदिनी । प्रचण्डवातवर्षाभ्यां घूर्णितोमेरुपर्वतः
तदात्रपतितंव्यास!वैकुण्ठशितखरोत्तमम् । महाकालवने घोरे गुह्येचैवाव्यये ध्रुवे ॥

तत्क्षणात्पतिते शृङ्गे कुण्डं जातं सुनिश्चितम् ।
रत्नसोपानसुस्वच्छं मुक्तासैकतपूरितम् ॥ ७ ॥

जाम्बूनदकृतरोहं हेमपद्मविराजितम् । कल्पद्रुमकृतच्छायं चिन्तामणिसमुच्छ्रितम्
हंसकारण्डवाकीर्णं महर्षिगणसेवितम् । बीजौषधिगणाकीर्णं सर्वतत्त्वाभिसंयुतम्
कल्पक्षयेनक्षीयन्ते यानितत्त्वानिसर्वदा । तानि तत्र प्रतिष्ठन्ति मूर्त्तिमन्तिपराणिच

वेदशास्त्रपुराणानि गाथा गीत्यक्षराः स्वराः ।
ॐकारश्च वषट्कारः गायत्री त्रिपदीपरा ॥ ११ ॥

कलाकाष्ठामुहूर्तानि लवत्रुटिपलं घटिः । अहर्निशश्चयामाश्चपक्षौमासौऋतुस्तथा
संवत्सरोयुगश्चैवकुण्डेतिष्ठन्तिमूर्तितः । देवायक्षाश्चनागाश्च गुह्यकाःकिन्नरास्तथा
गन्धर्वाप्सरसोयक्षाःसिद्धाःकिंपुरुषास्तथा । उपासाञ्चक्रिरेतस्यकल्पदोषभयातुराः

ब्रह्मा रुद्रश्च कालश्च लोकपाला महौजसः ।
केचिद् ध्यानपराः सिद्धास्तापसाःशंसितव्रताः ॥ १५ ॥
तिष्ठन्तिबहुयुगंव्यास यावत्कल्पःसमाप्यते । सुदर्शनसमाकारं पूरितंचामृताम्बुभिः
दिव्याभिप्रायसंयुक्तं पारिजातगुणान्वितम् ।
दिव्यस्त्रीस्नानगन्धोद्वैर्वासितं तु सदैव हि ( वासितोद्गारिसौरभम् )
क्वचिन्मयूरा नृत्यन्ति क्वचित् कूजन्ति कोकिलाः ।
क्वचिच्च केकाभिरवाः क्वचिद्‌घोष समाकुलम् ॥ १८ ॥
सुन्दरं सुन्दराकारं सुन्दरं तत्तथोच्यते । बहुपुण्यकरं व्यास! सर्वपापहरंपरम् ॥
यत्रसन्निहितोविष्णुःशिवःशक्त्यायुतोवशी । उपासाञ्चक्रिरेशश्वत्सर्वकालेषुसर्वदा
क्षणार्द्धंक्षणमेकंच सुन्दरकुण्डे नरोवसेत् । वैकुण्ठे नियतंवासःयावत्कल्पशतंभवेत्
पतङ्गाः पक्षिणः कीटा मृता यान्ति शिवालयम् ।
किं पुनर्मानवा लोके स्नानपूतास्तु तज्जले ॥ २२ ॥
योददातिलान्धेनु गजवाजिरथावनीम् । दासीदाससुवर्णंच रत्नानिविविधानिच
शय्यादानविमानानिदानानिविविधानिच । नतस्यदानजंवेद्मिकीदृग्व्यासफलंभवेत्
भूयःश्रृणुपरं व्यास सुन्दरकुण्डफलंस्मृतम् । एकदाबहुपापेन पतितः पापयोनिषु
पिशाचोमोक्षमापन्नः शिवरूपधरोगतः । पिशाचमोचनेस्नात्वा दृष्ट्वा देवं महेश्वरम्
मुच्यते सर्वपापेभ्यो यद्यपि ब्रह्महा भवेत् ।

व्यास उवाच

क्व पिशाच इति ख्यातः किं तेन दुष्कृतं कृतम् ॥ २७ ॥
येन पापप्रसङ्गेन पिशाचत्वं समागतः । कथंतीर्थं प्रसङ्गोऽस्य जातोवैद्विजसत्तम!
एतद्वेदितुमिच्छामि त्वत्तो ब्रह्मविदाम्वर! ।

सनत्कुमार उवाच

श्रृणु व्यास! महाख्यानं तीर्थमाहात्म्यमुत्तमम् ॥ २६ ॥
यस्यश्रवणमात्रेण सर्वपापक्षयोभवेत् । ब्राह्मणो देवलोनाम दाक्षिणात्योद्विजाधमः

सदापापरतोलोभी कूटसाक्षीचलम्पटः । गुरुद्रोहीकितवोधूर्तो भ्रूणहागुरुतल्पगः ॥
हेमहारी सुरापीच ब्रह्महास्वामिद्रोहकः । अभक्ष्यभक्षकश्चैव वेदशास्त्रविवर्जितः ॥
बहुजन्मार्जितपापी सर्वधर्मबहिष्कृतः । विश्वासघातकोमानी चोरसङ्गरतः खलः ॥
देशान्तरगतोमन्दश्चौरकार्यार्थसाधकः । बहवो निहतामार्गे पापचारेण जन्तुना ॥
मगधेषु गतो दुष्टः प्रसङ्गात्पापकारिणाम् । तत्रैको ब्राह्मणोदान्तो वेदवेदाङ्गपारगः

सात्विकः शुद्धसत्त्वस्थो ब्रह्मकर्मरतः सदा ।

श्वशुरगृहस्थितां भार्यां तामादाय यशस्विनीम् ॥ ३६ ॥

चलितोमार्गमारुद्ध्य तेनपापेनघातितः । तस्यस्त्रीच वरारोहा रूपलावण्यशालिनी
पतिव्रता महाभागा पूतचित्ताशुचिस्मिता । हतेभर्तरिदुःखार्ता पत्युर्विरहकातरा
वनेघोरे परिभ्रष्टा काष्ठमादाय भामिनी । आरुरोहचितांदीप्तां पतिनाशुद्धमानसा
सचदुष्टतरःसर्वं तस्य विप्रस्यजीवनम् । गृहीत्वा चलितोमार्गेगृहीतोराजकिङ्करैः

निगडित्वा तु चित्तेन वेदितो राजसन्निधौ ।

घातितो वै गले बद्ध्वा रज्जुना वृक्षकोटरे ॥ ४१ ॥

चाण्डालैर्घृष्टितोभूमावितश्चेतः श्वपाकिभिः । तेनकर्मविपाकेन रौरवंनरकंगतः ॥
षष्टिवर्षसहस्राणिविष्ठायांकृमितांगतः । ततो हि नरकं प्राप्तोयमशासनकारकैः ॥

कुम्भीपाकगतो रौति वैतरण्यां प्रपीडितः ।

एवं बहुविधान्नरकान् भुक्त्वा पापी स दुःखतः ( नवान्नवान् ) ॥ ४४ ॥

ततःप्रेतत्वमापन्नो युगानांपञ्चसप्ततिम् । सूचीमुखोमहाकायो महारावोमहोदरः ॥
क्षुधातृषापराक्रान्तो मरुदेशसमाश्रितः । ततःकष्टतरंप्राप्यपैशाचींतनुमाश्रितः ॥
कुटिलोदुष्टभावश्च दुष्टाचारीदिगम्बरः । विष्ठामूत्रकृताहारो पूतिपर्युष्टभोजनः ॥
श्मशानेविट्प्रभोजीच कृत्तिवासाविलोचनः । भग्नवाप्यांतडागेत्रशुष्कवृक्षेचनिर्जले
प्राकारपरिघाकारे शून्यागारेनदीतटे । निवासोरोचतेतस्य सर्वदासर्वसन्धिषु ॥
एवं बहुयुगे याते महाकालवनेगतः । यत्रमाहेश्वरंलिङ्गं सुन्दरंकुण्डमद्भुतम् ॥ ५०
तत्रापिक्षणमात्रेणसिंहेनविनिपातितः । घातयित्वाचतंपापं जलार्थीकुण्डमाविशत्

दंष्ट्रान्तरगतंचास्थिपतितंतन्मुखाज्जले । तेनपुण्यप्रभावेणसर्वपापं क्षयं गतम् ॥
मृतमात्रे चलिङ्गं तन्नेत्रान्तरगतं तदा । हित्वापैशाचकंदेहं ज्योतिस्तल्लिङ्गमाविशत्
तदारभ्यपरंव्यासतीर्थंपैशाचमोचनम् । पिशाचमोचनेशाख्योभुविविख्याततांगतः

तावद् गर्ज्जन्ति पापानि मदोन्मत्ता गजाइव ।
यावन्नायाति क्षिप्रायां तीर्थे पैशाचमोचने ॥ ५५ ॥
पिशाचमोचने स्नात्वा शुचिर्भूत्वा समाहितः ।
पिशाचमोचनेशाख्यं पूजयित्वा यथाविधि ॥ ५६ ॥

सर्वपापविशुद्धात्मा जायतेनात्रसंशयः । पिशाचमोचनेव्यास महादानानिकारयेत्
नतस्यपुनरावृत्तिः शिवलोकात्कदाचन । पिशाचमोचनकथां पवित्रांपापहारिणीम्

पठनाच्छ्रवणाच्चैव हयमेधफलं लभेत् ॥ ५६ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डेऽवन्तीक्षेत्रमाहात्म्येसुन्दरकुण्डपिशाचमोचनमाहात्म्यंनामचतुःषष्टितमोऽध्यायः ॥६४

---

## पञ्चषष्टितमोऽध्यायः

### नीलगङ्गामाहात्म्यवर्णनम्

व्यास उवाच

भूयस्तुश्रोतुमिच्छामित्वत्तोब्रह्मविदांवर! । नीलगङ्गाकदाब्रह्मन्क्षिप्राकुण्डेसमागता

सनत्कुमार उवाच

श्रृणुव्यासमहातीर्थं सर्वतीर्थफलप्रदम् । नीलगङ्गांनरः स्नात्वासङ्गमेश्वरमर्चयेत् ॥
दुष्टसङ्गोद्भवादोषा नभवन्तिकदाचन । एकदाब्रह्मलोकेवै गङ्गात्रिपथगानदी ॥ २ ॥
गतापुनन्तीत्रींल्लोकान्नीलवासाशुचार्दिता । भगवन्किमिदंजातं पातकंमेकृतम्पुरा
दुष्टाचारपरामेऽद्य येनैषाप्रापितादशा । सर्वलोकेषुयत्किञ्चिज्जनानांपातकम्भुवि ॥

तत्सर्वंमयितिष्ठेत्तु सर्वेषामपिदेहिनाम् । तेनाहंवैभराक्रान्ता नोशक्ताचलितुंधराम्
नीलवासाविवर्णाच सर्वधर्मबहिर्मुखैः । यत्किञ्चित्क्रियतेकर्म शुभंवायदिवाशुभम्
मयित्यक्त्वापुनन्तीमेजन्तवःसर्वशोऽमलाः । तिष्ठन्तिपुण्यलोकेषुभुक्तिमुक्तिप्रदेषुच
अस्माकंचमहत्कष्टं जातंधातः परमलम् । नहिशर्मनैवशान्तिर्ननिद्रानचनिर्वृतिः ॥
नहिलोकेस्थितिर्मेऽद्य पापिष्ठायासनातनी । दुष्टसङ्गोद्भवैर्दोषैः प्लाविताहंजगद्गुरो
किंकरोमिक्वगच्छामि येनशान्तिर्भवेन्मम । किंतपःकिञ्चदानंमेकिंतीर्थंकिंचसाधनम्
येनाहंपापलिप्ताङ्गी पूर्वप्रकृतिमाप्नुयाम् । एवंज्ञात्वामहायोगिन् यथायोग्यंतथाकुरु

ब्रह्मोवाच

श्रूयताम्भोःसरिच्छ्रेष्ठे! कारणं पापनाशनम् ।
महाकालवने रम्ये पुरी ह्येषाऽमरावती ॥ १३ ॥

तत्रक्षिप्रासरिच्छ्रेष्ठा वर्ततेभुविपावनी । तस्यादर्शनमात्रेण सर्वपापक्षयोभवेत् ॥
तत्रगच्छमहाभागे सद्यश्चात्मविशुद्धये । ब्रह्मणेदंसमाख्यातं श्रुत्वागङ्गासरिद्वरा ॥
तमभिद्रायसम्प्राप्ता महाकालवनंशुभम् । पुष्करस्याग्रमार्गेच यत्रदेवोमरुत्सुतः ॥

विन्ध्यस्य चोत्तरेभागे अञ्जन्याश्रममुत्तमम् ।
सा पुत्रेण तपस्तेपे पवित्रा ब्रह्मचारिणी ॥ १७ ॥

पतिव्रताभिः सर्वाभिःपतिभिर्ब्रह्मचारिभिः । देवाङ्गनाभिर्बहुभिःक्रीडद्भिर्बालकुञ्जरैः
सरसीफुल्लकह्लारैर्मत्तालिकुलनादितम् । निर्वैरजन्तुभिःसेव्यं ब्रह्मर्षिगणसेवितम् ॥
मनआह्लादकंपुण्यं पवित्रंपापनाशनम् । तत्रप्रवेशमात्रेणनीलवासासरिद्वरा ॥ २० ॥
शुक्लवासाभवत्सातु नष्टपापमलाशुभा । शरच्चन्द्रनिभाकारा धूतपापायशस्विनी ॥
तत्रैवचाश्रमंचक्रेमनसोहर्षकारणम् । ततःप्रभृतिसमाख्यातं सर्वलोकेषुपुण्यदम् ॥ २२

नीलगङ्गेति तत्तीर्थं व्यास! किल्बिषनाशनम् ।
अस्मिंस्तीर्थे नरः स्नात्वा हनुमन्तमथार्चयेत् ॥ २३ ॥

तस्यसिद्धिः करगता भविष्यतिनसंशयः । आश्विनेमासिसंप्राप्तेकृष्णपक्षेसमाहितः
दर्शेपितॄन्समुद्दिश्यश्राद्धंकुर्यान्महालयम् । तारितंतेनस्वकुलंसर्वमेकोत्तरंशतम् ॥

सप्तगोत्रेषुयेजाताः पूर्वजाः पितरस्तथा। तेसर्वेसद्गतिंयान्ति तेषांलोकाःसनातनाः
स्नात्वातिलाञ्जलिंदद्यात्पितृनुद्दिश्यतत्परः । अक्षयाजायतेतृप्तिःस्वर्गलोकेमहीयते
भोजयेद्ब्राह्मणान्सप्त श्राद्धंकृत्वातुपायसैः । अक्षयंलभतेश्राद्धमश्वमेधफलंभवेत् ॥
तीर्थंपुण्यतरंव्यास!शृणुपुण्यतरंस्मृतम्। दुग्धकुण्डमितिख्यातंत्रिषुलोकेषुविश्रुतम्
सर्वपापहरंपुण्यं सर्वकामवरप्रदम्। पुरा दुग्धा धरादेवी पृथुना धर्ममूर्तिना ॥ ३० ॥
दुग्धंसर्वंहविर्भाव्यं सर्वेषांजीवनप्रदम्। दत्तंनिधायकुण्डेऽस्मिंस्तेनदुग्धसरःस्मृतम्

कुण्डे स्नात्वा पयः पीत्वा दत्त्वा गाञ्च पयस्विनीम्।
सर्ववाधाविनिर्मुक्तो धनधान्यसमन्वितः ॥ ३२ ॥

जायतेसर्वकालेषु मृतः स्वर्गपुरंव्रजेत्। ततःपुष्करमासाद्य स्नानदानादिकंचरेत् ॥
सर्वपापविशुद्धात्मा पुष्करस्य फलं लभेत् ॥ ३४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे ऽवन्तीक्षेत्रमाहात्म्येनीलगङ्गामाहात्म्यंनामपञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

## षट्षष्टितमोऽध्यायः

### विन्ध्यावासिनीविमलोदतीर्थवर्णनम्

व्यास उवाच

कोऽसौविन्ध्यगिरिर्ब्रह्मन् कदाकालेसमागतः। महाकालवनेरम्ये केनवाप्रेषितःपुरा

सनत्कुमार उवाच

पुरारेवाजलैर्व्यास प्लावितैषावसुन्धरा । तदासर्वसुरैरेवमगस्तिर्मुनिसत्तमः ॥
आराधितो महाभाग!धरणीत्राणकारणात्।
तदागत्य गिरौ रम्ये विन्ध्ये स मुनिसत्तमः ॥ ३ ॥
एकाग्रमानसो भूत्वा भवानीं विन्ध्यवासिनाम्।

आराधनं तदा चक्रे तस्या देव्या वरेप्सया ॥ ४ ॥
कंसविद्रावणकरीमसुराणांक्षयंकरीम् । भारावतारणींपुण्यां बलस्यभगिनींशुभाम्
यशोदागर्भसम्भूतां चाणूरबलमर्दिनीम् ।
विद्युद्रूपां नभस्थां तु कृष्णां कृष्णाहिमर्दिनीम् ॥ ६ ॥
जननींदेवसेनस्य कवीनांवाक्यदेवताम् । गायत्रींद्विजमुख्यानां बृहतींछन्दसांवराम्
सहस्राक्षीं सुरेन्द्रस्य ऋषेश्चारुन्धतीम्पराम् ।
गवांकामदुघां श्यामां लतां मधुतमप्रियाम् ॥ ८ ॥
अदितिं सर्वमातृणां पार्वतीं सर्वयोषिताम् ।
ज्योत्स्नाश्चान्द्रमसीं बालां सर्वकामवरप्रदाम् ॥ ९ ॥
शारदांक्रतुवेलायांवृन्दावनचरींवराम् । मायिनांवैष्णवींमायांसर्वदैत्यविमोहिनीम्
महालक्ष्मीं श्रीमभीष्टां यक्षिणीं धनदार्चिताम् ।
महोदधीप्सितां वेलां राज्ञां कार्येषु चक्रिणीम् ॥ ११ ॥
वेदिकांयज्ञशालानां वराहस्यावनींशुभाम् । दक्षिणांसर्वदीक्षाणांसर्वकामफलप्रदाम्
एवंस्तुतातदादेवी प्रत्यक्षाविन्ध्यवासिनी । प्राहप्रसादसुमुखी ऋषीणांप्रवरंऋषिम्
व्रियताम्भोद्विजश्रेष्ठ! तदस्मत्तोऽभिवाञ्छितम् ।
यदीप्सितं त्वया वत्स! स्तुतिर्मे सुचिरं कृता ॥ १४ ॥

अगस्तिरुवाच

यदिमातर्वरोदेयोदेवानामुपकारिणि! । रेवेयंवर्द्धितालोके सर्वलोकभयप्रदा ॥ १५ ॥
तयेदंप्लावितंविश्वं तस्यानिग्रहणंकुरु । इतिसाप्रार्थितातेन तदाकालेमहर्षिणा
अगात्साध्वी तदा व्यास! महाकालवनं शुभम् ।
सान्त्वपूर्वं वचः पथ्यमगस्तिमिदमब्रवीत् ॥ १७ ॥
वारयिष्येपरान्देवींवर्द्धमानांद्रुतंऋषे । तावत्त्वंऋषिभिः साकंविन्ध्यस्यचमहागिरेः
परमेत्रिकुटेद्वारे स्थास्यसिऋषिसत्तम! । पुरीह्येषामुनिश्रेष्ठ त्रिषुलोकेषुविश्रुता
अत्रैवसुचिरंकालं मातृभिर्निवसाम्यहम् । तत्रापित्वंसदासिद्धक्षेत्राधिपतिमाप्नुहि

मत्सरोनिर्मलंपुण्यंविमलोदन्तुविश्रुतम्। यत्रपुण्वतांवासोदेव्यस्तिष्ठन्तिकोटिशः
तस्मिंस्तीर्थे नराः स्नात्वा भूत्वा चैव समाहिताः।
यजन्ति चैव माम्भक्त्या धूपदीपाग्नितर्पणैः॥ २२॥
क्षीरखण्डाज्यभोज्यैश्च भोजयेद्विधिवद्द्विजान्।
न तेषां दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते॥ २३॥
धनधान्यधरैश्वर्यपुत्रदारादिसम्पदः।
प्राप्नोति विविधान् भोगान् देवानामपि दुर्लभान्॥ २४॥
नशत्रुतोभयंतेषांदस्युभ्योवानराजतः। नशस्त्रानलतोयौघात्कदाचित्सम्भविष्यति
दीर्घायुर्बुद्धिमाँल्लोके उषित्वा शाश्वतीःसमाः।
सर्वपापविशुद्धात्मा मृतः शिवपुरं व्रजेत्॥ २६॥
एवं व्यास!पुरीम्प्राप्य रम्यां चोज्जयिनीं शुभाम्।
समाश्रिता तदा देवी सततं विन्ध्यवासिनी॥ २७॥
तस्मिंस्तीर्थेनरः स्नात्वा सर्वपापैः प्रमुच्यते।
स्त्रियो वा रजदोषाक्ता वन्ध्या वै काकवन्ध्यका॥ २८॥
दुर्भगा शीलहीना च सर्वकामविवर्जिता।
विमलोदेऽपि ताःस्नात्वा दृष्ट्वा वै विन्ध्यवासिनीम्॥ २९॥
मुच्यतेसर्वदोषैस्तु नात्रकार्याविचारणा। अपुत्राः प्राप्नुयुःपुत्रान्कन्यावीरंपतिवरा
प्राप्यतेसर्वसौभाग्यं सर्वकामवरप्रदम्। विद्यावाञ्जायतेविप्रः क्षात्रयोविजयीभवेत
वैश्यश्चबहुलाभाढ्यः शूद्रस्तुसुखमश्नुते। कथाम्पुण्यवतीमेतां सर्वकामवरप्रदाम्
पठनाच्छ्रवणाद्वापि गोसहस्रफलं लभेत्॥ ३३॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डेऽवन्तीक्षेत्रमाहात्म्येविन्ध्यवासिनीविमलोदतीर्थमाहात्म्यं नाम षट्षष्टितमोऽध्यायः॥ ६६॥

---



# सप्तषष्टितमोऽध्यायः

## क्षातासङ्गममाहात्म्यवर्णनम्

### सनत्कुमार उवाच

तीर्थमन्यतरंव्यास क्षातासङ्गमसम्भवम् । यत्रतुस्नानमात्रेण महापापैःप्रमुच्यते
अमावैशनिवारेण यदायातिसमाहितः । पितृनुदिश्ययः कुर्याच्छ्राद्धंचैवतिलोदकम्
पश्येच्छनैश्चरंदेवंस्थावरंलिङ्गमुत्तमम् । तस्यशानिश्चरीपीडा नभवेत्तुकदाचन ॥

### व्यास उवाच

महातीर्थंसमाख्यातं महाकालवनेशुभे । भूयस्तुश्रोतुमिच्छामिविस्तरेणतपोधन

### सनत्कुमार उवाच

श्रूयतांभोद्विजश्रेष्ठ!कथापौराणिकीशुभा । यस्याःश्रवणमात्रेणमहापापक्षयोभवेत्
रेवाचर्मण्वती क्षातातिस्रोनद्यः पुरानघ। त्रैलोक्यपावनीर्जाताभुविचामरकण्टकात्
पुण्याःपुण्यजला रम्याः पवित्राः पापहारिणीः ( हारकाः ) ।
पुनन्त्यः सर्वलोकानां पापिनः पापकारिणः ( स्नानात्पानात्तथापगाः )
एकदोपवनेरम्ये मान्धातृक्षेत्रउत्तमे । मिथोरमन्तिसंहृष्टाः परस्परजिगीषया ॥ ८ ॥
किञ्चिद्दोषप्रसङ्गेनमिथोभेदोह्यजायत । रेवासङ्गंपरित्यज्यभित्त्वाविन्ध्यगिरिंवरम्
महाकालवनेरम्ये समायातासरिद्वरा । यत्रक्षिप्रामहापुण्यापुरीह्येषाऽमरावती ॥ १०
सर्वतीर्थवरंश्रेष्ठं नाम्नारुद्रसरः स्मृतम् । भुक्तिमुक्तिप्रदंनित्यं सिद्धर्षिगणसेवितम्
यत्रागत्यपुराक्षाता क्षिप्रासङ्गंसमाश्रिता । तत्रतीर्थंपरंजातं क्षातासङ्गमसंज्ञितम् ॥
यत्रधूतरजो ( जा ) जातः सद्यःप्रोक्तो विभावसुः ।

### व्यास उवाच

कथं सूर्यस्त्वया प्रोक्तो विरजो ह्यभवत्पुरा ॥ १२ ॥
एतद्वेदितुमिच्छामि त्वत्तो ब्रह्मविदाम्वर! ।

सनत्कुमार उवाच

पुरा तु सञ्ज्ञां सावित्रीं त्वष्टा स्वतनयान्ददौ ॥ १४ ॥
पतिर्धर्मरतानित्यं सवित्रेलोकचक्षुषे। तस्यांच मिथुनंजज्ञेलोकसाक्षिविभावसोः ॥
यमोवैवस्वतोजातोयमुनालोकपावनी। ततःसञ्ज्ञाब्रवीच्छायांस्वकीयांसूनृतांगिरम्
मिथुनंमेतवोत्सङ्गे धृतंतत्परिपालय। यावत्त्वहमितश्छाये वत्स्यामिस्वपितुर्गृहे
रविभक्तिरतातावच्चरत्वंममवेश्मनि। नोवाच्याहंकदाछाये! पितुर्वेश्मगतारवेः ॥
एवंसासमयंकृत्वा सावित्रीह्यगमत्तदा । पितुर्वेश्मगताबाला सवितुर्भयविह्वला ॥
पित्रानिवारितासातुवडवारूपधारिणी । विचचरवनेरम्ये बहूलोदकशाड्वले ॥
एकदायाचितातेन सा यमेनबुभुक्षुणा। नौदनंवैतयादत्तं याचमानायतत्क्षणात् ॥
तदापदाहतातेन छाया तं चशशापह । यस्मात्पादेन मे घातं कृतवान्बालभावतः ॥
तस्मात्त्वंतुपदाखञ्जो भविष्यसिनसंशयः। एवंशप्तोरुजाक्रान्तो विललापशुचार्दितः
एतस्मिन्नन्तरेऽभ्यास परिभूयवसुन्धराम्। भावयन्सकलाँल्लोकान्ग्रहचारीविभावसुः
दृष्ट्वाचतनयस्पङ्गुमित्युवाचतदायमम् । किमिदंवत्सतेकष्टंकुतः प्राप्तंत्वयाऽनघ! ॥
इति पृष्टो यदा तेन सवित्रा लोकभावनः ( लोकभास्वता )
उवाच गद्गदवचा यमः संयमिनीपतिः ॥ २६ ॥
प्रातराशायमेनाथ याचितंमातुरन्तिकात्। नोदत्तम्भोजनंक्षिप्रं बालभावेनताडिता
पादौमेगलितौसद्यो मातुःशापतिरस्कृतौ। तच्छ्रुत्वामोहमापन्नोरविर्ध्यानपरायणः
विचित्रमिदमाख्यातं मातुःशापस्य कारणम्।
एवं ध्यात्वा चिरं कालं ज्ञातवान् रविरंशुमान् ॥ २९ ॥
नेयंसारुचिरापाङ्गीत्वाष्ट्रीलोकस्यपावनी। केयंवाकुतआयाताकात्वंवदशुचिस्मिते

छायोवाच

नसासंज्ञामहाराज! छायातादात्म्यसम्भवा। गतावैसापितुर्गेहे वारिताहं तयाऽनघ
सवित्रेनैववक्तव्यं छायेकिञ्चित्कथञ्चन । एषमेसमयोनाथतेनाहं मौनमास्थिता ॥
तच्छ्रुत्वाभगवांस्त्वष्टुः समीपंरथमास्थितः। जगामसहसाभानुर्बहुरोषसमन्वितः

तंदृष्ट्वासहसोत्थाय त्वष्टालोकपितामहः । पाद्यार्घाचमनीयादिमधुपर्कैरपूजयत्
नत्वा पादौपरिक्रम्यबहुमानपुरःसरम् । ऊचे मधुरयावाचा प्रियन्तेकरवामकिम्

रविरुवाच

क्वसातुसंज्ञासाचित्री ममविप्रियकारिणी । आगता ते गृहं तात!ममर्मार्गानुभेदिनी

त्वष्टोवाच

नहिजानीमहेतात प्रियायास्तेगतागतम् । इत्युक्ते वचनेत्वष्ट्रा रविर्दुःखितमानसः
किंकरोमिक्वगच्छामि क्वचप्रियतरामम । इतिसम्भाषमाणेतुत्वष्टावाक्यमथाब्रवीत्
तवतेजः परिभ्रष्टा भग्नाक्वापिगतावला । यदितेवल्लभाभार्या तेजस्त्वस्पपरिशामय

सूर्य उवाच

यद्येवंदुःसहंतेजो ममापूर्वंपितामह । यथातेरोचतेसम्यक् तथामेघर्षणंकुरु ॥ ४० ॥

इति सूर्यवचः श्रुत्वा शाणं कृत्वा सुदर्शनम् ।
घृष्टितः क्षुरधारेण लघीयान्निर्मलोऽभवत् ॥ ४१ ॥

तस्यघर्षितमात्रेणत्वष्टाचक्रेविवस्वतः । शा (श्रो) णंसुदर्शनंचक्रेसैकतामणिजातयः
तदात्वष्टाऽब्रवीद्वाक्यंमधुरंसूर्यसन्निधौ । महाकालवने रम्ये वडवा रूपधारिणो ॥
गृह्यतांभोः सुरश्रेष्ठशीघ्रं गच्छतुशाड्वले । यत्रक्षिप्रासरिच्छ्रेष्ठायत्रक्षातासमागता
उभयोः सङ्गमो यत्रतत्रमुक्तिर्नसंशयः । तत्रसासुभगापत्नी प्राप्यते ते नसंशयः ॥
इतितस्यवचः श्रुत्वा सवितासर्वतापनः । तत्रागच्छद्वनंयत्र महाकालस्यपावनम् ॥
क्षातासङ्गमसंयुक्तायत्रक्षिप्रापयस्विनी । तत्रभुक्तिश्चमुक्तिश्च धनधान्यसमागमः ॥

तत्रागत्य प्रियाम्भार्यां वडवारूपधारिणीम् ।
ददर्श ताम्पुनःश्यामां हरिरूपधरो हरिः ॥ ४८ ॥
नासिकाघ्राणमात्रेण यौ जातावाश्विनावुभौ ।
दर्शनीयौ सुनूम्णाङ्गौ भिषजौ तौ दिवौकसाम् ॥ ४६ ॥

छायाचक्षुषुत्रेतत्र मिथुनंद्विजसत्तम! । तापींशनैश्चरं चैव सर्वलोकप्रतापनम् ॥
शनियोगेयदाऽमावै जायतेसर्वकामदा । तदास्नानंतदादानं श्राद्धंचैवतुकारयेत् ॥

तस्यहस्तगतालक्ष्मीजायतेसर्वदाभुवि । यःक्षातासङ्गमेस्नात्वादानंदद्याच्चशक्तितः

स्थावरेश्वरमभ्यर्च्यतस्यपापक्षयोभवेत् ।

सौरिःशनैश्चरोमन्दःकृष्णोऽनन्तोऽन्तकोयमः ॥ ५३ ॥

पिङ्गश्छायासुतोबभ्रुः स्थावरः पिप्पलायनः ।

एतानि शनिनामानि प्रातःकाले पठेन्नरः ॥ ५४ ॥

तस्यशानैश्चरीपीडा नभवेत्तुकदाचन । धर्मोऽपिसाक्षादत्रैव तपस्तेपेसुदुस्तरम् ॥

यज्ञकुण्डोत्तरेभागे तत्रतिष्ठतिमारुतिः । धर्मसरइतिख्यातंनाम्नातीर्थमनुत्तमम् ॥

यत्र सिद्धिम्परां प्राप्तस्तपसा पवनात्मजः ।

तस्मिंस्तीर्थे नरः स्नात्वा दत्त्वा वै कांस्यभाजनम् ॥ ५७ ॥

सवासो मणिमुक्ताभिः काञ्चनालङ्कृतंवरम् ।

ब्राह्मणेभ्योऽलंकृतेभ्यो वेदविद्भ्यश्च सादरात् ( म ) ॥ ५८ ॥

मातृलोकसमुत्तीर्णोब्रह्मलोकेमहीयते । श्रावणेधवलेपक्षेएकादश्यांतुयोनरः ॥ ५९ ॥

धर्मतीर्थे सदाचारी स्नानदानादिकाः क्रियाः ।

करोति सततं तस्य विष्णुलोकं सनातनम् ॥ ६० ॥

च्यवनाश्रमे नरः स्नात्वा च्यवनेशं विलोकयेत् ।

यत्र सिद्धिं गतौ पुण्यावाश्विनौ भिषजाम्वरौ ॥ ६१ ॥

च्यवनस्यप्रसादेनदेवपङ्क्तिमवापतुः । च्यवनेन पुरादृष्टिः प्राप्तावैदेवभेषजात् ॥ ६२

तस्मिंस्तीर्थेद्विजश्रेष्ठ!देवदृष्टिर्भवेन्नरः । अत्रैवप्राप्तवान्सूर्यः साग्निहोत्राश्रमम्परम्

ततःसंज्ञामहाभागा सावित्रीलोकविश्रुता । सूर्यलोकंसमासाद्यबुभुजेविपुलांश्रियम्

तस्माद्व्यास!परंतीर्थं क्षातासङ्गमसञ्ज्ञितम् । सर्वपापहरम्पुण्यं सर्वकामवरप्रदम् ॥

यएतांसुकथाम्पुण्यां शृणोतिभुविभक्तितः । पठेद्वाप्रातरुत्थाय तस्यपुण्यफलंशृणु

कपिलागोसहस्रेण फलम्भवतिपर्वणि । तत्फलं समवाप्नोति नात्रकार्याविचारणा

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे

क्षातासङ्गममाहात्म्यं नामसप्तषष्टितमोऽध्यायः ॥ ६७ ॥

# अष्टषष्टितमोऽध्यायः

## गयातीर्थमाहात्म्येगयातीर्थप्रशंसनम्

सनत्कुमार उवाच

श्रृणु व्यास!प्रवक्ष्यामि तीर्थमेकमतः परम् ॥ १ ॥

तीर्थानामुत्तमंतीर्थं गयानामेतिनामतः । यत्रस्नात्वानरोनित्यंमुच्यतेचऋणत्रयात्

देवान् पितृन्समभ्यर्च्य विष्णुलोकं स गच्छति ।

व्यास उवाच

कीकटेषुगयापुण्या नदीपुण्या पुना पुनः( पुनःपुना ) ॥ ३ ॥

तीर्थानामुत्तमंतीर्थंपुण्योराजगिरिस्तथा(च्यवनस्याश्रमःपुण्यःपुण्योराजगिरिस्तथा)

सकथंविदितोदेशो महाकालवनेशुभे । एतद्वेदितुमिच्छामि विस्तरेण तपोधन! ।

सनत्कुमार उवाच

श्रृणु व्यास!कथाम्पुण्यां पवित्रां पापहारिणीम् ॥ ५ ॥

यस्याः श्रवणमात्रेण पितरोयान्तिसद्गतिम् । पुराकृतयुगेपुण्ये युगादिदेवनामतः ॥

राजासीत्सतुधर्मात्मापुण्यश्रवणकीर्तनः। तस्यपालयतःसम्यक्प्रजाःपुत्रानिवौरसान्

बभूवुःसर्वसम्पन्ना वर्द्धमानाःसमन्ततः । धर्मश्चतुष्पदोनित्यं यस्मिन्राज्ञिप्रशासति

कालेवर्षी च पर्जन्यो ऋतवः स्वाज्ञचारिणः ।

बहुसस्यफला पृथ्वी गावश्च बहुदुग्धदाः ॥ ६ ॥

वेदवादरताविप्राः क्षत्रियाबाहुशालिनः । वैश्याधनपरा नित्यं शूद्राःशुश्रूषणेरताः॥

वर्णाश्रमरताःसर्वे सर्वधर्मोपदेशकाः । श्रुतिस्मृतिपरोधर्मोहृष्टपुष्टजनाकरः ॥ ११ ॥

नाधिव्याध्यभिसम्भूता लक्ष्यन्ते केऽपि मानवाः ।

दुःशीला दुर्भगा नार्यां विधवा नो तथैवच ॥ १२

बहुपुत्राल्पपुत्राश्च मृतपुत्रानवन्ध्यकाः । रूपशीलगुणोपेताः पतिव्रतपरायणाः ॥

सुमार्गकरसङ्कीर्णा दस्युदोषविवर्जितः । हूयताम्भुज्यतांशश्वद्दीयताञ्चगृहेगृहे ॥
जपदानतपोहोमस्तुतियज्ञक्रियापराः । जनाःसर्वत्रदृश्यन्तेसर्वधर्मपरायणाः ॥ १५ ॥
चतुष्पदचरोधर्मोह्यधर्मः पादविग्रहः । एवं राजा सधर्मात्मा युगादिदेवसञ्ज्ञितः
येनेयंपालितापृथ्वीधर्मेणवर्द्धिताः प्रजाः । अवन्त्यांच पुराव्यास!यज्ञकोटिंसमाचरत्

तस्मिन्कालेऽतिविक्रान्तस्तुहु ( ह ) ण्डोनामदानवः ।
तेन सर्वं वशं नीतं चराचरमिदं जगत् ॥ १८ ॥

घोरं तप्त्वा तपः पुण्यं ब्रह्मलब्धवरःखलः । नैवदेवानयज्ञाश्च वेदमार्गविवर्जिताः॥१६
देवतापूजनं नास्ति स्वधास्वाहानदृश्यते । उत्सन्नोधर्ममार्गोऽयंशाश्वतोवैदुरासदः
नष्टप्रायाःसुरास्तेन कृताः सर्वोत्तमोत्तमाः । ब्रह्माणंशरणंजग्मुः पितृणांसहसाधुभिः

किं कुर्मः क्व च गच्छामस्तुहु ( ह ) ण्डेन पराजिताः ।
इति श्रुत्वा वचस्तेषां ब्रह्मा लोकपितामहः ॥ २२ ॥

समुत्थायततः सर्वैर्विष्णुलोकंजगामह । तत्रगत्वासमाराध्य विष्णुदेवगणैः सह
स्तुतिपुरुषसूक्तेनविष्णोरतुलतेजसः । प्रचक्रुस्तुसर्वएतेह्यात्मनोऽभ्युदयाय च ॥ २४

तदा तेषां शमिच्छन्ती वैष्णवी चा ( वागुवाचा ) शरीरिणी ।
श्रूयताम्भोः सुरश्रेष्ठा भवतां श्रेय उत्तमम् ॥ २५ ॥

यूयंयातक्षितौक्षिप्रं महाकालवनं प्रति । गुह्याद्गुह्यतरं पुण्यं पवित्रंपापनाशनम्
नोयत्रमायिनांमाया प्रकाशयतिभूतले । सर्वतीर्थमयंतीर्थं कोटितीर्थवरप्रदम ॥ २७
यत्रक्षिप्रासरिच्छ्रेष्ठा सर्वकामफलप्रदा । दैत्यान्तकारिणीदिव्या महाकालीकुलेश्वरी
कोटिकोटिगणाकीर्णा मातृणांशक्तिवर्द्धनी । गयायत्रमहापुण्या फल्गुश्चैवमहानदी
पुरुषोत्तमगिरिः श्रेष्ठो यत्रवुद्धगयास्मृता । तथैवचगयाख्याता त्रिषुलोकेषुविश्रुता
विष्णोःषोडशपदीतीर्थं गदाधरविनिर्मितम् । सर्वपापहरापुण्या यत्रप्राचीसरस्वती
महासुरनदीप्रोक्ता पञ्चतिष्ठन्तिपुण्यदाः । न्यग्रोधश्चाक्षयोनित्यः पुराप्रोक्तोमहर्षिणा
तत्रैव साशिलाप्रोक्ता प्रेतमोक्षकरीशुभा । तत्रैववसतेसर्वा देवताः पितृकल्पजाः ॥
सर्वाक्षरमयोङ्कारः सर्वदेवमयोहरिः । सर्वतीर्थमयादेवा गयातीर्थमनुत्तमम् ॥ ३४ ॥

शीघ्रंगच्छततत्रैव परांसिद्धिमवाप्स्यथ । यत्रप्रविष्टमात्रेण पितरोनिरयस्थिताः ॥

ते सर्वे स्वर्गमायान्ति ब्रह्मभूयाय कल्पते ॥ ३६ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे-

ऽवन्तीक्षेत्रमाहात्म्ये गयातीर्थमाहात्म्येगयातीर्थप्रशंसा

नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

# एकोनसप्ततितमोऽध्यायः

## गयामाहात्म्येश्राद्धविधिवर्णनम्

व्यास उवाच

विचित्रमिदमाख्यातं गयामाहात्म्यमुत्तमम् ।

भगवन्! भवता सर्वं विदितं विश्वमूर्तिना ॥ १ ॥

तत्सर्वं श्रोतुमिच्छामि श्राद्धस्यफलमुत्तमम् । क्षेत्रस्यचद्विजश्रेष्ठविस्तरेणतपोधन

कियन्तःपितरोनित्यं तृप्तायान्तिसुरालयम् । केषांकेपितरः प्रोक्ताःकेतश्चासन्पुरानघ

सनत्कुमार उवच

धन्योऽसि कृतकृत्योऽसि यस्य ते नैष्ठिकी मतिः ।

तथापि श्रूयतां वत्स! श्राद्धस्य विधिमुत्तमम् ॥ ४ ॥

श्राद्धे प्रकल्पिता लोकाः श्राद्धे धर्मः प्रतिष्ठितः ।

श्राद्धे यज्ञा हि तिष्ठन्ति सर्वकामफलप्रदाः ॥ ५ ॥

श्राद्धेयद्दीयतेकिञ्चिद्देवविप्राग्नितर्पणम् । श्राद्धेतद्धिविजानीयात्पुराप्रोक्तं महर्षिणा

मनुष्याऋषयः सर्वे सुरसिद्धाश्चमानवाः । गन्धर्वाः किन्नरानागा ब्रह्मेशनासुरेश्वराः

त्रींस्त्रीन् पिण्डान् समुद्दिश्य श्राद्धं दत्त्वा समाहिताः ।

प्राप्नुवन्त्यखिलान् कामान् सर्वान् व्यास!मनोगतान् ॥ ८ ॥

एवंपरापरम्पमार्गं प्रवर्तन्तेसनातनम् । तथापिपितरोह्येते समाख्यातास्तपस्विभिः
तत्सर्वंसम्प्रवक्ष्यामि यथाश्रुतंतथाश्रृणु । यथैतेपितरो देवा देवाश्चपितरस्तथा १०
अन्योन्यंपितरोह्यते देवाः पितृगणैःसह । मार्कण्डेनपुरापृष्टं प्रश्नमेतंद्विजोत्तम ॥ ११

निबोधयामि ते व्यास! निखिलं सर्वमादितः ।
यावन्तस्ते पितृगणास्तस्मिल्लोके च ते गताः ॥ १२ ॥

सनत्कुमार उवाच

सप्तैतेयजतांश्रेष्ठाः सर्वेपितृगणाःस्मृताः । चत्वारोमूर्तिमन्तोवै त्रयस्तेषाममूर्तयः
तेषांलोकंविसर्गञ्चकीर्तयिष्यामितच्छृणु । प्रभावत्वंमहत्त्वञ्च विस्तरेणतपोधन॥
धर्ममूर्तिधरास्तेषां त्रयोयेपरमागणाः । तेषांनामानिलोकांश्चकीर्ततिष्यामितच्छृणु

लोकाः सनातनानाम यत्र तिष्ठन्ति भास्वराः ।
अमूर्तयः पितृणास्ते वै पुत्राः प्रजापतेः ॥ १६ ॥

विराजस्यद्विजश्रेष्ठ वैराजाइतिनः श्रुतम् । यजन्तेतान् देवगणा विधिदृष्टेनकर्मणाः
एतेवै योगविभ्रष्टा लोकान्प्राप्यसनातनान् । पुनर्युगसहस्रान्ते जायन्ते ब्रह्मवादिनः

ते प्राप्य तां स्मृतिम्भूयः साङ्ख्ययोगमनुत्तमम् ।
यान्ति योगगतिं सिद्धाः पुनरावृत्तिदुर्ल्लभाम् १६ ॥

एतेस्युः पितरस्तात योगिनांयोगवर्द्धनाः । आप्याययन्तियेपूर्वं सोमंयोगबलेनवै

तस्माच्छ्राद्धानि दीयन्ते योगिनां द्विजसत्तम! ।
एष वै प्रथमः कल्पः सोपानमिति विश्रुतम् ॥ २१ ॥ मपा

एतेषां मानसी कन्या मेनानाममहागिरेः । पत्नीहिमवतःश्रेष्ठा यस्यांमैनाकउच्यते

मैनाकस्य सुतः श्रीमान् क्रौञ्चो नाम महागिरिः ।
अग्निष्वात्ताः पितृगणास्तत्र तिष्ठन्ति भास्वराः ॥ २३ ॥
यास्यां बर्हिषदाआसन् यमाद्याश्चैव पश्चिमाम् ।
सोमपाश्चोत्तराम्प्राप्ता दिशं धनदपालिताम् ॥ २४ ॥
अमूर्तिमन्तावाकाशे कव्यवाडनलौ क्षितौ ॥ २५ ॥

यक्षरक्षःपिशाचाश्च यजन्ते भावितात्मनः ।
साध्या देवान्यन्तिस्म विश्वेदेवा ऋषींस्तथा ॥ २६ ॥

मानवाः श्राद्धदेवं च ऋषयो ब्रह्म सनातनम् । एवं परम्पराप्राप्तः श्राद्धधर्मः सनातनः देवकार्यात्परं कार्यं पितृकार्यं विशिष्यते । भरद्वाजात्मजाः सप्त श्राद्धधर्मपरायणाः

जातिस्मरत्वमापन्ना निर्वाणपदवीं गताः ।
गुरोश्च दोग्ध्रीं गां हत्वा सप्तैते वै द्विजाधमाः ॥ २९ ॥

पितॄनुद्दिश्य ते सर्वे भक्षयन्तः क्षुधार्दिताः । तेन पुण्यप्रभावेण योगभ्रष्टा दिवंगताः

सप्त जातिस्मरास्ते वै योगयुक्ता बभूविरे ।
तस्माच्छ्राद्धं परं प्रोक्तं सूरिभिः परमात्मभिः ॥ ३१ ॥
श्राद्धे प्रतिष्ठिता लोकाः श्राद्धे योगः परन्तप! ।
एवं ते पितरः प्रोक्ताः श्राद्धस्य च विधिं शृणु ॥ ३२ ॥

ब्रह्मचर्यरतो दान्तो नक्रोधी न चमत्सरी । शौचाचारपरोधीरःशास्त्रदृष्टिजितेन्द्रियः एवं यः कुरुते श्राद्धंतीर्थे चैवविशेषतः । ततोऽधिकतराप्रोक्ता तृप्तिर्व्यास क्षयेऽहनि वृद्धिश्राद्धे तथा प्रोक्ता महालयेशताधिका । ततो दशगुणाप्रोक्ताप्रयागे द्विजसत्तम

प्रयागाद्दशगुणा तृप्तिः कुरुक्षेत्रे च सत्तम ।
कुरुक्षेत्रात्ततो व्यास दशाधिका गया स्मृता ॥ ३६ ॥

ततो दशाधिका व्यासमहाकालवने शुभे । अवन्त्यांसर्वतःपुण्यं गयातीर्थे चसर्वदा येषां निरयमापन्नाः पितरो जन्मजन्मनि । तेषामुद्धरणार्थाय तीर्थमेतत्सुदुर्लभम् सकृत्स्मरणमात्रेण पितॄणां दत्तमक्षयम् । ये नरा रणमध्यस्थाः पितृवंशविवर्जिताः गर्भपाते मृता ये च नामगोत्रच्युतास्तथा । स्वगोत्रे परगोत्रे वा आत्मघातमृताःपरे तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयताम् । उद्बन्धनमृता येच विषशस्त्रैर्मृताश्चये दंष्ट्रिभिर्व्यङ्गतो वापि दौर्ब्राह्मण्ये मृताश्च ये । तेषामुद्धरणार्थाय अत्रश्राद्धं विधीयते

अग्निदग्धाश्च ये जीवा नाग्निदग्धास्तथा परे ॥ ४२ ॥

विद्युद्घातेन ये केचिन्मुद्गराभिहताः परे । तेषामुद्धरणार्थाय अत्र श्राद्धं विधीतते

रौरवे चान्धतामिस्रे कालसूत्रे च ये गताः ।
अनेकयातनासंस्थाः प्रेतलोके च ये गताः ॥ ४५ ॥
असिपत्रवने घोरे कुम्भीपाके च ये गताः । पशुयोनिगता ये च पक्षिकीटसरीसृपाः
तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ॥ ४६ ॥
उदकेषु मृता ये च नारीसूतीमृतास्तथा ॥ ४७ ॥
अश्वसूकरक्रमिदंष्ट्रिश्वशृङ्गिशकटाहताः । तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते
भग्नदंष्ट्राश्च शस्त्रास्त्रैर्व्याघ्राहिगजभूमिपैः । शलभैर्वृश्चिकैर्दंष्ट्रिचोरैर्ये चापि घातिताः
तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ॥ ४६ ॥
अष्टशल्यैर्मृता येचशौचाचारविवर्जिताः । विषूचिकामृता ये चयेचातीसारतोमृताः
तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ॥ ५० ॥
शाकिन्यादिग्रहग्रस्तजलमध्ये च ये मृताः ।
अस्पृश्यस्पर्शसंस्पृष्टाः पापा अपत्यवर्जिताः ।
तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ॥ ५१ ॥
जन्मांतरसहस्राणिभ्रमंतिस्वेन कर्मणा । मानुषंदुर्लभं येषांतेभ्यःश्राद्धं विधीयताम्
येऽन्यजन्मन्यवान्धवा येऽन्यजन्मनि बान्धवाः ।
येऽन्यजन्मनि संबद्धामित्रामित्रे तथा परे ।
तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ॥ ५३ ॥
पितृवंशे मृता ये च मातृवंशे तथैव च । गुरुश्वशुरबंधूनां ये चान्ये बाधन्वामृताः
तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ॥ ५४ ॥
ये मे कुले लुप्तपिंडाः पुत्रदारादिवर्जिताः ।
क्रियालोपगता ये च तेभ्यः श्राद्धं विधीयते ॥ ५५ ॥
पङ्गुकुब्जा विरूपाश्च आमगर्भाश्च ये मृताः ।
ज्ञाताऽज्ञाताः कुले ये च तेभ्यः श्राद्धं विधीयते ॥ ५६ ॥
आब्रह्मभुवनाद्ये च अन्यैर्दुर्मरणैर्मृताः । तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते

तृषार्ताः क्षुधिताश्चैवहापिताश्चैवयेमृताः। प्रेतयोनिं गताश्चैव म्लेच्छयोनिंगताश्चये
तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ॥ ५८ ॥
एवं श्राद्धविधिं व्यास! तस्मिंस्तीर्थे समाचरेत्।
ऋणत्रयविनिर्मुक्तो वाञ्छितार्थं लभेत सः।
गयायां च समासाद्य सुरा इन्द्रपुरोगमाः।
चक्रुश्च विधिवत्सर्वे यदुक्तं देवभाषया ॥ ५९ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
ऽवन्तीक्षेत्रमाहात्म्ये गयामाहात्म्ये श्राद्धविधिवर्णनं
नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

## सप्ततितमोऽध्यायः

### गयातीर्थमाहात्म्यवर्णनम्

सनत्कुमार उवाच

ततः सुरगणाः सर्वे धूतपापाः समाहिताः। पुनर्योगबलं प्राप्य स्वाधिकारंययुः पुरा
एवं व्यास गयातीर्थं कुमुद्वत्यां सुनिश्चितम्।
गयायां यानि तीर्थानि पुण्यान्यायतनानि च ॥ २ ॥
तत्तीर्थेषु नरः स्नात्वा तत्तत्तीर्थफलं भवेत्। तथैव च गयाक्षेत्रं गयाश्राद्धफलप्रदम्
फल्गुश्च सरितां श्रेष्ठातथैवफलदायिनी। आदिगयाबुद्धगया तथाविष्णुपदीस्मृता
गयाकोष्ठस्तथा प्रोक्तोगदाधरपदानि च। वेदिका षोडशी प्रोक्ता तथैवचाक्षयोवटः
प्रेतमुक्तिकरी नित्यं शिला चोक्ता तथैव च।
अच्छोदा निम्नगा प्रोक्ता पितॄणां चाश्रमोत्तमः ॥ ६ ॥
देवानां दानवानां च यक्षकिन्नररक्षसाम्। पन्नगानां च सर्वेषां तथैवाश्रम उत्तमः

एतत्स्थानेषु सर्वेषु स्नानदानादिकाः क्रियाः ।
श्राद्धं च विधिवद्देयं तत्तत्तीर्थफलं लभेत् ॥ ८ ॥
गयायां पितृरूपेणस्वयमेवजनार्दनः । तं ध्यात्वा पुंडरीकाक्षंमुच्यते च ऋणत्रयात्
एवं व्यास! गयातीर्थं पुरावन्त्यां प्रतिष्ठितम् ।
पश्चात्तु कैकटे जातं यत्रसन्निहितोऽसुरः ॥ १० ॥
तदारभ्य द्विजश्रेष्ठ गया तत्र प्रतिष्ठिता । गदाधरपदाघातैर्महासुरो निपातितः
तत्पदे च महिमानं जनार्दनसमर्पितम् ॥ १२ ॥
पंचक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः । यत्र तत्र करिष्यामि पितृणां दत्तमक्षयम्
सर्वदा सर्वकालेषु गयाश्राद्धं विधीयते ॥ १३ ॥
सम्वत्सरे परं व्यास!दिनमेकं प्रतिष्ठितम् । कन्यास्थे च दिवानाथेहस्तनक्षत्रसंयुते
महालयेति तत्प्रोक्तं पितृणां दत्तमक्षयम् ॥ १४ ॥
सर्वदा सर्वकालेषु गयाश्राद्धं विधीयते ॥ १५ ॥
सम्वत्वसरेपरंव्यासदिनमेकंप्रतिष्ठितम् । अन्वष्टकायांकुर्वन्तिमातृणांश्राद्धमुत्तमम्
अक्षया जायते तृप्तिः पितृणां कल्पसङ्ख्यया ।
एवं व्यास! पुरी रम्या स्नानदानादिकर्मसु ॥ १७ ॥
भूयस्तु सम्प्रवक्ष्यामि माहात्म्यं परमाद्भुतम् ।
तच्छृणुष्व मयाख्यातं पवित्रं पापनाशनम् ॥ १८ ॥
सप्तर्षीणां च या भार्या ऋषिपत्न्यः पतिव्रताः ।
स्वाहादोषपरिभ्रष्टा दूषिताः पावकेन च ॥ १९ ॥
ऋषिभिश्च परित्यक्ता बभ्रमुश्च वनाद्वनम् । एवं बहुतिथे कालेनारदो देवदर्शनः
तासां च प्रियमन्विच्छन्समायातो वनान्तरे ।
ताभिश्च सत्कृतो नित्यं समासीनो धृतव्रतः ॥ २१ ॥
उवाच श्लक्ष्णयावाचा देशकालोचितं वचः । किमिदंविकृतंजातंभवतीनांपराभवः
कस्माच्च ऋषिभिस्त्यक्ता लोकमातरः पतिव्रताः ॥ २३ ॥

ऋषिपत्न्य ऊचुः

न जानीमो वयंतातथैनदोषेणतापसैः । विमुक्ताः साग्निकैःक्षिप्रं कार्तिकेयप्रसङ्गतः
लोकापवादजं किञ्चिज्ज्ञातंदिष्टवशादघम् । किं कुर्मोवाकगच्छामःकिंतपःकाचदेवता
यस्याराधनपुण्येन पतिसान्निध्यमाप्नुयुः । एतन्निश्चित्य भोब्रह्मन्ब्रूहित्वंवेदतत्त्वतः
इति पृष्टस्तदा ताभिर्ऋषिपत्नीभिर्नारदः । उवाच सुचिरंध्यात्वातासांसशर्महेतवे

नारद उवाच

श्रूयतां भोस्तपःश्रेष्ठाभवतीनां च कारणम् । महाकालवने रम्येगयातीर्थमनुत्तमम्
तत्रैव चाक्षयो नाम न्यग्रोधः शाखिनां वरः । तत्रागमनमात्रेण धूतदोषाभविष्यथ
सर्वदोषहरं तीर्थं सर्वकामवरप्रदम् । सर्वसौख्यकरं पुण्यं तत्र गच्छत माचिरम्

नारदस्य वचः श्रुत्वा ऋषिपत्न्यः सुचोदिताः ।
महाकालवने व्यास! इच्छन्त्यः प्रियमात्मनः ॥ ३१ ॥

आजग्मुस्तद्वनं तत्र यत्रतीर्थंगयाभिधम् । तत्रगत्वाशुचीभूयस्नानदानादिकाःक्रियाः

कृतास्ताभिश्च पुण्याभिर्नभस्यस्यासितेतरे ।
पञ्चम्यामृषिसञ्ज्ञायां ताभिः सुचरितं व्रतम् ॥ ३२ ॥

उपोष्य चैकरात्रंतु जागरं चैव योगतः । कृतमात्रे व्रते व्यास धूतपापाबभुःक्षणात्
भर्तृकोपपरिभ्रष्टाः सद्यः प्राप्ता गृहाश्रमम् । ऋषिभिःसाग्निकं दत्तं पूर्ववदृषिसत्तम

तदाप्रभृति लोकेऽस्मिन्पञ्चमी ऋषिसञ्ज्ञिता ।
ये नराश्चाथ नार्यो यास्तां कुर्वन्ति तु भक्तितः ॥ ३६ ॥
नीवाराहारकं कृत्वा शुचीभूय समाहिताः ॥ ३७ ॥

नतेषांजायतेकिञ्चिदापद्दुःखं कदाचन । दुर्भगत्वंचनारीणां न वियोगश्चमातृभिः

पुत्रतो धनतो वापि कदाचित्सम्भविष्यति ।
एवं व्यास! समाख्यातं यत्त्वया परिपृच्छितम् ॥ ३९ ॥

अवंत्यामीदृशं तीर्थं वर्तते भुविसत्तम । तादृशं पुण्यदं किञ्चिन्नास्तिब्रह्मांडगोलके

अस्मिंस्तीर्थे नरः कश्चिन्महादानानि चेच्चरेत् ।

अक्षयाणि भवन्त्यस्य विष्णुलोके महीयते ॥ ४१ ॥
यो वै नियमवान्भूत्वा कथामेतां शृणोति वा ।
पठेच्च सततं व्यास!हयमेधफलं लभेत् ॥ ४२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डेऽवन्तीक्षेत्रमाहात्म्ये गयातीर्थमाहात्म्यवर्णनं नामसप्ततितमोऽध्यायः ॥ ७० ॥

---

## एकसप्ततितमोऽध्यायः

### पुरुषोत्तमेश्वरमाहात्म्यवर्णनम्

व्यास उवाच

पुरुषोत्तमं परं तीर्थं त्वयाप्रोक्तं पुरानघ । माहात्म्यंतस्यतीर्थस्य विस्तराद्वदमेप्रभो
एतत्तु श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर ॥ १ ॥

सनत्कुमार उवाच

शृणुष्व भो द्विजश्रेष्ठ! कथां पापहरां पराम् ॥ २ ॥
यस्याः श्रवणमात्रेण महापापक्षयो भवेत् । पुराकल्पेषु वै ब्रह्मन्वैकुण्ठे विमले शुभे
समासीनो रमानाथो पार्षदैःसनकादिभिः ।
महर्षिभिः सदाचारैः पितामहपुरोगमैः ॥ ४ ॥
ऋद्धिसिद्धिगुणोपेतैस्तत्त्वैस्तैर्महदादिभिः ।
गणगन्धर्वसङ्घैश्च सेव्यमानः समन्ततः ॥ ५ ॥
किन्नरोद्गानसन्नावैर्नृत्यद्भिरप्सरोगणैः । चिंतामणिगृहोद्गारललिताङ्गणभूमिषु
कल्पद्रुमकृतच्छाय आसीने हि सुरद्विषि ।
धर्मवादरताः सर्वे ब्रह्ममार्गसुनिश्चिताः ॥ ७ ॥
तेषां मध्ये परा भाषा ह्यपृच्छत्कमलापतिम् ॥ ८ ॥

लक्ष्मीरुवाच

पुण्यकानां विधिं नाथ! श्रोतुमिच्छामि तत्त्वतः ।

सर्वज्ञोऽसि महाप्राज्ञ! वाच्यतां यदि रोचते ॥ ९ ॥

श्रीभगवानुवाच

दानं स्नानं तपः श्राद्धं सदा शस्तं हि शोभने! ।

तथापि विधिना प्राप्तं तत्सर्वं चाक्षयं भवेत् ॥ १० ॥

देशै काले पर्वणि च तीर्थे चायतनेपदे । दानंस्नानंतपःश्राद्धं मुनिभिःपरिकीर्तितम्
पूर्णमास्याममावास्यांसङ्क्रान्तौग्रहणेतथा । वैधृतौचव्यतीपातेदानवृद्धिःपरास्मृता
गङ्गायां भास्करक्षेत्रे कुरुक्षेत्रे च पुष्करे । गोदावर्यां गयायांच तीर्थे चामरकण्टके
अवन्त्यां च हुतंदत्तं तत्सर्वं चाक्षयंभवेत् । तस्मात्सर्वप्रयत्नेन पर्वे तीर्थं समाचरेत्

कुचैलो दुर्भगो मूर्खो जडो रोग समन्वितः ।

तीर्थपर्वपरिभ्रष्टो नरो भवति निश्चितम् ॥ १५ ॥

के योगाः सुकृतानां च कर्तव्याश्च विशेषतः ॥ १६ ॥

श्रीकृष्ण उवाच

साधु पृष्टः प्रिये!प्रश्नः पुण्यकानांत्वयाऽनघे । मलमासेसमायाते ये नरा व्रतवर्जिताः

जन्मजन्मनि दारिद्र्यं तेषां भवति शोभने! ॥ १७ ॥

श्रीरुक्मिण्युवाच

कीदृशो हिमलोमासःकेनयोगेन जायते । कदा काले समायातिपतन्नोवदविस्तरात्

श्रीकृष्ण उवाच

युक्तमुक्तं त्वयादेवि प्रश्नः कालोयमीदृशः । देवतापितृकार्याणिविधिनाहिमलिम्लुचे
क्षौरं मौंजी विवाहश्चव्रतोपवासकंतथा । विशेषेण गृहस्थानां वर्ज्यं मुनिवरोत्तमैः
सम्वत्सरत्रयान्तेच मासोयमधिगच्छति । असंक्रमे रवेरस्मिस्तस्मादधिकमासकः
अधिमासाधिपत्योऽहं सदैव पुरुषोत्तमः । ममाभिधानं तीर्थं च महाकालवने शुभम्
पुरुषोत्तमाख्यं मे धाम सदैवात्र प्रतिष्ठति । तस्मात्सर्वप्रयत्नेन गन्तव्यंहित्वयासह

महाकालवनेतत्र यत्र तीर्थं ममाभिधम् । प्राणिनोयेसमायांति मज्जनार्थंप्रियेध्रुवम्
तेषामिह ममादेयं न कदापि भविष्यति । धनधान्यकलत्रादि पुत्रसौख्यं सदैव हि

असङ्क्रान्तेऽपि सम्प्राप्ते मामुद्दिश्य व्रतं चरेत् ।
अधिमासाधिपत्योऽहं सदा वै पुरुषोत्तमः ॥ २६ ॥
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम् ।
देवतार्चा च मध्याह्ने ये कुर्वन्ति नरोत्तमाः ॥ २७ ॥

अक्षयं च भवेत्सर्वं तेषां वै कमले ध्रुवम् । मलमासो गतः शून्यो येषांदेविप्रमादतः
दारिद्र्यं चसदातेषांशोकरोगविवर्धनम् । अधिमासेसमायाते अवन्त्यांव्रतमाचरेत्

तेषां ददाम्यहं प्रीत्या त्वामेव च न संशयः ।
स्वल्पं दानमलं कार्यं यत्किंचिदिह यत्कृतम् ।
तत्सर्वं मत्प्रसादेन ह्यनन्तं प्रियदर्शने! ॥ ३० ॥

श्रीरुवाच

ईदृशो हि त्वया प्रोक्तो ह्यधिमासस्य सुव्रत ॥ ३१ ॥

महिमा ह्यपि लोकानां सर्वकामवरप्रदः । अधिमासव्रतं पुण्यं कथयस्व प्रसादतः ॥

श्रीकृष्ण उवाच

असङ्क्रान्तोयदामासःप्राप्यतेमानवैःप्रिये।महोत्सवस्तदाकार्यआत्मनोहितकाङ्क्षिभिः
कृष्णपक्षेचतुर्दश्यां नवम्यां वा सुरेश्वरि । अष्टम्यां चाथकर्तव्यं व्रतंशोकविनाशनम्

यथालाभोपहारेण मासे चापि मलिम्लुचे ।
पुण्याहेप्रातरुत्थायकृत्वा पौर्वाह्निकीं क्रियाम् ॥ ३५ ॥

गृहीत्वा नियमं पश्चाद्वासुदेवं हृदि स्मरन् । उपवासं च नक्तं च एकभुक्तंच मानिनि

एकस्य निश्चयं कृत्वा ततो विप्रान्निमन्त्रयेत् ।
सपत्नीकान्सदाचारान्कुलीनाञ्ज्ञातिसम्भवान् ॥ ३७ ॥

ततोमध्याह्नसमये लक्ष्मीयुक्तं सनातनम् । स्थापयेदव्रणे कुम्भे वेदमन्त्रैर्द्विजातिभिः
पूजयेत्परयाभक्त्यागोत्रिभिःसपितामहम् । गन्धतोयेन संस्थाप्यपञ्चामृतैस्तथैवच

मिष्टान्नैर्नवभिश्चैव नैवेद्यैर्धूपदीपकैः । आच्छादनैश्च वस्त्रैश्च पीतकौशेयकैस्तथा
घण्टामृदङ्गनिर्ह्लादैर्घोषध्वनिसमन्वितैः । आरार्तिकं व्रती कुर्यात्कर्पूरागरुचन्दनैः ॥
अलाभे तूलमुकैश्चापि फलस्यानन्त्यहेतवे । ताम्रपात्रस्थिते तोयेचन्दनाक्षतपुष्पकैः

अर्घ्यं दद्यात्सपत्नीकः प्रहृष्टेनान्तरात्मना ।
पञ्चरत्नैः समायुक्तैर्जानुनीकृत्य भूतले ॥
समादाय च पाणिभ्यां सर्वभक्तिसमन्वितः ॥ ४३ ॥

अर्घ्यमन्त्रः

कृपावन्सर्वभूतेषु जगदानन्दकारक! । गृहाणार्घ्यमिमं देवसम्पूर्णफलदो भव ॥

प्रार्थनामन्त्रः

स्वयम्भुवे नमस्तुभ्यं ब्रह्मणेऽमितत्तेजसे । नमोऽस्तु ते श्रियानन्दब्रह्मानन्द कृपाकर

एवं सम्प्रार्थ्य गोविन्दं पूजयेद् ब्राह्मणा/स्स्वयम् ।
सपत्नीकाञ्छुचीन्स्नाताल्लँक्ष्मीनारायणौ स्मरन् ॥ ४६ ॥
पूजयित्वा विधानेन भोजयेद्घृतपायसैः ॥ ४७ ॥
भोजयित्वा विधानेन सपत्नीकं यथोचितम् ।
विद्याविनयसम्पन्नं तथा पत्न्या समन्वितम् ॥ ४८ ॥
पूजयित्वा यथाशक्त्या वस्त्रालङ्कारकुङ्कुमैः ।
गोस्तन्याम्रकपित्थैश्चखर्जूरैः कदलीफलैः ॥ ४६ ॥

पनसैर्नारिकेलैश्च नारङ्गैर्दाडिमैस्तथा । घृतपक्वान्नगोधूमैः शुभैः सोमालिकैर्वटैः ॥
शर्कराघृतपूरैश्च कर्णिकैः खण्डमण्डकैः । उर्वारुकर्कटीशाकैः शृङ्गवेरैः समूलकैः ॥

अन्यैश्च विविधैः शाकैराम्रैः पक्वैःपृथक् पृथक् ।
भक्ष्यभोज्यलेह्यपेयकन्दकानि विशेषतः ॥ ५२ ॥

सुवासितान्गोरसांश्च परिवेष्यमृदु ब्रुवन् । इदं स्वादुरसंभोज्यं भवदर्थेप्रकल्पितम्
याच्यतांरोचतेयच्चयन्मयापाचितंप्रभो ।धन्योऽस्म्यनुगृहीतोस्मिकृतंसार्थंचमन्दिरम्
विसर्जयेत्ततो विप्रान्दत्त्वा ताम्बूलदक्षिणाः। चतुर्भिर्मिलितैर्देवताम्बूलंमम वल्लभम्

यो ददाति द्विजश्रेष्ठे स भवेत्सुभगो नरः। सुभगा च सदाचारा वल्लभा स्वजनेसदा

पुत्रसौभाग्ययुक्ता च ताम्बूलैर्जायते प्रिये!।

पत्रैस्तु केशवः प्रीतः पूगैरीशः सहोमया॥ ५७॥

चूर्णकेनानलःप्रीतःखदिरेणतुमन्मथः। चतुर्भिर्विश्वरूपोऽसौ यः पुष्णातिजगत्त्रयम्

परितोष्य सपत्नीकान्हस्ते दत्त्वा च मोदकान्।

आसीमान्तमनुव्रज्य भुञ्जीत सह बन्धुभिः॥ ५६॥

असङ्क्रान्ते व्रतं नारी या करोतीह सुप्रिये!।

दारिद्र्यं पुत्रशोकं च वैधव्यं नाप्नुयात्क्वचित्॥ ६०॥

नरो वा यदि वा नारी यः कुर्याच्च मलिम्लुचे।

स सर्वसुखभोक्ता च भवेन्नास्त्येव संशयः॥ ६१॥

मलिम्लुचे प्राप्य न पूजितो यैर्नारायणोऽहं परयेह भक्त्या।

कथं भवेयुः सुखपुत्रसम्पत्सुहृत् सुभार्याः सुगुणैरुपेताः॥ ६२॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमे ऽवन्तीखण्डे-ऽवन्तीक्षेत्रमाहात्म्ये पुरुषोत्तममाहात्म्ये दानादिमाहात्म्यवर्णनं नामैक-सप्ततितमोऽध्यायः॥ ७१॥

---

## द्विसप्ततितमोऽध्यायः

### अधिमासस्नानदानादिमाहात्म्यवर्णनम्

सनत्कुमार उवाच

अधिमासं समासाद्ययोऽन्यत्रस्थितिमात्मनः। करोतिसनरोमूर्खो महाकालवनादृते

अधिमासे नरो व्यास! तीर्थे पुरुषोत्तमाभिधे।

स्नात्वा दत्त्वा च दानानि तेषां लोकाः सनातनाः॥ २॥

पुरुषोत्तमं समभ्यर्च्य रमालालितपादकम्। तथैवच उमां देवीं शङ्करेण च पूजयेत्

वाञ्छितार्थशतं प्राप्य विष्णुलोके महीयते।

भाद्रपदे सिते पक्षे एकादश्यां समाहितः॥

उपोष्य विधिवद् व्यास! रात्रौ जागरणं चरेत्॥ ४॥

विष्णोश्च पूजनं कार्यं जलयात्रातथैवच। पुरुषोत्तमसरेनित्यं तस्यपुण्यफलंशृणु

पुत्रदारधनं सस्यगायुरोग्यसम्पदः। न तेषां दुर्लभंकिञ्चित्त्रिषु लोकेषु विद्यते॥

तस्य पूर्वतरे भागे जटेश्वरमहेश्वरः। तिष्ठति तापसस्तीरे यत्र राजा भगीरथः॥

तपस्तप्त्वा परं लेभे पुण्यं पुण्यवताम्वरः। गङ्गां भूतलमानीय सर्वलोकसुखाय वै

तस्य तीर्थे नरः स्नात्वा तिलधेनुं प्रदापयेत्।

सर्वयज्ञफलं प्राप्य पुत्रवाञ्जायते नरः॥ ६॥

तस्येशानतरे भागे रामो भार्गवसत्तमः। तपस्तेपे सुधर्मात्मा आत्मकायविशुद्धये

कौशिकी च सरिच्छ्रेष्ठा सर्वतीर्थवरप्रदा।

तत्र स्नात्वा नरो जातिहत्यादोषविवर्जितः॥ ११॥

रामेश्वरं समालोक्य धूतपापो भवेन्नरः॥ १२॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डेऽ-

ऽवन्तीक्षेत्रमाहात्म्ये पुरुषोत्तमेश्वरमाहात्म्येऽधिमासस्नानदानादि-

माहात्म्यवर्णनंनामद्विसप्ततितमोऽध्यायः॥ ७२॥

———

# त्रिसप्ततितमोऽध्यायः

## गोमतीतीर्थकुण्डमाहात्म्यवर्णनम्

व्यास उवाच

गोमतीकुण्डं त्वया प्रोक्तं पुरा ब्रह्मन्सनातनम् ।
कस्मिन्काले कदा जातं तन्नो वद सुविस्तरात् ॥ १ ॥

सनत्कुमार उवाच

शृणुष्वभोमहाप्राज्ञकथांपापहरांपराम् । गोमतीकुण्डोद्भवांपुण्यांपुरारुद्रेणभाषिताम्
नैमिषे च समासीनाऋषयःशौनकादयः । कथयन्तिकथांपुण्यांसर्वतीर्थोद्भवांशुभाम्
तस्मिन्नवसरे पुण्ये काशीमाहात्म्यमुत्तमम् । कथितं नारदेनैव पवित्रं पापहारकम्
ऊषरःपुण्यपापानांधन्यावाराणसीपुरी । ध्रु वं लभन्ते मोक्षञ्च समं चण्डालपण्डिताः
असीवरुणयोर्मध्येपञ्चक्रोशी महाफलम् । अमरा मरणमिच्छन्तिकाकथाइतरेजनाः

इति स्मृत्वा तदा व्यास! स्वयम्भूः प्रत्यभाषतः ।
शृण्वतां सर्वदेवानामृषीणां च परन्तप! ॥ ७ ॥

नदी न गोमतीतुल्या कृष्णतुल्या न देवता । सर्वपातालभूमध्ये न द्वारकासमापुरी
इतितेनिश्चयंज्ञात्वाऋषयःशौनकादयः । यत्रतत्रस्थिताःसर्वे प्रातःसन्ध्यामुपासितुम्
तत्रैवगोमतीतीरेचक्रुस्तेवै धृतव्रताः । सान्दीपनोऽपिऽतत्रैवप्रातःसन्ध्यांसमाचरत्

एवं बहुतिथे काले चरतस्तस्य वै व्रतम् ।
सान्दीपनस्य वै व्यास! ह्यवन्तीपुरवासिनः ॥ ११ ॥
तस्यैव कामपूर्त्यर्थं विद्यार्थिनौ रामजनार्दनौ ।
समायातौ सुकुमाराङ्गौ सततं ब्रह्मचारिणौ ॥ १२ ॥

निवासं चक्रतुस्तस्य गुरोर्गेहे परन्तप । तस्य पाठयतःसम्यग्विद्यां सर्वश्रुतीःपराम्
उषस्युषसि तत्रैव दृश्यते न तदा गुरुः । विद्योपदेशकालोऽयं क्व गतो नौ गुरुर्वरः

इति पृष्टे तयोरेवं गुरुपत्नी ह्युवाच ह। सदैवं कुरुते वत्स!प्रातःसन्ध्याद्युपासनम्

तत्रैव याति वै नित्यं गुरुस्ते स्नानकारणात्।

गोमती वै सरिच्छ्रेष्ठा द्वारकायां च पावनी॥ १६॥

इति श्रुत्वा तदा कृष्णो रामेण सह संयुतः।

किं कर्तव्यमिहास्माभिरात्मनो हितमुत्तमम्॥ १७॥

गुरोरागमनं काङ्क्षे अत्रैव स्थितिकाङ्क्षया।

एतस्मिन्नेव काले तु सान्दीपनिरगाद् गृहम्॥ १८॥

तत उत्थाय तौ वीरौ गुरोरावन्दनं ततः। प्रश्रयावनतौ कृत्वा ह्यब्रूतां वचनं गुरुम्

श्रूयतांभोमहायोगिन्नस्माकंवासकारणम्। विद्यार्थिनाविहप्राप्तौ युष्माकञ्चगृहोत्तमे

प्रातःकाले च ते ब्रह्मन्समयो नास्ति नौ प्रभो!।

एतच्छ्रुत्वा वचस्तस्य कृष्णस्य च बलस्य च॥ २१॥

उवाच भगवान्व्यास! आत्मनो व्रतकारणम्।

अस्माकं परमं वत्स!व्रतं वै शाश्वतं मतम्॥ २२॥

गोमतीस्नानं कर्तव्यं प्रातःकाले सदा बुधैः।

तत्रैवोपासनं पुण्यं सन्ध्याया इति निश्चितम्॥ २३॥

इति निश्चित्य युष्माभिर्यद्योग्यं क्रियतां तथा।

तच्छ्रुत्वा भगवान्विष्णुर्मायामानुषरूपवान्॥ २४॥

गोमत्याराधनं चक्रे कुशस्थल्यांद्विजोत्तम। यत्र शिवेश्वरोदेवो यज्ञकुण्डमनुत्तमम्

कन्थडेश्वरस्योत्तरेभागेगोमतीसा समागता। पातालतलमाभेद्यसरस्वत्यासहागता

प्रातरुत्थाय ते सर्वे गोमतीं सरितां वराम्।

ददृशुः सुचिरापाङ्गीं व्यास! स्वाश्रमगामिनीम्॥ २७॥

श्रीकृष्ण उवाच

अत्रैव चागता ब्रह्मन्गोमती सरितांवरा। स्नानदानादिकं सर्वमत्रैव समुपासय

गोमत्यत्रसमालीनायज्ञकुण्डेसरस्वती। तदाप्रभृतिलोकेऽस्मिन्गोमतीकुण्डमुच्यते

सर्वेषामपि लोकानां मार्गोऽत्रैव च विद्यते ।
तस्माद् व्यास! महापुण्यं भुवि तीर्थमनुत्तमम् ॥ ३० ॥
गोमतीकुण्डमाख्यातं सर्वपापप्रणाशनम् ।
भाद्रे मास्यसिताऽष्टम्यां कृष्णजन्मसमुद्भवम् ॥ ३१ ॥
तत्र स्नात्वा नरो नित्यं रात्रौ जागरणं चरेत् ।
उपोष्य विधिवद्व्यास! सशिष्यं व्यासमर्चयेत् ॥ ३२ ॥

वैष्णवांश्चनरांश्चैव कृष्णजन्मोत्सुकान्वरान् । नानासुगन्धपुष्पाद्यैर्वस्त्रालङ्कारसंयुतैः
गोब्राह्मणानां पूजाश्चक्रियन्ते यैः समाहितः । न तेषां दुर्लभं किञ्चित्सर्वलोकेषुविद्यते
गोमतीस्नानजात्पुण्याद्वासुदेवसमागमात् । मनोरथफलप्राप्तिर्जायते नाऽत्र संशयः
तथा चैत्रसितेपक्षेयावच्चैकादशीभवेत् । तद्दिने चनरःस्नात्वागोमत्यांचविशेषतः
रात्रौ जागरणं कृत्वाविष्णुपूजांतथैव च । आमलकीं ततो गत्वा प्रदक्षिणात्पदेपदे

गोसहस्रफलं तेषां प्राप्यते नाऽत्र संशयः ।
ये शृण्वन्ति कथां पुण्यां पवित्रां पापहारिणीम् ॥ ३८ ॥
सर्वपापविनिर्मुक्ता विष्णुलोकं प्रयान्ति ते ॥ ३६ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
ऽवन्तीक्षेत्रमाहात्म्येगोमतीतीर्थकुण्डमाहात्म्य-
वर्णनं नामत्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

———

# चतुःसप्ततितमोऽध्यायः

## श्रीविष्णुसहस्रनामस्तोत्रवर्णनम्

सनत्कुमार उवाच

कन्थडेश्वर इति ख्यातं तत्र तीर्थमनुत्तमम् । तत्रतीर्थे नरःस्नात्वा दृष्ट्वा देवं महेश्वरम्
मुच्यते सर्वपापेभ्यः शुचिः प्रयतमानसः । विमानशतसंयुक्तः शिवलोके महीयते
भुवि पुण्यतमंतीर्थं सर्वपापहरं परम् । खगर्तासङ्गमो यत्र गङ्गेश्वरसमीपतः ॥ ३ ॥
महापापहरं पुण्यं महापुण्यफलप्रदम् । आकाशात्पतिता यत्र गङ्गा त्रैलोक्यपावनी
विधृता शिरसि सद्यो महादेवेन शम्भुना ।
तस्मिंस्तीर्थे नरः स्नात्वा गङ्गेशमवलोकयेत् ॥ ५ ॥
गङ्गास्नानफलं प्राप्यविष्णुलोकेमहीयते । वीरेश्वरमनुप्राप्य तस्मिंस्तीर्थेनरोवसेत्
सर्वपापविशुद्धात्मा वीरलोकमवाप्नुयात् ।
तीर्थमन्यन्महापुण्यं भुवि ख्यातं महर्षिभिः ॥ ७ ॥
वामनकुण्डेतिविख्यातंत्रिषुलोकेषु विश्रुतम् । यस्यदर्शनमात्रेणब्रह्महत्यांव्यपोहति
मनोरथशतं प्राप्य पश्चाद्विष्णुपुरं व्रजेत् ।

व्यास उवाच

कदा काले त्वमुत्पन्नं वामनाख्यं पुराऽनघ! ॥ ६ ॥
तत्सर्वं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर! ।

सनत्कुमार उवाच

शृणुष्व भो द्विजश्रेष्ठ! कथां पापहरां परम् ॥ १० ॥
यस्य श्रवणमात्रेण सर्वपापात्प्रमुच्यते ।दैत्येन्द्रस्तु पुराप्रोक्तो विष्णुभक्तिपरायणः
प्रह्लाद इति विख्यातः सर्वधर्मभृतां वरः । आचारविजितोधर्मः सत्येन विजितारमा
धैर्येण च धृता लोकाः क्षमया विधृता मही ।

गाम्भीर्येणाऽर्णवा दिव्याः शौर्येण शत्रूणां गणाः ॥ १३ ॥

प्रश्रयेणाभ्यागताश्च जितास्तेनमहात्मना। दक्षिणाभिर्जितोयज्ञो हविषाहव्यवाहनः

शौचाऽऽचारविशुद्धात्मा तपसा च हताशुभः।

दानमानजिता विप्रा भोजनाच्छादनादिभिः ॥ १५ ॥

संस्कारेण जितं जन्म दमेनाऽऽत्मा सनातनः।

प्राणायामजितो वायुर्योगध्यानजितो हरिः ॥ १६ ॥

ईदृशश्च महायोगी सत्यधर्मपरायणः। प्रह्लादेन समो धीरो न भूतो न भविष्यति

तस्य पौत्रः सदाचारी बलिरित्यभिधीयते।

तस्यपालयतःसम्यक्प्रजाः सम्यग्विवर्धिताः ॥ १८ ॥

नाल्पायुर्न जडो मूर्खो न रोगी न च मत्सरी।

अपुत्रो द्रव्यहीनश्च कोऽपि नाऽस्ति महीतले ॥ १९ ॥

महाराजो महीपालो यज्वा विपुलदक्षिणः। सप्तद्वीपवती तेन पालितावसुधासदा

एकदा च समासीने सभामध्ये वरासने। जयशब्दे वर्तमाने गन्धर्वा ललितं जगुः

वाद्यमानेषुवाद्येषु ननृतुश्चाऽप्सरोगणाः। कथायांकथ्यमानायांशुभायांचविचक्षणैः

सूता वैतालिकाः सिद्धाश्चारणाश्च बहुश्रुताः। ऋषयश्च समायातास्तत्रैवद्विजसत्तम

सुन्दोपसुन्दतुहुण्डाद्या महिषासुरकोल्बणाः।

शुम्भनिशुम्भधूम्राक्षकालकेयाश्च दानवाः ॥ २४ ॥

कालनेमिश्चविक्रान्तोदौर्हृदोमूषको यमः। निकुम्भःकुम्भविशठोह्यन्धकश्चमहाबलः

शङ्खो जलन्धरो रौद्रोवातापीचबलाधिकः। सर्वजिद्विश्वहन्ताचकामचारीहलायुधः

एते चाऽन्ये च बहवो दनुवंशविवर्धनाः। उपासाञ्चक्रिरे तत्र बलिराजमकल्मषम्

सिद्धा नागाश्च यक्षाश्च किन्नराः किम्पुरुषास्तथा।

खेचरा भूचरा बाला राक्षसाश्चैव दारुणाः ॥ २८ ॥

एते चाऽन्ये च बहवो राजानं पर्युपासत। तत्र सभामहादिव्या शुशुभे च द्विजोत्तम

ग्रहैरुज्ज्वलितैः कीर्णो शरदीव नभःस्थलम्।

तत्सभायां समासीनो रराज बलिराट् तथा ॥ ३७ ॥
मरुद्भिरिव संवीतो वासवो दिवि देवतैः । एकदा च सभामध्ये नारदो देवदर्शनः
आगतस्तेषु सर्वेषु दानवेषु स्थितेषु च । दृष्ट्वा तमागतं सर्वे ह्युत्तस्थुर्दितिनन्दनाः
ववन्दिरे सर्वशस्तु बलिना किंनरोत्तमम् । सत्कृत्य चासनं दत्त्वा पप्रच्छकुशलंनृपः
कृत्वाऽऽतिथ्यं समासीनो नारदः प्राह सत्तमः ।
मेघगम्भीरया वाचा बलिं प्राहर्षिसत्तमः ॥ ३४ ॥

नारद उवाच

श्रूयतां दितिजश्रेष्ठ गतोऽहं वृषमंदिरे । तत्र देवसभा रम्या दिव्याऽभिप्रायसंयुता
तत्र देवाः सगन्धर्वाः पुरन्दरपुरोगमाः ॥ ३५ ॥
समासीनाः कथांपुण्यांकथयन्तिपरस्परम् । तत्रदैत्यकथांशुभ्रांमयाख्यातांनसेहिरे
हिरण्यकशिपुर्दैत्यः पुराऽऽसीच्च प्रजापतिः । त्रैलोक्यविजयी नेतायेनेयंवसुधाजिता
सर्वलोकं वशीकृत्य बुभुजे च वसुन्धराम् । अतीवतेजः संपन्नो महाबलपराक्रमः
वशी सर्वत्रगः कामी नृसिंहेन निपातितः । बलिं कियद्बलं लोके नारदत्वंप्रशंससि
इतिमांधर्षयित्वाचविडौजा लोकसङ्ग्रही । बहुधा वादयन्वादान्कटुकान्दानवोत्तम
तस्मात्त्वं दानवश्रेष्ठपितृपर्यागतांमहीम् । विजित्यसार्वभौमत्वं लभस्ववसुधाधिप
कियद्बलधृता नूनं देवाश्च दनुजोत्तम! । पलायनपरादान्ताःसदैवरणभीरवः ॥ ४२ ॥
मम वाक्यपरो भूत्वात्रैलोक्याधिपतिर्भव । नारदस्यवचःश्रुत्वा बलिर्वैरोचनिस्तदा
चकार कोपमतुलं त्रैलोक्यविजये द्विज । मंत्रयित्वाऽसुरान्सर्वान्सर्वदैत्यजनेश्वरः
सङ्ग्राममकरोत्तीव्रंवासवेनबलीयसा । जित्वा च सकलान्देवान्वशीचक्रेसवासवान्
सर्वलोकेश्वरो जातोबलिर्वैरोचनोऽसुरः । हृताधिकारास्त्रिदशाभ्रष्टराज्याःपराजिताः
विचरन्ति यथा मर्त्यास्तेन देवगणाभुवि । किञ्चित्कालंसमासाद्यब्रह्माणंशरणंययुः
भो ब्रह्मन्बलिना भ्रष्टा देवलोकात्परन्तप । किं कुर्मःक्वगच्छामः कमुपायं चरामहे

ब्रह्मोवाच

श्रूयतां भोः सुरश्रेष्ठायुष्माकं साधनंपरम् । यूयं यात पुरींरम्यांपद्मावतीममरोत्तमाः

तत्र तीर्थवरं श्रेष्ठं नाम्ना चोत्तरमानसम् ।
यत्राऽष्टसिद्धिदा ख्याता महासिद्धिप्रदा नृणाम् ॥ ५० ॥
निधयश्च नवैवापि तत्र तिष्ठन्तिसत्तम! । तस्यैव दक्षिणे भागे विष्णुतीर्थमनुत्तमम्
तत्र स्नात्वा नरः पश्येत्सिद्धेश्वरीं सुसिद्धिदाम् ।
ऋद्धिसिद्धिपरो भूत्वा विष्णुलोके महीयते ॥ ५२ ॥
आश्विनस्य सिते पक्षे दशम्यां दिवसे तथा ।
अष्टसिद्धिशमीदेशे गणेश्वरं प्रपूजयेत् ॥ ५३ ॥
विजयी सर्वलोकेषु जायतेनाऽत्र संशयः । शमीमूलस्थितं नित्यमृद्धिसिद्धिवरप्रदम्
पूजयेद्वै नरो नित्यं गणेशं सर्वकामदम् । सर्वकामवरं लब्ध्वा पुत्रवान्धनवान्भवेत्
तस्मात्सर्वप्रयत्नेन महाकालवनं व्रजेत् । यत्रविष्णुसरस्तीर्थं तत्र गच्छतमाचिरम्
उपासनांसुरश्रेष्ठाविष्णोरतुलतेजसः । कुरुध्वं सर्वभीतिभ्यस्त्राातासस्यात्सुरोत्तमाः
इति श्रुत्वा वचस्तस्य ब्रह्मणः शंसितात्मनः ।
महाकालवने प्राप्ता देवास्ते कार्यसाधकाः ॥ ५८ ॥
अत्राऽऽगत्य शुचीभूय स्नानदानादिकर्मभिः ।
उपासाञ्चक्रिरे सिद्धा विष्णुभक्तिपरायणाः ॥ ५६ ॥
ब्रह्माणमथ ते सर्वे पप्रच्छुर्विधिमादरात् । उपासनाया देवस्य देवाः शक्रपुरोगमाः

देवा ऊचुः

ब्रह्मन्केनप्रकारेण विष्णुभक्तिःपराभवेत् । तत्सर्वंश्रोतुमिच्छामस्त्वत्तोब्रह्मविदांवर

ब्रह्मोवाच

श्रूयतां भोः सुरश्रेष्ठा! विष्णुभक्तिमनुत्तमाम् ।
शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ॥ ६२ ॥
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये । लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः
येषामिंदीवरश्यामोहृदयस्थो जनार्दनः । अभीप्सितार्थसिद्ध्यर्थंपूज्यते यःसुरैरपि
सर्वविघ्नहरस्तस्मै गणाधिपतये नमः । कल्पादौ सृष्टिकामेन प्रेरितोऽहंच शौरिणा

न शक्तो वै प्रजाः कर्तुं विष्णुध्यानपरायणः ।
एतस्मिन्नन्तरे सद्यो मार्कण्डेयो महाऋषिः ॥ ६६ ॥
सर्वसिद्धेश्वरोदान्तोदीर्घायुर्विजितेन्द्रियः ।
मयादृष्टोऽथगत्वातं तदाहं समुपस्थितः ॥
ततः प्रफुल्लनयनौ सत्कृत्य चेतरेतरम् ॥ ६७ ॥
पृच्छमानौ परं स्वास्थ्यं सुखासीनौ सुरोत्तमाः ।
तदा मया स पृष्टो वै मार्कण्डेयो महामुनिः ॥ ६८ ॥
भगवन्केन प्रकारेण प्रजा मेऽनामया भवेत् ।
तत्सर्वं श्रोतुमिच्छामि भगवन्मुनिवन्दित! ॥ ६९ ॥

श्रीमार्कण्डेय उवाच

विष्णुभक्तिः परा नित्या सर्वार्तिदुःखनाशिनी ।
सर्वपापहरा पुण्या सर्वसुखप्रदायिनी ॥ ७० ॥
एषा ब्राह्मी महाविद्या न देया यस्य कस्यचित् ।
कृतघ्नाय ह्यशिष्याय नास्तिकायानृताय च ॥ ७१ ॥
ईर्ष्यकाय च रूक्षाय कामिकाय कदाचन । तद्गतं सर्वं विघ्नन्तियत्तद्धर्मंसनातनम्
एतद्गुह्यतमं शास्त्रं सर्वपापप्रणाशनम् । पवित्रं च पवित्राणां पावनानां च पावनम्
विष्णोर्नामसहस्रं च विष्णुभक्तिकरं शुभम् ।
सर्वसिद्धिकरं नृणां भुक्तिमुक्तिप्रदं शुभम् ॥ ७४ ॥
ॐ अस्य श्रीविष्णुसहस्रनामस्तोत्रमन्त्रस्य मार्कण्डेयऋषिः ।
विष्णुर्देवताअनुष्टुप्छन्दः सर्वकामावाप्त्यर्थे जपे विनियोगः ।

अथ ध्यानम्

सजलजलदनीलं दर्शितोदारशीलं करतलधृतशैलं वेणुवाद्ये रसालम् ।
व्रजजनकुलपालं कामिनीकेलिलोलं तरुणतुलसिमालं नौमि गोपालबालम् ॥
ॐ विश्वं विष्णुर्हृषीकेशः सर्वात्मा सर्वभावनः ।

सर्वगः शर्वरीनाथो भूतग्रामाऽऽशयाशयः ॥ ७६ ॥
अनादिनिधनो देवः सर्वज्ञः सर्वसम्भवः । सर्वव्यापी जगद्धाता सर्वशक्तिधरोऽनघः
जगद्वीजं जगत्स्रष्टा जगदीशो जगत्पतिः ।
जगद्गुरुर्जगन्नाथो जगद्धाता जगन्मयः ॥ ७८ ॥
सर्वाऽऽकृतिधरः सर्वविश्वरूपी जनार्दनः ।
अजन्मा शाश्वतो नित्यो विश्वाधारो विभुः प्रभुः ॥ ७९ ॥
बहुरूपैकरूपश्च सर्वरूपधरोहरः । कालाग्निप्रभवो वायुः प्रलयान्तकरोऽक्षयः ॥८०॥
महार्णवो महामेघो जलवुद्वुदसम्भवः ।
संस्कृतो विकृतो मत्स्यो महामत्स्यस्तिमिङ्गिलः ॥ ८१ ॥
अनन्तोवासुकिःशेषोवराहोधरणीधरः । पयःक्षीरविवेकाढ्योहंसोहैमगिरिस्थितः
हयग्रीवो विशालाक्षो हयकर्णो दयाकृतिः । मन्थनो रत्नहारी च कूर्मो धरधराधरः
विनिद्रो निद्रितोनन्दी सुनन्दोनन्दनप्रियः । नाभिनालमृणालीच स्वयंभूश्चतुराननः
प्रजापतिपरो दक्षः सृष्टिकर्ता प्रजाकरः । मरीचिः कश्यपोदक्षः सुरासुरगुरुःकविः
वामनो वाममार्गी च वामकर्मा वृहद्वपुः । त्रैलोक्यक्रमणो दीपो वलियज्ञविनाशनः
यज्ञहर्ता यज्ञकर्ता यज्ञेशो यज्ञभुग्विभुः ।
सहस्रांशुर्भगो भानुर्विवस्वान्रविरंशुमान् ॥ ८७ ॥
तिग्मतेजाश्चाल्पतेजाः कर्मसाक्षी मनुर्यमः । देवराजः सुरपतिर्दानवारिः शचीपतिः
अग्निर्वायुसखो वह्निर्वरुणो यादसांपतिः । नैर्ऋतोनादनोऽनादीरक्षयज्ञोधनाधिपः
कुबेरोवित्तवान्वेगो वसुपालो विलासकृत् । अमृतस्रवणःसोमः सोमपानकरःसुधीः
सर्वौषधिकरः श्रीमान्निशाकरदिवाकरः । विषारिर्विषहर्ता च विषकण्ठधरोगिरिः
नीलकण्ठो वृषी रुद्रो भालचन्द्रो ह्युमापतिः ।
शिवः शान्तो वशी वीरो ध्यानी मानी च मानदः ॥ ९२ ॥
कृमिकीटो मृगव्याधो मृगहा मृगलाञ्छनः ।
वटुको भैरवो बालः कपाली दण्डविग्रहः ॥ ९३ ॥

श्मशानवासी मांसाशी दुष्टनाशी वरान्तकृत् ।
योगिनीत्रासको योगी ध्यानस्थो ध्यानवासनः ॥ ९४ ॥

सेनानीः सेनदःस्कन्दोमहाकालोगणाधिपः । आदिदेवोगणपतिर्विघ्नहाविघ्ननाशनः
ऋद्धिसिद्धिप्रदोदन्ती भालचन्द्रोगजाननः । नृसिंह उग्रदंष्ट्रश्च नखी दानवनाशकृत्
प्रह्लादपोषकर्ता च सर्वदैत्यजनेश्वरः । शलभः सागरः साक्षी कल्पद्रुमविकल्पकः
हेमदो हेमभागी च हिमकर्ता हिमाचलः । भूधरो भूमिदोमेरुःकैलासशिखरोगिरिः

लोकालोकान्तरो लोकी विलोकी भुवनेश्वरः ।
दिक्पालो दिक्पतिर्दिव्यो दिव्यकायो जितेन्द्रियः ॥ ९९ ॥

विरूपो रूपवान्रागी नृत्यगीतविशारदः । हाहा हूहूश्चित्ररथो देवर्षिर्नारदः सखा

विश्वेदेवाः साध्यदेवा धृताशीश्च चलोऽचलः ।
कपिलो जल्पको वादी दत्तो हैहय सङ्घराट् ॥ १०१ ॥

वसिष्ठो वामदेवश्च सप्तर्षिप्रवरो भृगुः । जामदग्न्योमहावीरः क्षत्रियान्तकरोह्यृषिः
हिरण्यकशिपुश्चैवहिरण्याक्षोहरप्रियः । अगस्तिः पुलहोदक्षः पौलस्त्योरावणोघटः
देवारिस्तापसस्तापीविभीषणहरिप्रियः । तेजस्वीतेजदस्तेजी ईशो राजपतिःप्रभुः
दासरथी राघवोरामोरघुवंशविवर्धनः । सीतापतिःपतिःश्रीमान्ब्रह्मण्योभक्तवत्सलः

सन्नद्धः कवची खड्गी चीरवासा दिगम्बरः ।
किरीटी कुण्डली चापी शङ्खचक्री गदाधरः ॥ १०६ ॥
कौशल्यानन्दनोदारो भूमिशायी गुहप्रियः ।
सौमित्रो भरतो बालः शत्रुघ्नो भरताग्रजः ॥ १०७ ॥

लक्ष्मणः परवीरघ्नः स्त्रीसहायः कपीश्वरः । हनुमानृक्षराजश्चसुग्रीवोबालिनाशनः
दूतप्रियो दूतकारी ह्यङ्गदो गदतां वरः । वनध्वंसी वनी वेगो वानरध्वजलाङ्गुली
रविदंष्ट्री च लङ्काहा हाहाकारो वरप्रदः । भवसेतुर्महासेतुर्बद्धसेतू रमेश्वरः ॥ ११० ॥

जानकीवल्लभः कामी किरीटी कुण्डली खगी ।
पुण्डरीकविशालाक्षो महाबाहुर्घनाकृतिः ॥ १११ ॥

चञ्चलश्चपलः कामी वामी वामाङ्गवत्सलः ।
स्त्रीप्रियः स्त्रीपरः स्त्रैणः स्त्रियो वामाङ्गवासकः ॥ ११२ ॥
जितवैरी जितकामो जितक्रोधो जितेन्द्रियः ।
शान्तो दान्तो दयारामो ह्येकस्त्रीव्रतधारकः ॥ ११३ ॥
सात्त्विकः सत्त्वसंस्थानो मदहा क्रोधहा खरः ।
बहुराक्षससम्वीतः सर्वराक्षसनाशकृत् ॥ ११४ ॥
रावणारी रणक्षुद्रदशमस्तकच्छेदकः । राज्यकारी यज्ञकारी दाता भोक्ता तपोधनः
अयोध्याधिपतिः कान्तो वैकुण्ठोऽकुण्ठविग्रहः ।
सत्यव्रतो व्रती शूरस्तपी सत्यफलप्रदः ॥ ११६ ॥
सर्वसाक्षी सर्वगश्च सर्वप्राणहरोऽव्ययः ।
प्राणश्चाथाप्यपानश्च व्यानोदानः समानकः ( तः ? ॥ ११७ ॥
नागः कृकलः कूर्मश्च देवदत्तो धनञ्जयः । सर्वप्राणविदो व्यापी योगधारकधारकः
तत्त्वचित्तत्त्वदस्तत्त्वी सर्वतत्त्वविशारदः ।
ध्यानस्थो ध्यानशाली च मनस्वी योगवित्तमः ॥ ११९ ॥
ब्रह्मज्ञो ब्रह्मदोब्रह्मज्ञाताचब्रह्मसम्भवः । आध्यात्मविद्विदोदीपो ज्योतिरूपोनिरञ्जनः
ज्ञानदोऽज्ञानहा ज्ञानी गुरुः शिष्योपदेशकः ।
सुशिष्यः शिक्षितः शाली शिष्यशिक्षाविशारदः ॥ १२१ ॥
मन्त्रदो मन्त्रहा मन्त्री तन्त्री तन्त्रजनप्रियः ।
सन्मन्त्रो मन्त्रविन्मन्त्री यन्त्रमन्त्रैकभञ्जनः १२२ ॥
मारणो मोहनो मोही स्तम्भोच्चाटनकृत्खलः ।
बहुमायो विमायश्च महामायाविमोहकः ॥ १२३ ॥
मोक्षदो बन्धको बन्दी ह्याकर्षणविकर्षणः ।
ह्रींकारो बीजरूपी च क्लींकारः कीलकाधिपः ॥ १२४ ॥
सौंकारः शक्तिमाञ्छक्तिः सर्वशक्तिधरोधरः ।

अकारोकार ओंकारश्छन्दोगायत्रसम्भवः ॥ १२५ ॥

वेदोवेदविदोवेदीवेदाध्यायी सदाशिवः । ऋग्यजुःसामाथर्वेशःसामगानकरोऽकरी
त्रिपदो बहुपादीच शतपथः सर्वतोमुखः । प्राकृतःसंस्कृतोयोगी गीतग्रन्थप्रहेलिकः

सगुणो विगुणश्छन्दो निःसङ्गो विगुणो गुणी ।
निर्गुणो गुणवान्सङ्गी कर्मा धर्मी च कर्मदः ॥ १२८ ॥
निष्कर्मा कामकामी च निःसङ्गः सङ्गवर्जितः ।
निर्लोभो निरहंकारी निष्किञ्चनजनप्रियः ॥ १२९ ॥

सर्वसङ्गकरो रागी सर्वत्यागी बहिश्चरः । एकपादो द्विपादश्च बहुपादोऽल्पपादकः
द्विपदस्त्रिपदोऽपादी विपादी पदसंग्रहः । खेचरो भूचरो भ्रामी भृङ्गकीटमधुप्रियः
ऋतुः संवत्सरोमासो गणितार्कोह्यहर्निशः । कृतं त्रेता कलिश्चैव द्वापरश्चतुराकृतिः
दिवाकालकरःकालःकुलधर्मःसनातनः । कलाकाष्ठाकलानाड्योयामःपक्षःसितासितः
युगो युगन्धरोयोग्यो युगधर्मप्रवर्तकः । कुलाचारः कुलकरः कुलदैवकरः कुली ॥

चतुराश्रमचारी च गृहस्थो ह्यतिथिप्रियः ।
वनस्थो वनचारी च वानप्रस्थाश्रमोऽश्रमी ॥ १३५ ॥

वटुकोब्रह्मचारीचशिखासूत्रीकमण्डली । त्रिजटीध्यानवान्ध्यानीबद्रिकाश्रमवासकृत्
हेमाद्रिप्रभवोहैमो हेमराशिर्हिमाकरः । महाप्रस्थानको विप्रो विरागी रागवान्गृही
नरनारायणोऽनागो केदारोदारविग्रहः । गङ्गाद्वारतपःसारस्तपोवनतपोनिधिः ॥
निधिरेश महापद्मः पद्माकरश्रियालयः । पद्मनाभः परीतात्मा परिव्राट्पुरुषोत्तमः ॥
परानन्दः पुराणश्चसम्राड्राज विराजकः । चक्रभृच्चक्रपालस्थश्चक्रवर्ती नराधिपः

आयुर्वेदविदो वैद्यो धन्वन्तरिश्च रोगहा ।
औषधीबीजसम्भूतो रोगी रोगविनाशकृत् ॥ १४१ ॥
चेतनश्चेतकोऽचिंत्यश्चित्तचिन्ताविनाशकृत् ।
अतीन्द्रियः सुखस्पर्शश्चरचारी विहङ्गमः ॥ १४२ ॥

गरुडः पक्षिराजश्च चाक्षुषो विनतात्मजः । विष्णुयानविमानस्थो मनोमयतुरंगमः

वहुवृष्टिकरो वर्षी ऐरावणविरावणः। उच्चैःश्रवाऽरुणो गामी हरिद्श्वोहरिप्रियः
प्रावृषो मेघमाली च गजरत्नपुरन्दरः। वसुदो वसुधारश्च निद्रालुः पन्नगाशनः॥१४५
शेषशायी जलेशायी व्यासः सत्यवतीसुतः।
वेदव्यासकरो वाग्मी वहुशाखाविकल्पकः॥ १४६॥
स्मृतिः पुराणधर्मार्थीपरावरविचक्षणः। सहस्रशीर्षा सहस्राक्षः सहस्रवदनोज्ज्वलः
सहस्रबाहुः सहस्रांशुः सहस्रकिरणोनरः। वहुशीर्षैकशीर्षश्च त्रिशिराविशिराःशिरी
जटिलो भस्मरागी च दिव्याम्वरधरः शुचिः।
अणुरूपो बृहद्रूपो विरूपो विकराकृतिः॥ १४६॥
समुद्रमाथको माथी सर्वरत्नहरोहरिः। वज्रवैडूर्यको वज्री चिन्तामणिमहामणिः
अनिर्मूल्यो महामूल्यो निर्मूल्यः सुरभिः सुखी।
पिता माता शिशुर्वन्धुर्धाता त्वष्टार्यमा यमः॥ १५१॥
अन्तःस्थोवाह्यकारीच वहिस्थोवैवहिश्चरः। पावनः पावकापाकीसर्वभक्षीहुताशनः
भगवान्भगहा भागी भवभञ्जो भयङ्करः। कायस्थः कार्यकारी च कार्यकर्ता करप्रदः
एकधर्मा द्विधर्मा च सुखी दूत्योपजीवकः।
वालकस्तारकस्त्राता कालो मूषकभक्षकः॥ १५३॥
सञ्जीवनोजीवकर्तासजीवोजीवसम्भवः। षड्विंशकोमहाविष्णुःसर्वव्यापीमहेश्वरः
दिव्याङ्गदोमुक्तमालीश्रीवत्सोमकरध्वजः। श्याममूर्तिर्घनश्यामःपीतवासाःशुभाननः
चीरवासा विवासाश्च भूतदानववल्लभः। अमृतोऽमृतभागनीच मोहिनीरूपधारकः
दिव्यदृष्टिः समदृष्टिर्देवदानववञ्चकः। कवन्धः केतुकारी च स्वर्भानुश्चन्द्रतापनः॥
ग्रहराजो ग्रही ग्राहः सर्वग्रहविमोचकः।
दानमानजपो होमः सानुकूलः शुभग्रहः॥ १५६॥
विघ्नकर्ताऽपहर्ताच विघ्ननाशो विनायकः। अपकारोपकारी च सर्वसिद्धिफलप्रदः
सेवकःसामदानी च भेदी दण्डीचमत्सरी। दयावान्दानशीलश्चदानीयज्वाप्रतिग्रही
हविरग्निश्चरुस्थाली समिधश्चानिलो यमः।

होतोद्गाता शुचिः कुण्डःसामगो वैकृतिः सवः ॥ १६२ ॥
द्रव्यंपात्राणिसङ्कल्पो मुशलोह्यरणिःकुशः । दीक्षितोमण्डपोवेदिर्यजमानःपशुः क्रतुः
दक्षिणा स्वस्तिमान्स्वस्ति ह्याशीर्वादः शुभप्रदः ।
आदिवृक्षो महावृक्षो देववृक्षो वनस्पतिः ॥ १६४ ॥
प्रयागो वेणुमान्वेणी न्यग्रोधश्चाऽक्षयो वटः ।
सुतीर्थस्तीर्थकारी च तीर्थराजो व्रती व्रतः ॥ १६५ ॥
वृत्तिदाता पृथुःपुत्रोदोग्धागौर्वत्सएव च । क्षीरंक्षीरवहःक्षीरीक्षीरभागविभागवित्
राज्यभागविदोभागी सर्वभागविकल्पकः । वाहनो वाहको वेगी पदचारी तपश्चरः
गोपनो गोपको गोपी गोपकन्याविहारकृत् ।
वासुदेवो विशालाक्षः कृष्णोगोपीजनप्रियः ॥ १६८ ॥
देवकीनन्दनो नन्दी नन्दगोपगृहाऽऽश्रमी । यशोदानन्दनो दामी दामोदर उलूखली
पूतनारिः पदाकारी लीलाशकटभञ्जकः । नवनीतप्रियो वाग्मी वत्सपालकबालकः
वत्सरूपधरो वत्सी वत्सहा धेनुकान्तकृत् ।
बकारिर्वनवासी च वनक्रीडाविशारदः ॥ १७१ ॥
कृष्णवर्णाकृतिः कान्तो वेणुवेत्रविधारकः ।
गोपमोक्षकरो मोक्षो यमुनापुलिनेचरः ॥ १७२ ॥
मायावत्सकरो मायी ब्रह्ममायापमोहकः । आत्मसारविहारज्ञो गोपदारकदारकः ॥
गोचारी गोपतिर्गोपो गोवर्धनधरोबली । इन्द्रधुग्नोमखध्वंसीवृष्टिहा गोपरक्षकः
सुरभित्राणकर्ता च दावपानकरः कली ।
कालीयमर्दनः काली यमुनाह्रदविहारकः ॥ १७५ ॥
सङ्कर्षणो बलश्लाघ्यो बलदेवो हलायुधः ।
लाङ्गली मुसली चक्री रामो रोहिणिनन्दनः ॥ १७६ ॥
यमुनाकर्षणोद्धारो नीलवासा हली हली ।
रेवतीरमणो लोलो बहुमानकरः परः ॥ १७७ ॥

धेनुकारिर्महावारो गोपकन्याविदूषकः। काममानहरः कामी गोपीवासोऽपतस्करः
वेणुवादी च नादी च नृत्यगीतविशारदः। गोपीमोहकरो गानी रासको रजनीचरः
दिव्यमाली विमाली च वनमालाविभूषितः । कैटभारिश्चकंसारिर्मधुहा मधुसूदनः
चाणूरमर्दनो मल्लो मुष्टी मुष्टिकनाशकृत् । मुरहा मोदको मोदी मदघ्नोनरकान्तकृत्

विद्याध्यायी भूमिशायी सुदामा सुसखा सुखी ।
सकलो विकलो वैद्यःकलितो वै कलानिधिः ॥ १८२ ॥
विद्याशाली विशाली च पितृमातृविमोक्षकः ।
रुक्मिणीरमणो रम्यः कालिन्दीपतिः शङ्खहा ॥ १८३ ॥

पाञ्चजन्यो महापद्मो बहुनायकनायकः। धुन्धुमारो निकुम्भघ्नः शम्बरान्तोरतिप्रियः
प्रद्युम्नश्चानिरुद्धश्च सात्वतां पतिरर्जुनः। फाल्गुनश्च गुडाकेशः सव्यसाचीधनञ्जयः

किरीटी च धनुष्पाणिर्धनुर्वेदविशारदः ।
शिखण्डी सात्यकिः शैव्योभीमो भीमपराक्रमः ॥ १८६ ॥
पाञ्चालश्चाभिमन्युश्च सौभद्रो द्रौपदीपतिः ।
युधिष्ठिरो धर्मराजः सत्यवादी शुचिव्रतः ॥ १८७ ॥

नकुलः सहदेवश्च कर्णोदुर्योधनो घृणी । गाङ्गेयोऽथगदापाणिर्भीष्मोभागीरथीसुतः
प्रज्ञाचक्षुर्धृतराष्ट्रोभारद्वाजोऽथ गौतमः। अश्वत्थामा विकर्णश्च जह्नुर्युद्धविशारदः

सीमन्तिको गदी गाल्वो विश्वामित्रो दुरासदः ।
दुर्वासा दुर्विनीतश्च मार्कण्डेयो महामुनिः ॥ १९० ॥
लोमशो निर्मलोऽलोमी दीर्घायुश्च चिरोऽचिरा ।
पुनर्जीवी मृतो भावी भूतो भव्यो भविष्यकः ॥ १९१ ॥

त्रिकालोऽथ त्रिलिङ्गश्चत्रिनेत्रस्त्रिपदीपतिः। यादवोयाज्ञवल्क्यश्च यदुवंशविवर्धनः
शल्यक्रीडी विक्रीडश्चयादवान्तकरः कलिः । सदयोहृदयोदायोदायदोदायभाग्दयी
महोदधिर्महीपृष्ठोनीलपर्वतवासकृत् । एकवर्णो विवर्णश्च सर्ववर्णबहिश्चरः॥ १९४

यज्ञनिन्दी वेदनिन्दी वेदबाह्यो बलो बलिः ।

बौद्धारिर्बाधको बाधोजगन्नाथो जगत्पतिः ॥ १९५ ॥
भक्तिर्भागवतोभागी विभक्तोभगवत्प्रियः। त्रिग्रामोऽथनवारण्योगुह्योपनिषदासनः
शालिग्रामःशिलायुक्तोविशालोगंडकाश्रयः। श्रुतदेवः श्रुतःश्रावीश्रुतबोधःश्रुतश्रवाः
कल्किः कालकलः कल्को दुष्टम्लेच्छविनाशकृत्।
कुङ्कुमी धवलो धारः क्षमाकरो वृषाकपिः ॥ १९८ ॥
किङ्करः किन्नरः कण्वः केकीकिम्पुरुषाधिपः। एकरोमाविरोमाचबहुरोमाबृहत्कविः
वज्रप्रहरणोवज्रीवृत्रघ्नोवासवानुजः। बहुतीर्थकरस्तीर्थःसर्वतीर्थजनेश्वरः ॥ २०० ॥
व्यतीपातोपरागश्च दानवृद्धिकरः शुभः। असंख्येयोऽप्रमेयश्चसंख्याकारोविसंख्यकः
मिहिकोत्तारकस्तारो बालचन्द्रः सुधाकरः।
किंवर्णः कीदृशः किञ्चित्किंस्वभावः किमाश्रयः॥ २०२ ॥
निर्लोकश्च निराकारी बह्वाकारैककारकः। दौहित्रः पुत्रिकः पौत्रो नप्तावंशधरोधरः
द्रवीभूतो दयालुश्च सर्वसिद्धिप्रदो मणिः ॥ २०४ ॥
आधारोऽपि विधारश्च धरासूनुः सुमङ्गलः। मङ्गलो मङ्गलाकारो माङ्गल्यःसर्वमङ्गलः
नाम्नां सहस्रंनामेदं विष्णोरतुलतेजसः। सर्वसिद्धिकरं काम्यंपुण्यंहरिहरात्मकम्
यः पठेत्प्रातरुत्थाय शुचिर्भूत्वा समाहितः।
यश्चेदं शृणुयान्नित्यं नरो निश्चलमानसः ॥ २०७ ॥
त्रिसन्ध्यं श्रद्धया युक्तं सर्वपापैः प्रमुच्यते। नन्दते पुत्रपौत्रैश्च दारैर्भृत्यैश्चपूजितः
प्राप्नुते विपुलां लक्ष्मींमुच्यतेसर्वसंकटात्। सर्वान्कामानवाप्नोतिलभतेविपुलंयशः
विद्यावाञ्जायते विप्रः क्षत्रियो विजयी भवेत्।
वैश्यश्च धनलाभाढ्यः शूद्रः सुखमवाप्नुयात् ॥ २१० ॥
रणेघोरे विवादे च व्यापारे पारतन्त्रके। विजयी जयमाप्नोति सर्वदा सर्वकर्मसु ॥
एकधा दशधा चैव शतधा च सहस्रधा।
पठते हि नरो नित्यं तथैव फलमश्नुते ॥ २१२ ॥
पुत्रार्थी प्राप्नुते पुत्रान्धनार्थीधनमव्ययम्।

मोक्षार्थी प्राप्नुते मोक्षं धर्मार्थी धर्मसञ्चयम् ॥ २१३ ॥
कन्यार्थी प्राप्नुते कन्यां दुर्लभां यत्सुरैरपि ।
ज्ञानार्थी जायते ज्ञानी योगी योगेषु युज्यते ॥ २१४ ॥

महोत्पातेषु घोरेषु दुर्भिक्षे राजविग्रहे । महामारीसमुद्भूते दारिद्र्ये दुःखपीडिते
अरण्ये प्रान्तरे वाऽपिदावाग्निपरिवारिते । सिंहव्याघ्राभिभूतेऽपिचनेहस्तिसमाकुले

राज्ञा क्रुद्धेन चाज्ञप्ते दस्युभिः सह सङ्गमे ।
विद्युत्पातेषु घोरेषु स्मर्तव्यं हि सदा नरैः ॥ २१७ ॥

ग्रहपीडासु चोग्रासु वधबन्धगतावपि । महार्णवे महानद्यां पोतस्थेषु न चापदः
रोगग्रस्तो विवर्णश्च गतकेशनखत्वचः । पठनाच्छ्रवणाद्वापि दिव्यकायाभवन्तिते
तुलसीवनसंस्थाने सरोद्वीपे सुरालये । बद्रिकाश्रमे शुभे देशे गङ्गाद्वारे तपोवने
मधुवने प्रयागे च द्वारकायां समाहितः । महाकालवनेसिद्धेनियताःसर्वकामिकाः

ये पठन्ति शतावर्तं भक्तिमन्तो जितेन्द्रियाः ।
ते सिद्धाः सिद्धिदा लोके विचरन्ति महीतले ॥ २२२ ॥
अन्योन्यभेदभेदानां मैत्रीकरणमुत्तमम् ।
मोहनं मोहनानां च पवित्रं पापनाशनम् ॥ २२३ ॥

बालग्रहविनाशाय शान्तीकरणमुत्तमम् । दुर्वृत्तानां च पापानां बुद्धिनाशकरं परम्

पतद्गर्भा च वन्ध्या च स्राविणी काकवन्ध्यका ।
अनायासेन सततं पुत्रमेव प्रसूयते ॥ २२५ ॥

पयः पुष्कलदागावोबहुधान्यफला कृषिः । स्वामिधर्मपराभृत्यानारीपतिव्रताभवेत्
अकालमृत्युनाशाय तथादुःस्वप्नदर्शने । शान्तिकर्मणि सर्वत्र स्मर्तव्यं च सदानरैः

यः पठत्यन्वहं मर्त्यः शुचिष्मान्विष्णुसन्निधौ ।
एकाकी च जिताहारो जितक्रोधो जितेन्द्रियः ॥ २२८ ॥
गरुडारोहसंपन्नः पीतवासाश्चतुर्भुजः ।
वाञ्छितं प्राप्य लोकेऽस्मिन्विष्णुलोके स गच्छति ॥ २२९ ॥

एकतः सकला विद्या एकतःसकलं तपः । एकतःसकलोधर्मोनामविष्णोस्तथैकतः
यो ( मां ) हि नामसहस्रेण स्तोतुमिच्छति वै द्विजः ।
सोऽय ( ऽह ) मेकेन श्लोकेन स्तुत एव न संशयः ॥ २३१ ॥
सहस्राक्षः सहस्रपात्सहस्रवदनोज्ज्वलः । सहस्रनामानन्ताक्षःसहस्रबाहुर्नमोऽस्तुते
विष्णोर्नामसहस्रं वै पुराणं वेदसम्मतम् । पठितव्यं सदा भक्तैः सर्वमङ्गलमङ्गलम्
इति स्तवाभियुक्तानां देवानांतत्र वैद्विज । प्रत्यक्षंप्राह भगवान्वरदो वरदार्चितः

श्रीभगवानुवाच

व्रियतां भोः सुराः! सर्वैर्वरोऽस्मत्तोऽभिवाञ्छितः ।
तत्सर्वं सम्प्रदास्यामि नाऽत्रकार्या विचारणा ॥ २३५ ॥

देवा ऊचुः

वरदोऽसि यदा विष्णो वरमेतं ददस्व नः । अदितेर्गर्भसंभूतःशक्रस्याऽप्यनुजोभव
इति संप्रार्थितो देवैर्ब्रह्मशक्रपुरोगमैः । तथेत्युक्त्वा च भगवांस्तत्रैवान्तरधीयत
ततः कतिपये काले भगवानदितिनन्दनः । विष्णुरूपधरोऽनन्तोवामनत्वाच्चवामनः
बलिर्वैरोचनो व्यास वाजिमेधशतेन च । ईजे द्विजवरश्रेष्ठ!इन्द्रराज्यजिहीर्षया ॥
ऋत्विजं कश्यपं कृत्वा होतारं भृगुसत्तमम् । ब्रह्मा तत्राभवच्चैवस्वयमेवपितामहः
अध्वर्युर्भगवानत्रिर्बभूव मुनिसत्तमः । उद्गाता नारदश्चैव वसिष्ठश्च सभासदः
ये यत्र विहिताःसर्वेतत्रतत्रमुनीश्वराः । बलिस्तत्राऽभवद्व्यास दीक्षितोराजसत्तमः
एवं प्रवर्तनानेषु यज्ञेषु मुनिसत्तम! । हूयतां भुज्यतां चैव दीयतां धीयतां तथा
इति वाचः शुभास्तत्र श्रूयन्ते च द्विजोत्तम! ।
तस्मिन्काले सुचित्रेषु वामनोऽगाच्छुचिस्मितः ॥ २४४ ॥
पठमानो मुखाग्रेण चातुर्वेदिकमन्त्रकान् । द्वारे तिष्ठति राजेन्द्र वामनो द्विजसत्तमः
प्रतिहारेण वै व्यास!सर्वं राज्ञेनिवेदितम् । उत्थाय च महाराजोबलिर्वैरोचनिस्तदा
अर्घ्यमादाय तत्सर्वं जगाम स्वैः सभासदैः ।
पूजयित्वा यथान्यायं वामनं लोकभावनम् ॥ २४७ ॥

आनयित्वा सभामध्ये दत्त्वाऽऽसनपरिग्रहम् ।
कुतस्त्वागमनं ब्रह्मन्किन्तेऽभीष्टं ददामि वै ॥ २४८ ॥

वामन उवाच

राजराजाखिला सृष्टिर्ब्रह्मणः परमेष्ठिनः । ततोऽहमागतो भूमन्यज्ञं चैव दिदृक्षया
वरुणस्यच यज्ञो वै दृष्टो मे वै पुराऽनघ! । यक्षाधिपतेर्नूनं च यज्ञंवै दृष्टवानहम्
धर्मस्यापि च यज्ञो मे प्रजापतेश्च सत्तम । वायोर्यज्ञो महाराज दृष्टोमेविधिपूर्वकः
राजर्षीणां च ये यज्ञा दृष्टास्तेऽपि महाव्रत! । यादृशं वै महाराज यज्ञं ते दृष्टवानहम्
ईदृशो राजराजेन्द्र न भूतोनभविष्यति । तस्मादिहागतो राजन्!याचनार्थंतवाऽनघ

बलिरुवाच

याचस्व त्वं द्विजश्रेष्ठ! किं तेऽभीष्टं ददाम्यहम् ॥ २५४ ॥

वामन उवाच

देहि मे राजराजेन्द्र! पदानि त्रीणि मेदिनीम् ।
वासार्थं रोचते तेऽद्य यदि पार्थिवसत्तम! ॥ २५५ ॥

बलिरुवाच

किमिदं याचितं विप्र! स्वल्पं ते नहि तेपरम् ।
गजवाजिरथाः क्षोणी रत्नानि विविधानि च ॥ २५६ ॥
दासदासीर्वरारोहाःस्त्रियोनानावसूनिच । द्रव्याणिवाससीशुभ्रेयाचस्वत्वंद्विजोत्तम
पात्रोऽसि कृतकृत्योऽसि वेदवेदाङ्गपारग! ॥ २५८ ॥

वामन उवाच

न मे किञ्चित्स्पृहा राजन्विद्यते भुवि मानद! ।
देहि त्वं त्रिपदां भूमिं यदि श्रद्धाऽस्ति तेऽधुना ॥ २५९ ॥
इत्युक्ते वामनेनाथ बलिर्वचनमब्रवीत् । गृहाण त्रिपदां भूमिं वासस्यार्थंहि मानद
इत्युक्त्वासचराजर्षिर्ददौभूमिंद्विजाय वै । वारितोऽपितदाव्यासभृगुणादैवनोदितः
दत्तमात्रे जलेसद्यो ब्रह्माण्डं चाक्रमद्धरिः । सार्धपादद्वयं जाता सशैलवनकानना

वसुधेयं तदा व्यास!बलिना चार्पितं वसु ।
जित्वाऽसुरगणान्सर्वान्राज्यं दत्त्वा शतक्रतोः ॥ २६३ ॥
पश्चात्कुमुद्वतीं प्राप्तो विष्णुर्वामनरूपधृक् ॥ २६४ ॥
ऋद्धिसिद्ध्याश्रमे पुण्ये तीर्थं कृत्वाऽऽत्मसंभवम् ।
निवासमकरोद्व्यास तत्रैव स सुरोत्तमः ॥ २६५ ॥
वामनेन कृतं तीर्थं वामनं कुण्डमुच्यते । भाद्रेमासिसितेपक्षेद्वादशा श्रवणान्विता
वामनद्वादशी प्रोक्ता हत्याकोटिविनाशिनी ।
अस्मिंस्तीर्थे नरः स्नात्वा ह्युपोष्यैकादशीं यदा ॥ २६७ ॥
रात्रौ जागरणं कुर्याद्ब्रह्मभूयाय कल्पते । द्वादश्यां वै विशेषेण महादानानिकुर्वते
नतेषांदुर्लभं किञ्चित्त्रिषुलोकेषु विद्यते । एवं वै वामनं तीर्थं पुरा प्रोक्तं महर्षिणा ॥
सर्वपापहरं पुण्यं सर्वकामवरप्रदम् । प्राप्यते तेन सर्वं हि नाऽत्र कार्याविचारणा

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे ऽवन्तीक्षेत्रमाहात्म्ये वामनकुण्डमहिमविष्णुसहस्रनाम कथनंनामचतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

---

# पञ्चसप्ततितमोऽध्यायः

## कालभैरवतीर्थयात्रावर्णनम्

### सनत्कुमार उवाच

अतः परं प्रवक्ष्यामि वीरेश्वरमथो शृणु ।
तस्मिंस्तीर्थे नरः स्नात्वा वीरलोकमवाप्नुयात् ॥ १ ॥
नागानां प्रवरं तीर्थं सर्वकामवरप्रदम् । कालभैरवमित्याख्यं तच्च तीर्थंपरंस्मृतम्
यस्य दर्शनमात्रेण सर्वदुःखातिगो भवेत् ॥ ३ ॥

व्यास उवाच

कस्मिन्काले हि विख्यातं कालभैरवसंज्ञितम् ।
तीर्थं मुनिवरश्रेष्ठ! एतद्विस्तरतो वद ॥ ४ ॥

सनत्कुमार उवाच

पुराऽयं भैरवो योगी योगिनीत्रासकारकः ।
कालचक्रकृताः कृत्या योगिनीनां गणास्तदा ॥ ५ ॥
तासां कालीति विख्याता योगिनी परमोत्तमा ।
तयाऽयं पालितो नित्यं पुत्रवद् भैरवोऽमलः ॥ ६ ॥
तेनैते च विनिर्धूता दोषोत्पाताश्च सत्तम ।
त्रिविधा भुवि विख्याताः सर्वविघ्नकराः पराः ॥ ७ ॥
कालकृत्यास्तदा तेन भ्रंशिताः परमात्मना ।
महामारी पूतना कृत्या शकुनी रेवती खला ॥ ८ ॥

कोटरी तामसी माया नवैता मातृकाः स्मृताः । दुष्टदोषमहादुष्टा सर्वप्राणिभयङ्कराः
वशीचक्रे स धर्मात्मा सर्वकामवरप्रदाः । शिप्रातीरे स्थितोनित्यं कूलेचोत्तरतःशुभे
ऊषरस्य परे पूर्वे सोऽपि तिष्ठतिसर्वदा । आषाढस्य सिते पक्षे रविवारे समाहितः
नवमींवाऽष्टमींप्राप्यचतुर्दश्यांविशेषतः । पूजांकुर्वन्ति ये केचिन्नरा निश्चलमानसाः
विवाहे पुत्रजनने माङ्गल्ये च शुभे परम् । पत्रपुष्पार्घगन्धैश्च नैवेद्यैर्विविधैस्तथा ॥
ताम्बूलवासगन्धाद्यैःपूजयेद्वरदरूपिणम् । विप्राणां भोजनैर्होमैस्तर्पयेत्सततंविभुम्
एतत्परमकल्याणमेतत्परममङ्गलम् । नत्वा स्तुत्वा च तं देवं सर्वकामार्थसिद्धये ॥

सकलकलुषहारी धूर्तदुष्टान्तकारी सुचिरचरितचारी मुण्डमौञ्जीप्रचारी ।
करकलितकपाली कुण्डली दण्डपाणिः स भवतु सुखकारी भैरवो भावहारी ॥
विविधरासविलासविलासितं नववधूरवधूतपराक्रमम् ।
मदविघूर्णितगोष्पदगोष्पदं भवपदं सततं सततं स्मरे ॥ १७ ॥
अमलकमलनेत्रं चारुचन्द्रावतंसं सकलगुणगरिष्ठं कामिनीकामरूपम् ।

परिहृतपरितापं डाकिनीनाशहेतुं भज जन शिवरूपं भैरवं भूतनाथम् ॥ १८ ॥
सबलबलविघातं क्षेत्रपालैकपालं विकटकटिकरालं ह्यट्टहासं विशालम्
करगतकरवालं नागयज्ञोपवीतं भज जन शिवरूपं भैरवं भूतनाथम् ॥ १९ ॥
भवभयपरिहारं योगिनीत्रासकारं सकलसुरगणेशं चारुचन्द्रार्कनेत्रम् ।
मुकुटरुचिरभालं मुक्तमालं विशालं भज जन शिवरूपं भैरवं भूतनाथम् ॥ २० ॥
चतुर्भुजं शङ्खगदाधरायुधं पीताम्बरं सान्द्रपयोदसौभगम् ।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं शीलप्रदं शङ्कररक्षणं भजे ॥ २१ ॥
लोकाभिरामं भुवनाभिरामं प्रियाभिरामं यशसाभिरामम् ।
कीर्त्याभिरामं तपसाऽभिरामं तं भूतनाथं शरणं प्रपद्ये ॥ २२ ॥
आद्यं ब्रह्मसनातनं शुचिपरं सिद्धिप्रदं कामदं
सेव्यं भक्तिसमन्वितं हरिहरैः सृष्ट्या सहं साधुभिः ।
योग्यं योगविचारितं युगधरं योग्याननं योगिनं
वन्देऽहं सकलं कलङ्करहितं सत्सेवितं भैरवम् ॥ २३ ॥
भैरवाष्टकमिदं पुण्यं प्रातःकाले पठेन्नरः ।
दुःस्वप्ननाशनं तस्य वाञ्छितर्थफलं भवेत् ॥ २४ ॥
राजद्वारे विवादे च सङ्ग्रामे सङ्कटेनतथा । राज्ञा क्रुद्धेन चाऽऽज्ञप्ते शत्रुबन्धगतेतथा
दारिद्र्यदुःखनाशाय पठितव्यं समाहितैः ।
न तेषां जायते किञ्चिद् दुर्लभं भुवि वाञ्छितम् ॥ २६ ॥

इति भैरवाष्टकम्

अस्मिंस्तीर्थे प्रकर्तव्यं स्नानदानादिकं नरैः । संसारभयभीतैश्च पूजितो भैरवो वरः
तस्मात्सर्वप्रयत्नेन कर्तव्यं तीर्थमुत्तमम् ॥ २७ ॥
इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
ऽवन्तीक्षेत्रमाहात्म्ये कालभैरवतीर्थयात्रावर्णनं नाम
पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

# षट्सप्ततितमोऽध्यायः

## तीर्थयात्रायांनागतीर्थमहिमवर्णनम्

व्यास उवाच

नागतीर्थं त्वया ब्रह्मन्पुराप्रोक्तं यशस्विना । तस्यतीर्थवरस्याऽपिमहिमानञ्चसत्तम

भूयस्तु श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर।

कियत्काले समाख्यातमेतद्विस्तरतो वद ॥ २ ॥

सनत्कुमार उवाच

शृणु ब्रह्मन्प्रवक्ष्यामितवाग्रेनागतीर्थजाम् । कथांपुण्यतमांतुभ्यंभुविपापहरांपराम्

यस्याः श्रवणमात्रेण शापमुक्तो भवेन्नरः । पुरा नागा परिभ्रष्टा मातुः शापात्परन्तप

जनमेजयेन दग्धास्ते मोक्षिता ह्यास्तिकेन च ।

पप्रच्छुस्ते द्विजश्रेष्ठ! जरत्कार्वात्मजं तदा ॥ ५ ॥

नागा ऊचुः

ब्रह्मंस्तवप्रसादेनमोक्षिताहव्यवाहनात् । जनमेजयस्ययज्ञेऽस्मिन्देवराजस्यसान्निधौ

अस्माकं भूतमन्विच्छन्वासस्यार्थं परंतप ।

यस्मिन्स्थाने सदा ब्रह्मन्निवासो जायतेऽभयः ॥ ७ ॥

आस्तीक उवाच

श्रूयतांमातुलश्रेष्ठा युष्माकंहितमुत्तमम् । महाकालवने रम्ये या वै कुशस्थलीस्मृता

तस्या हि दक्षिणे भागे पूर्वतीर्थं सनातनम् ।

नागालयं पुरा प्रोक्तं यत्र सन्निहितो हरिः ॥ ६ ॥

योगनिद्रांसमासाद्य शेते ब्रह्म सनातनम् । शेषशायीतिविख्यातः सर्वलोकेषुगीयते

कल्पदोषो न तत्रैव बाधते सर्वदेहिनाम् । बकदाल्भ्य ऋषिस्तत्र तपस्तेपे धृतव्रतः

लोमशश्च महातेजास्तत्रैव प्रतितिष्ठति । दीर्घायुष्टं समापन्नोमार्कण्डेयो महामुनिः

न वर्तते कालचक्रं महाकालप्रतापतः। कपिलः सिद्धिमापन्नो यत्र तीर्थवरोत्तमे ॥
हरिश्चन्द्रो विमुक्तोऽभूद्गर्ह्यचण्डालयोनितः। सप्तर्षिप्रवराश्चैते निर्वाणपदवीं गताः

एतस्मात्कारणात्सर्वैस्तत्र विश्रम्यतां सदा।
मातुः शापोद्भवो दोषो युष्माकं नैव बाधते ॥ १५ ॥

एतत्तेवचनं श्रुत्वामहर्षेरास्तिकस्यच। आगच्छंस्तत्र ते शीघ्रं वासार्थंपन्नगोत्तमाः
एलापत्रः कम्बलश्च कर्कोटकधनञ्जयौ। वासुकिःपन्नगश्रेष्ठस्तक्षको नील एव च ॥

पद्मकश्चार्बुदश्चैव नागास्ते सर्व एव हि।
अत्रागत्य स्वस्थानानि चक्रुस्ते सुचिरव्रताः ॥ १८ ॥

तत्ररम्याणितीर्थानिजातानिपरमाणि च। नवानि चक्रुःकुण्डानि तीर्थभूतानिसत्तम
महापुण्यप्रदान्याहुर्महापापहराणि च। यत्र सिद्धाश्च गन्धर्वा ऋषयः संशितव्रताः

अप्परोगणसङ्घैश्च सेव्यन्ते च सदा वरैः।
यत्र शेषो महानागः पुरा प्रोक्तो महर्षिणा ॥ २१ ॥

शेषशायी ह्यलं विष्णुर्भगवान्कमलेक्षणः। तत्र सर्वाणितीर्थानितिष्ठन्तिभुविसर्वदा

श्वेतद्वीपेति विख्याता मणिचिक्रान्तभूमिका।
यत्र पुण्याश्च वै वृक्षाः पुष्पिताश्चैव सर्वशः ॥ २३ ॥
हंसकारण्डकाकादिपिककोकिलसारसाः।
पद्मखण्डगणास्तत्र नृत्यन्ति च शिखण्डिनः ॥ २४ ॥

निधिरेषमहापद्मो नीलोत्पलसुगन्धिना। वासितो वायुना शुभ्रः किन्नरोद्गारनादितः

यत्र सुसंस्कृता नार्यो विहरन्ति सुराङ्गनाः।
नागकन्याभो रम्याभिर्मण्डितं परमाद्भुतम् ॥ २६ ॥

यत्रस्नात्वानरोयाति वैकुण्ठंधामशोभनम्। शेषशायी हरिर्यत्र शेते हि च रमापतिः
तत्र रमासरोनाम तीर्थं परमशोभनम्। यत्रस्नात्वानरोनित्यं श्रीमान्भवति नाऽन्यथा
एवं व्यास! परं स्थानं सर्वपापहरं परम्। अत्रैव च परं तीर्थं बलेराश्रमद्भुतम् ॥
अत्रस्नानादिकंकार्यं यत्रसंनिहितोहरिः। सर्वपापविशुद्धात्मा नरोभवति तत्क्षणात्

कियत्प्रमाणमात्रां च ये ददति वसुन्धराम् ।
तनूरुहाणि यावन्ति तावत्कालसुखक्षया ॥ ३१ ॥
अक्षय्या लभ्यते वृद्धिस्तेषां लोकाः सनातनाः ।
श्रावणे मासि दर्शे च पञ्चम्यां सोमवासरे ॥ ३२ ॥
नागानां पूजनं कार्यं श्राद्धं दर्शे विधीयते ।
अक्षयं जायते श्राद्धं वाञ्छितार्थं भवेत्ततः ॥ ३३ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे ऽवन्तीक्षेत्रमाहात्म्ये तीर्थयात्रायां नागतीर्थमहिमवर्णनं नाम षट् सप्ततितमोऽध्यायः ॥ ७६ ॥

---

# सप्तसप्ततितमोऽध्यायः

## नृसिंहतीर्थमहत्त्ववर्णनम्

सनत्कुमार उवाच

भूयःश्रृणुपरंव्यास तीर्थानामुत्तमं वरम् । तत्तीर्थं सर्वपापघ्नं नृसिंहस्यमहात्मनः
यस्य दर्शनमात्रेण सर्वपापं समुत्तरेत् । दैत्यराजः समाख्यातो हिरण्यकशिपुः पुरा
तेनेयं वसुधा सर्वा सम्प्राप्ता च दुरात्मना ।
दुष्टदैत्यबलैर्व्याप्ता भाराक्रान्ता शुचार्दिता ॥ ३ ॥
गौर्भूत्वाऽश्रुमुखीदेवैर्ब्रह्माणंशरणंययौ । भाराक्रान्तांधरांदृष्ट्वा ब्रह्मालोकपितामहः
उवाच श्लक्ष्णया वाचा तस्याश्रमं व्यपोहितुम् ।
श्रूयतां भोऽवने ( ? ) पुण्ये भवत्या उपकारकम् ॥ ५ ॥
वचो वदामि ते तथ्यं देशकालोचितंतथा । पुराऽनेन तपश्चीर्णं दुष्करंसर्वदेहिनाम्
गायत्र्युपासना तेन कृता सुनियतात्मना । मयाचास्य वरोदत्तः प्रीतियुक्तेनचेतसा

न दिवा न तथा रात्रौ नान्तरिक्षे न भूतले ।
नातिशुष्केण चार्द्रेण न चास्त्रशस्त्रघातनैः ॥ ८ ॥

न देवासुरगन्धर्वैर्न यक्षोरगकिन्नरैः । पिशाचैर्गुह्यकाद्यैश्च राक्षसैर्न कदाचन ॥
मानवैःपक्षिजातैश्च न मे मृत्युर्भवेदिति । एककरतलाघातैः सकुलबलवाहनम् ॥ १०
मारयिष्यतिमांवीरःसमेमृत्युर्भविष्यति । तथेत्युक्त्वाऽतिदुष्टात्मा तमहंचतदाऽवने
आगमंचैव लोकं स्वं स दैत्योघोरशासनः । बभूवसर्वलोकानांशास्ताचातुलविक्रमः
तस्यैवाऽधिकृतालोके बभूवुर्विगतज्वराः । त्रैलोक्यं बुभुजे नित्यं सर्वदैत्यजनेश्वरः
तस्माद्यूयं वनं यात महाकालं महेशितुः । तत्र तीर्थं महच्चासीत्सर्वतीर्थवरोत्तमम्
सङ्गमेश्वरस्य दक्षिणे कर्कराजोत्तरे तथा । शिप्रातीरे शुभे देशे पूर्वं वैकुण्ठसन्निभम्

नृसिंहाख्यं परं धाम तस्य तीर्थं प्रतिष्ठितम् ।
तत्र गत्वा सुरश्रेष्ठाः! स्नानदानादिकाः क्रियाः ॥ १६ ॥

कुरुत सत्वरं सर्वं पुनर्लोकानवाप्स्यथ । ते तस्य वचनं श्रुत्वा देवाइन्द्रपुरोगमाः
महाकालवनंप्राप्तायत्र शिप्रापयस्विनी । नृसिंहतीर्थोपकूले उषित्वा शाश्वतीःसमाः

स्नानदानादिकं कृत्वा नृसिंहस्याऽर्चनं तथा ।
एवं कृत्वा विधानेन परां सिद्धिमितो गताः ॥ १९ ॥

नृसिंहस्यस्वरूपेण हतोदानवपुङ्गवः । सभामध्ये तदा व्यास हरिणाऽमित्रघातिना
करेणैकप्रहारेण हिरण्यकशिपुर्हतः । ततः सुरगणाः सर्वे स्वाधिकारान्ययुस्तदा
तदारभ्य सुराःसर्वे मध्याह्नोपासनं सदा । प्रकुर्वन्ति च तत्रैव यत्र तीर्थे हरिः परम्

एवं तीर्थं परं व्यास! अवन्त्यां विद्यते भुवि ।
अस्मिंस्तीर्थे द्विजश्रेष्ठ! स्नानदानादिकाः क्रियाः ॥ २३ ॥
ये कुर्वन्ति नराः पुण्यास्ते यान्ति परमां गतिम् ।
सर्वदा सर्वकालेषु पुण्यदं तीर्थमुत्तमम ॥ २४ ॥
कदाचिन्नृसिंहतिथिं प्राप्य चैव चतुर्दशीम् ।
स्नानं कृत्वाऽर्चनं तस्य नृसिंहस्य च धीमतः ॥ २५ ॥

नृसिंहेश्वरदेवेशं पूजयेद्यः समाहितः। तस्य हस्तगता लक्ष्मीर्भविष्यति न संशयः

ततोऽगस्त्येश्वरं देवं यः पश्येत्सुसमाहितः।

तस्य व्यास! क्षितौ किञ्चिद् दुर्लभं नैव दृश्यते ॥ २७ ॥

यत्रसिद्धिं परां प्राप्तो हनुमान्पवनात्मजः। ब्रह्मचारीसदाचारोयतिःसर्वार्थसाधकः

तिष्ठति परदैवज्ञः सर्वकामार्थसिद्धये। यस्मिन्वटे पुरा तप्तं तपः परमदुश्चरम् ॥२९

मित्रावरुणपुत्रेण सिद्धिहेतोस्तपस्विना। बोधीन्यग्रोधइत्याख्योह्यगस्तिवटएवच

नरो नारीसमायुक्तःसावित्रीव्रतमाचरेत्। सौभाग्यं लभते नित्यं सावित्र्याश्चपरंतप

यस्मिंस्तीर्थे नरः स्नात्वा दत्त्वा दानं च सौभगम्।

अष्टसौभाग्यसम्पूर्णं वंशपात्रं सवासकम् ॥ ३२ ॥

सप्तधान्यसमोपेतंपञ्चरत्नपरिष्कृतम्। सौगन्ध्यादीनिमाल्यानिमौलिसूत्रसमायुतम्

सावित्रीं हाटकीं कृत्वा यथाशक्ति परन्तप!।

यो वै ददाति विप्राय वेदवेदाङ्गधीमते ॥ ३४ ॥

लभते विपुलां लक्ष्मीं बहुभोगकरीं शुभाम्।

भुक्त्वा वै विविधान्भोगान्पुनः स्वर्गमवाप्नुयात् ॥ ३५ ॥

सावित्रीव्रतकृन्नारी जायते पतिवल्लभा।

पतिव्रता महाभागा विधवा न कदाचन ॥ ३६ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे

ऽवन्तीक्षेत्रमाहात्म्ये नृसिंहतीर्थमहिमवर्णनं नाम

सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

———

# अष्टसप्ततितमोऽध्यायः

## कुटुम्बेश्वरमाहात्म्यकथनम्

### सनत्कुमार उवाच

शृणुव्यासपरंतीर्थंभुविविख्यातमुत्तमम् । कुटुम्बेश्वरेतिविख्यातो नाम्नाचैवमहेश्वरः
तस्यतीर्थवरंतीर्थंसर्वतीर्थफलप्रदम् । यस्मिंस्तीर्थेनरःस्नात्वा कुटुम्बीजायतेध्रुवम्
कुटुम्बार्थं तपस्तेपे पुरा दक्षः प्रजापतिः । नारदेन पुरा व्यास पुत्रषष्टिर्विवासिता

प्रजाकामः स धर्मात्मा सुचिरं व्रतमाचरत् ।
सपत्नीको महातेजा निराहारो जितेन्द्रियः ॥ ४ ॥
अस्मिंस्तीर्थे शुचिः स्नातो जपन्ब्रह्म सनातनम् ।
वर्षाणामयुतं व्यास! तपस्तेपे सुदारुणम् ॥ ५ ॥

तेन तीर्थप्रसादेन लभेत्स वहुलांप्रजाम् । प्रजापतिरितिख्यातोजातोदक्षःप्रतापवान्

ब्रह्माऽपि तत्र वै पश्चात्तपः कृत्वा सुदुष्करम् ।
निष्कलं कमलं रूपं प्राप्तवांस्तत्क्षणाद्विधिः ॥ ७ ॥

महादेवोऽपि तत्रैव प्राप्तवान्ब्रह्मणः पदम् । चतुर्मुखधरं लिङ्गं दृश्यतेऽद्यापिसत्तम
भद्रपीठधरा देवी भद्रकालीति विश्रुता । तत्रैव च सदा व्यास क्रीडतिस्म धृतव्रता
द्वारे तिष्ठति तत्रैव भैरवः क्षेत्रपालकः । पादेन खञ्जतांयातः पुरा दैत्यवरार्दितः॥

पुत्रवत्पालितो देव्या सदा तिष्ठति तत्स्थले ।
ये ते देवगणाः सर्वे तस्मिंस्तीर्थे प्रतिष्ठिताः ॥ ११ ॥

ऋषयोऽपि महाभागाः सदा पर्वणिपर्वणि । आयान्ति चैव सन्ध्यार्थंबहुपुत्रप्रदेसरे
अस्मिंस्तीर्थेसदाचाराःस्नानंकुर्वन्ति येनराः । नतेषांदुर्लभं किञ्चिज्जायतेजन्मजन्मनि
महाबाधासु घोरासु महामारीषु तत्परैः । हवनं क्रियते नित्यं सर्षपै राजिकैर्यवैः
पायसैर्विविधैर्भोगैस्तेषां दोषो न जायते । दुर्भिक्षे राज्यभ्रंशे च संग्रामे भृशदारुणे

पूजयेत्क्षेत्रपालं च सर्वापदि समाहितः । सर्वदुःखविनिर्मुक्तोजायतेनाऽत्रसंशयः
स्नात्वा कुटुम्बके तीर्थे पूजयित्वा महेश्वरम् ।
दानं कुष्माण्डकं दद्याद्ब्राह्मणाय तपस्विने ॥ १७ ॥
सौवर्णमणिमुक्ताभिर्वासोऽलङ्कारसंयुतम् । धनधान्यसमायुक्तः कुटुम्बी जायतेनरः
फाल्गुनेच सिते पक्षे या वै चतुर्दशी भवेत् ।
त्रयोदशीयुता व्यास शिवरात्रिस्तथोच्यते ॥ १६ ॥
तद्दिने च नरः स्नात्वा रात्रौ जागरणं चरेत् ।
बिल्वोदकेन गन्धेन बहुपुष्पफलैस्तथा ॥ २० ॥
धूपैर्दीपैश्च नैवेद्यैर्वासोऽलङ्कारकादिभिः । पूजयेद्योनरो भक्त्या गिरीशं सगणंपरम्
तस्य पापं क्षयंयाति शिवलोके महीयते । द्वादशैकादशीपुण्यं लभते भुवि मानवः
अश्वमेधफलं तस्यजागरे च क्षणेक्षणे । ततस्तुप्रातरुत्थायस्नानदानादिकाःक्रियाः
कृत्वा तु विधिवद् व्यास! शिवपूजाऽर्चनं तथा ।
विप्रांश्च भोजयेत्सप्त तस्य पुण्यफलं श्रृणु ॥ २४ ॥
कपिलानां सवत्सानां सहस्राणि चतुर्दश ।
वाजपेयसहस्रस्य फलं प्राप्नोति नान्यथा ॥ २५ ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-ऽवन्तीक्षेत्रमाहात्म्येकुटुम्बेश्वरमाहात्म्यवर्णनंनामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

# एकोनाशीतितमोऽध्यायः

## अखण्डेश्वरमहिमवर्णनम्

### सनत्कुमार उवाच

शृणु व्यास महापुण्यंतीर्थं परमशोभनम् । देवप्रयागमाख्यातं सर्वपापप्रणाशनम् ॥
देवानां च परं स्थानं यत्र तीर्थं परंतप । सोमतीर्थोत्तरे भागे प्रयागस्यच दक्षिणे॥
शि( क्षि ) प्रायाः पूर्वभागे च तत्र तीर्थं प्रतिष्ठितम् ।
तत्र तीर्थे नरः स्नात्वा पश्येच्चैव सुरोत्तमम् ॥ ३ ॥
देवं माधवमित्याख्यं भुविसर्वफलप्रदम् । ददातितस्यदेवेन्द्रोवान्छितार्थंजगत्पतिः
आनन्दभैरवस्तत्र सर्वदेवनमस्कृतः । यस्य दर्शनमात्रेण सर्वपापक्षयो भवेत् ॥ ५॥
न तस्य जायते व्यास!यातनाभैरवीकदा । स्वर्गद्वारे सदाव्यासजायतेनिर्भयःपुमान्
ज्येष्ठे मासे सिते पक्षे दशम्यां बुधहस्तयोः । गरानन्देव्यतीपातेकन्याचन्द्रेवृषेरवौ
दशाला जायते वत्स! गङ्गाजन्म परं शुचि ॥ ७ ॥
तद्दिने च नरः स्नात्वा मर्वतीर्थफलं लभेत् ।
अखण्डं च परं तीर्थं शृणु व्यास! ह्यतः परम् ॥ ८ ॥
यस्य श्रवणमात्रेण व्रतभङ्गो न जायते । एक एव पुरा ब्रह्मन्ब्राह्मणो ब्रह्मचित्तमः
धर्मशर्मेतिविख्यातः सदाचाररतःशुचिः । बहुव्रतधरो दान्तो वेदवेदाङ्गपारगः ॥
किञ्चिद्दोषप्रसङ्गेन व्रतपूर्तिर्न चाभवत् । एवं बहुतिथे काले नारदो देवदर्शनः ॥
तस्य गेहागतो ब्रह्मन्नातिथ्यार्थं महातपाः ।
तदोत्थाय द्विजो नित्यं बहुमानपुरःसरम् ॥ १२ ॥
सत्कृत्य नारदं भूमन्विधिदृष्टेन कर्मणा । पूजयित्वा द्विजश्रेष्ठः पप्रच्छ मुनिसत्तम
भगवन्भवता सर्वं विदितं ज्ञानचक्षुषा । अस्माकं च परं दोषःकिञ्चिज्जातः पुराऽनघ
येन पापप्रसङ्गेन व्रतभङ्गोऽभवद्ध्रुवम् । कारणं ब्रूहि मे नाथ किं दोषोऽत्र तु गण्यते

नारद उवाच

श्रूयतां भो द्विजश्रेष्ठ! भवद्भिश्च पुराकृतम् ।
महाराष्ट्रे सुविख्यातो ब्राह्मणो धनसञ्चकः ॥ १६ ॥
ब्रह्मदत्तेत्यसौ विप्रो वेदब्राह्मणनिन्दकः । धनलोभी पराक्रान्तः सर्वधर्मवहिर्मुखः
नास्तिको देवतीर्थेषु परद्रव्यापहारकः ।
परस्त्रीषु रतो नित्यं द्यूतवादी च तस्करः ॥ १८ ॥
एवमायुः परिक्षीणो धनहीनोऽभवत्तदा । इतस्ततोऽभ्रमद्भ्रष्टो नदीतीरे सुविह्वलः
गतश्चौर्यप्रसङ्गेन यात्रिकैः सह सङ्गतः ।
किञ्चित्कालेषु दुःशीलो मृतिम्प्राप्तो रुजार्दितः ॥ २० ॥
नीतः संयमिनीं विप्रस्तत्कालं यमकिङ्करैः ।
यमराजपुरं प्राप्तो वहुपापकरो द्विजः ॥ २१ ॥
दृष्टोऽसौ धर्मराजेन तदा पापपरायणः । निरीक्ष्य सहसोवाच धर्मपूर्वमिदं वचः
शृणुध्वं किङ्कराः सर्वे यूयमेकाग्रमानसाः । अनेनाचरितं सर्वंदुष्कर्मसर्वकिल्बिषम्
गोदातीरे मृतः पापी तत्र नः कारणं नहि ।
तिस्रःकोट्योऽर्धकोटिश्च यानि तीर्थान्यहर्निशम् ॥ २४ ॥
आयान्ति गौतमीतीरे सिंहस्थेऽपि वृहस्पतौ ।
तेषां तु वायुसंस्पर्शो जातोऽस्यान्ते ( न्तः ) कलेवरे ॥ २५ ॥
तेन पुण्यप्रभावेणनोऽस्माकंकारणंकचित् । ग्राह्योभवद्भिर्नैवायंमुच्यतांभोःपुरःसराः
एवं तैर्मोचितो विप्रः पुनर्ब्रह्मगतिं गतः । तेन पापप्रसङ्गेन व्रतभङ्गी गतो भुवि

ब्राह्मण उवाच

ब्रह्मन्केन प्रकारेण सर्वपापक्षयो भवेत् । किं तपः किं च दानं चकिंतीर्थव्रतसेवनम्
येन पुण्यप्रभावेण व्रतभङ्गो न जायते ॥ २६ ॥

नारद उवाच

शृणु द्विजवर श्रेष्ठ! महाकालवनं स्मृतम् ।

यत्र रुद्रसरः प्रोक्तमृषिणा तत्त्वदर्शिना ॥ ३० ॥
कोटिकोटिसुतीर्थानि वर्तन्ते द्विजसत्तम! ।
कोटितीर्थेति विख्यातं तस्माद् द्विज! सनातनम् ॥ ३१ ॥
तत्तीर्थस्योत्तरेभागेसुतीर्थंसर्वकामदम् । नाम्नाऽखण्डसरःख्यातमखण्डेश्वरसन्निधौ
यस्यदर्शनमात्रेणसर्वयज्ञफलं लभेत् । तस्माद्धि सर्वथा वत्सगच्छत्वंतत्रमाचिरम्
इति तस्य वचः श्रुत्वा सद्विजोऽगात्कुमुद्वतीम् ।
स्नात्वाऽखण्डसरे व्यास दृष्ट्वा देवं महेश्वरम् ॥ ३४ ॥
सद्यः पुण्यवतां लोकान्प्राप्तो वै द्विजसत्तमः ।
एवं व्यास! महातीर्थमखण्डेश्वरमुत्तमम् ॥ ३५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डेऽवन्तीक्षेत्रमाहात्म्येऽखण्डेश्वरमहिमवर्णनंनामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

# अशीतितमोऽध्यायः

## कर्कराजतीर्थमाहात्म्यवर्णनम्

### सनत्कुमार उवाच

भूयः श्रृणु परं तीर्थं सर्वतीर्थफलप्रदम् । कीर्तितं ब्रह्मणापूर्वं मार्कण्डेयस्य पृच्छतः
श्रृणु वत्स महीपृष्ठे शिप्राद्दिव्यतरानदी । तस्यास्तीरेवरं तीर्थंकर्कराजेतिविश्रुतम्
यस्य दर्शनमात्रेण महापापक्षयो भवेत् । विकारा मानसाः सर्वे चन्द्रोमानससम्भवः
तस्य स्थानेगतोभानुर्यामयायनकरः परः । ऋतुत्रयंसमाख्यातंविधूम्रार्चिस्तदुच्यते
तत्र मृताः प्रवर्तन्ते योगिनोऽपिपरन्तप । चातुर्मास्ये हरौ सुप्ते ये नरा व्रतवर्जिताः
न तेषां सद्गतिर्वत्स सत्यमेव ब्रवीमि ते ।
चातुर्मास्ये मृता ये च ये मृता दक्षिणायने ॥ ६ ॥

तेषामुद्धरणार्थायतीर्थमेतद्विनिर्मितम् । कर्कराजइतिख्यातंसर्वलोकेषुगीयते ॥ ७ ॥

मार्कण्डेय उवाच

भगवन्भवता सर्वं निर्मितं विश्वमूर्तिना । चराचरमिदं विश्वं जगत्सर्वं जगत्पते ॥

चातुर्मास्ये हरौ सुप्ते धर्माऽऽचारविधिः स्मृतः ।

तदहं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदाम्वर! ॥ ६ ॥

ब्रह्मोवाच

शृणु वत्स! परं पुण्यं चातुर्मास्यफलं शुभम् ।

यच्छ्रुत्वा भारते खण्डे नृणां मुक्तिर्न दुर्लभा ॥ १० ॥

मुक्तिप्रदोऽयं भगवान्संसारोत्तारकारणः । यस्य स्मरणमात्रेण सर्वपापक्षयो भवेत्

मानुष्यंदुर्लभंलोकेतत्राऽपि च कुलीनता । तत्राऽपिसंयमित्वंचतत्र सत्सङ्गमःशुभः

सत्सङ्गमो न यत्राऽस्ति विष्णुभक्तिर्व्रतानि न ।

चातुर्मास्ये विशेषेण विष्णुव्रतकरः शुभः ॥ १३ ॥

चातुर्मास्ये ऽव्रती यस्तु तस्य पुण्यं निरर्थकम् ।

सर्वतीर्थानि दानानि पुण्यान्यायतनानि च ॥ १४ ॥

विष्णुमाश्रित्य तिष्ठन्ति चातुर्मास्ये समागते ।

स विष्णुराश्रितो नित्यं कर्कराजं सुतीर्थकम् ॥ १५ ॥

सुपुष्टेन च देहेन जीवितं तस्य शोभनम् । चातुर्मास्येसमायातेहरिर्येनाऽर्चितस्तदा

कृतार्थास्तस्य विबुधा यावज्जीवं वरप्रदाः । संप्राप्यमानुषंदेहं चातुर्मास्येपराङ्मुखः

तस्य पापशतान्याहुर्देहस्थानि न संशयः । मानुष्यं दुर्लभं लोके हरिभक्तिश्चदुर्लभा

चातुर्मास्ये विशेषेण सुप्ते देवे जनार्दने । चातुर्मास्ये नरःस्नात्वाकर्कराजेद्विजोत्तम

सर्वक्रतुफलं प्राप्य देववद्दिवि मोदते । विशेषेण तु तत्स्नानंकर्कस्थेऽपिदिवाकरे

दुर्लभं सर्वजन्तूनां ससुरासुरमानुषम् ।

देहशुद्धिं विधायाऽऽदौ मुक्तिमार्गमवाप्नुयात् ॥ २१ ॥

तत्राऽपि निर्झरेकूपेतडागेवासरस्यपि । तस्मात्तदधिकंपुण्यंसमाख्यातंसुरासुरैः

तेषु यः स्नाति वै नित्यं तस्य पापक्षयो भवेत् ॥ २२ ॥
तस्मान्नद्यधिका पुण्या समाख्याता सुरासुरः ।
पुष्करे च प्रयागे च यत्र क्वाऽपि महाजले ॥ २३ ॥
चातुर्मास्ये तु यः स्नाति पुण्यसङ्ख्या ततोऽधिका ।
रेवायां भास्करे क्षेत्रे प्राच्यां सागरसङ्गमे ॥ २४ ॥
एकाहमपियःस्नातिचातुर्मास्ये न दुःखभाक् । दिनत्रयंचयःस्नातिनर्मदायांसमाहितः
सुप्ते देवे जगन्नाथे पापं याति सहस्रधा । पक्षमेकं तुयःस्नाति गोदावर्यांदिनोदये
स भित्त्वा कर्मजं देहं याति विष्णोः सलोकताम् ।
अवन्त्यां कर्कराजे तु साक्षाद्विष्णुर्भवेन्नरः ॥ २६ ॥
क्षणमेकं क्षणार्धं वा चातुर्मास्येऽतिलङ्घयेत् ॥ २७ ॥
तिलोदकेनामलसंयुतेन बिल्वोदकेनापि च मज्जयेद्यः ।
न तस्य जानामि फलाधिकं वै किन्तस्य कीदृङ्मुनिभिः प्रणीतम् ॥ २८ ॥
गङ्गां स्मरति यो नित्यमुदपानसमीपतः । तद्गाङ्गेयजलं जातं तेन स्नानंसमाचरेत्
गङ्गाऽपि देवदेवस्य चरणाङ्गुष्ठवाहिनी । पापहासासदाप्रोक्ताचातुर्मास्येविशेषतः
चातुर्मास्ये जलगतो देवो नारायणो भवेत् ।
सर्वतीर्थाऽधिकं स्नानं विष्णुतेजोंऽशसङ्गतम ॥ ३१ ॥
स्नानं दशविधं कार्यं विष्णुनाम्ना महाफलम् ।
सुप्ते देवे विशेषेण नरो देवत्वमाप्नुयात् ॥ ३२ ॥
विनास्नानंतुयत्कर्मपुण्यकार्यमयंशुभम् । क्रियतेविफलंब्रह्मंस्तद्गृह्णन्तिहिराक्षसाः
स्नानेन सत्यमाप्नोति सत्ये धर्मः सनातनः ।
धर्मान्मोक्षपथं प्राप्य पुनर्नैवावसीदति ॥ ३४ ॥
ये चाध्यात्मविदः पुण्या ये च वेदान्तपारगाः ।
सर्वदानप्रदाने च तेषां स्नानेन शुध्यति ॥ ३५ ॥
कृतस्नानस्य हि हरिर्देहमाश्रित्य तिष्ठति । सर्वक्रियाफलं येषु सम्पूर्णफलदं भवेत्

सर्वपापविनाशाय देवतातोषणाय च । चातुर्मास्ये जलस्नानं सर्वपापक्षयावहम् ॥
निशायांचैवनस्नायात्सन्ध्यायांग्रहणंविना । उष्णोदकेननस्नायाद्रात्रौशुद्धिर्नजायते
भानुसंदर्शनाच्छुद्धिर्विहिता सर्वकर्मसु ।
चातुर्मास्ये विशेषेण जलशुद्धिस्तु भाविनी ॥ ३६ ॥
अशक्त्यांतुशरीरस्यभस्मस्नानेनशुध्यति । मन्त्रस्नानेनविप्रेन्द्र विष्णुपादोदकेनवा
नारायणाग्रतःस्नानंक्षेत्रेतीर्थेनदीषु च । विशेषतोऽपिशिप्रायांतीर्थे कर्काभिधेवरे
यश्च स्नाति नरो नित्यं स याति वैष्णवं पदम् ।
तस्मात्त्वं भार्गवश्रेष्ठ! तत्र गच्छस्व मा चिरम् ॥ ४२ ॥
पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ।
तानि सर्वाणि तिष्ठन्ति कर्कराजजले सदा ॥ ४३ ॥
कर्कस्थे च दिवानाथेस्नानंकुर्वन्तिये नराः । न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि
चातुर्मास्यंसमासाद्यतत्रैवनिवसाम्यहम् । नास्तिरेवासमापुण्यानदी ब्रह्माण्डभूतले
महेशान्नापरो देवो मुक्तिदो न जनार्दनात् । उज्जयिनीसमानास्ति पुरीकामवरप्रदा
कर्कराजसमं तीर्थं नास्ति वत्स! महीतले । यस्य दर्शनमात्रेण मुक्तिभागी भवेन्नरः
एवं व्यास!समाख्यातं ब्रह्मणा भार्गवाय च । तस्मात्सर्वप्रयत्नेन महाकालवनं व्रज
अस्माकं चाऽपि तत्रैव स्थानं परमशोभनम् ।
चातुर्मास्ये हरौ सुप्ते यावद्यायात्प्रबोधिनी ॥ ४६ ॥
तावत्कालं हि तत्रैव मुक्तिरेव न संशयः । चातुर्मास्ये हरौ सुप्ते जहातिचेत्कलेवरम्
यमलोके चिरं वासोजायतेनाऽत्रसंशयः । यस्मात्तुलसिकाभागे शालिग्रामे सुरालये
आत्मानंहिपणीकृत्यतत्रैवसंनियोजयेत् । तावत्प्रबोधिनी चेति द्वादशीद्विजसत्तम
पश्चाद् घृतसुवर्णेन मोचयित्वा स्वकं नयेत् ।
चातुर्मास्योद्भवं दोषं बाधते न च मानवम् ॥ ५३ ॥
यस्य शिप्रोदकेस्नानं कर्कराजेऽनुजायते । एवं व्यास! वरं तीर्थं सर्वतीर्थफलप्रदम्
पृथिव्यांयानितीर्थानिसरितःसागराश्चये । ते सर्वेचसमायान्तिचातुर्मास्येद्विजोत्तम

तस्माच्च तद्वरं तीर्थं कर्कराज इति स्मृतम् ॥ ५६ ॥
य एतां वै कथां पुण्यां शृण्वन्ति श्रावयन्ति च ।
न तेषां जायते दोषश्चातुर्मास्योद्भवः कदा ॥ ५७ ॥

इति श्रीस्कान्देमहापुराणे एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे-ऽवन्तीक्षेत्रमाहात्म्ये कर्कराजतीर्थमहिमवर्णनंनामा-शीतितमोऽध्यायः ॥ ८० ॥

---

# एकाशीतितमोऽध्यायः

## देवतीर्थयात्रामहिमवर्णनम्

सनत्कुमार उवाच

मेरोश्च दक्षिणे भागे दुग्धकुण्डोत्तरे तथा । ऋषभः पर्वतश्रेष्ठो देवगन्धर्वसेवितः ॥
यत्र देवाङ्गनारम्याः क्रीडन्ति सततं द्विज! । तत्र रम्यसरोनाम तिष्ठते सर्वकामदम्
तत्र तीर्थं नरः स्नात्वा सुभगो जायते ध्रुवम् ।
देवैश्च क्रीडते नित्यं भुवि विख्यातकः परम् ॥ ३ ॥
भाद्रपदसिताष्टमीमैत्रर्क्षेणसमन्विता । तद्दिनेऽत्र समागम्य स्नानदानादिकाःक्रियाः
करोतिसततं व्यास तेषां लोकाः सनातनाः । मेरोश्चेशानकेतीर्थं दिव्यंपरमशोभनम्
विन्दुसरेतिविख्यातं सर्वकामवरप्रदम् । गङ्गा सरस्वती पुण्या सरयूश्च पयस्विनी
एताःसरिद्वरायातास्तत्रसत्यवतीसुत । येसिद्धा ये च साध्याश्चतपस्विनोधृतव्रताः
उपासाञ्चक्रिरे तत्र तस्य तीर्थस्य सर्वदा ।
तस्मिंस्तीर्थे नरः स्नात्वा सर्वार्थान्प्राप्नुते ध्रुवम् ॥ ८ ॥
भाद्रपदे च शुक्ला वै चतुर्थी या प्रकीर्तिता ।
सिद्धा सा सर्वदा प्रोक्ता यत्र जातो गणाधिपः ॥ ९ ॥

मनः कामेश्वरः ख्यातः सर्वकामवरप्रदः। तस्य तीर्थे नरः स्नात्वादृष्ट्वादेवं गणेश्वरम्
मनोरथशतं प्राप्य कामचारी भवेन्नरः ॥ १० ॥

व्यास उवाच

अस्मिन्क्षेत्रे शुभे ब्रह्मन्महाकालवनोत्तमे ॥ ११ ॥
तीर्थानि कतिसङ्ख्यानि देवतायतनानि च।
यानि कानि च ख्यातानि तानि नो वद विस्तरात् ॥ १२ ॥

सनत्कुमार उवाच

शृणुव्यासऋषिश्रेष्ठकथांपापहरांपराम्। अवन्त्यांयानितीर्थानिलिङ्गानिचमहामुने
तानिवर्णयितुं शक्तः स्वयम्भूश्चतुराननः। वर्षाणामयुतैःषड्भिर्न च वक्तुं कथञ्चन
यावन्तो मेघमालानां बिन्दवो हि स्रवन्ति च।
धरित्र्यां तृणसङ्ख्या वै पृथिव्यां सिकतास्तथा ॥ १५ ॥
नभसो ज्योतिषां सङ्ख्यां वक्तुं कोऽपि न शक्नुते।
न हि तीर्थलिङ्गसङ्ख्याः सन्त्यवन्त्यां तपोधन! ॥ १६ ॥
अन्तरिक्षेचमेदिन्यां तीर्थभूता पुरी त्वियम्। वापीकूपतडागादिप्रस्रवोद्धरणानिच
नद्यःसरांसिखाताश्च तीर्थभूतं हि सर्वशः। तथापि देवयात्रायां प्रसंगेन निबोध मे
यानि कानि च मुख्यानि तानि तुभ्यं वदाम्यहम्।
यज्ज्ञात्वा मोक्ष्यसे नित्यं पूर्वाऽऽचीर्णशुभाशुभैः ॥ १६ ॥
प्रातरुत्थाय यो नित्यं शुचिः प्रयतमानसः।
विष्णुस्मरणसम्पन्नः सर्वकामक्रियादिकम् ॥ २० ॥
कृत्वा वै सर्वगन्धादितिलाक्षतसमन्वितः। स्नात्वारुद्रसरे तात तथैवच व्रतश्चरेत्
उर्ज्जमाधवयोश्चैव वैशाखाऽऽषाढयोस्तथा।
शिवरात्र्यां विशेषेण देवयात्रा प्रशस्यते ॥ २२ ॥
यस्यदेवस्ययत्तीर्थं यस्यदेवस्य सन्निधौ। तत्राभिषेकःकार्योवैदेवतायाश्च पूजनम्
विधिवच्चाचरेद्यस्तु स सर्वं फलमश्नुते। तस्मात्सर्वप्रयत्नेन देवयात्रां समाचरेत्

व्यास उवाच

ब्रह्मन्केन प्रकारेण देवयात्रां चरेन्नरः। तत्सर्वं श्रोतुमिच्छामि विस्तरेण तपोधन

सनत्कुमार उवाच

शृणु व्यास परं गुह्यं प्रवक्ष्यामि यथाश्रुतम्। उमामहेश्वरसम्वादं देवयात्रादिकर्मसु

उमोवाच

प्रभावः कथ्यतां देव! क्षेत्रस्याऽस्य महेश्वर!।
यानि तीर्थानि विद्यन्ते यानि लिङ्गानि सन्ति वै॥
तान्यादितो मे भूमंस्त्वं वदस्व वदताम्वर॥ २७॥

ईश्वर उवाच

शृणु देवि प्रयत्नेन प्रभावं पापनाशनम्॥ २८॥
क्षेत्रमाद्यं महादेवि! ममातीव प्रियं सदा।
यत्र शिप्रा महापुण्या दिव्या नवनदी प्रिया॥ २९॥
नीलगङ्गा सङ्गमं च तथा गन्धवती नदी।
चतस्रो मे प्रिया नद्यः कुमुद्वत्यां हि सुव्रते॥ ३०॥

ईश्वराश्चतुराशीतिस्तथाऽष्टौसन्तिभैरवाः। एकादशतथारुद्राआदित्याद्वादशस्मृताः

षड्वै विनायकाश्चाऽत्र देव्यश्च चतुर्विंशतिः।
यऽत्तोहमागतो भद्रे! महाकालवनोत्तमे॥ ३२॥

विष्णुब्रह्मादयः सर्वे ह्यत्रैव निहिताःशुभे। देवैर्व्याप्तमिदं क्षेत्रं देवि योजनमायतम्

दशविष्णुः समाख्यातास्तेषां नामानि मे शृणु।
वासुदेवो ह्यनन्तश्च बलरामो जनार्दनः॥ ३४॥

नारायणो हृषीकेशो वाराहो धरणीधरः। विष्णुर्वामनरूपेण शेषशायी श्रियालयः

दशैते वैष्णवा प्रोक्ताः सर्वपापहराः पराः॥ ३६॥

उमोवाच

भगवञ्छ्रोतुमिच्छामि देवानामनुपूर्वतः। महाकालवनेरम्ये ये वसन्ति सुरेश्वराः

विनायका भैरवा देव्यो ये सन्ति पवनात्मजाः ।
रुद्रादित्यास्तथा चाऽन्ये तेषां नामानि मे वद ॥ ३८ ॥

ईश्वर उवाच

ऋद्धिदःसिद्धिदोनित्यंकामदोवैगणाधिपः । विघ्नहाच प्रमोदीच चतुर्थीव्रतकप्रियः
षडेतेवैसमाख्याताविघ्ननाशकराःपराः । उमाचण्डीश्वरीगौरीऋद्धिसिद्धिप्रदानृणाम्
वटयक्षिणी वीरभद्राइत्येताश्चाष्टमातरः । महामाया सतीख्याताकपालमातृकातथा
अम्बिका शीतला चैव एकानंशा च सिद्धिदा ॥ ४२ ॥
ब्रह्माणीपार्वतीचैवयोगिनी योगशालिनी । कौमारीभगवतीचैवषट्कृत्तिकास्तथैवच
चर्पटामातृकाःख्याताअष्टमातरएव च । सरस्वती तथा ख्याता महालक्ष्मीश्चवैस्मृता
योगिनीमातृका ख्याता श्चतुषष्टिस्ततः स्मृताः ।
कालिका च महाकाली चामुण्डा ब्रह्मचारिणी ॥ ४५ ॥
वैष्णवी च समाख्यातावाराहीविन्ध्यवासिनी ।
अम्बा अम्बालिका चैव चतुर्विंशतिकाः पराः ॥ ४६ ॥
हनूमान्ब्रह्मचारी च कुमारश्चमहाबलः । चत्वारो वै समाख्यातामयातेपवनात्मजाः
दण्डपाणिश्च विक्रान्तो महाभैरवसिताऽसिताः ।
वटुको बालको नन्दी षट्पञ्चाशतिकोऽपरः ॥ ४८ ॥
कालभैरवश्च विख्यातः क्षेत्रपालस्तथाष्टमः । अष्टैवभैरवाःख्याता महापापहराःपराः
कपर्दीत्र कपाली च कलानाथोवृषासनः । त्र्यम्बकः शूलपाणिश्चचीरवासादिगम्बरः
गिरीशः कामचारी च सर्वःसर्वांगभूषणः । रुद्राश्चैकादशप्रोक्ताः शत्रुपक्षविनाशनाः
अरुणः सूर्यो वेदाङ्गो भानुरिन्द्रोरविरंशुमान् ॥ ५१ ॥
सुवर्णरेताऽहःकर्तामित्रोविष्णुःसनातनः । इत्येतेद्वादशाऽऽदित्याःसर्वरोगहराःपराः
अगस्त्येश्वरमुख्यानांलिङ्गानांचतुराशिनाम् । हिमाचलसुते!नित्यंनामानिगदतःशृणु
अगस्त्येश्वर आख्यातो गुहेश्वरस्ततःपरम् ।
ढुण्ढेश्वरस्ततः प्रोक्तो डमरुकेश्वरश्च भामिनि! ॥ ५४ ॥

अनादिकल्पेश्वरः शम्भुः स्वर्णजालेश्वरःपरः। त्रिविष्टपेश्वरोदेवः कपालेश्वरसञ्ज्ञकः
कर्कोटकेश्वरः शम्भुः सिद्धेश्वरस्ततःपरम्। स्वर्गद्वारेश्वरोरुद्रो लोकपालेश्वरोऽपरः
कामेश्वरइतिख्यातःकुटुम्बेश्वरस्ततःपरम्। इन्द्रद्युम्नेश्वरःख्यातः ईशानेशस्ततःपरम्
अप्सरेश्वरइतिख्यातः कलकलेश्वर एवच। नागचण्डेश्वरो देवो दिवापापहरोऽपरः
प्रतिहारेश्वरश्चैव कुक्कुटेशस्ततः परम्। मेघनादेश्वरः पुण्यो महाकालेश्वरः परः॥

मुक्तेश्वरः समाख्यातः सोमेश्वरस्ततः परम्।
अनरकेश्वरो देवो जटेश्वरस्ततः परम्॥ ६०॥

रामेश्वरो महादेवश्च्यवनेशस्ततः परम्। अखण्डेशःसमाख्यातः पत्तनेशस्ततःस्मृतः
आनन्देशस्ततःप्रोक्तःकन्थडेशस्ततःपरम्। इन्द्रेश्वरइतिख्यातो मार्कण्डेशस्ततःपरम्
शिवेश्वर इतिप्रोक्तः कुसुमेशस्ततःपरम्। अक्रूरेश इतिख्यातः कुण्डेश्वरस्ततः परम्
लुम्पेश्वरःसमाख्यातोगङ्गेश्वरस्ततपरम्। शूलेश्वरेतिविख्यातःओङ्कारेशस्ततस्मृतः
कण्टकेशो महारुद्रः सिंहेश्वरस्ततःपरम्। रेवन्तेश्वरः परो देवो घण्टेश्वरपुरःसरः

प्रयागेश्वरो महादेवः सिद्धेश्वरस्ततः परम्।
मातंगेश्वरः परो देवः सौभाग्येशस्ततो वरः॥ ६८॥

रूपेश्वरेति विख्यातो ब्रह्मेश्वरस्ततः परम्। जलपेश्वरस्ततो देवः केदारेश्वर एव च
पिशाचेश्वरशम्भुश्च सङ्गमेशस्ततः परः। दुर्धर्षेशश्च विख्यातश्चण्डादित्येश्वरस्ततः

करभेश्वरः परः प्रोक्तो राजस्थलेश्वरः शिवः।
वडलेश्वरस्ततः प्रोक्तो ह्यरुणेशस्ततः स्मृतः॥ ६९॥

पुष्पदन्तेश्वरो देवो ह्यविमुक्तेश्वरस्ततः। हनुमन्तेश्वरो देवो विश्वेश्वरस्ततः परम्

स्वप्नेश्वर इति ख्यातः सिद्धेश्वरस्ततः परः।
नीलकण्ठेश्वरो देवः स्थावरेशस्ततः परम्॥ ७१॥

कामेश्वर इति प्रोक्तः प्रतिहारेश्वरस्ततः। पशुपतीश्वरः प्रोक्तो विश्वेश्वरस्ततः परः

स्वर्णजालेश्वरः प्रोक्तो मनःकामेश्वरस्ततः॥ ७२॥

दुर्वासेश्वरनामासौ नागचण्डेश्वरस्ततः। खर्परेशश्च विख्यातो ब्रह्मेश्वरस्ततः परम्

पातालेश्वर आख्यातो गुप्तेश्वरस्ततः परः । कपिलेश्वर इत्याख्यो योगयोगेश्वरःपरः

भीमेश्वरेति विख्यातो धनुःसहस्राभिधः परः ।
अग्नीश्वरः परः प्रोक्तो देवेश्वरस्ततः परः ॥ ७५ ॥

द्वादशार्कःसमाख्यातोदशाश्वमेधिकेश्वरः । गदाधरेश्वरःख्यातोवैजनाथेति शम्भुराट्

सोमनाथेश्वरः ख्यातो घुष्मेश्वरस्ततः परः ।
भीमशङ्कर इत्याख्यो घण्टेश्वरस्ततः परः ॥ ७७ ॥

ऊषरेश्वरसञ्ज्ञश्चचन्द्रादित्येश्वरः परः । केशवार्कःसमाख्यातः शक्तिभेदेश्वरः परः ॥

रामेश्वरः परो देवो वाल्मीकेश्वरशङ्करः ।
ज्वालेश्वरः शिवः प्रोक्तो ह्यभयेशस्ततः परः ॥ ७६ ॥

विघ्नहस्तेश्वरः प्रोक्तश्चंचलेशस्ततः परः ।
पुरुषोत्तमेति विख्यातो वीरेश्वरस्ततः परः ॥ ८० ॥

कर्णेश्वरश्च विख्यातः पृथुकेशस्ततःपरम् । आनन्देशश्च विख्यातःकोटेश्वरस्तथापरः
अविमुक्तेश्वरः प्रोक्तो हनुमत्केश्वरः परः । विमलेश्वरेतिविख्यातश्चन्द्रेश्वरस्ततःपरः
विन्दुकेशश्चविख्यातोवालुकेश्वरसञ्ज्ञकः । वृहस्पतीश्वरोदेवोह्यसङ्ख्यातेश्वरस्ततः

यानि कानि च तीर्थानि तानि लिङ्गानि सत्तम! ।
तिष्ठन्ति तत्र पूज्यनि तानि वन्द्यानि सर्वशः ॥ ८४ ॥

चत्वारो विदिताः सर्वे द्वारपाला महात्मभिः ।
पिङ्गलेश्वरेति च ख्यातः पूर्वद्वारे द्विजोत्तम! ॥ ८५ ॥

दक्षिणे चतथाद्वारेकायावरोहणेश्वरः । बिल्वकेश्वरेतिविख्यातःपश्चिमद्वारमाश्रितः

दर्दुरेश्वरस्ततः प्रोक्तो द्वारे चोत्तरसञ्ज्ञके ।
एतेचाऽन्ये च बहवोलिङ्गाख्यास्त्रिभुवनेश्वराः ॥ ८७ ॥

महाकालवने रम्ये समाख्याता हि पावनाः ।
षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च ॥ ८८ ॥

महाकालवनेऽप्यासलिङ्गसङ्ख्यानविद्यते । तथाऽपिचप्राधान्येनमयाऽत्रपरिकीर्तिताः

यस्य देवस्य यत्तीर्थं तन्नाम्ना परिकीर्तितम् ।
स्नात्वा दत्वाच तद्दानं तत्तीर्थस्य फलं लभेत् ॥ ९० ॥
तथा नवग्रहाः पुण्याः समाख्याताः पुराऽनघ! ।
तेषां नामानि पुण्यानि तीर्थानि च तथा शृणु ॥ ९१ ॥
नरादित्यइति ख्यातः सोमेश्वरस्ततः परः ।
मङ्गलेश्वरः समाख्यातो बुधेश्वरस्ततः परम् ९२ ॥
वृहस्पतीश्वरःप्रोक्तस्तथाशुक्रेश्वरःशिवः । स्थावरेश्वरोमहादेवःसमाख्यातोमुनीश्वरैः
राहुकेतू समाख्यातौतेषां तीर्थानि सत्तम । तत्तीर्थेषुनरः स्नात्वासर्वपापैःप्रमुच्यते
ग्रहा राज्यंप्रयच्छन्तिग्रहा राज्यंहरन्ति च । ग्रहैस्तुव्यापितंसर्वंत्रैलोक्यंसचराचरम्
ग्रहतीर्थे नरः स्नात्वा ग्रहाणामर्चनं चरेत् । नतस्य ग्रहपीडा वै बाधते हि कदाचन
एवं व्यास! समाख्याता मया देवाश्च तीर्थकाः ।
यात्रा पुण्यतरा श्रेष्ठा पवित्रा पापनाशिनी ॥ ९७
ग्रहपीडासु चोग्रासु दारिद्र्ये घोरसङ्कटे । तेषामुद्धरणार्थाय देवयात्रा प्रकीर्तिता ॥
क्षेत्रस्यान्तर्गृहीं नित्यं ये कुर्वन्ति नरोत्तमाः ।
न तेषां दुर्लभं किञ्चित्त्रिषु लोकेषु विद्यते ॥ ९९ ॥
अपुत्रो लभते पुत्रंनिर्धनोधनमाप्नुयात् । विद्यावाञ्जायते विप्रःक्षत्रियोविजयीभवेत्
अक्षया सन्ततिस्तस्य शिवलोके महीयते ॥ १०१ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-ऽवन्तीक्षेत्रमाहात्म्ये देवयात्रान्तर्गृहीसर्वतीर्थयात्राऽनुक्रमणिकादिकथनं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥

———

# द्व्यशीतितमोऽध्यायः

## अवन्तीतीर्थयात्रामाहात्म्यवर्णनम्

व्यास उवाच

भगवन्भवता सर्वं कथितं देवमूर्तिना । अवन्तातोर्थमाहात्म्यं पवित्रं वेदसम्मितम्

भूयस्तु श्रोतुमिच्छामि त्वत्तो ब्रह्मविदाम्वर! ।

महाकालवने रम्ये अवन्त्यां भुवि सत्तम! ।

तीर्थानि कति सङ्ख्यानि विद्यन्ते ह्यत्र सुव्रत! ॥ २ ॥

सनत्कुमार उवाच

श्रूयतां भो द्विजश्रेष्ठ! कथां पापहरां पराम् ॥ ३ ॥

उमामहेश्वरसम्वादं नारदस्य च धीमतः । नारदेन पुरा पृष्टं प्रश्नमेतद्द्विजोत्तम!

नारद उवाच

भगवञ्छ्रोतुमिच्छामि महाकालवने शुभे ।

तीर्थानि यानिवर्तन्ते तानि नो वद विस्तरात् ॥ ६ ॥

इति पृष्टस्तदा विप्र! नारदेन पुराऽनघ! । उवाच श्लक्ष्णया वाचा उमया सहितोहरः

श्रीमहादेव उवाच

शृणुष्व भो ऋषिश्रेष्ठमहाकालवनेशुभे । तीर्थानि यानितिष्ठन्तितानिवक्ष्यामिसुव्रत

पुष्कराद्यानि तीर्थानि यानि कानि महीतले ।

तानि सर्वाणि वर्तन्ते महाकालवनोत्तमे ॥ ८ ॥

असङ्ख्यातसहस्राणिकोटिकोटीनिसत्तम । रुद्रसरेनिमज्जन्तिकोटितीर्थंतथोच्यते

नीहारकणिकांवृष्टिं गिरौ वर्षन्ति किन्नराः । हेमन्ते चैव दृश्यन्ते तीर्थेपैशाचमोचने

न हि सङ्ख्यां विजानामि तीर्थानां भुवि सत्तम! ।

कियन्ति सन्ति तीर्थानि लिङ्गानि च तथैव च ॥ ११ ॥

तथाऽपि च प्राधान्येन कथयिष्यामि सत्तम! ।
सम्वत्सरस्य यावन्ति अहानि च द्विजोत्तम! ॥ १२ ॥
तावन्ति प्रापणीयानि प्रसिद्धानिपरन्तप । वत्सरेपरिपूर्णे च जायतेऽवन्तियात्रिका
विधिवत्कुरुते यस्तुसाक्षाच्छम्भुर्भवेच्चसः । मन्वन्तरसहस्रेषुकाशीवासेचयत्फलम्
तत्फलं जायतेऽवन्त्यां वैशाखेपञ्चभिर्दिनैः । अवन्तीयात्राकर्तव्याप्रयत्नेन मुमुक्षुणा
माधवेऽपि विशेषेण ह्यवन्तीस्नानमाचरेत् ।
यो हि वैशाखमासाद्य अवन्त्यां व्यास! मानवः ॥ १६ ॥
सम्वत्सरव्रती स्नातस्तीर्थेतीर्थे यथाविधि ।
दत्त्वा दानानि सर्वाणि समूलं ( सकलं ) फलमश्नुते ॥ १७ ॥
भुक्त्वा भोगान्सुविपुलाञ्छिवलोके महीयते ॥ १८ ॥
यत्र कुत्रापि यो नित्यं नरोनिश्चलमानसः ॥
शृणोत्येकमनाः पुण्यां पूजयित्वा च वाचकम् ।
सत्कृत्य विधिवद्वस्त्र वासोऽलङ्कारभूषणैः ॥ १९ ॥
अन्यैश्चविविधैर्भोगैः प्रदानैर्वत्सरेण च । न तस्यदुर्लभं किञ्चिद्विद्यतेभुविसत्तम ॥
एवं व्यास! पुराशम्भुर्नारदाय सुधीमते । उवाच परमाख्यानमवन्तीव्रतमुत्तमम् ॥
तेन प्रख्यापितं पुण्यं सर्वलोकेषुसत्तम । एतत्ते सर्वमाख्यातं मयासत्यवतीसुत ॥
अवन्तीतीर्थयात्रायाः कथाख्यानंसनातनम् । भूयःकिंश्रोतुमिच्छातेवर्ततेद्विजसत्तम
माहात्म्यमेतच्छिवभक्तिवर्द्धनं यशस्करं पुण्यविवर्द्धनं च ।
यः श्रावयेद्वा शृणुयाच्च भक्त्या कुलं समुद्धृत्य हरेः पदं व्रजेत् ॥ १९ ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे ऽवन्तीक्षेत्रमाहात्म्ये व्याससनत्कुमारसम्वादे ऽवन्तीक्षेत्रमाहात्म्यवर्णनं नामद्व्यशीतितमोऽध्यायः ॥ ८२ ॥

———

# त्र्यशीतितमोऽध्यायः

## अवन्तीमाहात्म्यवर्णनम्

व्यास उवाच

भूयस्तु श्रोतुमिच्छामि त्वत्तोब्रह्मविदांवर। अवन्त्याश्चपरंपुण्यं महिमानंश्रुतंमया

त्वया ब्रह्मविदा प्रोक्तं वत्सरव्रतपारणम्।

तीर्थस्यास्य सुविस्तारात्स्नातकानां द्विजोत्तम! ॥ २ ॥

अचिरेणतुकालेन तीर्थस्यफलमश्नुते। सिद्धोभूत्वा नरोयाति तद्वदस्वद्विजोत्तम॥

सनत्कुमार उवाच

गुह्याद्गुह्यतरंवत्स पृच्छसित्वंममानघ। तत्तेहंसम्प्रवक्ष्यामि शृणुष्वत्वं समाहितः

महाकालंततोगच्छेन्नियतोनियतात्मना। कोटितीर्थेनरस्स्नात्वा पुनर्जन्मनविद्यते

नास्तिवत्समहीपृष्ठेक्षिप्रायाःसदृशीनदी। यस्यानिरीक्षणान्मुक्तिःकिञ्चिरात्सेवनेनवै

माधवेमासियोदेवं पूजयेत्पुरुषोत्तमम्। मोचनेमुच्यतेनित्यं तर्पणादेकवासरात्॥

अवन्त्यामङ्कपाताख्यं ये पश्यन्ति जनार्दनम्।

न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥ ८ ॥

इतिव्यासवचस्सर्वेवदन्तिनियतात्मनः। वाराहमत्स्यकन्दाद्या लोमशश्चमहामुनिः

विधितथापितीर्थस्यशृणुपुण्यसमम्पुनः। योवैस्वल्पेनपुण्येनतीर्थस्यफलमिच्छति

तस्यसर्वस्यवक्ष्यामिश्शृणुष्वेदं तपोधन। सर्वतीर्थफलाकाङ्क्षी शुचिःप्रयतमानसः

अवगाहव्रतीयाति तीर्थानिचाष्टविंशतिः। ऊर्जेमाघेतथाषाढे वैशाखेचविशेषतः॥

यदाकद्रापुरीं प्राप्य कर्तव्यंतीर्थमज्जनम्। सर्वतीर्थफलं प्राप्य शिवलोकेमहीयते॥

सनत्कुमार उवाच

क्षिप्रातीरेहिवर्तन्तेपुराख्यातानिसूरिभिः। पुण्यानितार्थमुख्यानितानिमेगदतःश्शृणु

पापार्दितःशुचिर्भूत्वा विष्णुविष्णुरितिस्मरन्।

आदाय नियमं सर्वं स्नातकानाञ्च सत्तम! ॥ १५ ॥
स्नात्वा रुद्रसरे नित्यं कृत्वा श्राद्धादिकं तथा।
यथाशक्ति परां वत्स! गां दत्त्वा चैव काञ्चनीम् ॥ १६ ॥

तीर्थराजनमस्तुभ्यं निजतीर्थावगाहने । अनुज्ञांदेहिमेनित्यं करिष्यामितवार्चनम्

इति प्रार्थनामन्त्रः

ततः प्रयातितत्तीर्थं कर्कराजाभिधं सरः । तत्र स्नानादिकं कृत्वा घृतपात्रंप्रदापयेत्
नृसिंहाख्यंपरंतीर्थं तत्रस्नायाद्द्विजोत्तम! । कृष्णाजिनंततोदद्यादात्मकार्यविशुद्धये
सङ्गमो नीलगङ्गायाःक्षिप्रायाश्चैवसत्तम। तत्र स्नात्वाशुचिर्भूत्वाद्दृष्ट्वाचसङ्गमेश्वरम्

वाहनञ्च ततो देयं द्विजातिभ्यःस्वलङ्कृतम्।
भूषणानि च देयानि यानानि विविधानि च ॥ २१ ॥
ततः प्रायाद् व्रती सम्यक् तीर्थं पैशाच्यमोचनम्।
तत्र स्नात्वा च विधिवदाह्निकादि च कारयेत् ॥ २२ ॥

गांसवत्सां ततो दद्याद्वेदवेदाङ्गपारिणे। सीदत्कुटुम्बिने नित्यं द्विजाय मुनिसत्तम
महादानानिसर्वाणि तत्रदेयानिसत्तम। पिशाचेशं ततो दृष्ट्वा सर्वपापैः प्रमुच्यते॥

गन्धर्वतीर्थं गच्छेच्च नियमी व्रतकारकः।
तत्र स्नात्वा शुचिर्भूत्वा श्राद्धं कुर्यात्समाहितः ॥ २५ ॥

पष्टिजलपेश्वरंदेवं पूजयेद्विधिवद्द्विज । ब्राह्मणेभ्यस्ततोदद्याद्गेहदानादिकं परम ॥
दासीदासंन्ततोदेयं सर्वकायार्थसिद्धये। धनवान्पुत्रवाँल्लोके मृतो मोक्षमवाप्नुयात्
ततो गच्छेद्व्रतीविप्रकेदारं तीर्थमुत्तमम्। तत्रस्नात्वामहादानंब्राह्मणेभ्यस्समर्पयेत्
शुभंगोमिथुनं दत्त्वा विधिवत्तत्रकारयेत्। कम्बलाजिनवासांसि तत्रदेयानिसत्तम ॥
सर्वपापविशुद्धात्मा शिवलोके महीयते। चक्रतीर्थेनरःस्नात्वा चक्रपाणिसमर्चयेत्
शङ्खशस्त्रविमानानि तत्रदेयानि सत्तम। मुच्यते सर्वपापेभ्यो विष्णुलोके महीयते

सोमतीर्थे नरःस्नात्वा दृष्ट्वा सोमेश्वरं शिवम्।
निर्मलाङ्गोनरो भाति कुष्ठरोगो न बाधते ॥ ३२ ॥

इक्षुधेन्वादिकंदानं तत्रदेयं द्विजातये। देवप्रयागंगच्छेच्च स्नानार्थं द्विजसत्तम ॥३३
तत्र स्नात्वाशुचिर्भूत्वा देवंमाधवमर्चयेत्। गुडधेनुः प्रदातव्या विधिदृष्टेन कर्मणा
सर्वपापविशुद्धात्मा देवलोके महीयते। प्रयागे परमं व्यास वेणीतीर्थमनुत्तमम् ॥
तत्र स्नानश्चकर्त्तव्यं तिलामलकसंयुतम्। प्रयागेशमथाभ्यर्च्य सकलंफलमश्नुते ॥
तिलधेनुः प्रदातव्या विधिवद्द्विजपुङ्गवे। सर्वकामवरम्प्राप्य विष्णुलोके समोदते

ततो गच्छेद् व्रती भूयो योगतीर्थमनुत्तमम्।
तत्र स्नात्वा शुचिर्भूत्वा योगिनीश्वरमर्चयेत् ॥ ३८ ॥

जलधेनुं ततो दद्याद्दीर्घायुश्च सुखीभवेत्। कपिलाश्रमंपरंतीर्थंनरोगच्छेत्ततःपरम्

स्नानदानादिकं कृत्वा कपिलेश्वरमर्चयेत्।
मुच्यते सर्वपापेभ्यस्तपोलोके स गच्छति ॥ ४० ॥

घृतकुल्यापरंतीर्थं क्षिप्राकूलेच पश्चिमे। तत्र स्नात्वानरोनित्यं घृतधारेश्वरंशिवम्
पूजयेद्विधिवद्विप्र घृतधेनुं समर्पयेत्। प्राप्यपुण्यकृताँल्लोकान् सर्वपापैः प्रमुच्यते
मधुकुल्यांनरःस्नात्वा पूजयित्वा महेश्वरम्। मधुदानं प्रकुर्वीत इक्षुधेनुं ततः परम्
ऊषरं परमं तीर्थं सर्वतीर्थफलप्रदम्। तत्र स्नात्वा नरः पश्येन्महेशमूषरेश्वरम् ॥

फलमूलादिकं देयं प्राप्यते मोक्ष उत्तमः।
नरादित्यः स्थितो यत्र तत्र तीर्थं परं स्मृतम् ॥ ४५ ॥

तत्र स्नात्वा नरः पश्येत् क्षेत्रादित्येश्वरंपरम्। रथदानंततोदत्वा नरलोकेसगच्छति
केशवार्कोपरोदेवस्तस्यतीर्थंपरंस्मृतम्। तत्र स्नानं विधेयञ्च केशवार्कसमर्चनम्
अन्नं बहुविधंदेयं तत्र तीर्थेद्विजोत्तम। कालभैरव आख्यातस्तत्रतीर्थे महाव्रती
तत्रस्नात्वानरोनित्यं द्रष्ट्वा भैरवमन्तकम्। दद्यात्पूर्णंमहादानं नगच्छेद्यमशासनम् ॥

द्वादशार्केति विख्यातं क्षिप्राकूले च दक्षिणे।
तीर्थञ्च सर्वपापघ्नं सर्वकामवरप्रदम् ॥ ५० ॥

तत्र स्नात्वाशुचिर्भूत्वा द्वादशार्कसमर्चयेत्। अजादानञ्चदेयंवैवासोऽलङ्कारसंयुतम्
आरोग्यं सर्वदादेहे तस्यसम्पत्पदेपदे। तत्रापि ऋषयोदेवाः सन्ध्योपासनतत्पराः ॥

उपासाञ्चक्रिरेतस्य प्रातःकालेसदैवहि। तत्रतीर्थे नरःस्नात्वाशुचिर्भूत्वासमाहितः
एकानंशेति विख्याता भवानी पापनाशिनी। तामर्चयेद्द्विजश्रेष्ठदशाश्वमेधपंशिवम्
तत्र देयं महादानं श्वेताश्वं समलङ्कृतम्। विप्रायवेदविदुषे विधिवद्दृषिसत्तम!॥

सर्वपापविशुद्धात्मा स्वर्गलोके महीयते।
योऽसावङ्गारको देवो विख्यातो वै धरात्मजः॥ ५६॥

तस्य तीर्थं परं व्यास सर्वतीर्थफलप्रदम्। तत्र तीर्थेनरः स्नात्वा मङ्गलेश्वरमर्चयेत्

गुडान्नं वृषभं रक्तं सवासः समलङ्कृतम्।
स्वलङ्कृतेभ्यो विप्रेभ्यो यो ददाति समाहितः॥ ५८॥

तस्यहस्तगतालक्ष्मीः पुत्रदारादिसम्पदः। खगङ्गासङ्गमंतीर्थंगङ्गोद्भेदसमन्वितम्
तत्र तीर्थेनरःस्नात्वा दृष्ट्वागङ्गेश्वरंशिवम्। मुच्यते सर्वपापेभ्यो विष्णुलोकेमहीयते
तिलपात्रं प्रदातव्यं विधिवत्काञ्चनान्वितम्। सर्वसौख्यकरंदानं सर्वपापहरं परम्
ऋणमोचनकं तीर्थं सर्वपापहरं स्मृतम्। तत्र तीर्थे नरः स्नात्वा ऋणतेश्वरमर्चयेत्
घृतश्राद्धं प्रकुर्वीत दत्त्वास्वर्णञ्च शक्तितः। ऋणत्रयविनिर्मुक्तः स्वर्गलोके महीयते

ततो गच्छेन्नरो नित्यं शक्तिभेदमकल्मषम्।
तीर्थानाञ्चैव सर्वेषामुत्तमं पापनाशनम्॥ ६४॥

तत्र स्नात्वानरोव्यास शुचिः प्रयतमानसः। मातृकाणाञ्चसर्वेषांदर्शनंकारयेद्बुधः
कौमारीकार्त्तिकीमाता चर्पटावटमातरः। तथा भगवतीं देवीं स्कन्दञ्चैवसमर्चयेत्

तत्र श्राद्धानि देयानि विधिवद्द्विजसत्तम!।
दत्त्वा शय्यादिकं दानं कांस्यधेनुं तथेतरद्॥ ६७॥

मातुर्ऋणंसमुत्तीर्य सायुज्यं लभतेनरः। यत्तत्तीर्थवरंश्रेष्ठं पापमोचनसञ्ज्ञकम्॥६८
तत्र स्नात्वानरैर्देयं छायादानञ्च सत्तम। सर्वपापविशुद्धात्मा जायते भुवि मानवः॥
ततःपरंपरंव्यास तीर्थंत्रैलोक्यविश्रुतम्। प्रेतशिलेतिविख्यातं प्रेतमोक्षकरम्परम्॥
तत्र स्नात्वानरोदद्याच्छ्राद्धंद्विजसमाहितः। तिलोदकप्रदानेन पितरोयान्तिसद्गतिम्
घटदानंततोदेयं छत्रोपानत्समन्वितम्। महिषीञ्चततोदद्याद्वासांसि विविधानिच

अन्नदानंततोदेयं रसेनलवणान्वितम् । यमेश्वरं समभ्यर्च्य निरयेनाधिगच्छति॥
पितरस्तस्य सन्तुष्टा यान्ति ब्रह्म सनातनम् ।
पितृदोषा न बाधन्ते तेषाञ्च द्विजसत्तम! ॥ ७४ ॥
तीर्थानामुत्तमं तीर्थं भुवित्रैलोक्यवन्दितम् । नवनदीसङ्गमोयत्र तत्र तिष्ठति पार्वती
तत्र स्नात्वा नरो नित्यं शुचिर्भूत्वा समाहितः ।
पूजयेद्भगवतीं भद्रां पार्वतीं विधिवत्ततः ॥ ७६ ॥
महादानानिकुर्याच्च हस्तिपान्नधरान्तिलान् । सुरभींदुग्धसहितांदद्याद्द्विजवरायच
सर्वपापविशुद्धात्मा साक्षाच्छम्भुर्भवेन्नरः । मन्दाकिनींततोगच्छेदात्मकार्यविशुद्धये
तत्र स्नात्वा शुचिर्भूत्वा पूजयेद्यः सदाशिवम् ।
दत्वा शकटमन्नाद्यं तिलद्रोणं प्रदापयेत् ॥ ७६ ॥
सर्वपापविशुद्धात्मा धनाधिपसमोभवेत् । ततोगच्छेद्व्रती चिप्र तीर्थंपैतामहंपरम्
तत्र स्नात्वा शुचिर्भूत्वा विधिवत्स्नानमाचरेत् ।
दत्वा दानानि सर्वाणि त्रीणि तत्र विशेषतः ॥ ८१ ॥
यथाशक्तिप्रदेयानिपृथ्वीगावःसुवर्णकम्। विप्रांश्चभोजयेन्नित्यंविधिवद्भूरिदक्षिणैः
ततस्तुपुनरागम्य रुद्रसरमनुत्तमम् । तस्मिन्स्नात्वाचनत्वाच दृष्ट्वादेवंमहेश्वरम्॥
पूजयित्वायथान्यायं यात्रेश्वरमनुत्तमम् । तुलसीबिल्वपत्रैश्च पुष्पैर्विविधवासकैः
धूपदीपादिनैवेद्यैर्मुखवासोत्तरच्छदैः । पूजयित्वा महादेवं यात्रेश्वरमुमापतिम् ॥ ८५
प्रार्थयेद् देवदेवेशं व्रतसम्पूर्णहेतवे । यात्रेश्वर!नमस्तुभ्यमुमानाथजगत्पते! ॥ ८६ ॥
त्वत्प्रसादात्कृतां यात्रां सफलां कुरु मेप्रभो! ॥ ८७ ॥

सनत्कुमार उवाच

एवं यः कुरुतेयात्रामवन्त्याश्चद्विजोत्तम । अवन्तीवासजं पुण्यं प्राप्यतेनात्रसंशयः
भुक्त्वा च विपुलान्भोगान् धनदारादिसम्पदम् ।
सर्वपापविशुद्धात्मा मृतः शिवपुरं व्रजेत् ॥ ८६ ॥
ये शृण्वन्ति कथां पुण्यां पवित्रां पापहारिणीम् ।

न तेषां दुर्लभं किञ्चिदिह लोके परत्र च ॥ ६० ॥
माहात्म्यमेतच्छिवभक्तिवर्द्धनं यशस्करं पुण्यविवर्धनञ्च ।
यः श्रावयेद्वा श्रृणुयाच्चभक्त्या कुलं समुद्धृत्य हरेः पदं व्रजेत् ॥ ६० ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-तीर्थमहिमनामत्र्यशीतितमोऽध्यायः ॥ ८३ ॥ *

इत्यवन्तीक्षेत्रमाहात्म्यंसमाप्तम्

——:*:——

# अथचतुरशीतिलिङ्गमाहात्म्यारम्भः

## प्रथमोऽध्यायः

### अगस्त्येश्वरमाहात्म्यवर्णनम्

उमोवाच

पृथिव्यां यानि तीर्थानि पुण्याश्च सरितस्तथा ।
कथ्यतां तानि यत्नेन श्राद्धं येषु प्रदीयते ॥ १ ॥

ईश्वर उवाच

अस्ति लोकेषु विख्याता गङ्गा त्रिपथगामिनी ।
सेविता देवगन्धर्वैर्मुनिभिश्च निषेविता ॥ २ ॥
तपनस्य सुता देवी यमुना लोकपावनी । पितृणां वल्लभा देवि महापातकहारिणी

---

* एषोऽन्तिमोऽध्यायो मोहमयीस्थवेङ्कटेश्वरप्रकाशितपुस्तके नास्ति लक्ष्मणपुर (लखनऊ) प्रकाशित पुस्तकादुद्धृतोऽयमिति ।

चन्द्रभागा वितस्ता च नर्मदाऽमरकण्टके । कुरुक्षेत्रं गया देवि प्रभासं नैमिषं तथा
केदारं पुष्करं चैव तथा कायावरोहणम् । तथा पुण्यतमं देवि महाकालवनं शुभम्
यत्रास्ते श्रीमहाकालः पापेन्धनहुताशनः । क्षेत्रं योजनपर्यंतं ब्रह्महत्याविनाशनम्
भुक्तिदं मुक्तिदं क्षेत्रं कलिकल्मषनाशनम् । प्रलयेऽप्यक्षयं देवि दुष्प्राप्यं त्रिदशैरपि

उमोवाच

प्रभावः कथ्यतां देव! क्षेत्रस्यास्य महेश्वर ।
यानि तीर्थानि वन्द्यानि यानि लिङ्गानि सन्ति वै ॥ ८ ॥
तान्यहं श्रोतुमिच्छामि परं कौतूहलं हि मे ॥ ९ ॥

ईश्वर उवाच

शृणु देवि प्रयत्नेन प्रभावं पापनाशनम् । क्षेत्रमाद्यं महादेवि ममातीव प्रियं सदा
यत्रास्ति च महापुण्यासर्वपापहरा परा । तथा गन्धवती पुण्या दिव्यानवनदीप्रिया

नीलगङ्गा चतुर्थी तु श्रेष्ठा नद्यः प्रकीर्तिताः ।
आसां तु सङ्गमे स्नात्वा श्राद्धं यः कुरुते नरः ॥ १२ ॥

गङ्गायास्त्रिगुणं देवि! चतुर्वर्गफलप्रदम् । क्षेत्रं योजनपर्यन्तमवन्त्या विद्धि सुव्रते

सिद्धलिङ्गानि तिष्ठन्ति भुक्तिमुक्तिकराणि च ।
ईश्वराश्चतुराशीतिस्तथाष्टौ सन्ति भैरवाः॥ १४ ॥

एकादश तथा रुद्रा आदित्या द्वादशस्मृताः। षड्वैविनायकाश्चात्र चतुर्विंशतिमातरः
यदाहं गतवांस्तत्र महाकालवने शुभे । ब्रह्मविष्ण्वादयः सर्वे तत्राजग्मुर्मुदान्विताः
एभिर्व्याप्तं क्षेत्रमिदं देवियोजनमायतम् । दशस्थानगतो विष्णुःसर्वपापप्रणाशनः
एतन्नामानि योऽधीतेप्रभाते भक्तितःपुमान् । विमुक्तःसर्वपापैस्तुरुद्रलोकंसगच्छति

उमोवाच

चतुराशीतिलिङ्गानि त्वयोक्तानीह यानि तु । तानिविस्तरतोब्रूहिसर्वपापहराणितु

हर उवाच

शृणु देवि! प्रवक्ष्यामि तेषां नामानि यानि च ।

ख्यातं पृथिव्यां प्रथममगस्त्येश्वरमुत्तमम् । यस्य दर्शनमात्रेण कृतकृत्योनरो भवेत्

उमोवाच

अगस्त्येश्वरनामेह कथं लब्धमनेन वै । कस्मिन्स्थाने कथं जातंविस्तराद्वक्तुमर्हसि

हर उवाच

शृणु देवि! महाभागे कथामस्य पुरातनीम् । सर्वपापप्रशमनीं समीहितफलप्रदाम्

पुरासुरैर्जिता देवानिरुत्साहाश्च ते ततः । भागाश्चैषांहृताःसर्वे निराशाःपितरःकृताः

भ्रष्टैश्वर्यास्तदा देवि!चेरुर्देवा महीतले ॥ २३ ॥

ततः कदाचित्ते दीना दीप्तमादित्यवर्चसम् । ददृशुस्तेजसा युक्तमगस्त्यंविपुलव्रतम्

अभिवाद्य ततो देवा दृष्ट्वा तं तेजसावृतम् । इदमूचुर्महात्मानमगस्त्यंलोकविश्रुतम्

दानवैर्निर्जितायुद्धेसर्वेस्वर्गाच्चपातिताः । ततस्त्वं नोभयात्तीव्रात्त्रायस्वमुनिपुङ्गव!

इत्युक्तः स तदा देवैरगस्त्यः कुपितोऽभवत ।

प्रजज्वाल च तेजस्वी कालाग्निरिव सङ्क्षये ॥ २७ ॥

तदा दीप्तांशुजालेन निर्दग्धा दानवास्तथा । अन्तरिक्षान्महादेवि पतिताश्च सहस्रशः

दह्यमानास्ततो दैत्यास्तस्यागस्त्यस्य तेजसा ।

शेषेश्च दानवाः सर्वे पातालं वव्रजुर्भयात ॥ २९ ॥

ततोऽगस्त्यो महात्मा वै तान्हत्वा शोकमूर्छितः ।

बभूवातिशयं चासौ चिन्तयोद्विग्नमानसः ॥ ३० ॥

कृतं घोरं महत्पापं हता यद्दानवा मया । अहिंसा परमो धर्मो मनुना कथ्यते यतः

किं करोमि क्व गच्छामि कथं शुध्येय चाप्यहम ॥ ३१ ॥

एवं चिन्तयतस्तस्य समागच्छत्पितामहः ।

प्रोवाच स मुनिं तत्र कस्मात्त्वं शोकविह्वलः ॥ ३२ ॥

लक्ष्यसे मुनिशार्दूलकारणंकथ्यतांत्वरम् । सब्रह्माणंनमस्कृत्य कथयामासपृच्छतः

देवदेव जगन्नाथ दाहोऽन्तर्मानसं मम । ब्रह्महत्या समायाता यन्मया दानवा हताः

ममोपायं समाचक्ष्व प्रसादात्सुरसत्तम । बहुकालार्जितं देव गतं मे संक्षयं तपः

प्रोवाचेदं सुरश्रेष्ठः शृणु त्वं यत्नतः परम् । उपायं सर्वपापस्य क्षयो येनभवेद्ध्रुवम्
महाकालवने दिव्ये यक्षगन्धर्वसेविते । उत्तरे वटयक्षिण्या यत्तल्लिङ्गमनुत्तमम्॥
पिशाचस्यापि तीर्थस्य भागे दक्षिणतः स्थितम् ।
तं समाराध्यतः सर्वं पापं नाशमवाप्नुयात् ॥ ३८ ॥
आराधय शुभं लिङ्गं सर्वपापप्रणाशनम् । बाढं प्रोवाच धर्मात्मा महाकालवनंययौ
तस्मिन्स लिङ्गे देवेशि समाराधनतत्परः । बभूवाहर्निशं भक्त्या तद्ध्यानैकरतोमुनिः
अहं तुष्टस्तदा देवि! मुनेस्तस्य महात्मनः ॥ ४१ ॥
प्रोक्तं मया महाभाग मुने शृणु समाहितः । वरं वरय विप्रेन्द्र! यत्ते मनसि वर्त्तते ॥
तुष्टोऽहमनया भक्त्या तपसा दुष्करेण तु ।
लिङ्गस्यास्य प्रभावेण जातस्त्वं निर्मलोऽधुना ॥ ४३ ॥
प्रणष्टा ब्रह्महत्या ते दानवोत्था मुनीश्वर! । मदीयं वचनं श्रुत्वा तेनोक्तं वरवर्णिनि
यदि देव! प्रसन्नस्त्वं शरणागतवत्सलः । त्वदङ्घ्रियुगले भूयान्मम भक्तिर्महेश्वर॥
तपस्यथ तथा धर्मे न मे विघ्नोभवेदिति । तस्य तद्वचनं श्रुत्वाकुम्भयोनेर्महात्मनः
मया प्रोक्तं विशालाक्षि! मुने! एवं भविष्यति ॥ ४६ ॥
यस्त्वया पूजितो देवो ब्रह्महत्याविनाशनः ।
त्वन्नाम्ना त्रिषु लोकेषु सोऽयं ख्यातो भविष्यति ॥ ४७ ॥
अगस्त्येश्वरदेवोऽपि विख्यातो भुवनत्रये । एवमुक्तोमया देविसविप्रस्तत्र संस्थितः
कृपया तस्य लिङ्गस्य पञ्चमुद्राविभूषितः ॥ ४८ ॥
ये नरास्तन्महालिङ्गं निरीक्षिष्यन्ति भक्तितः ।
सर्वपापविनिर्मुक्ताः सर्वकामैरलङ्कृताः ॥ ४९ ॥
भविष्यन्ति महात्मानः पुत्रैश्वर्यसमन्विताः ।
अन्तकाले च मां यान्ति विमानैः सर्वकामदैः ॥ ५० ॥
स्तुतागन्धर्वमुख्यैश्च रुद्रलोके च शाश्वते । येऽर्चयन्तिसदादेवमगस्त्येश्वरसञ्ज्ञकम्
कृतपुण्यानरामर्त्यास्तेयान्ति परमं पदम् । संस्मृतेदेवदेवेशेनराणांकोटिजन्मजम्

अशुभं क्षयमाप्नोति कस्तं न प्रणमेच्छिवम् ।
यः प्रणम्य नरो भक्त्या देवं तं च निषेवते ॥ ५३ ॥
मुच्यते ब्रह्महत्यादिपातकैर्नरकप्रदैः ॥ ५४ ॥
राजसूयशतेनैव यत्पुण्यं च भविष्यति । तत्पुण्यमधिकं देवि दर्शनाच्च भविष्यति
किं तीर्थैर्विविधैः स्नानैः किं दानैर्विविधैः कृतैः ।
ते प्राप्स्यन्ति फलं सर्वे मत्प्रसादान्न संशयः ॥ ५६ ॥
अष्टम्यांचचतुर्दश्यांदिनेसोमस्यशक्तितः । यःकरिष्यतिलिङ्गस्यपूजांभक्तिसमन्वितः
कुलानां तारयत्येव मातृकं पितृकं शतम् ॥ ५७ ॥
ये च पश्यन्ति पुरुषा भावहीनाः प्रसङ्गतः । नते पश्यन्ति संसारे नरकं वै कदाचन
एतत्ते कथितं देवि लिङ्गमाहात्म्यमुत्तमम् । प्रथमं कथितं लोके द्वितीयं शृणुयत्नतः

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे-चतुरशीतिलिङ्गमाहात्म्येऽगस्त्येश्वरमाहात्म्यवर्णनंनाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः

### गुहेश्वरलिङ्गमाहात्म्यवर्णनम्

श्रीरुद्र उवाच

शृणु गुहेश्वरं लिङ्गं द्वितीयं पापनाशनम् । यस्य दर्शनमात्रेण जायतेसिद्धिरुत्तमा
पुरा रथन्तरे कल्पे देवदारुवने शुभे । ऋषिर्मङ्कणकोनाम वेदवेदाङ्गपारगः ।
योगाभ्यासरतो नित्यं शान्तिदान्तिसमास्थितिः ॥ २ ॥
सिद्धिकामस्तपस्तेपे कथं सिद्धो भवाम्यहम् ।
रक्तमयविकारोऽयं कथं यास्यति सङ्क्षयम् ॥ ३ ॥
इति सञ्चिन्त्य हृदये प्रारब्धं तप उत्तमम् । बहून्यब्दसहस्राणि तस्यातीतानिपार्वति

कस्मिंश्चिदथ काले तु विद्धस्य पर्वतात्मजे। कराच्छाकरसोजातःकुशाग्रेणतदैवहि
स च दृष्ट्वातदाश्चर्यं विस्मयं परमं गतः । मेनेसिद्धिं परां प्राप्तांसगर्वोवाक्यमब्रवीत्

अहो तपःप्रभावोऽयं प्राप्ता सिद्धिर्मयाद्य वै।
मत्तुल्यो नास्ति वै विप्रो येन सिद्धिः समागता ॥ ७ ॥

शरीरं कुत्सितं चेदंमलमूत्रेण संयुतम् । मज्जस्नायुवसापृक्तमांसशोणितपूरितम्

हर्षेण महता युक्तः स ननर्त्त द्विजस्तथा ॥ ८ ॥
एतस्मिन्नृत्यति विप्रे जगत्स्थावरजङ्गमम्।
अनृत्यद्रागसंयुक्तं प्रभावात्तस्य वै मुनेः ॥ ९॥
न स्वाध्यायो वषट्कारः कर्मकाण्डो न च क्वचित्॥ १० ॥

एतस्मिन्नन्तरे देवा ब्रह्मविष्णुपुरःसराः । मामूचुर्विस्मिताः सर्वे नाथ नृत्यंतदाकुरु
ऋषौ मङ्कणके देव नृत्यति नृत्यति सर्वतः। सदेवासुरमानुष्यं सर्वलोकत्रयंविभो

चलिताः पर्वताः स्थानात्क्षुभिता मेघपङ्क्तयः।
शिखराणि विशीर्यन्ते धरणी पीडिता भृशम्॥ १३॥
स्रोतोमात्रा महानद्यो ग्रहा उन्मार्गतः स्थिताः ॥ १४ ॥
त्रैलोक्यं व्याकुलीभूतं यावन्नायाति सङ्क्षयम् ।
तावन्निवारयस्वैनं नान्यः शक्तो विना त्वया ॥ १५ ॥

तेषांतद्वचनंश्रुत्वा त्रिदशानां यशस्विनि । प्रतिज्ञातंमयात्यर्थंगत्वा तस्यसमीपतः

द्विजरूपं समास्थाय मया पृष्टो द्विजोत्तमः ।
किमर्थं नृत्यसि ब्रह्मन्कस्मात्ते हर्ष आगतः॥ १७ ॥

विरुद्धमृषिधर्माणां कामरागेण नर्त्तनम्। गीतं च नर्त्तनंचैव युवतीजनवल्लभम्॥
ब्राह्मणस्य तपोभ्रंशः सदाचारस्यसत्तम। इति मत्वा द्विजश्रेष्ठकिमर्थंनृत्यसेभृशम्

ऋषिरुवाच

किं न पश्यसि भो ब्रह्मन्कराच्छाकरसं च्युतम्।
अत एव हि मे नृत्यं सिद्धोऽहं नात्र संशयः ॥ २० ॥

तस्य तद्वचनं श्रुत्वाहासोऽतीवमयाकृतः ।अङ्गुष्ठताडितःस्वीयोऽङ्गुल्यग्रेणचपार्वती

ततो विनिर्गतं भस्म तत्क्षणाद्धिमपाण्डुरम् ।

हासेनोक्तो विशालाक्षि! सगर्वो ब्राह्मणो मया ॥ २२ ॥

पश्य मेऽङ्गुष्ठतोब्रह्मन्भूरि भस्मविनिर्गतम् । न नृत्येऽहं न मे हर्षस्तथापिमुनिसत्तम

तद्दृष्ट्वा महदाश्चर्यं लज्जितो द्विजसत्तमः । धैर्यञ्च तादृशं दृष्ट्वा विस्मयं परमंगतः ॥

अब्रवीत्प्राञ्जलिर्भूत्वा विस्मितेनान्तरात्मना ।

नान्यं देवमहं मन्ये त्वां मुक्त्वा वृषभध्वजम् ॥ २५ ॥

नान्यस्य विद्यते शक्तिरीदृशी भुवनत्रये । तस्मात्क्षमस्वदेवेशमयाज्ञानादनुष्ठितम्

तपःक्षयकरं कर्म विरुद्धं तर्त्तनं सताम् । बहुकालार्जितं पुण्यं तपसा दुष्करेण तु ॥

तद्गतं सहसा देव! मदीयं नर्त्तनेन तु ॥ २७ ॥

तस्य तद्वचनं श्रुत्वा मयोक्तो द्विजसत्तमः । वरं वरय भद्रं ते तुष्टोऽहं द्विजसत्तम

ज्ञानेनानेन विप्रेन्द्र!कं ते कामं करोम्यहम् ॥ २६ ॥

ऋषिरुवाच

यदिदेवप्रसन्नस्त्वंशरणागतवत्सल । यथा न स्यात्तपोहानिस्तथानीतिर्विधीयताम्

मया प्रोक्तं प्रसन्नेन तस्य विप्रस्य पार्वति! ।

तपस्ते वर्द्धतां विप्र! महाकालवनं व्रज ॥ ३१ ॥

तत्रास्ते सर्वदा पुण्या सप्तकल्पोद्भवागुहा । पिशाचेश्वरदेवस्य उत्तरेणव्यवस्थिता

तत्र द्रक्ष्यसि यल्लिङ्गं सप्तकल्पोद्भवंशुभम् । तस्य दर्शनमात्रेण तपस्ते वृद्धिमेष्यति

कामक्रोधोद्भवंपापंलोभमोहसमन्वितम् । ईर्ष्यामत्सरजंचैवनाशं यातिचकिल्बिषम्

मदीयंवचनं श्रुत्वा स विप्रो वेदपारगः । श्रुत्वा च नियमं देवि मदुक्तं स ततोद्विजः

निस्सृतो नियतो भूत्वा नमस्कृत्य पुनः पुनः ।

आजगाम गुहा यत्र महाकालवनोत्तमे ॥ ३६ ॥

ददर्श तत्र तल्लिङ्गं तपसो वर्द्धनं परम् । द्वादशादित्यसङ्काशो जातो वै लिङ्गदर्शनात्

एतस्मिन्नन्तरे देवि देवैरुक्तं नभस्तले । गोप्यं लिङ्गं गुहोत्थं तु दृष्टं मङ्कणकेन तु

सिद्धिः प्राप्ता द्विजेनैव दर्शनेन सुदुर्लभा। तस्माद्गुहेश्वरो देवि भविष्यति महीतले
भक्त्या परमयोपेता ये द्रक्ष्यन्ति गुहेश्वरम्।
न तेषां जायते विघ्नो धर्मस्य तपसस्तथा ॥ ४० ॥
अष्टम्यांवाचतुर्दश्यांदर्शनंयः करिष्यति। ब्रह्मलोकं गमिष्यन्ति पितरस्तस्यदेहिनः
अत्रागत्य प्रयत्नेन दर्शनं यः करिष्यति। उद्धरिष्यति मात्मानं पुरुषानेकविंशतिम्
कृत्वा पापसहस्राणि दर्शनं यः करिष्यति।
स याति परमं स्थानं यत्र देवो महेश्वरः ॥ ४३ ॥
ब्रह्महत्या सुरापानंस्तेयंगुर्वङ्गनागमः। दर्शनात्तस्य लिङ्गस्यसर्वंयास्यतिसङ्क्षयम्
यत्किञ्चिदशुभं कर्म जन्मकोटिशतार्जितम्।
क्षयं यास्यति तत्सर्वं स्पर्शमात्रेण नान्यथा ॥ ४५ ॥
महापातकयुक्ता हि देहिनो ये महीतले। तेऽपि लिङ्गंसमासाद्य मुच्यन्तेसर्वपातकैः
इत्युक्त्वा स द्विजो देवि! दिव्यो मङ्कणको मुनिः।
कृत्वाश्रमपदं पुण्यं तत्रैव तपसि स्थितः ॥ ४७ ॥
एष वै कथितो देवि! प्रभावः पापनाशनः। श्रवणात्कीर्त्तनाद्वापिसर्वपापैःप्रमुच्यते
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये गुहेश्वरमाहात्म्यवर्णनं नाम
द्वितीयोऽध्यायः ॥ २ ॥

---

# तृतीयोऽध्यायः

## ढुण्ढेश्वरमाहात्म्यवर्णनम्

श्रीरुद्र उवाच

ढुण्ढेश्वरं तृतीयं तु सुखस्वर्गफलप्रदम् । सर्वपापहरं लिङ्गं नृणां दुष्कृतनाशनम्
ढुण्ढश्चासीत्पुरा देवि कैलासेगणनायकः । स च कामीदुराचारोव्यसनोपहतेन्द्रियः
गतोऽसौ शक्रलोकं तु कौतुकार्थं यदृच्छया ।
यत्र नृत्यति सा रम्भा शक्रस्याग्रे विवृण्वती ॥ ३ ॥
भावान्बहुविधान्रम्यान्दृष्टिहस्तादिकाञ्छुभान् ।
सूचीविद्धादिकरणान्पताकादिकहस्तकान् ॥
नृत्यं हस्तादिसंयुक्तं लयतालानुगं तथा ॥ ४ ॥
शक्रोऽपि त्रिदशैः सार्द्धं तन्मुखासक्तलोचनः । बभूव हृष्टचेतावै हृषिताङ्गरुहाननः
एतस्मिन्नन्तरे देवि! ढुण्ढस्तल्ललितेन तु । कामरागवशेनैव भाव्यर्थेन च मोहितः
तेन रङ्गरता रम्भा पुष्पगुच्छेन ताडिता । स शप्तोवासवेनैव दृष्ट्वाऽन्यायं गणस्य तु
पत त्वं मानुषंलोकं रङ्गभङ्गस्त्वया कृतः । इति शप्तो गणो देवि शक्रेणामिततेजसा
पतितो मानुषे लोके विसञ्ज्ञो विह्वलेन्द्रियः ।
कादिग्भूतो हतोत्साहो विललाप पुनः पुनः ॥ ६ ॥
अहोऽन्यायफलं प्राप्तंमयामोहादनुष्ठितम् । तस्मान्नीतिर्विधातव्या पुरुषेणविजानता
न्यायमार्गं समाश्रित्य येन सिद्धिर्भवेन्मम ॥ ११ ॥
इत्युक्त्वा स तपस्तेपे महेन्द्रे पर्वतोत्तमे । श्रीशैले मलये विन्ध्ये पारियात्रेयमालये
नो सिद्धोऽसौ यदा देवि! तदा गङ्गामहत्तटम् ।
यमुनां चन्द्रभागां च वितस्तां नर्मदां नदीम् ॥ १२ ॥
गोदावरीं भीमरथीं कौशिकीं शारदां शिवाम् ।

चर्मण्वतीं समासाद्य स्नात्वा त्यक्तक्रियोऽभवत् ॥ १४ ॥

तीर्थं व्यर्थं तपो व्यर्थं तीर्थयात्राफलं यतः । न प्राप्तश्च मयाभीष्टमद्दता कर्मभूमिषु

एतस्मिन्नन्तरे देवि वागुवाचाशरीरिणी । आश्वासयन्ती गणपं महाकालायने व्रज

प्रयागाद्यानि तीर्थानि पृथिव्यां यानि सन्ति वै ।

सदा सिद्धिकरं तेषां महाकालं विशिष्यते ॥ १७ ॥

तत्रास्ते सुमहापुण्यं लिङ्गं सर्वार्थसाधकम् ।

पिशाचेश्वरसान्निध्ये तमाराधय सत्वरम् ॥ १८ ॥

प्रसादात्तस्य लिङ्गस्य पुनर्यास्यसि शङ्करम् ।

लोकं तेजस्विनां गम्यं दुर्लभं पापिनां सदा ॥ १६ ॥

इति श्रुत्वा ततो वाणीमाकाशस्थां गणस्तदा ।

आजगाम मुदा युक्तो महाकालवनोत्तमे ॥ २० ॥

ददर्श तत्र तल्लिङ्गं सर्वसम्पत्करं शुभम् । पूजयामास देवेशं भक्त्या परमया युतः

लिङ्गमध्यात्ततो वाणी निःसृता पर्वतात्मजे! ।

अहो तुष्टोऽस्मि ते वत्स! किंकामं प्रददाम्यहम् ॥ २२ ॥

ढुण्ढ उवाच

यदि तुष्टोऽसि देवेश! शरणागतवत्सल । त्वत्पादपङ्कजे भूयाद्भक्तिर्मेऽविचला सदा

वरमेनं प्रयच्छाऽऽशु यदि तुष्टो महेश्वरः ॥ २४ ॥

ये च त्वां मानवा देव पश्यन्तिपरमेश्वर । पापात्सद्योविनिर्मुक्तास्ते भवन्तुमहीतले

ढुण्ढस्य भाषितं श्रुत्वा लिङ्गेनोक्तं यशस्विनि! ।

ये च मां पूजयिष्यन्ति श्रद्धया परया पुनः ॥

ते भविष्यन्ति सततं सदा पातकवर्जिताः ॥ २६ ॥

लप्स्यन्ति ते परान्कामान्भविष्यन्ति गणोत्तमाः ।

पूज्याः सर्वेषु लोकेषु सर्वालङ्कारभूषिताः ॥ २७ ॥

एवं लब्धवरो ढुण्ढः प्राञ्जलिः पुनरब्रवीत् । मन्नाम्नाप्रथितंलिङ्गं सम्भूयाद्भुवनेसदा

एवमस्त्विति लिङ्गेनप्रोक्तं तुष्टेन पार्वति! । तदाप्रभृतिविख्यातोदेवो ढुण्ढेश्वरःपरः

यस्य दर्शनमात्रेण सदा सिद्धिर्भवेन्नृणाम् ॥ ३० ॥

भक्त्यायेपूजयिष्यन्तिदेवंढुण्ढेश्वरंपरम् । आजन्मप्रभवंपापं तेषांयास्यतितत्क्षणात्

स एव सुकृती लोके स एव ममवल्लभः । यःपश्यतिनरोभक्त्यालिङ्गंढुण्ढेश्वरंपरम्

राजसूयशतेनैवयत्पुण्यं च भविष्यति । ततोभविष्यत्यधिकं ढुण्ढेश्वरनिरीक्षणात्

मानसं वाचिकं वापि कायिकं गुह्यसम्भवम् ।

प्रकाशं वाऽप्रकाशं च प्रसङ्गादपि यत्कृतम् ॥

तत्सर्वं यास्यति क्षिप्रं ढुण्ढेश्वरस्य दर्शनात् ॥ ३४ ॥

इत्युक्तस्तुमया देविसढुण्ढोगणनायकः । कृतो लिङ्गस्य माहात्म्याद्गतोलोकेमदीयके

रेजे च गणपैः श्रार्द्धं ममाभीष्टतरोऽभवत् ॥ ३५ ॥

एष ते कथितो देवि प्रभावः पापनाशनः । श्रवणात्कीर्त्तनाद्वापि ममलोके महीयते

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे

चतुरशीतिलिङ्गमाहात्म्ये ढुण्ढेश्वरमाहात्म्यवर्णनं नाम

तृतीयोऽध्यायः ॥ ३ ॥

---

# चतुर्थोऽध्यायः

## डमरुकेश्वरमाहात्म्यवर्णनम्

### श्रीमहादेव उवाच

ख्यातोऽवन्त्यां चतुर्थोऽसौ देवो डमरुकेश्वरः ।

दृष्टे यस्मिञ्जगन्नाथे याति पाप च सङ्क्षयम् ॥ १ ॥

पुरा वैवस्वते कल्पे रुरुर्नाममहासुरः । तस्य पुत्रो महाबाहुर्वज्रोनाम महाबलः ॥

बभूव स महाकायस्तीक्ष्णदंष्ट्रो भयङ्करः ॥ २ ॥

तेन देवाः स्वाधिकाराच्चालितास्त्रिदशालयात् ॥ ३ ॥
ततो नीतं धनं तेषां ब्रह्माणं ते ततोययुः । ब्रह्मापिभयसम्विग्नोबभूवाकुलितेन्द्रियः
ज्ञात्वावध्यंसुरैः सार्धं सर्वैं सोऽथ महाबलः । तेषुनष्टेषुयेविप्राग्रज्ञानोऽथतपस्विनः
ताञ्जघान स दुष्टात्मा ये चान्ये धर्मचारिणः ॥ ५ ॥
निःस्वाध्यायवषट्कारं तदासीद्धरणीतलम् । नष्टयज्ञोत्सवं देवि हाहाभूतमचेतनम्
ततः प्रव्यथिता देवास्तथा सर्वे महर्षयः । समेत्यामन्त्रयन्मन्त्रंवधार्थं तस्य दुर्मतेः
ततः कायोऽभवत्सद्यः सर्वेषां पुरतस्तदा । तेषांचिन्तयतांदेवि तेजःपुञ्जेनघावृतः
तस्मात्कृत्या समुत्पन्ना दिव्या कमललोचना ।
द्योतयन्ती दिशः सर्वाः स्वतेजोभिः समन्ततः ॥ ६ ॥
साऽब्रवीत्त्रिदशान्सर्वान्कस्मात्सृष्टा ह्यहं सुराः! ।
यत्कर्त्तव्यं मया कर्म तच्छीघ्रं संनिवेद्यताम ॥ १० ॥
ततस्तु त्रिदशाः सर्वे श्रुत्वा तस्याः शुभा गिरः ।
आचख्युः सकलं तस्यै तदा वज्रस्य चेष्टितम् ॥ ११ ॥
श्रुत्वाजहाससादेवी साट्टहासं मुहुर्मुहुः । तस्याहसंत्यानिःसस्रुकन्याःकमललोचनाः
पाशाङ्कुशधरा रौद्रा ज्वालामालावृताननाः । फेत्कारेणचसंनादैश्चालयंत्यश्चराचरम्
गताःसर्वामहादेवि यत्र वज्रो महासुरः । युद्धं तु तुमुलंजातं ताभिस्तस्य भयावहम्
शस्त्रास्त्रैर्बहुधामुक्तैर्व्याप्तं चैव दिगन्तरम् । संनद्धाखिलसैन्यास्ते युयुधुः समरेभृशम्
ततः प्रववृते युद्धं तया देव्या सुरद्विषाम् । ततो मातृगणंक्रुद्धं मर्द्दयन्तं महासुरान् ॥
पराङ्मुखं वलं दृष्ट्वा वज्रो मायामथासृजत् ॥ १६ ॥
तामसीं नाम दुःसाध्यां यया मुह्यन्ति कन्यकाः ॥ १७ ॥
तमोभूतेततस्तस्मिन्सादेवीभयविह्वला । ताभिःसार्द्धंसमायाता महाकालवनोत्तमम्
कपालवान्हरोयत्र लिङ्गाकारेणसंस्थितः । ज्ञात्वामातृगणंनष्टं ततो मायाप्रभावतः
वज्रोऽपि त्रिदशाञ्ज्ञात्वा देव्या सार्द्धमथोषितान् ।
आजगाम तमुद्देशं स्वसैन्यपरिवारितः ॥ २० ॥

महाकालवने दिव्ये रथकोटिशतैर्वृतः । समन्ताच्च वनं देवि!तत्क्रुद्धो वाक्यमब्रवीत्
अद्य देवान्हनिष्यामि तया सार्कं सुदुष्टया । कन्याभिःसह या नष्टा तमोमायावलेन तु
एतस्मिन्नन्तरेकाले नारदोमुनिसत्तमः । सोत्सुकस्तु समायातो मन्दरे चारुकन्दरे

कथयामास देवानां वज्राद्देवपराभवम् ॥ २४ ॥

महाकालवने देव ताडितास्त्रिदशाः प्रभो! । वज्रेण रुरुपुत्रेण तस्माद्याहि महेश्वर ॥
नारदस्य वचः श्रुत्वा ततोऽहं परमेश्वरि । मन्दरादागतस्तूर्णं कृत्वा रूपं सुभैरवम्
सर्पैर्लसद्भिरत्युग्रैर्भीषणैर्गणसंवृतः । अग्रे दृष्टं महत्सैन्यं दानवानां भयावहम् ॥
महाकालवनं रुद्धं समन्तादसुरेण तु । वज्रेण रुरुपुत्रेण दुःसहेन यशस्विनि ॥ २८॥

तदागत्य मया ताड्य रौद्रं डमरुकं तथा ।
मोहितं सहसा सैन्यं वज्रस्यैव दुरात्मनः ॥ २६ ॥

डमरुकस्य नादेन ह्युत्थितं लिङ्गमुत्तमम् । विदार्यवसुधांदेवि ज्वालामालाकुलंतदा

तस्य लिङ्गस्य च तदा महाज्वाला विनिर्गता ।
एकदेशाद्वरारोहे ब्रह्माण्डव्यापिनी तथा ॥ ३१ ॥
लिङ्गस्यान्यप्रदेशात्तु वायुः समभवन्महान् ॥ ३२ ॥

तेजोज्वालासमूहेन वातेन प्रेरितेनच । सहचक्रेण तत्सैन्यं दग्धं भस्मत्वमागतम् ॥
ततो देवगणाः सर्वे हर्षनिर्भरमानसाः । नमश्चक्रुर्हते तस्मिन्रुरुपुत्रे महाबले ॥ ३४॥
अस्य देवस्य माहात्म्याद्दग्धोवज्रो महाबलः । ससैन्योऽभूत्ततस्तस्मादेषडमरुकेश्वरः

ख्यातिं यास्यति लोकेऽस्मिन्सर्वकामफलप्रदः ॥ ३५ ॥

डमरुकस्य तु नादेन जातोयस्मान्महीतले । अतःपूज्यवरोदेवो भविष्यतिनसंशयः
द्रक्ष्यये पूजयिष्यन्ति देवं डमरुकेश्वरम् । ते सर्वेदुःखनिर्मुक्ता भविष्यन्तिगतज्वराः

चान्द्रायणानां विधिवच्छतानामथ यत्फलम् ।
तत्फलं समवाप्नोति डमरुकेश्वरपूजनात् ॥ ३८ ॥
अस्मिन्स्थाने स्थितं लिङ्गं भक्त्या डमरुकेश्वरम् ।
प्रसङ्गादपि पश्यन्ति ह्यपि पापपरा नराः ॥ ३६ ॥

तेऽप्यवश्यं तु यास्यन्ति रुद्रलोकं सनातनम् ।
भक्ताः स्तोष्यन्ति ये लिङ्गं ख्यातं डमरुकेश्वरम् ॥ ४० ॥
मानसैः पातकैर्मुक्ता यास्यन्ति परमं पदम् । अश्वमेधसहस्रं तु वाजपेयशतं भवेत्
गोसहस्रफलं चात्र दृष्ट्वा प्राप्स्यन्ति मानवाः ॥ ४१ ॥
यो याति सङ्गरे धीरो दृष्ट्वा डमरुकेश्वरम् । जयेद्रिपूनथान्ते स रुद्रलोके महीयते
एष ते कथितो देवि प्रभावः पापनाशनः । स्तुतस्तु कीर्तितश्चैव सर्वाभीष्टफलप्रदः

इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्ये डमरुकेश्वरमाहात्म्यवर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः

### अनादिकल्पेश्वरमहिमवर्णनम्

श्रीरुद्र उवाच

अनादिकल्पेश्वरं देवं पञ्चमं विद्धि पार्वति! । सर्वपापहरं नित्यमनादिर्गीयतेसदा
कल्पस्यादौपुरादेविलिङ्गमेतद्विनिर्गतम् । यदानाग्निर्नचादित्योनभूमिर्नदिशोनखम्
न वायुर्न जलं चैव न द्यौर्नेन्दुर्ग्रहा न च । न देवासुरगन्धर्वा न पिशाचा न राक्षसाः
अतो लिङ्गात्समुद्भूतं जगत्स्थावरजङ्गमम् ।
कालेन च लयं याति लिङ्गेऽस्मिन्पर्वतात्मजे! ॥ ४ ॥
अस्माल्लिङ्गात्समुद्भूतावंशादेवर्षिपितृकाः । मन्वन्तराणिवंशानिवंश्यानुचरितंचयत्
यावत्यः सृष्टयश्चैव यावन्तः प्रलयास्तथा । समुद्राः पर्वताश्चैव निम्नगाःकाननानिच
भूर्लोकाद्याश्च ये लोकाः पातालाः सप्त ये स्मृताः ।
गतिस्तथार्कसोमादिग्रहर्क्षज्योतिषामपि ॥ ७ ॥
दृश्यादृश्यं च तत्सर्वमतो लिङ्गाद्वरानने! । अनादिकारणं यत्तदव्यक्ताख्यं महर्षयः ॥

यदाहुः पुरुषं सूक्ष्मं नित्यं सदसदात्मकम् ॥ ८ ॥
ध्रुवमक्षयमजरममेयं नान्यसंश्रयम् । गन्धरूपरसैर्हीनं शब्दस्पर्शविवर्जितम् ॥ ६ ॥
अनाद्यन्तं जगद्योनिं त्रिगुणप्रभवाव्ययम् । असाद्दृश्यमविज्ञेयं लिङ्गं प्रोक्तं महर्षिभिः
प्रलयस्यान्ते तेनेदं दिव्यमासीदशेषतः ॥ ११ ॥
अहमुर्व्यां प्रबुद्धस्तु जगदादिरनादिमान् । सर्वहेतुरचिन्त्यात्मा परःकोऽप्यपरक्रियः
प्रकृतिं पुरुषं चैव प्रदर्श्याशु जगत्पतिः । क्षोभयामास योगेन परेण परमेश्वरः ॥
यथा संनिधिमात्रेण गन्धः क्षोभाय जायते । मनसो नोपकर्तृत्वात्तथासौ परमेश्वरः
अनादिः कथ्यते देवो जगत्कारणतत्परम् ॥ १४ ॥
प्रधानं क्षोभ्यमाणं तु तेन लिङ्गेन पार्वति । जायतेभुवनाधारोब्रह्माण्डइति विश्रुतः
यस्मिन्नण्डे जगत्सर्वंसदेवासुरमानुषम् । उत्पन्नंचविलीनंचयस्यान्तोऽपिनलभ्यते
स एव क्षोभकः पूर्वं स क्षोभ्यः पृथिवीपतिः ।
स सङ्कोचविकासाभ्यां प्रधानत्वे व्यवस्थितः ॥ १७ ॥
उत्पन्नः स जगन्नाथो निर्गुणोऽपि रजोगुणः ।
भुञ्जन्प्रवर्तते सर्गं ब्रह्मत्वं समुपागतः ॥ १८ ॥
ब्रह्मत्वे सृजते लोकांस्ततःसत्त्वातिरेकतः । विष्णुत्वमेत्यधर्मेणकरोतिपरिपालनम्
ततस्तमोगुणोद्भिन्नोरुद्रत्वेनाखिलंजगत् । उपसंहृत्यवैशेतेत्रैलोक्यंत्रिगुणोऽगुणः
यथा प्रागवापकः क्षेत्री पालको लावकस्तथा ।
स संज्ञा याति तद्वच्च ब्रह्मविष्णुत्वरुद्रताः ॥ २१ ॥
ब्रह्मत्वे सृजते लोकान्रुद्रत्वे संहरत्यपि ।
विष्णुत्वे पाति तान्सर्वांस्तिस्रोऽवस्थाः स्मृताः सदा ॥ २२ ॥
रजो ब्रह्मा तमो रुद्रः सत्त्वं विष्णुर्जगत्पतिः ।
एत एव त्रयो वेदा एत एव त्रयो नराः ॥ २३ ॥
कल्पे कल्पे ह्यनादिस्तु गीयते त्रिदशैः सदा ।
पितृभिश्च गणैः सिद्धैरतोऽनादिकल्पेश्वरः ॥ २४ ॥

नाम प्राप्तं विशालाक्षि महाकालवनं सदा । यदाजातो विवादस्तु ब्रह्मणःकेशवस्यच
अहं ज्यायानहं ज्यायान्कल्पादौ सृष्टिकारणात् ।
दिव्या समुत्थिता वाणी निरालम्बा तदाऽम्बरात् ॥ २६ ॥
महाकालवने लिङ्गं कल्पेश्वरेतिसञ्ज्ञकम् । तस्यादिमथवान्तं च यःपश्यतिसचप्रभुः
भविष्यति न संदेहो न वादः क्रियतामिति ॥ २७ ॥
ततो देवि! गतो ब्रह्मा ऊद्र्ध्वलोकमनन्तकम् ।
अधोलोकं गतो विष्णुस्तेन वाक्येन सत्वरम् ॥ २८ ॥
नादिर्दृष्टो न चान्तश्चब्रह्मणा केशवेन तु । तदा तौ विस्मयापन्नौतुष्टुवातेपरस्परम्
वेदोक्तसूक्तैर्विविधैरभिन्नग्रपुरःस्थितौ । नादिरस्तिन चान्तश्च न चकल्पोऽत्रदृश्यते
तस्मादनादिकल्पोऽयमद्यप्रभृतिभूतले ।
ख्यातिंयास्यतिनाम्नाचमहाकालवनोत्तमे ॥ ३१ ॥
पञ्चपातकसंयुक्तो योमर्त्यो दुष्टमानसः ।
सोऽपिगच्छेच्छिवं दृष्ट्वाऽनादिकल्पेश्वरं शिवम् ॥ ३२ ॥
शिवमस्तु सदा तेषां येषां त्वं दर्शनं गतः । तेधन्या मानुषेलोकेयेत्वांशरणमागताः
सर्वतीर्थाभिषेकैस्तु यत्पुण्यं प्राप्यते नरैः । तत्सर्वमधिकं देव लभ्यतेतवदर्शनात्
तावत्पतन्ति संसारे सुखदुःखसमाकुले । तावन्न दृश्यते देव संसारार्णवतारकः॥
यदा पापक्षयः पुंसां तदा त्वद्दर्शनं भवेत् ॥ ३६ ॥
ब्रह्महा वा सुरापो वा स्तेयी च गुरुतल्पगः ।
तत्संसर्गी नरो यस्तु महाकिल्बिषकारकः ।
सोऽपि याति परं स्थानं पुनरावृत्तिवर्जितम् ॥ ३७ ॥
यत्फलं चाश्वमेधेन राजसूयेन यत्फलम् । तत्फलं समवाप्नोति तव देवसमर्चनात्
ते नराः पशवो लोके तेषां जन्म निरर्थकम् ।
यैर्न दृष्टो महादेवोऽनादिकल्पेश्वरः शिवः ॥ ३९ ॥
इत्युक्त्वा केशवो देवो ब्रह्माचैववरानने । वामेदक्षिणभागेचतस्यलिङ्गस्यसंस्थितौ

एव ते कथितो देवि! प्रभावः पापनाशनः । यस्य श्रवणमात्रेण लभ्यते परमं पदम्

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्येऽनादिकल्पेश्वरमाहात्म्यवर्णनं-
नाम पञ्चमोऽध्यायः ॥ ५

---

## षष्ठोऽध्यायः

### स्वर्णजालेश्वरमाहात्म्यवर्णनम्

श्रीमहादेव उवाच

स्वर्णज्वालेश्वरं षष्ठं विद्धि चात्र यशस्विनि! ।
यस्य दर्शनमात्रेण धनवानिह जायते ॥ १ ॥

पुरा सार्द्धं त्वया देवि! क्रीडतो मम मन्दिरे। जातं वर्षशतं दिव्यं सुरतैकरसस्य च

देवैः सर्वैस्ततो वह्निः प्रेरितो मम सन्निधौ ।
ततो वह्निः समायातस्त्रैलोक्यार्थे यशस्विनि! ॥ ३ ॥

ततो वह्निमुखे क्षिप्तं वीर्यं स्वं क्रीडता मया । दह्यमानस्तदा तेन गङ्गां वह्निर्जगाम ह

तत्र गत्वा प्रचिक्षेप वीर्यमग्निः सुदुर्द्धरम् । तथापि दह्यते वह्निर्वीर्यशेषेण पार्वति ॥

जातं रम्यं ततो दिव्यं वीर्यशेषेण काञ्चनम् । ज्वलन्तं चातितापेन दुःसहं दुर्द्धरं प्रिये

अग्नेरपत्यं प्रथमं दृष्ट्वोत्पन्नं तु पार्वति! । लोभाभिभूता असुराः सुरा गन्धर्वकिन्नराः

यक्षाः साध्याः पिशाचाश्च मनुष्या राक्षसाः खगाः ।
अभ्यधावन्सुसंरब्धास्ते सुवर्णजिघृक्षवः ॥ ८ ॥

सुवर्णार्थे महान्नादो ममेदमिति जल्पताम् । अज्ञानात्सङ्गरश्चैव सञ्जातः प्राणहारकः

अथावरणमुख्यानि नानाप्रहरणानि च । प्रगृह्याभ्यनदन्नादैर्देवैः सार्द्धं यशस्विनि ॥

असुरा असुरैः सार्द्धं मनुष्या मानुषैःसह ।

गन्धर्वाः सह गन्धर्वैः किन्नरैः सह किन्नराः ॥ ११ ॥

भूतैः सार्द्धं च भूतानि राक्षसैः सह राक्षसाः ।

वेतालैः सह वेताला युद्धं चक्रुः सुदारुणम् ॥ १२

पुत्रस्तु पितरं द्वेष्टि पिता पुत्रं तथैवच । हन्तिभार्यास्वभर्त्तारंभर्ताचस्वांप्रियांतथा

मातरंस्वसुतोहन्तिमातापुत्रंहिनस्तिच । ततोवैरविनिर्वन्धःसञ्जातःस्वर्णकारणात्

सुराणामसुराणां च सर्वघोरतरंमहत् । प्रासाश्चविपुलास्तीक्ष्णान्यपतन्तसहस्रशः

तोमराश्चसुतीक्ष्णाग्राः शस्त्राणि विविधानि च ॥ १५ ॥

सुवर्णार्थे महादेवि! वमन्तो रुधिरं बहु ॥ १६ ॥

असिशक्तिगदाऋष्ट्यो निपेतुर्धरणीतले । छिन्नानिपट्टिशैश्चैव शिरांसियुधिदारुणैः

रुधिरेणावलिप्ताङ्गा निहताश्च परस्परम् । अद्रिणामिवकूटानि धातुयुक्तानि शेरते

हाहाकारः समभवद्भयकृच्च सहस्रशः । अन्योन्यंछिन्दतां शस्त्रैःसुवर्णस्यचकारणात्

परिघैरायसैःपाशैर्वज्रकल्पैश्चमुष्टिभिः । निघ्नतांसमरेऽन्योन्यंशब्दोदिवमिवास्पृशत्

छिन्धिभिन्धिप्रधावत्वंपातयाधिसरेतिच । अश्रूयन्तमहाघोराःशब्दास्तत्रसमन्ततः

एवं तु तुमुले युद्धे वर्त्तमाने महाभये । कम्पिता धरणी देवि! देवास्त्रस्ताःसवासवाः

क्षुभ्यन्ति स्म समुद्राश्च चेलुश्चधरणीधराः । तस्यार्थेपीडितंसर्वंसदेवासुरमानुषम्

ऋषयो बालखिल्याद्यादेवाःशक्रपुरोगमाः । वृहस्पतिंपुरस्कृत्यब्रह्मलोकंगताःस्त्रियः

सोच्छ्वासाःकथयामासुर्जर्जरीकृतमस्तकाः ।

वृत्तान्तं विस्तरात्सर्वं लोकत्रयविनाशनम् ॥ २५ ॥

तच्छ्रुत्वा वचनं तेषां ब्रह्मा लोकपितामहः ।

चिन्तयित्वा च तैः सार्द्धमाजगाम ममान्तिकम् ॥ २६ ॥

मया पृष्टास्तुतेसर्वेकेनैतेजर्जरीकृताः । शस्त्रास्त्रैःपीडिताःकेनकस्माद्वोभयमागतम्

कश्चासौ दानवोदुष्टोयेनवैपीडिताभृशम् । तत्सर्वं कथितं देवि ममाग्रे भयविह्वलैः

ते मामूचुस्तदा देवा ब्रह्माद्या भयकारणम् ॥ २९ ॥

लोभात्सर्वे विनष्टाः स्म सुवर्णस्य च कारणात् ।

पीडितं च जगत्सर्वं सदेवासुरमानुषम् ॥ ३० ॥

इति तेषां वचः श्रुत्वा मया ज्ञातंवरानने। तस्यार्थेकलहोघोरः सञ्जातोहिपरस्परम्
लोकत्रयविनाशश्च सहसा येन वै कृतः। यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम्
ब्रह्महा वह्निपुत्रस्तु यमुदिश्य मृतो जनः। शरीरं शबलं चैव सविकारं भविष्यति
धातवो हि भविष्यन्तितस्य देहेनसंशयः। लक्ष्यते दुःखमतुलं छेददाहादिघर्षणम्
एतस्मिन्नन्तरे वह्निर्दृष्ट्वापुत्रस्यचेष्टितम्। ज्ञात्वाक्रोधंमदीयन्तुभीतोवैपुत्रकारणात्
आजगाम सुवर्णेन सार्द्धं देवि ममान्तिकम्। प्रसादितोऽहं पुत्रार्थे वह्निनाहिवरानने
रक्षणीयस्त्वया देव पुत्रोऽयं तव शङ्कर। भाण्डागारे स्वकीये तु क्रियतां परमेश्वर

त्वयि तुष्टे महादेव! प्राप्योऽयं नात्र संशयः।

इच्छया दीयतां देवि!यस्य कस्य जनस्य च ॥ ३८ ॥

इति तस्य वचः श्रुत्वा पितृदेवमुखस्य च। तथेति चप्रतिज्ञातंमयालोभाद्यशस्विनि
स्नेहान्मया वह्निपुत्रउत्सङ्गे च कृतस्तदा। स्नेहाद्वैचुम्बितोमूर्ध्निपरिष्वक्तःपुनःपुनः
ददामि ते महाभाग वरं वरय शोभनम्। परितुष्टोऽस्मि वै कामं यथेष्टंसमवाप्नुहि
अहमाज्ञापयामि त्वां श्रेयश्चैवमवाप्स्यसि। ममाभीष्टकरं स्थानं विद्यतेपृथिवीतले
अक्षयं प्रलये पुत्र महाकालवनंशुभम्। तत्रैव विद्यते लिङ्गं कर्कोटकस्य दक्षिणे ॥
महापापहरं पुत्र दर्शनाद्दीप्तिदायकम्। तस्य दर्शनमात्रेण कृतकृत्यो भविष्यसि ॥
पुण्यश्चैव पवित्रेण दुर्लभश्च भविष्यति। अकुलीनः कुलीनस्तु समलोनिर्मलोनरः
विरूपो रूपवांश्चैवत्वत्प्रसादाद्भविष्यति। दानानिपरिपूर्णानिव्रतानि नियमास्तथा

यज्ञाश्चैवोपवासाश्च तीर्थं पिण्डादिकं त्वया।

सुसम्पूर्णा भविष्यन्ति तव दानेन सुव्रत! ॥ ४७ ॥

सर्वेषांचैवरत्नानामाधिपत्यंकरिष्यसि। प्रियाभीष्टोहिदेवानांलोकानांचभविष्यसि
इत्युक्तोऽसौ महादेवि दिव्यरूपोवरानने!। ज्वालामालावृतःपुण्योनिर्मलोहिबभूवह

लिङ्गेनोक्तः सुवर्णस्तु दिष्ट्यादिष्ट्येति काञ्चनम्।

अद्यप्रभृति नाम्ना वै ख्यातिं यास्यसि भूतले ॥ ५० ॥

स्थातव्यंमत्समीपेतुवह्निपुत्रत्वयासदा। अक्षया भविता कीर्त्तिस्त्वदीयाभुवनत्रये
इत्युक्तो देविलिङ्गेन वह्निपुत्रोऽतिनिर्मलः। ज्वालावृततनुर्जातः सूर्यकोटिसमप्रभः

दीप्तिर्लब्धा सुवर्णेन ज्वालामालाकुला तदा।
अतो देवि! सुविख्यातः स्वर्णजालेश्वरः शिवः॥ ५३॥
यस्तमर्चयतो भक्त्या स्वर्णजालेश्वरं शिवम।
तस्य सञ्जायते देवि! विजयो राज्यमूर्जितम्॥
ऐश्वर्यं दानशक्तिश्च पुत्रपौत्रमनन्तकम्॥ ५४॥

ज्ञानतोऽज्ञानतो वापि यत्पापं कुरुते नरः। तत्क्षालयति देहोत्थं दर्शनान्नात्र संशयः
यत्फलं पिण्डदानेन गयायां लभते नरः। तत्फलं द्विगुणं प्रोक्तं पूजया नात्र संशयः

गायत्र्याः शतसाहस्रैः सम्यग्जप्तैश्च यत्फलम्।
तत्फलं समवाप्नोति स्वर्णज्वालेश्वरस्तुतेः॥ ५७॥

यत्पुण्यं सर्वदानेन दत्तेन विधिपूर्वकम्। तत्फलं समवाप्नोति कीर्त्तनान्नात्रसंशयः

पूजयन्ति चतुर्दश्यां स्वर्णज्वालेश्वरं तु ये।
पूज्यन्ते ते सदा लक्ष्म्या पूरयन्त्या मनोरथान्॥ ५९॥

रक्षितं त्रिदशैर्देवगणैर्नानाविधैस्तथा। लिङ्गंकश्चिन्नजानातिमम मायाविमोहितः
मम प्रसादात्तद्देवि! दृश्यते लिङ्गमुत्तमम्। एतत्ते कथितं सम्यगन्यच्छृणु वरानने

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डेऽ-
चतुरशीतिलिङ्गमाहात्म्ये स्वर्णज्वालेश्वरमाहात्म्यवर्णनं नाम
षष्ठोऽध्यायः॥ ६॥

———

# सप्तमोऽध्यायः

## त्रिविष्टपेश्वरमाहात्म्यवर्णनम्

श्रीमहादेव उवाच

त्रिविष्टपेश्वरं देवि! सप्तमं पर्वतात्मजे। यस्य दर्शनमात्रेण लभ्यते तत्त्रिविष्टपम् ॥
पुरा वाराहकल्पे तु देवर्षिर्नारदोऽमलः। त्रिविष्टपं गतो देवि द्रष्टुकामः शतक्रतुम्
तत्रोद्यानवने रम्ये कल्पवृक्षैर्विराजिते। सर्वत्र कुसुमामोदसुखस्पर्शानिलाकुले ॥३॥
वीणावेणुरवैर्घुष्टे देवगन्धर्वसेविते। वज्रेन्द्रनीलवैदूर्यचन्द्रकान्तादिदीपिते ॥ ४ ॥
ब्रह्मलोकादिभिर्लोकैरनौपम्यगुणे शुभे। ददर्श तत्र देवेशमुपविष्टं शतक्रतुम् ॥
स्तूयमानं मुदा देवैः सिद्धचारणकिन्नरैः ॥ ५ ॥
पृष्टस्तु नारदो देवि वासवेन महामुनिः। कथयामास माहात्म्यं महाकालवनस्यच
महाकालवनं रम्यं सदानन्दकरं शुभम्। सेव्यं पुण्यं पवित्रं च तीर्थनामुत्तमोत्तमम्
पुण्यं पश्यन्ति ये लोका महाकालवनं शुभम्।
ब्रह्महत्यादिकं पापं तेषां नश्यति निश्चितम ॥ ८ ॥
स्वयं तिष्ठति देवोऽत्र सर्वभूतगणैर्वृतः। तस्मात्तत्तीर्थमुख्यानांप्रवरं कथ्यते बुधैः
पृथिव्यां नैमिषं पुण्यं सर्वपापप्रणाशनम्।
तस्माद्दशगुणं प्रोक्तं पुष्करं तीर्थमुत्तमम् ॥ १० ॥
ततो दशगुणं प्रोक्तं प्रयागंसर्वकामिकम्। तस्माद्दशगुणं प्रोक्तंविख्यातममरेश्वरम्
प्राची सरस्वती पुण्या तस्माद्दशगुणा स्मृता।
तस्माद्दशगुणंप्रोक्तं गयाकूपं विशिष्यते ॥ १२ ॥
तस्माद्दशगुणं देवि! कुरुक्षेत्रं विशिष्यते। कुरुक्षेत्राद्दशगुणा पुण्या वाराणसी तथा
तस्या दशगुणं श्रेष्ठं महाकालं विशिष्यते। महाकालवनंशक्र! किल त्रैलोक्यभूषणम्
षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च।

लिङ्गानि तत्र विद्यन्ते भुक्तिमुक्तिकराणि च ॥ १५ ॥
शक्तयो नवकोट्यस्तु तस्मिन्क्षेत्रे वसन्ति हि ॥ १६ ॥
कृमिकीटतपङ्गाश्च मृता यत्र ततःक्रतौ । यान्ति दिव्यैर्विमानैश्च रुद्रलोकंसनातनम्
माहात्म्यमद्भुतं श्रुत्वा नारदात्सुरसत्तमः ॥ १७ ॥
सर्वदेवगणैः सार्द्धमाजगाम त्वरान्वितः । वासवः श्रीमहाकालवनं हर्षसमन्वितः ॥
दृष्ट्वा तथाविधं रम्यं महाकालवनंशुभम् । त्रिविष्टपादप्यधिकं प्रलयेऽप्यक्षयंस्मृतम्
विचित्राणि च हर्म्याणि काञ्चनानि शुभानि च ।
प्रासादाः शतशो भौममणिविद्रुमभूषिताः ॥ २० ॥
वज्रेन्द्रनीलरचिता शुद्धस्फटिकसन्निभाः ।
तोरणानि विचित्राणि माणिक्यरचितानि च ॥
दृष्ट्वा तथाविधं रम्यं महाकालवनोत्तमम् ॥ २१ ॥
नारदं प्रशशंसुस्ते सर्वे देवा मुदान्विताः । देवर्षीणां महाप्राज्ञा येनेयं कथिताकथा
न कैलासं गमिष्यामो न च मेरुं तथाविधम् ।
न मन्दरं गमिष्यामो न यास्यामस्त्रिविष्टपम् ॥ २३ ॥
एषामरावतीश्रेष्ठा ह्येषा भोगवती शुभा । एष पैतामहोलोको विष्णुलोकस्तथैवच
एतस्मिन्नन्तरेदेविशून्यंजातंत्रिविष्टपम् । ज्ञात्वा शून्यमथात्मानंचिन्तयित्वापुनःपुनः
गमनाय मतिं चक्रे कृत्वा देहमथात्मनः ॥ २५ ॥
त्यक्त्वा मां त्रिदशाः सर्वे महाकालवनं गताः ।
अहं तत्रैव यास्यामि यत्र ते त्रिदशा गताः ॥ २६ ॥
इत्युक्त्वा तत्क्षणंप्राप्तो महाकालवनोत्तमे । कौतुकात्सोऽथवैश्रेष्ठंतीर्थंतत्रापिभूतले
ददर्श रमणीयं तैर्देवैः परिवृतं तदा ॥ २७ ॥
एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ।
भोभोस्त्रिविष्टपात्रैव स्वनाम्ना स्थापयस्व माम् ॥
कर्कोटकस्य पूर्वे तु महामायाश्च दक्षिणे ॥ २८ ॥

इत्युक्तो देवदेवेन हृष्टस्तद्गतचेतसा । स्वनाम्ना स्थापयामास देवं त्रिविष्टपेश्वरम् ॥
पूजयित्वा शुभैःपुष्पैरुवाचेदं वरानने! । अद्यप्रभृति भूर्लोको नाम्ना ख्यातिं गमिष्यति
ये त्वां पश्यन्ति यत्नेन अपिदुष्कृतकारिणः ।
ते यास्यन्ति परं स्थानं दिव्यालङ्कारभूषिताः ॥ ३१ ॥
अष्टम्यांचचतुर्द्दश्यां सङ्क्रान्तौवाविशेषतः ।यःकरिष्यतिपूजांचभक्तियुक्तोहिमानवः
विमानवरमास्थाय कामगं रत्नभूषितम् । उदितादित्यसङ्काशं मत्समीपेवसिष्यति
किंदानैर्विविधैर्दत्तैःकिंयज्ञैर्विविधैःकृतैः ।तेप्राप्स्यन्तिफलंसर्वंयेत्वांद्रक्ष्यन्तिभक्तितः
यं यं काममभिध्याय पूजयिष्यन्ति मानवाः ।
तत्तन्मनोरथप्राप्तिर्भविष्यति न संशयः ॥ ३५ ॥
त्रिदशैश्च पुनः प्रोक्तं दृष्ट्वा मल्लिङ्गमुत्तमम् । त्रिविष्टपेनधन्येनस्थापितं देवमीश्वरम्
पूजयिष्यन्ति ये धन्या देवं त्रिविष्टपेश्वरम् ।
तेषां वासोऽक्षयो दिव्यो भविष्यति त्रिविष्टपे ॥ ३७ ॥
इत्युक्त्वा पूजयामास भूयो लिङ्गं त्रिविष्टपम् ।
सार्द्धं त्रिविष्टपेनैव पुनःस्थानं स्वकं गतः ॥ ३८ ॥
एष ते कथितो देवि! प्रभावः पापनाशनः ।
श्रवणात्कीर्त्तनाद्वापि स्वर्गलोकोऽक्षयो भवेत् ॥ ३९ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्ये त्रिविष्टपेश्वरमाहात्म्यवर्णनंनाम सप्तमोऽध्यायः ७॥

---

# अष्टमोऽध्यायः

## कपालेश्वरमाहात्म्यवर्णनम्

श्रीरुद्र उवाच

कपालेश्वरसञ्ज्ञं च ह्यष्टमं विद्धि पार्वति! । यस्य दर्शनमात्रेण ब्रह्महत्या प्रणश्यति
पुरा वैवस्वते कल्पे त्रेताकाले समागते । महाकालवने दिव्ये यज्ञे पैतामहे प्रिये! ॥
उपविष्टेषु विप्रेषु हूयमाने हुताशने । वेषं कापालिकं कृत्वा गतोऽहं तत्र संसदि ॥

जीर्णकन्थावृतो देवि! मुण्डः खट्वाङ्गधारकः ।
चिताभस्मविलिप्ताङ्गो विकृतो विकृताननः ॥
कपालं च करे कृत्वा कपालकृतभूषणः ॥ ४ ॥

ब्राह्मणाश्चततः क्रुद्धाद्दृष्ट्वामां जालमरूपिणम् । कपालधारिणं सर्वेधिक्छब्दैश्चजगर्हिरे
असकृत्पापपापेति गच्छगच्छ विडम्बिताः । कथंचहोमःक्रियते प्राप्ते कापालिकेपुरः
अकपालानि शौचानि इति देवेषुगीयते । यज्ञवेदिर्न तेऽर्हा तु मनुष्यास्थिधरस्यवै

मया प्रोक्तास्तु ते विप्राः श्रूयतां द्विजसत्तमाः! ।
यूयं कारुणिकाः सर्वे परदुःखेन दुःखिताः ॥ ८ ॥

कर्त्तव्या च दया सद्भिः सर्वदा सर्वदेहिनाम् । सर्वेषामेव जन्तूनां मित्रंब्राह्मणउच्यते
अहं कापालिको विप्रोभस्मभूषितविग्रहः । कापालव्रतमास्थाय चरामिपृथिवीतले
आराधयामि सततं महादेवं जगत्पतिम् । ब्रह्महत्याविनाशाय व्रतं द्वादशवार्षिकम्

अघघ्नं विश्रुतं लोके प्रारब्धं हि मया द्विजाः! ।
प्रायश्चित्तनिमित्तं तु शुद्धो यास्यामि सद्गतिम् ॥ १२ ॥

मदीयं वचनं श्रुत्वा तैःप्रोक्तं द्विजसत्तमैः । अतीव पापिष्ठतरो यो ह्येवंभाषसेऽधम!
कपालैर्भूषितो निन्द्यो विशेषेण तु विग्रहः । नाकारितो महादेवो दक्षयज्ञमहोत्सवे

यस्मिन्यज्ञे समायाता आदित्या वसवस्तथा ।

विश्वेदेवाश्च मरुतो गन्धर्वाःकिन्नरास्तथा ॥ १५ ॥
ब्रह्मा विष्णुः सहस्राक्षो वरुणो वायुरेवच । धनदःसागरा नद्यःसरांसिसकलानिच
सुपर्णा गिरयोनागाःसर्वेचाकारिताःक्रतौ । सानुगास्तेसभार्याश्चब्राह्मणावेदपारगाः
ब्रह्मर्षयो महाभागास्तथा देवर्षयोऽमलाः ।
एवमुक्त्वा महादेवं मानुषास्थिविभूषितम् ॥ १८ ॥
अपवित्रमिति ज्ञात्वा कथंत्वं वक्तुमर्हसि । प्रवेशो दीयतांमह्यं विशेषेणासिब्रह्महा
इत्युक्तोऽहं यदा विप्रैर्मया प्रोक्तं वचस्तदा ।
प्रतीक्ष्यतां मुहूर्तं तु भुक्त्वा यास्याम्यहं पुनः ॥ २० ॥
इत्युक्ते वचने देवि! ताडितोऽहं भृशं तदा । लोष्ठैर्लगुडकैः पादैर्मुष्टिभिश्च पुनः पुनः
अथ प्रहस्य तत्क्षिप्त्वा तां वेदिं दर्भसंस्तृताम् ।
कपालदीपवन्नष्टो न ज्ञातोऽहं द्विजोत्तमैः ॥ २२ ॥
मयि नष्टे कपालं तत्क्षिप्तं मण्डपबाह्यतः । अथान्यत्तत्र संजातं तादृग्रूपं यशस्विनि
एवं शतसहस्राणिप्रयुतान्यर्बुदानिच । तत्रक्षिप्तानिजातानिततस्तेविस्मयान्विताः
अथाहुर्ज्ञानिनः सर्वे नेदमन्यस्य चेष्टितम् । ऋते देवान्महादेवाद्गङ्गाचन्द्रार्द्धशेखरात्
ततोऽहं विविधैः स्तोत्रैः स्तुतो विप्रैः पृथक्पृथक् ।
होमं चक्रुश्च ते वह्नौ मन्त्रैश्च शतरुद्रियैः ॥ २६ ॥
अहं तुष्टस्तदा देवि द्विजानामनुकम्पया । व्रियतांब्राह्मणाः सर्वे वरंयन्मनसेप्सितम्
तदा ते ब्राह्मणाः प्रोचुर्यदज्ञानाद्वधस्तव । कृतस्तेन कृतास्माभिर्ब्रह्महत्या जगत्प्रभो
ब्रह्महत्याविनाशाय प्रसादं कुरु नः प्रभो । वरयामो वरं ह्येनं नान्यंवरमभीप्सितम्
द्विजानां च तदा तेषामग्रेकथितवानिदम् । यत्रराशिःकपालानां भवद्भिर्विहितोभुवि
अनादिलिङ्गंतत्रासीच्छन्नंकालविपर्यये । पश्यन्तुविप्रास्तल्लिङ्गंब्रह्महत्याविमोचनम्
कृता मयापिविप्रेन्द्रा ब्रह्महत्यास्वयं पुरा । छिन्दताब्रह्मणःशीर्षंपञ्चमंतेजसोत्कटम्
ब्रह्महत्या ततो जाता ममातीव सुदुःसहा । कपालंचकरे लग्नंतथाचातीवदुःसहम्
दह्यमानस्ततश्चाहं व्याप्तो वै ब्रह्महत्यया । नाशाय सत्वरंतस्याःस्वार्थयात्रामहंगतः

गतः सर्वेषु तीर्थेषु नैव मुक्तस्तु हत्यया । ततोदुःखी सुसन्तप्तोनैवलेभेसुखंकचित्

एतस्मिन्नन्तरे देवी वागुवाचाशरीरिणी ।

गच्छावन्तीं स्वयं नाथ! किमर्थं खिद्यते वृथा ॥ ३६ ॥

महाकालवनं पुण्यं त्वया नाथ! विनिर्मितम् । कपालकरसंस्थानं रुद्रमद्भुतदर्शनम्

न जानासि कथं क्षेत्रं महापातकनाशनम् ॥ ३७ ॥

तस्मिन्क्षेत्रे महल्लिङ्गं गजरूपस्य सन्निधौ । विद्यते पश्य देवेश ब्रह्महत्या प्रणश्यति

ततोऽहमागतस्तूर्णं वाक्यं श्रुत्वा तदोत्तमम् ।

महाल्लिङ्गं मया दृष्टं कपालकरसंस्थितम् ॥ ३६ ॥

मम हस्तात्तदा विप्राः कपालमपतद्भुवि । कपालेश्वरदेवोऽयमिति नाममयाकृतम्

पश्यन्तु विप्रास्तं देवंकपालेश्वरसञ्ज्ञकम् । यस्य दर्शनमात्रेणनिष्कलङ्काभविष्यथ

लिङ्गं दृष्टं तदा तैस्तु कपालैर्बहुभिर्वृतम् ।

कृतार्थास्ते तदा जातास्तस्य लिङ्गस्य दर्शनात् ॥ ४२ ॥

अतोऽसौ भुवि विख्यातःकपालेश्वरसञ्ज्ञकः ।

येऽर्चयन्ति महादेवि!कपालेश्वरसञ्ज्ञकम् ॥ ४३ ॥

कृतपुण्या नरा देवि तेयान्ति परमं पदम् । कृत्वाऽपि पातकं घोरं ब्रह्महत्यादिकंनरः

तत्पापं विलयं याति लिङ्गस्यास्य च दर्शनात् ।

कर्मणा मनसा वाचा यत्पापं समुपार्जितम् ।

तत्क्षपयति देवोऽयं चतुर्दश्यां समर्चितः ॥ ४५ ॥

प्रसङ्गादपि ये पूजां करिष्यन्ति वरानने! ।

तेऽपि कामानवाप्स्यन्ति यांश्च कांश्चित्सुदुर्लभान् ।

ऐश्वर्यं धर्ममतुलं दीर्घमायुररोगताम् ॥ ४६ ॥

निःसपत्नत्वमतुलं यच्चान्यत्तदवाप्नुयात् । अतीव पापिनो ये च क्रूरकर्मरतानराः

विपाप्मानो भविष्यन्ति गणेशाश्चममप्रिये । नियमेन प्रपश्यन्ति ये देवं वत्सरंप्रिये

ते पश्यन्ति तनुं त्यक्त्वा मदीयं भवनं प्रियम् ॥ ४८ ॥

एष ते कथितो देवि प्रभावः पापनाशनः । कपालेश्वरदेवस्य स्वर्गद्वारेश्वरं शृणु ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-चतुरशीतिलिङ्गमाहात्म्ये कपालेश्वरमाहात्म्यवर्णनंनामाष्टमोऽध्यायः ॥ ८ ॥

---

# नवमोऽध्यायः

## स्वर्गद्वारेश्वरमाहात्म्यवर्णनम्

श्रीरुद्र उवाच

स्वर्गद्वारेश्वरं लिङ्गं नवमं विद्धि पार्वति! । सर्वपापहरं देवि! स्वर्गमोक्षफलप्रदम्

यदा देवि समायाताः कैलासे पर्वतोत्तमे ।

अश्विन्याद्या भगिन्यस्तास्त्वां दृष्ट्वा विस्मयान्विताः ॥ २ ॥

निमन्त्रिता वयं यज्ञे सकान्ताः सपरिग्रहाः । स्नेहेनदेवि तातेन बहुमानपुरःसरम्

कच्चित्स्मृता विशालाक्षि! किं वा तातस्य विस्मृतिः ।

कारणं किं समुदिश्य तातेन न निमन्त्रिता ॥ ४ ॥

तासां तद्वचनं श्रुत्वा अवमानात्तदा त्वया । प्राणामुक्तास्तुयोगेनपुरतस्तासुपार्वति

अथ ताः शोकसंतप्तागतायत्रप्रजापतिः । आचख्युःसकलंवृत्तं दक्षस्याग्रे यथातथम्

तच्छ्रुत्वा दारुणं वाक्यं दक्षो नोवाच किञ्चन ।। ७ ॥

मया दृष्टा यदादेवि भूमौ पञ्चत्वमागता । यज्ञप्रध्वंसनार्थाय तदा वै प्रेरिता गणाः

ते गत्वाऽथगणारौद्राःशतशोऽथसहस्रशः । विरूपा भीषणारौद्रानानाशस्त्रामहाबलाः

मुमुचुः शरवर्षाणि कुर्वन्तो भैरवान् रवान् ॥ ६ ॥

ततो देवगणाःसर्वेवसवःसहभास्करैः । विश्वेदेवाश्चसाध्याश्चधनुर्हस्तामहाबलाः

युद्धाय च विनिष्क्रान्ता मुमुचुः सायकान्सितान् ।

ते समेत्याथ युयुधुः प्रमथा विबुधैः सह । मुमुचुः शरवर्षाणि वारिधारा यथाघनाः

तेषां मध्ये गणो नाम वीरभद्रो महाबलः । स शक्रं ताडयामास शूलेन हृदये तथा
स तु तेन प्रहारेण विसंज्ञो निषसाद ह । अथ मुष्ट्या हतःकुम्भेनागऐरावतस्तथा
स हतः सहसा तेन गजेन्द्रो भैरवान्रवान् । विनदन्भयमास्थाय यज्ञवाटमुपाद्रवत्
एतस्मिन्नन्तरेदेवाःकृतास्तेनपराङ्मुखाः । ततस्तेशरणंजग्मुर्विष्णुं विश्वैकनायकम्

ततः कोपसमाविष्टो विष्णुर्दृष्ट्वा दिवालयान् ।
गणैर्विद्रावितान्सर्वान्मुमोचाशु सुदर्शनम् ॥ १६ ॥

तदापतत्तु वेगेन चक्रं विष्णोः सुदर्शनम् । प्रसार्य वक्त्रं सहसाह्युदरस्थं चकार ह
तस्मिश्चक्रे तदा ग्रस्ते ह्यमोघे दैत्यसूदने । क्रुद्धो नारायणो देवि! वीरभद्रमुपाद्रवत्
गृहीत्वा पादयोर्भूमौ निजघानातिदूरतः । हन्यमानस्याथ भूमौ गदयाचसुदर्शनम्
रुधिरोद्गारसंयुक्तं वक्त्रात्तच्च विनिर्गतम् । मत्तो लब्धवरो देवि वीरभद्रो गणोत्तमः

न तु पञ्चत्वमापन्नो गदया ताडितोऽपि सः ॥ २० ॥

ततस्तु प्रमथाःसर्वेविष्णुवीर्यबलार्दिताः । कृच्छ्रेणसहसाप्राप्तायत्राहंदेविसंस्थितः

मां दृष्ट्वा शूलहस्तं तु विष्णुश्चान्तरधीयत ।
इन्द्रोऽपि त्रिदशैः सार्द्धं पितृभिर्ब्राह्मणैः सह ॥ २२ ॥

मत्तस्त्रासपरीतात्मा ततश्चादर्शनं गतः । एवं विध्वंसिते यज्ञे नष्टो देवगणो यदा ॥
मया निरूपितो देवि स्वर्गद्वारे गणस्तदा । प्रवेशो नैव दातव्यस्त्रिदशानां गणेश्वर
द्वारावरोधः कर्त्तव्यो यत्नतः शासनान्मम । यःकोपिदृश्यते देवःसहंतव्योन संशयः

उद्वसश्च ततो जातः स्वर्गो देवा विनिर्जिताः ॥ २६ ॥

स्वर्गद्वारे निरुद्धे तु शक्राद्या भयविह्वलाः। ब्रह्मलोकं गता देवा मन्त्रयित्वापुनःपुनः
तस्याग्रे कथितं सर्वं स्वर्गद्वारावरोधनम् । महेश्वरगणैर्व्याप्तं स्वर्गद्वारं पितामह
प्रवेशो दुर्लभो जातःकृतेद्वारावरोधने । केनोपायेन यास्यामःस्वर्गलोकंतथाविधम्

नास्माकं जायते प्रीतिर्विना स्वर्गं पितामह! ॥ ३० ॥

इति तेषां वचः श्रुत्वाप्रोक्तं तुब्रह्मणा तदा । आराध्यः शङ्करोदेवोमहादेवोजगत्पतिः
स्तुत्योवन्द्योनमस्कार्यःसृष्टिसंहारकारकः। दुर्लभस्तुसुराःस्वर्गोविनातस्यप्रसादतः

गोप्तांस्रष्टा समर्थश्च स चास्माकं परा गतिः। सएवाराधनीयस्तुसचपूज्यतमो मतः
तस्मात्सर्वप्रयत्नेन गम्यतां शरणं शिवः। उपायंकथयिष्यामिश्रूयतांसावधानतः
त्रिदशैः सहितः शक्र! तूर्णंगच्छममाज्ञया। महाकालवने रम्ये कपालेश्वरपूर्वतः॥
स्वर्गद्वारपरं लिङ्गं विद्यते तत्तु वासव!। लोकानामनुकम्पार्थं महादेवेन निर्मितम्

तमाराधयत क्षिप्रं स वः कामं प्रदास्यति ॥ ३६

ब्रह्मणो वचनं श्रुत्वा त्रिदशा मुदिता भृशम्। समायाता महादेवि महाकालवनंतदा
स्वर्गद्वारप्रदं पुण्यं ददृशुर्लिङ्गमुत्तमम्। तस्य दर्शनमात्रेण स्वर्गद्वारमपावृतम्॥
स्वर्गलोकं गताः सर्वे यथा पूर्वंयशस्विनि। निःशङ्कांस्त्रिदशान्दृष्ट्वाविज्ञप्तोऽहंगणैस्तदा
मयाज्ञताश्च ते सर्वे निवर्त्तध्वं गणोत्तमाः। स्वयमेवप्रतिज्ञातं कथंमिथ्याभविष्यति
स्वर्गद्वारप्रदो देवो दृष्टो देवैर्न संशयः। महाकालवने रम्ये कथितो हि विरञ्चिना

स्वर्गद्वारं गताः सद्यः शक्राद्यास्त्रिदशा गणाः।
अतःप्रभृति विख्यातः स्वर्गद्वारेश्वरः शिवः॥ ४२॥
ख्यातिं यास्यति भूलोके स्वर्गलोकप्रदायकः॥ ४३॥

येपश्यन्तिनरालोकेस्वर्गद्वारेश्वरंशिवम्। तेयान्तिस्वर्गलोकंहिस्वर्गद्वारेश्वरार्चनात्
स्वर्गद्वारेश्वरं देवं ये पश्यन्ति प्रसङ्गतः। न तेषां भयमस्तीति कल्पकोटिशतैरपि
अश्वमेधसहस्रेण यत्पुण्यं समुदाहृतम्। तत्पुण्यमधिकं देवि!स्वर्गद्वारेश्वरार्चनात्

जन्मान्तरसहस्रेण यत्पापं पूर्वसञ्चितम्।
य (त) त्पापं विलयं यान्ति (ति) लिङ्गस्यास्य च कीर्त्तनात्॥ ४७॥

अष्टम्यां वाचतुर्दश्यामथवाचन्द्रवासरे। ये पश्यन्तिनराभक्त्यास्वर्गद्वारेश्वरंशिवम्

ते देवि! मे शरीरं तु प्रविष्टास्त्वपुनर्भवाः॥ ४८॥
दशकोटिसहस्राणितस्मिँल्लिङ्गे तु पूजिते।
पूजितानि भवन्तीह लिङ्गान्यन्तःस्थितानि तु॥ ४९॥
स्पर्शनात्तस्य लिङ्गस्य कीर्त्तनाद्यजनात्तथा।
सुखेन स्वर्गमायान्ति यथा कामानवाप्नुयात्॥ ५०॥

अकामा वा सकामा वा ये पश्यन्ति दिने दिने ।
तेऽपि पुण्यां महाभागाः स्वर्गलोकं प्रयान्ति वै ॥ ५१ ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये स्वर्गद्वारेश्वरमाहात्म्यवर्णनं नाम
नवमोऽध्यायः ॥ ९ ॥

---

# दशमोऽध्यायः

## कर्कोटकेश्वरमाहात्म्यवर्णनम्

श्रीमहादेव उवाच

कर्कोटेश्वरसञ्ज्ञश्च दशमं विद्धि पार्वति! । यस्य दर्शनमात्रेण विषैर्नैवाभिभूयते ॥ १
मात्रा च भुजगाः शप्ताःस्ववचोभङ्गकारणात् । मद्वचोनकृतंयस्माद्भवद्भिःपापकर्मणि
वह्निर्हिंधक्ष्यतेयष्मान्सत्रेजन्मेजयस्यहि । श्रुत्वाशापंततो मातुर्मृत्युभीताश्चपन्नगाः
गताः सर्वे यथास्थानं जीवनार्थंयशस्विनि!। हिमशैलं गतः शेषस्तपःकर्त्तुं ततःप्रिये
सर्पश्च कम्बलोनाम लोकं पैतामहं गतः । शङ्खचूडोऽथ नागेन्द्रो मणिपूरं गतस्ततः
यमुनाम्भसि सँल्लीनः कालियो भयविह्वलः ॥ ६ ॥
एवं ते सर्पराजानो नागाः सुस्मितशोभने । कुरुक्षेत्रे गताःसर्वे तपश्चंतुं यशस्विनि
धृतराष्ट्रस्तथा नागः प्रयागमगमत्प्रिये! ॥ ७ ॥
एलापत्रस्तु नागेन्द्रो ब्रह्मलोकं जगाम ह । प्रणम्य तमथोवाच मातुरुत्सङ्गसंस्थिताः
मात्रा शप्ता वयं देव क्रुद्धया तव सन्निधौ । सा कथं शापकाले तु भवताननिवारिता

ब्रह्मोवाच

निषिद्धानैव ते माताभाविकर्मबलान्मम । सर्पसत्रो हि भवितराज्ञोजन्मेजयस्यच
त्वंचवत्सममादेशान्महाकालवनंव्रज । शान्त्यर्थंसर्वनागानांभक्त्या युक्तस्तुसत्वरम्

समाराधय देवेशं महामायासमीपतः । भविता तत्र ते सिद्धिर्देवदेवप्रसादतः ॥१२॥
तत्र गत्वाथकर्कोटः स्वयं देवि समाहितः । देवमाराधयामासमहामायापुरःस्थितः
तस्य तुष्टोऽथ देवेशो वरं प्रादाद्यशस्विनि! ॥ १३ ॥
ये दन्दशूकाः क्रूराश्च पापाचारा विषोल्बणाः ।
तेषां विनाशो भविता न तु ये धर्मचारिणः ॥ १४ ॥
भक्त्यातवाद्यतुष्टोऽस्मित्वंमेसायुज्यतांव्रज। देवेतत्रविलीनोऽथनागःकर्कोटकःप्रिये
कर्कोटकेश्वरः ख्यातस्ततोदेवोमहेश्वरः । तस्यदर्शनमात्रेणव्याधयोयान्तिसङ्क्षयम्
यस्तंपूजयते देवं भक्त्यायुक्तोहिमानवः । ऐश्वर्यं जायते तस्य कुलानांतारयेच्छतम्
व्याधिता व्याधितो मुक्तो दुःखी दुःखात्प्रमुच्यते ।
दर्शनात्तु भवेत्सद्यः सर्वपातकवर्जितः ॥ १८ ॥
नियमेन प्रपश्यन्ति ये च कर्कोटकेश्वरम् ।
ते सर्वकामान्नाप्स्यन्ति वसन्त्यन्ते च मत्पुरे ॥ १९ ॥
पञ्चम्यां च चतुर्दश्यां ये पश्यन्तिरवेर्दिने । नतेषांतुकुलेसर्पाःपीडांकुर्वन्तिकर्हिचित्
या नारी दुर्भगासापि सौभाग्यं लभते सदा । गुर्विणीलभतेपुत्रमरोगं कुलभूषणम्
शिशुग्रहाश्च नश्यन्ति नापमृत्युभयं भवेत् ॥ २१ ॥
यंयं काममभिध्यायन्मनसा भक्तिमान्नरः । तंतं दुर्लभमाप्नोति कर्कोटेश्वरदर्शनात्
एष ते कथितो देवि! प्रभावःपापनाशनः ।कर्कोटकेश्वरदेवस्यश्रृणु सिद्धेश्वरं परम्

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये कर्कोटकेश्वरमाहात्म्यवर्णनं नाम
दशमोऽध्यायः ॥ १० ॥

---

# एकादशोऽध्यायः

## सिद्धेश्वरमाहात्म्यवर्णनम्

### श्रीमहादेव उवाच

लिङ्गमेकादशं विद्धि देवि! सिद्धेश्वरं शुभम् । वीरभद्रसमीपे तु सर्वसिद्धिप्रदायकम्
देवदारुवने पूर्वं विप्रायोगसमन्विताः । स्पर्द्धया सिद्धिलब्ध्यर्थं तपोऽकुर्वतसंयताः
शाकाहारा निराहाराः पर्णाहारास्तथापरे । दन्तोलूखलिनः केचिदश्मकुट्टास्तथापरे
केचिद्वीरासनरता धूम्रपानरताः परे । पादैरूर्ध्वैरधोवक्त्रैः केचिदभ्रावकाशिकाः॥

कृच्छ्रचान्द्रायणादीनि कुर्वन्त्यन्ये समाहिताः ।
न चापि परमा प्राप्ता सिद्धिर्वर्षशतैरपि ॥ ५ ॥
दुःखार्त्ताश्चिन्तयामासुः कथं सिद्धिर्भविष्यति ।
तपसा दुष्करेणैव सिद्धिर्नैवात्र लभ्यते ॥ ६ ॥

व्यर्थाश्रुतिस्तथा जाता या गीतामुनिभिःपुरा । तपसालभतेसर्वंतपोमूलमिदञ्जगत्
अञ्जनं गुटिकाचैवपादुकागमनं तथा । खड्गसिद्धिर्विलेवासश्चिन्तामणिरपेक्षितम्
एवंतेऽचिंतयन्सिद्धाःपरमामर्षपूरिताः । उत्सार्यतत्तपोधर्मं नास्तिक्यं भावमागताः

एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ।
आश्वासयन्ती तान्सिद्धान्माता पुत्रमिवौरसम् ॥ १० ॥

माऽवमन्यध्वमार्या हि श्रुतिर्व्यर्थामहीतले । तपोननिन्द्यंधर्मोवाश्रूयतामत्रकारणम्
भविता भवतां सिद्धिरत्र नैव तपोधनाः । स्पर्द्धयासिद्धिकामैश्च तपस्तद्विकृतंवृथा
कामाच्च तपसोहानिरहङ्काराच्चविस्मयः । क्रोधाल्लोभात्तथा मोहाज्जायतेनात्रसंशयः

स्पर्द्धया रहितो यस्तु कामक्रोधविवर्जितः ।
करोति कर्म भावेन स तपःफलमश्नुते ॥ १४ ॥

वासनावासितो यस्तु एकचित्तःसमाहितः । आस्तिकःश्रद्दधानश्चसतपःफलमश्नुते

मातृवत्परदाराणि परद्रव्याणिलोष्ठवत् । यः पश्यति नरोनित्यं स तपः फलमश्नुते
ईदृशे पुरुषे विप्रास्तपःसिद्धिश्च दृश्यते । भवन्तः स्पर्द्धया चैव कृतवन्तश्च दुष्करम्
तस्माद्वर्षसहस्रेण नैव सिद्धिर्भविष्यति ।
यदि मद्वचनं कार्यं निर्विकल्पेन चेतसा ॥ १८ ॥
महाकालवनं गत्वा यूयं सर्वे समाहिताः । आराधयध्वं देवेशं सदासिद्धिप्रदायकम्
दर्शनात्तस्यदेवस्यलभ्यते सिद्धिरुत्तमा । सनकादयोऽपि ये देवमासाद्ययोगतत्पराः
पूजयित्वाऽपि भावेन संसिद्धिं परमां गताः ॥ २० ॥
राज्ञा वसुमता पूर्वं खड्गसिद्धिःसुदुर्लभा । प्राप्ता दर्शनमात्रेण लिङ्गस्यास्य प्रभावतः
पादुकागमनं लब्धं हैहयेन महात्मना । कृतवीरात्मजेनैव वाहानां च सहस्रकम् ॥
अदृश्यकरणं चैव प्राप्तं चानूरुणा पुरा । स्वर्णसिद्धिश्च सिद्धेन पादलेपो रसायनम्
अञ्जनञ्च तथा लब्धं लिङ्गस्यास्य च दर्शनात् ॥ २३ ॥
आकाशवचनं श्रुत्वा ते सिद्धा विस्मयान्विताः ।
समायाता मुदा युक्ता महाकालवनोत्तमे ॥ २४ ॥
सर्वसिद्धिप्रदं चैव ददृशुर्लिंगमुत्तमम् । दर्शनात्तस्य लिङ्गस्य संसिद्धिं परमांगताः
ततः प्रभृति विख्यातो देवैः सिद्धेश्वरः परः ।
ये पश्यन्ति नरा देवि! देवं सिद्धेश्वरं परम् ।
न तेषां दुर्लभा सिद्धिर्भविष्यति महीतले ॥ २६ ॥
सिद्धेश्वरं गमिष्यन्ति भावहीनाः प्रसङ्गतः ।
संसिद्धास्ते भविष्यन्ति नियता नात्र संशयः ॥ २७ ॥
महापातकसंयुक्तो यस्तु सिद्धेश्वरंस्मरेत् । संसिद्धस्तुभवेन्नूनंज्ञानैश्वर्यसमन्वितः
नियमेन तुयःपश्येद्देवंसिद्धेश्वरंपरम् । षण्मासाज्जायतेसिद्धिर्वाञ्छितायाभवेद्धृदि
अष्टम्यां च चतुर्दश्यांकृष्णपक्षेविशेषतः । सिद्धेश्वरंतुयःपश्येत्सपश्येन्ममन्दिरम्
अपुत्रो लभते पुत्रंनिर्धनस्तु धनं लभेत् । विद्यार्थीलभतेविद्यांभार्यार्थीलभतेस्त्रियम्
सङ्क्रान्तौ सोमवारे च ग्रहणे चैव योऽर्चयेत् ।

कुलानां शतमुद्धृत्य पैतृकं स्वाधिकं प्रिये! । मोदते ममलोके च यावदिन्द्राश्चतुर्दश
एष ते कथितो देवि! प्रभावःपापनाशनः । सिद्धेश्वरस्य देवस्यलोकपालेश्वरंशृणु

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्येसिद्धेश्वरमाहात्म्यवर्णनं नामैकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः

### लोकपालेश्वरमाहात्म्यवर्णनम्

श्रीहर उवाच

द्वादशं विद्धिदेवेशि लोकपालेश्वरं शिवम् । यस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते
पुरा दैत्यगणा देवि! प्रादुर्भूताः-सहस्रशः । हिरण्यकशिपोर्वक्षःस्थलादतिपराक्रमाः

तैरियं वसुधा व्याप्ता सशैलवनकानना ।
विध्वस्ताः स्वाश्रमाः सर्वे यज्ञा विध्वंसितास्तथा ॥ ३ ॥

ब्राह्मणा भक्षिताश्चैववेदवेदाङ्गपारगाः । पूरितान्यग्निकुण्डानि पांसुना मधुना तथा

विध्वस्ताः कलशाः सर्वे मृद्भाण्डादि च चूर्णितम् ।
निःस्वाध्यायवषट्कारा स्वधास्वाहाविवर्जिता ॥ ५ ॥

कृता च धरणी देवि नष्टयज्ञोत्सवाभवत् । लोकपालास्ततोभीतामाधवंशरणंगताः
ऊचुः प्राञ्जलयः सर्वे क्षुधार्तादुखिताःकृताः । वयं ग्लानिगता देव यज्ञभागंविनाकृताः
वयं त्रातास्त्वया पूर्वं नमुचेर्वृषपर्वणः । हिरण्यकशिपो रौद्रान्नरकाच्च मुरोस्तथा

तथा रक्ष सुरश्रेष्ठ! भयं नः समुपस्थितम् ॥ ६ ॥

तेषां तद्वचनं श्रुत्वा शङ्खचक्रगदाधरः । जगाम स ततो दैत्याः प्रविष्टा वरुणालयम्

ते निष्क्रम्य ततो रात्रौ निघ्नन्ति द्विजसत्तमान् ।
तापसान्दीक्षितान्देवि! धर्मव्रतपरायणान् ॥ ११ ॥

अथस्वर्गंगताःक्रान्तेजितःशक्रोमरुत्पतिः। तथैवदक्षिणामाशांधर्मराजोजितस्ततः
गत्वाथ पश्चिमामाशां जलराजो विनिर्जितः। उत्तरेधनदोदेवितैर्दैत्यैःसविनिर्जितः
ततस्तेव्याकुलाजाताविष्णुं शरणमागताः। उपायःकथितोदेविदेवेभ्योविष्णुनातदा
महाकालवनं गत्वा देवा भक्त्या समाहिताः। आराधयत सर्वेशं शङ्करंलोकशङ्करम्
भवतांभवितासिद्धिस्तत्रतस्यप्रसादतः। इतितस्यवचःश्रुत्वाकृष्णस्यामिततेजसः

प्रस्थिता लोकपालास्ते महाकालवने शुभे ॥ १७ ॥
तावत्तत्रैव संरुद्धा दैत्यैः शस्त्रधरैस्तदा।
भूयो नष्टाश्च सम्प्राप्ता यत्र देवो जनार्दनः ॥ १८ ॥

कथयामासुरत्युग्रं यथा रुद्धं जगत्त्रयम्। नारायणेन ते प्रोक्ता लोकपालाः पुनःपुनः
यूयंव्रतधराभूत्वाकपालैश्चविभूषिताः। खट्वाङ्गधारिणःशान्ताःपञ्चमुद्राविभूषिताः
भस्मभूषितसर्वाङ्गाः क्षुद्रघण्टाविराजिताः। महाव्रतधराभूत्वा महाकालवनोत्तमम्

गच्छध्वं ब्रह्मणा सार्द्धं पादबद्धैश्च नूपुरैः ॥ २१ ॥

अथतेलोकपालाश्चश्रुत्वाकृष्णस्यभाषितम्। समायातामहादेविकृत्वाकापालिकंवपुः
तत्र दृष्टं महल्लिङ्गं तेजसांराशिमद्भुतम्। स्तुतं च विविधैःस्तोत्रैर्लोकपालैःपुनःपुनः

ततस्तु तस्य लिङ्गस्य वह्निज्वाला विनिःसृता।
यया ते दानवाः सर्वे दग्धा भस्मत्वमागताः ॥ २४ ॥
ज्ञात्वा लिङ्गस्य माहात्म्यं नाम चक्रुः समाहिताः।
सेवितं लोकपालैस्तु लिङ्गं तेजोमयं परम ॥ २५ ॥
लोकपालेश्वरोनाम ख्यातिं यास्यति भूतले।
इत्युक्त्वा त्रिदशाः सर्वे लोकपालैः समावृताः।
स्वस्वस्थानं गता दिव्यं यथापूर्वं मुदान्विताः ॥ २६ ॥

ये पश्यन्ति नरा देवि लोकपालेश्वरं शिवम्। समृद्धिभिःसुसंपन्नाभवेयुर्जन्मजन्मसु
न दारिद्र्यं न च व्याधिर्नाकालमरणंतथा। ऐश्वर्यं चातुलं तेषांजायतेदर्शनात्सदा
यो यमुद्दिश्य वै कामं दर्शनं तु करिष्यति। तस्य तज्जायते सर्वं मृतस्यपरमागतिः

अश्वमेधस्य यज्ञस्यसम्यगिष्टस्य यत्फलम् । तत्फलंलभतेदेविलोकपालेश्वरार्चनात्
प्रसङ्गेनापि यः पश्येल्लोकपालेश्वरं शिवम् । मोदतेस्वर्गलोकेसलोकपालैःसमंसदा
सङ्क्रान्तौ सोमवारे च चतुर्दश्यांविशेषतः । येपश्यन्तिनराभक्त्याह्यष्टम्यामयनद्वये
ते दुर्द्धर्षा भवन्तीहशत्रूणांसङ्गरे तथा । मृता यान्ति विमानेन शक्रलोकंसुदुर्लभम्
क्रमेण वारुणं लोकं धनदस्य यथासुखम् । पुनःपैतामहं यान्ति लोकं देवैःसुदुर्लभम्
एव ते कथितो देवि प्रभावः पापनाशनः । दुर्लभः परमो गुह्यं कामेश्वरमथो श्रृणु

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्ये लोकपालेश्वरमाहात्म्यवर्णनं नामद्वादशोऽध्यायः ॥ १२॥

---

## त्रयोदशोऽध्यायः

### कामेश्वरमाहात्म्यवर्णनम्

हर उवाच

विद्धि कामेश्वरं देवि तत्र लिङ्गंत्रयोदशम् । यस्य दर्शनमात्रेणसौभाग्यंजायतेशुभम्
ब्रह्मणोध्यायमानस्यप्रजाकामस्यपार्वति । उत्पन्नोऽर्कप्रभाकारोलावण्यनिचयोमहान्

अलङ्कारावृतः कान्तो दिव्यमण्डनमण्डितः ॥ २ ॥
तं दृष्ट्वा परमं दिव्यं कान्तं सौभाग्यशोभितम् ।
अप्रतर्क्यमविज्ञेयं ब्रह्मा प्रोवाच तं तदा ॥ ३ ॥

कोभवान्किनिमित्तं तु इह वा किमुपागतः ।वद त्वं मन्मथाकार कन्दर्प इव लक्ष्यसे

ब्रह्मणो वचनं श्रुत्वा प्रोक्तं तेनैव सादरम् ।

अहंते सृष्टिकामस्यभावेनविहितोंऽशकः । प्रजापतेमहाभागकिंकरोमिदिशस्वमाम्

ब्रह्मोवाच

मया तुसृष्टिकामेन ये प्रजापतयः कृताः । न ते शक्ताःप्रजाःस्रष्टुं कामैतेसुखमाप्नुयुः

त्वमग्रणीः प्रजासर्गेत्वदधीनमिदं जगत् । कुरु सृष्टिं विचित्रांचकंदर्प मम शासनात्
इत्युक्तो ब्रह्मणादेवि जगामादर्शनं स्मरः । क्रुद्धेनब्रह्मणाशप्तोविनाशं यास्यसिध्रुवम्
मद्वचो न कृतं यस्माद्वृषनेत्रोद्भवाग्निना । तच्छ्रुत्वा दारुणं शापं कन्दर्पो भयविह्वलः
ब्रह्माणं प्रणतो भूत्वा प्रह्वः प्राञ्जलिरब्रवीत् ॥ ६ ॥
प्रसीद देवदेवेश अनन्यगतिके मयि । नहि निर्भरतां यान्ति प्रभूणामाश्रिते रुषः

ब्रह्मोवाच

यस्मात्ते भक्तिरतुलाममोपरिमहामते । तस्मात्स्थानानिदत्तानितवद्वादशसङ्ख्यया
कामिनीनां कटाक्षेषु केशपाशेषु चैव हि । जघनस्तननाभौ तु दोर्मूलेऽधरपल्लवे
वसन्ते कोकिलालापे ज्योत्स्नायां जलदागमे ।
कामार्थे च मया दत्तौ सबलौ मधुमाधवौ ॥ १३ ॥
स्त्रियोऽमृतमया धन्याः संसारे सारकारणम् ।
रत्नैश्चैव निधानानि सन्तानार्थं विनिर्मिताः ॥ १४ ॥
एताभिर्वरनारीभिर्जगदेवं वशीकृतम् । स्त्रीभिरासक्तमनसः कुतः पुंसो मनस्विता
कुतश्चापि स्ववशता स्त्रीगौरवगतस्य च । स्त्रिय एव विनाशाय पूर्वेषाममरद्विषाम्
स्त्रिय एव हि देवानामिन्द्रादीनां भयाश्रयाः । नारीभिर्लब्धवृत्तश्चपुरुषस्यापिसर्वतः
पराभवः प्रभवति विवशत्वं च भीषणम् । स्त्रीभिराजितचित्तस्यसुलभोविपदोदयः
इत्युक्तोमन्मथोभद्रे ब्रह्मणाच विसर्जितः । दत्त्वा वै पुष्पकं चापं तथावैबाणपञ्चकम्
रतिप्रीतिसमायुक्तो झषकेतुर्मनोभवः । विडम्बयति लोकांस्त्रीन्ससहायो धनुर्धरः
पण्डितांस्तापसान्वीरान्सुधियश्च जितेन्द्रियान् ।
काले कुशलभावज्ञान्देवान्पितृगणांस्तथा ॥ २१ ॥
भूतप्रेतपिशाचांश्च यक्षगन्धर्वकिन्नरान् । कृमिकीटपतङ्गांश्च भूतग्रामं चतुर्विधम्
ममार्थे च कृतो यत्नश्चिन्तयित्वा पुनः पुनः । दुःसाध्यः शङ्करो देवः श्रूयते भुवनत्रये
तस्य देवस्य कः शक्तः क्षोभणार्थं मया विना ॥ २३ ॥
इत्युक्त्वा तु समायातो यत्राऽहं तपसि स्थितः ।

रत्यायुतः स गर्वेण सख्याऽयं मधुनाश्रितः ॥ २४ ॥
दृष्टवान्मां तदा कामः पिङ्गकूटजटासटम् ।
किञ्चिन्निमित्ततोऽनिद्रं भोगीन्द्रकृतभूषणम् ॥ २५ ॥

प्रेक्षमाणमृजुस्थानं नासावंशाग्रलोचनम् । ततोऽवमरकाकारमालं व्याश्रयमात्रकम्
प्रविष्टः कररन्ध्रेण मदनो हृदये मम । रत्यर्थं कामतप्तेन संस्मृता भवती मया ॥ २७
समाधेर्भावना दिव्या लक्ष्यप्रत्यक्षरूपिणी । गता मम विमलता तत्क्षणादेवपार्वति
उन्मत्ततां गतोऽहं वै विकृतिमदनात्मिकाम् । निराकृतं मयादेवि धैर्यमालंव्ययत्नतः
दृष्टो मयात्महृदये मन्मथोऽपथ्यकारकः । देहस्थं निर्दहिष्यामि प्रत्याहारप्रयोगतः
अमानुषींव्रजेद्योनिंयोगिनं प्रविशेद्यदि । वाह्याग्नौधारणांकृत्वा देहसंस्थे विनिर्दहेत्

एतस्मिन्नन्तरे सोऽपि सन्तप्तो मदनो भृशम् ।
इच्छाशरीरो दुर्ज्ञेयो निःसृतो व्यसनात्मकः ॥ ३२ ॥

सहकारतरोर्मूले भूत्वा मधुसखस्तदा । मुमोच मोहनंनाम मार्गणं मकरध्वजः ॥
स चापि हृदयेप्राप्तो मदीयेलीलयाशरः । ततोऽहंकुपितो देवि नेत्रं कृत्वातृतीयकम्
तन्नेत्रविस्फुलिङ्गेन क्रोशतांनाकवासिनाम् । गमिताभस्मसात्तूर्णं कंदर्पःकामिदर्पकः
तस्मिन्दग्धेततःकामे रतिःशोकपरायणा । विललाप सुदुःखार्त्तापतिभक्तिपरायणा

हा नाथ हा मम प्राण हा स्वामिन्कि जहासि माम् ।
पतिव्रतां पतिप्राणां कस्मान्मां त्यजसि प्रभो! ॥ ३७ ॥

एवं च विलपंतीं तां वागुवाचाशरीरिणी । मा त्वं रुद विशालाक्षिपुनरेष पतिस्तव
प्रसादाद्देवदेवस्य उत्थास्यति शिवस्य च ॥ ३८ ॥

प्रार्थितोऽहं ततो देवि! तस्मिन्नवसरे प्रिये । एव कामस्त्वया दग्धः क्रोधेन परमेश्वर
येनानेन प्रभो नष्टा सृष्टिर्वै धरणीतले । कृपां विधेहि देवेश दीनायै देहि मे पतिम्
ततोऽहमब्रुवं देवि तां रतिं दीनभाषिणीम् । अनेन मदनेनाद्य कृतं तरलितं मनः ॥
ततो दग्धं मयास्याङ्गंजीवये त्वत्प्रसादतः । अङ्गं दग्धंमयास्याद्य तृतीयनेत्रवह्निना
तस्मादनंगएवैष प्रजासुविचरिष्यति । अनङ्गोऽपि यदावंत्यां लिङ्गं संसेवयिष्यति

देवानामनुकम्पार्थमनङ्गोऽसौ कृतो मया। त्रिदशैश्चसमादिष्टःकामोऽवन्त्यांजगामह
तत्र गत्वा ह्यनङ्गोऽपि भक्तिभावसमन्वितः। ददर्श परमं लिङ्गंसमीहितफलप्रदम्

प्रोक्तं तुष्टेन लिङ्गेन काम काममवाप्स्यसि।
अनङ्गोऽपि समर्थस्त्वं भविष्यसि न संशयः॥ ४६॥
जन्म प्राप्स्यति रुक्मिण्या गर्भे कृष्णस्य सङ्गमात्।
भविता विश्रुतो लोके नाम्ना शम्बरसूदनः॥ ४७॥
अनङ्गेन त्वया यस्मान्मनसा तोषितोऽपि सन्।
तस्मात्ख्यातिं गमिष्यामि त्वन्नाम्ना काम! सर्वदा॥ ४८॥

ये त्वांपश्यन्तिकन्दर्पंभक्त्या परमयायुताः।प्राप्नुवन्तिगतिंनित्यंतेसदानन्ददायिकाम्
दीर्घायुषो भविष्यन्तिरूपं तेषांभविष्यति। कुलंचनिर्मलंतेषांये त्वांपश्यंतिमन्मथ

ऐश्वर्यं परमान्भोगान्स्त्रियो दिव्यकलान्विताः
अरोगा सन्ततिस्तेषां भविष्यति न संशयः॥ ५१॥

चैत्रशुक्लत्रयोदश्यां येमां पश्यन्तिभक्तितः। देवलोकंसमासाद्यमोदिष्यन्तिहितेनराः

यक्षा गणेश्वराः सिद्धाः सिद्धगन्धर्वसेविताः।
रुद्रलोकं गमिष्यन्ति विमानैः सर्वकामिकैः॥ ५३॥

इत्युक्तःकामदेवोऽपि लिङ्गेन परमेश्वरि!। तत्राश्रमपदं चक्रेतस्य लिङ्गस्य सन्निधौ
एष ते कथितो देवि प्रभावः पापनाशनः। कामेश्वरस्य शृण्वग्रे कुटुम्बेश्वरवैभवम्

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्ये कामेश्वरमाहात्म्यवर्णनंनाम त्रयोदशोऽध्यायः॥ १३॥

---

# चतुर्दशोऽध्यायः

## कुटुम्बेश्वरमाहात्म्यवर्णनम्

### श्रीमहादेव उवाच

कुटुम्बेश्वरसञ्ज्ञं तु देवं विद्धिचतुर्दशम् । यस्य दर्शनमात्रेण गोत्रवृद्धिश्च जायते ॥
यदा देवासुरैः पूर्वं मथितः क्षीरसागरः । तदा च निर्गतं देवि दुर्द्धरं दुःसहं विषम्
कालकूटमयं रौद्रंविषं ज्वालाविभीषणम् । दह्यते च जगत्तेन सदेवासुरमानुषम् ॥
ततो देवगणाः सर्वे सासुरा यक्षराक्षसाः । विषज्वालातिभीताश्च मामेवशरणंगताः
स्तुतोऽहं विविधैः स्तोत्रैरिदमुक्तं वरानने! ।अमृतार्थे कृतोयत्नःसम्प्राप्तं मरणं विभो
अन्यथा चिन्तितं कार्यं दैवेनकृतमन्यथा । अतिमथितुमारब्धे लोभाद्वै क्षीरसागरम्
उत्पन्नं कालकूटं तु येन दग्धं चराचरम् । ततोऽस्माकं भयं जातं कालकूटोद्भवंप्रभो
रक्षां कुरु जगन्नाथ शरणागतवत्सल! । हितार्थं सर्वलोकानां यथा न प्रलयो भवेत्

मया तेषां वचः श्रुत्वा त्रिदशानां यशस्विनि! ।
मायूरं रूपमास्थाय देवानामनुकम्पया ।
कण्ठे धृतं महारौद्रं कालकूटाह्वयं तदा ॥ ६ ॥

त्वं भीता सहसानष्टारूपंदृष्ट्वातुमामकम् । विषवृक्षमसेव्यंतुततोऽहं दुःखितोऽभवम्
नदीसंघसमायुक्ता गङ्गा दृष्टा च पार्श्वतः । साचप्रोक्तामयादेविसादरंस्तुतिपूर्वकम्
कालकूटविषंगङ्गे वेगान्नय महोदधिम् । नान्या शक्तासमानेतुं त्वांविनालोकपावनि

### गङ्गोवाच

नास्ति मे भगवञ्छक्तिर्विवोढुं चजगत्पते!। रौद्ररूपी च दुःसेव्यो दहत्येवनसंशयः

ततस्तु यमुना प्रोक्ता न समर्था सरस्वती ।
अन्याश्च विविधा नद्यो मयाहूताः पृथक्पृथक् ॥ १४ ॥

अशक्तास्ताः समानेतुं कालकूटाह्वयं विषम् । तदाहूता मया देवि शिप्राब्रह्मसमुद्भवा

शिप्रे पुत्रि ममादेशान्महाकालवनं व्रज । गृहीत्वा कालकूटं तु पुरः कामेश्वरस्यहि
विद्यते परमं लिङ्गं तस्मिँल्लिङ्गे नियोजय । मयाप्रोक्ता तदाप्राहब्रह्मणः परमा कला ।
एषास्मिप्रस्थितादेवतववाक्यादसंशयम् । दुःस्पर्शःकालकूटोऽयंनूनंमांभक्षयिष्यति
असेव्याहं भविष्यामिदुष्टसंपर्कयोगतः । ततो मया पुनःप्रोक्ताशिप्रापातकनाशिनी

यानि तीर्थानि भूलोके पाताले यानि सन्ति वै ।
स्वर्गलोके ह्यन्तरिक्षे पुण्यानि चारुहासिनि! ॥ २० ॥

तानि सर्वाणिसेवार्थमागत्यममवाक्यतः । आज्ञांतवकरिष्यन्तिगच्छपुत्रिममाज्ञया
एवमुक्ता तदा शिप्रा गृहीत्वा कालकूटकम । समायाता वरारोहे यत्रलिङ्गमनुत्तमम्
तद्विषं कालकूटाख्यं निक्षिप्तंलिङ्गमूर्द्धनि । विषलिङ्गस्ततोजातोदृष्टोमृत्युप्रदायकः

पशुः पक्षी नरो वापि यो हि पश्यति तं शिवम् ।
म्रियते स तदा देवि! तस्य देवस्य दर्शनात् ॥ २४ ॥

तीर्थयात्रां ततः कर्त्तुं तत्रायातास्तपोधनाः । तंचदेवंततोदृष्ट्वामृताःसर्वेचतत्क्षणात्
ततो हाहाकृतं देवि त्रैलोक्यं सचराचरम् । हाहाकारं महच्छ्रुत्वामयातेद्विजसत्तमाः

सञ्जीविताश्च वै सर्वे दृष्टिपातेन पार्वति ! ॥ २६ ॥

तुष्टुवुः प्रणता विप्रामामतोविविधैःस्तवैः । मयाप्रोक्तास्तुतेविप्रावृणुध्वंवरमुत्तमम्
तैरुक्तं प्रणतैर्देवि लोकानां च हितार्थतः । संम्रियन्ते प्रजा देवा लिङ्गेनानेन शङ्कर
ताः संरक्ष जगन्नाथ ह्येषोऽस्माकं वरः प्रभो । प्रतिज्ञातं मयादेविलोकानामनुकंपया
क्षेमारोग्यकरं लिङ्गंभविष्यतिनसंशयः । कायावरोहणाद्विप्राःस्वयमत्रागमिष्यति

लकुलीशस्तदा चायं देवः स्पृश्यो भविष्यति ।
वृद्धिकारी कुटुम्बस्य भविष्यति न संशयः ॥ ३१ ॥
कुटुम्बेश्वर इति नाम्ना लोके ख्यातिं गमिष्यति ।
इत्युक्तास्ते मया विप्रास्तत्रैव तपसि स्थिताः ॥ ३२ ॥

लकुलीशोऽथ तल्लिङ्गमारुरोह ममाज्ञया । जनयन्विस्मयं लोकेकीर्तिं जनपदे तथा
कुटुम्बेश्वरसञ्ज्ञं तु येपश्यन्तियशस्विनि । तेषांकुलेतुवृद्धिःस्यात्कुटुम्बस्यनसंशयः

आश्विनासितपञ्चम्यां दर्शनं य करिष्यति । बहुपुत्रो बहुधनो भविष्यतिनसंशयः
महतीं श्रियमाप्नोति रोगैश्चापि प्रमुच्यते । सर्वकामसमृद्धोऽसौ ममलोकेसमोदते
दर्शनं ये करिष्यन्ति स्पर्शनं यजनंतथा । ते सर्वकामसम्पूर्णाःप्रयान्तिमममन्दिरम्
समीपे तु सरिच्छिप्रा वापीकूपेनसंयुता । यस्या दर्शनमात्रेण नरः पापात्प्रमुच्यते

सोमवारेऽर्कवारे च स्नात्वा तस्यां समाहितः ।
अष्टम्यां वा चतुर्दश्यां यः पश्येत्कुटुम्बेश्वरम् ॥ ३६ ॥

राजसूयसहस्रस्य वाजपेयशतस्य च । फलं स लभते देवि! सत्यमेतन्मयोदितम्
एष ते कथितो देवि! प्रभावः पापनाशनः । कुटुम्बेश्वरदेवस्य त्विन्द्रद्युम्नेश्वरं श्रृणु

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्येकुटुम्बेश्वरमाहात्म्यवर्णनं नाम चतुर्दशोऽध्यायः ॥ १४॥

---

## पञ्चदशोऽध्यायः

### इन्द्रद्युम्नेश्वरमाहात्म्यवर्णनम्

श्रीमहादेव उवाच

इन्द्रद्युम्नेश्वरं विद्धि शिवं पञ्चदशं प्रिये! । यस्य दर्शनमात्रेण यशः कीर्तिश्च जायते
आसीद्राजा पुरादेवि इन्द्रद्युम्नो महीपतिः । येनेयं रक्षितापृथ्वीपितापुत्रमिवौरसम्
इष्ट्वा सोऽथ बहून्यज्ञान्भूमौप्रचुरदक्षिणान् । गतः स्वर्गंमहात्मावैसर्वकामफलप्रदम्
स चाथ प्रच्युतः स्वर्गान्नष्टकीर्तिर्यदाक्षितौ । पपातभूमौसहसागतपुण्योनराधिपः

पतितश्चिन्तयामास भृशं शोकपरिप्लुतः ॥ ४ ॥

कृतस्यकर्मणस्त्वत्रभुज्यते यत्फलं दिवि । न चान्यत्क्रियतेतच्चद्भूतलस्थेनभुज्यते
सोऽत्र दोषो मतस्तस्यामतस्तत्पतनं यतः । पतनात्तु महद्दुःखं परितापश्च जायते
स्वर्गभाजोभवन्तीहयावत्कीर्तिश्चजायते । दिवंस्पृशतिभूमिंच शब्दः पुण्यश्चकर्मणः

यावत्स शब्दो भवति तावत्पुरुष उच्यते ॥ ७ ॥
अकीर्त्तिः कीर्त्यते यस्य लोके भूतस्य कस्यचित् ।
स पतत्यधमाँल्लोकान्यावच्छब्दोऽस्य कीर्त्तितः ॥ ८ ॥
तस्मात्कल्याणवृत्तः स्यादन्यथा पतनम्भुवि ।
विधाय वृत्तं पापिष्ठं कीर्तिमेवाभिवर्द्धयेत ॥ ९ ॥

अत्यन्तंश्लाघयाम्यत्रकीर्त्तिम्वर्गकरांपराम् ।देवैरपिहिसाकीर्तिःकाङ्क्ष्यतेपरमायतः
यावत्कीर्त्तिर्मनुष्याणांवर्त्तनेभुविचाक्षया । तेजः पुञ्जेनयुक्तानिशरीराणिभवन्तिहि
न स्वेदो न च दौर्गन्ध्यं पुरीषं मूत्रमेववा । तेषांनिर्वचनं राजा विधाताच त्रिविष्टपे
उह्यन्ते ते विमानैश्च नानाभरणभूषिताः ॥ १२ ॥

एवं विमृश्य नृपतिरिन्द्रद्युम्नो वरानने! । स्वर्गकामो जगामाथ हिमवन्तं नगोत्तमम्
यत्र तेपे तपस्तीव्रं मार्कण्डेयो महामुनिः । दृष्ट्वा प्रणम्य शिरसासाष्टाङ्गश्च पुनःपुनः
पप्रच्छ विनयोपेतस्तमृषिं शंसितव्रतम् ॥ १४ ॥

विदितास्तव धर्मज्ञ! देवदानवराक्षसाः । राजवंशाश्चविविधा ऋषिवंशाश्च शाश्वताः
न तेऽस्त्यविदितं किञ्चिदस्मिँल्लोके द्विजोत्तम! ।
एतदिच्छाम्यहं श्रोतुं तत्त्वेन कथ्यतां त्वया ॥
कथं कीर्त्तिर्ध्रुवा लोके जायते किंतपःफलात् ॥ १६ ॥

मार्कण्डेय उवाच

हन्तते कथयिष्यामियतः कीर्तिं समीहसे । यावत्कीर्तिर्भूमिसंस्थातावद्वससुरैःसह
तद्गच्छ शीघ्रं धर्मज्ञ!महाकालवनोत्तमम् ॥ १७ ॥

कल्कलेश्वरदेवस्य समीपे वामभागतः । लिङ्गं पापहरं तत्र समाराधय यत्नतः ॥
तस्याभ्यर्चनमात्रेणलप्स्यसेकीर्तिमुत्तमाम् । स्वर्गंसनातनञ्चैवयत्सुरैरपिदुर्लभम्
गत्वासपूजयामासतल्लिङ्गंकीर्तितंत्विदम् ।ततोदेवाःसगन्धर्वाःप्रशस्यचमुदान्विताः
अन्तरीक्षे विमानस्थाः प्रोचुर्वाचं नराधिपम् ।
त्वत्कीर्त्तिर्निर्मला जाता लिङ्गस्यास्य समर्चनात् ॥ २१ ॥

अद्यप्रभृति राजेन्द्र! लिङ्गं त्वन्नामनामतः ।
ख्यातिं यास्यति लोकेऽस्मिन्निन्द्रद्युम्नेति निश्चितम् ॥ २२ ॥

इन्द्रद्युम्नेश्वरं देवं पूजयिष्यन्ति ये नराः । सर्वपापविनिर्मुक्ता विमानैः सर्वकामिकैः
स्वर्गंयास्यन्तिते हृष्टाःस्तूयमानाःसुरर्षिभिः । किञ्चिच्चदुर्लभंलोकेतेषांनैवमविष्यति
दर्शनं ये करिष्यन्ति लोभाद्वापि प्रसङ्गतः । तेषां कीर्तिर्यशःपुण्यंधर्मश्चैवंभविष्यति
न स्वर्गात्पतनंतेषां यावदिन्द्राश्चतुर्दश । ये च पूजांकरिष्यन्ति चतुर्दश्यां विशेषतः
ते कुलं तारयिष्यन्ति मातृकं पैतृकं सदा ॥ २६ ॥

इत्युक्त्वा त्रिदशाः सर्वे लिङ्गं सम्पूज्य यत्नतः ।
इन्द्रद्युम्नेन सहिताः पुनः स्वर्गं गताः प्रिये! ॥ २७ ॥

एष ते कथितो देवि! प्रभावः पापनाशनः । इन्द्रद्युम्नेशदेवस्य श्रूयतामपरः प्रिये ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्य इन्द्रद्युम्नेश्वरमाहात्म्यवर्णनं नाम
पञ्चदशोऽध्यायः ॥ १५ ॥

---

# षोडशोऽध्यायः

## ईशानेश्वरमाहात्म्यवर्णनम्

### ईश्वर उवाच

ईशानेश्वरसञ्ज्ञं तु षोडशं विद्धिपार्वति । यस्य दर्शनमात्रेण ऐश्वर्यं जायते नृणाम्
तुहुण्डेन पुरा देवि सर्वे ह्यपद्रुताः सुराः । ऋषयश्च महाभागा यक्षगन्धर्वकिन्नराः ॥
नन्दनाख्यं वनं सर्वं तदुद्यानमभूत्किल । ऐरावणं द्विपेन्द्रश्च जित्वा द्वारि समादधत्
उच्चैःश्रवससञ्ज्ञं तु हृतवान्दानवेश्वरः । देवाङ्गनानां सर्वासां विध्वंसं कर्तुमुद्यतः
स्वर्गमार्गः खिलीभूतस्तद्भयेन ह्यभूत्सति । हृताधिकारा देवाश्च मन्त्रं समुपचक्रमुः

तस्मिन्काले च कालज्ञो नारदोऽथ महामुनिः ।
आजगाम महातेजा भ्रममाणश्च मन्त्रिभिः ॥ ९ ॥

देवैर्नमस्कृतःसोऽथ पूजितश्चयथाविधि । निवेदितं यथावृत्तं तुहुण्डस्यविचेष्टितम्
पप्रच्छुरथ ते मन्त्रं नारदं मुनिसत्तमम् । कथयस्व महाबुद्धे सर्वं जानासि सर्व्वतः
ईदृक्काले समायाते किं कर्त्तव्यं महामुने । नाज्ञातं त्रिषु लोकेषु किञ्चिद्देवर्षिसत्तम

मुहूर्तं ध्यानमालम्ब्य किञ्चिन्माल्य च लोचने ।
उपायं कथयामास सर्वदुःखविनाशनम् ॥ १० ॥
महाकालवने रम्ये शीघ्रं गच्छन्तु विह्वलाः ।
इन्द्रद्युम्नेश्वरस्यैव पश्चाद् भागे व्यवस्थिताः ॥
सेवध्वं परमं लिङ्गमीशानेश्वरसञ्ज्ञकम् ॥ ११ ॥

पुरा चेशानकल्पे तु ईशानेन सुखेन हि । मुनिना श्रोत्रियेणैव वेदाभ्यासरतेन वै ॥

उत्तमाङ्गपदं लब्धं शङ्करस्य च मूर्द्धनि ॥ १२ ॥
तस्याराधनमात्रेण मनोऽभीष्टं हि लभ्यते ॥ १३ ॥

नारदस्य वचः श्रुत्वा देवा मुदितमानसाः । जग्मुर्यत्र महल्लिङ्गं स्तुतिसर्वेऽप्यकुर्वत
ईशानेशान! ईशान! तत्पुरुष नमोऽस्तुते । नमो वाम! महाघोर! सद्योमुख नमोनमः
त्र्यक्ष! भर्ग महादेव! उमाकान्त!नमोनमः । नमः शिव नमोभीम! नमः सर्व नमोनमः
नमः शम्भो!नमो रुद्र! विरूपाक्ष! नमोनमः । त्वया देव!प्रजाः सर्वाःसदेवासुरमानुषाः
स्थावराणि च भूतानि जङ्गमानि चराणि च। ब्रह्मवेदाश्च वेद्यंचत्वया सृष्टं महेश्वर
शिरस्ते गगनंदेवा नेत्रेशशिदिवाकरौ । नि:श्वासःपवनश्चापितेजोऽग्निश्चतवाच्युतः

बाहवस्ते दिशः सर्वाः कुक्षिश्चैत्र महार्णवः ।
उरू ते पर्वता देव चरणौ पृथिवी मता ॥ २० ॥

इन्द्रसोमाग्निवरुणा देवासुरमहोरगाः । प्रह्वास्त्वामनुतिष्ठन्तिस्तुवन्तोविविधैःस्तवैः
त्वया व्याप्तानि भूतानि सर्वाणि भुवनेश्वर !। त्वयितुष्टे जगत्तुष्टं त्वयिक्रुद्धेमहद्भयम्
भयानामपनेतासि त्वमेकः शत्रुसूदनः । असुराणां समर्थानां विनाशश्च त्वया कृतः

न च विक्रमणैर्देव निर्वाणमगमत्परम् । त्वं हि कर्त्ता विकर्त्ता च भूतानामिहसर्वशः
आराधयित्वा सर्वे ते नमस्यन्ति च सर्वशः ।
एतस्मिन्नन्तरे देवि! लिङ्गमध्यात्समुत्थिना ॥ २५ ॥
धूमावृतामहाज्वाला यया दग्धः स दानवः । तुहुण्डामुण्डपुत्रस्तुससैन्यपरिवारितः
स्वाधिकारांश्च सम्प्रापुर्लिङ्गस्यास्य प्रभावतः ।
सुरैश्चाख्या समादिष्टा लिङ्गस्यास्यैव हर्षितैः ॥ २७ ॥
ऐश्वर्यशीलमस्यास्तीत्यस्माकं च विनिश्चितम् ।
ईशान इति विख्यातस्त्रैलोक्ये च भविष्यति ॥ २८ ॥
ईशानेश्वरसञ्ज्ञं तुयेममाराधयन्तिच । कीर्तिर्लक्ष्मीर्ध्रुवातेषांसिद्धिःप्रीतिर्भविष्यति
पूज्यमानःसदादेवगन्धर्वाप्सरसांगणैः । स्वर्गलोकंगमिष्यन्ति विमानैरुज्ज्वलैर्मुदा
ब्राह्मणाः क्षत्रिया वैश्याःशूद्राः स्त्रियः कुमारिकाः ।
यथाभिलषितान्कामानाप्नुवन्ति न संशयः ॥ ३१ ॥
यःकरोतिनरः सम्यग्दर्शनंनियमस्थितः । न कुत्रतस्यहानिःस्याद्यावज्जन्मशतंभवेत्
सर्वदा सर्वकार्येषु ते समर्था यशस्विनि !। ईशानेश्वरसञ्ज्ञं तु ये पश्यन्ति दिनेदिने
एवं ते कथितो देवि! प्रभावः पापनाशनः । ईशानेश्वरदेवस्य श्रूयतामप्सरेश्वरः ॥३४

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्य ईशानेश्वरमाहात्म्यवर्णनं नाम षोडशोऽध्यायः ॥ १६ ॥

---



## सप्तदशोऽध्यायः

### अप्सरेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

देवं सप्तदशं विद्धि विख्यातमप्सरेश्वरम् ।
यस्य दर्शनमात्रेण लोकोऽभीष्टानवाप्नुयात् ॥ १ ॥

नन्दनाख्ये वनेदेवि सर्वकामसमन्विते । सिद्धचारणगन्धर्वकिन्नरोद्गीतनादिते ॥ २ ॥
शुककोकिलचक्राह्वचकोरकुररावृते । दिव्यलोकोपमस्थाने त्रिविष्टपविभूषणे ॥
तत्रोपविष्टो वृत्रारिःसुरज्येष्ठश्च सेवितः । ननर्त्त रम्भातस्याग्रे नृत्यभावान्विवृण्वती·

ततोऽन्यचित्ता सञ्जाता किञ्चित्स्मृत्वा प्रमादतः ।
लयतालविहीना च दृष्टा वै वासवेन सा ॥ ५ ॥

चुकोप च सुरश्रेष्ठस्तस्याःशापंददौ किल । विस्मृतिर्मानुषंकर्मन दिव्यंकापिदृश्यते

तस्मात्तु मानुषे लोके गच्छ त्वं निष्प्रभा सती ॥ ६ ॥

अथेन्द्रकोपसङ्क्षोभात्पतिताभुवि साप्सराः । निश्चेष्टाविकलीभूतारुदतीविस्वरंबहु
करुणं विलपन्ती च किं मया दुष्कृतं कृतम् । निर्मलं न तपस्तप्तंकथंनाराधितःसुरः
अथाप्सरोगणः सर्वः सखीगणसमन्वितः । रम्भा यत्रैव पतिता समायातो वरानने

तस्याः शोकाग्निदाहेन सन्तप्तोऽप्सरसां गणः ॥ ६ ॥

सुप्तुप्ता पद्मिनी साभ्रे यथा नैवविराजते । तथाशापेनविध्वस्ता रम्भानोराजतेसदा
सखीगणैः परिवृता रम्भा दृष्टा वरानने !। देवर्षिणानारदेन विस्मितेनान्तरात्मना॥

कस्मादप्सरसः सद्यो दृश्यन्ते शोकविह्वलाः ।
कस्माच्च करुणं रम्भा रोदित्येषा मुहुर्मुहुः ॥ १२ ॥

पप्रच्छ चसमागत्यकस्मादप्सरसो वराः । विषण्णवदना दीनाःकथ्यतांममसादरम्

वृत्तान्तं कथयामासुस्ताश्च तस्मै पुरातनम् ।

श्रुत्वा च नारदस्तत्र ध्यानासक्तोऽभवन्मुनिः ॥ १४ ॥

उपायं कथयामास हितं तासांप्रयत्नतः । गच्छन्त्वप्सरसःसर्वाःमहाकालवनोत्तमे
आराधयध्वंदेवेशं लिङ्गंसर्वार्थसाधकम् । पृच्छादेव्यास्तु पुरतःपुराकल्पेप्रपूजितम्
उर्वश्या ममवाक्येनभर्त्ता प्राप्तःपुरूरवाः । नारदस्य वचः श्रुत्वासमाजग्मुर्गणास्तथा
महाकालवने रम्येलिङ्गाराधनकाम्यया । ततस्तुष्टःस्वयंरुद्रस्तासां भक्त्यावरंददौ

रम्भे प्राप्स्यसि सौभाग्यं स्वर्गलोकं यशस्विनि !।
भविष्यसि महाभागे! जिष्णोस्त्वं वल्लभा ध्रुवम् ॥ १६ ॥
तस्मात्त्रिविष्टपं गच्छ सङ्घेनानेन पूजिता ।
आराधितोऽप्सरोभिश्च पुरा स्वर्गार्थकाम्यया ।
अतोऽप्सरेश्वरः ख्यातो ययौ ख्यातिं जगत्त्रये ॥ २० ॥

येसमाराधयिष्यन्तिभक्त्याचाप्सरसेश्वरम् । तेसर्वकामसंपूर्णाभविष्यन्तियुगेयुगे

प्रेरयिष्यन्ति ये लोके दर्शनार्थं यशस्विनि !।
स्थानभ्रंशो वियोगश्च तेषां स्वप्ने न जायते ॥ २२ ॥

किं दानैः किंतपोभिश्चकिं यज्ञैर्बहुदक्षिणैः । स्पर्शनाल्लभते राज्यंस्वर्गंमोक्षंक्रमेणतु
एष ते कथितो देवि प्रभावः पापनाशनः । अप्सरेश्वरदेवस्य श्रूयतां कलकलेश्वरः॥

इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्येऽप्सरेश्वरमाहात्म्यवर्णनंनाम सप्तदशोऽध्यायः ॥ १७ ॥

---

# अष्टादशोऽध्यायः

## कलकलेश्वरमाहात्म्यवर्णनम्

श्रीशिव उवाच

देवमष्टादशं विद्धि ख्यातं कलकलेश्वरम् । यस्य दर्शनमात्रेण कलहो नैव जायते ॥
सर्वदुःखोपशमनं सर्वपापप्रमोचनम् । व्याधिसर्पाग्निचौराणां शमनंवाञ्छितप्रदम्
मम देवि त्वया सार्द्धं कलहः समपद्यत । पुरा विस्तरतो वच्मिमश्शृण्वेकाग्रमनाःशुभे
यदा त्वं हिमशैलस्यदुहितावरवर्णिनि । तदा विवाहितं कान्तेयथोक्तविधिनामया
विनिवृत्ते विवाहे च त्वयासार्द्धंवरानने । महाकालीतिनाम्ना वै वर्णेनापिचतादृशी

नीलोत्पलनिभप्रख्या नीलकुञ्चितमूर्द्धजा ।
अप्येकस्मिस्तदा त्वं हि मातॄणां मण्डपे शुभे ।
मध्ये समुपविष्टाऽसि कृष्णाञ्जनसमप्रभा ॥ ६ ॥

कालि सुन्दरि मत्पार्श्वेवल्लभेत्वमुपाविश । शरीरेममतन्वङ्गिसितेभास्यसितद्युतिः
भुजङ्गीवासिता शुभ्रे संश्लिष्टा चन्दने तरौ । रजनीवासिते पक्षे दृष्टिदोषहरासिमे

इत्युक्तासि मया देवि! गिरिजे! चारुहासिनि !।
तदा प्रोक्तं त्वया वाक्यं मामुद्दिश्य सगद्गदम् ॥ ९ ॥

यदात्वया मदर्थे हि प्रेरितावेदपारगाः । सप्तर्षयो महाभागाः किं कृते न तदात्थमाम्

तदा त्वया मदर्थेऽपि प्रार्थितो जनको मम ।
हिमाद्रिराजो यत्नेन किं काली न तदात्थ माम् ॥ ११ ॥
यदाप्युक्तं त्वया दैन्यान्मदर्थे गच्छ नारद !।
प्रार्थ्यतां पार्वती शीघ्रं किं काली न तदात्थ माम् ॥ १२ ॥

सत्येयं लौकिकी गाथा न वृथा परिजायते । स्वकृतेनजनः सर्वो जाड्येनपरिभूयते

अवश्यमर्थी प्राप्नोति खण्डनां तुण्डमुण्डनाम् ।

तपोतिदीर्घचारैस्तु यस्त्वां प्राथितवत्यहम् ॥ १४ ॥
तस्या मे नियतस्त्वेष ह्यवमानः पदेपदे । नैवास्मि कुटिला रौद्रा विषमानचधूर्जटे
नाकुलीनावृथाचारानदुष्टा न समत्सरा । सविषस्त्वं यतःख्यातोव्यक्तंदोषाकराश्रयः
अकुलीनो वृथाचारो मात्सर्येणाश्रितः सदा । नाहंमुष्णामिनयनेतत्रहन्ता त्वमेव च
आदित्यस्त्वां विजानातु भगवान्द्वादशात्मकः ।
मया नोत्पाटिता दन्ताः कस्यापि निरपत्रप !॥ १८ ॥
पूषादेवो विजानातिद्वादशात्मादिवाकरः । मूर्ध्निशूलं तव यतःस्वैर्दोषैर्मामधिक्षिपः
यत्तु मामाह कृष्णेति महाकालेतिविश्रुतः । इत्यथापि प्रवादोऽयं प्रवरःख्यामिते हर
निदर्शनार्थं न द्वेषाच्छ्रुत्वा तं क्षन्तुमर्हसि । विरूपोयावदादर्शे नात्मनःपश्यतेमुखम्
मन्यते तावदात्मानमन्येभ्यो रूपवत्तमम् । यदा तु मुखमादर्शे विकृतंसोऽभिवीक्षते
तदेतरं विजानाति ह्यात्मानं नेतरंजनम् । सत्यधर्मच्युतात्पुंसः क्षुद्रादाशीविषादिव
स नास्तिकोऽप्युद्विजते जनः किं पुनरास्तिकः ।
इत्युक्तोऽहं त्वया देवि! मया कोलाहलः कृतः ॥ २४ ॥
अनात्मज्ञासि गिरिजे मृडेपण्डितमानिनि । सत्यं सर्वैरवयवैस्तुतोऽपिसदृशःपितुः
काठिन्यं कष्टमभ्येति धातुभ्यो वहुघातिता ।
कुटिलत्वं च सर्वेभ्योऽसेव्यत्वञ्च हिमादिव ॥ २६ ॥
इत्युक्ताऽसि मया देवि! पुनः प्रोक्तं त्वया वचः ।
तथापि दुष्टसंसर्गात्सङ्क्रान्तं सर्वमेव हि ॥ २७ ॥
व्यालेभ्योऽनेकजिह्वत्वंभस्मतःस्नेहवर्जनम् । हृत्कालुष्यंशशाङ्काद्वैदुर्बोधत्वंवृषादपि
श्मशानवासाद्भीरुत्वं नग्नत्वं च न लज्जया ।
निर्घृणत्वं कपालाच्च दया ते विगता चिरम् ॥ २६ ॥
एवं तदाऽभवद्रौद्रः कलहो भयकृच्छुभे । एवं प्रवृत्ते तु तदा कम्पितं भुवनत्रयम्
भीताश्च देवगन्धर्वायक्षगन्धर्वराक्षसाः । तस्मात्कोलाहलोभूमिंभित्त्वालिङ्गमभूत्तदा
लिङ्गमध्यात्समुत्पन्नावाणीसुखकरीशुभा । आश्वासयन्तीदेवान्वैत्रैलोक्यंसचराचरम्

नामास्यचक्रुर्देवेशास्तदाकलकलेश्वरम् । स्वरनामासौततोऽभूच्छङ्करोभुविविश्रुतः
यस्तमर्चयते भक्त्या देवंकलकलेश्वरम् । न राक्षसाःपिशाचाश्चनभूतान विनायकाः
विघ्नं कुर्युर्वरारोहे !कलहो न भवेद्ग गृहे ॥ ३४ ॥
सुशीला गृहिणी तस्य सुरूपा सुभगा प्रिये । बहुपुत्रा बहुधना जायते दर्शनात्तथा
ये पश्यन्ति चतुर्दश्यां देवंकलकलेश्वरम् । न दुःखं न जरा व्याधिर्नाकालमरणंतथा
न च शत्रुभयं तेषां जायते गिरिपुत्रिके । लोकोऽक्षयोभवेद्देवि यावदिन्द्राश्चतुर्दश ॥
एष ते कथितो देवि! प्रभावः पापनाशनः । यस्य श्रवणमात्रेण क्षेममत्र परत्र च ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये कलकलेश्वरमाहात्म्यवर्णनं
नामाऽष्टादशोऽध्यायः ॥ १८ ॥

---

# एकोनविंशोऽध्यायः

## नागचण्डेश्वरमाहात्म्यवर्णनम्

### ईश्वर उवाच

एकोनविंशतितमं नागचण्डेश्वरं प्रिये । निर्माल्यलङ्घनात्पापान्मुच्यते यस्य दर्शनात्
तस्य प्रभावं सुभगं कथयाम्यथ विस्तरात् ।
शृण्वेकाग्रमना देवि! सर्वपापप्रणाशनम् ॥ २ ॥
पुरादेवर्षिगन्धर्वाश्चारणागुह्यकास्तथा । उपविष्टाः सुधर्मायांकथयन्तःशुभांकथाम्
एतस्मिन्नन्तरे शक्रो देवर्षिनारदं मुनिम् । पप्रच्छ सादरं देवि समायातं शुचिव्रतम्
दृष्ट्वा विनयसम्पन्नं ब्रह्मचर्यपरायणम् । मेखलाजिनकौपीनं वीणादण्डविभूषितम्
त्वया दृष्टमिदं सर्वं त्रैलोक्यंभूर्भुवादिकम् । उत्पाद्यमानमुत्पन्नं प्रलयञ्च सहस्रशः
त्वत्तुल्यो नास्ति लोकेऽस्मिन्मुक्त्वैकं परमेष्ठिनम् ।

जगत्कारणमव्यक्तं नित्यं सदसदात्मकम् ॥ ७ ॥
योगेन तपसा भक्त्या यत्त्वया परितोषितः ।
त्रैलोक्यमभिजानासि तत्सर्वं सर्वतः स्फुटम् ॥ ८ ॥

अतोऽहं प्रष्टुमिच्छामि कथ्यतां मम निश्चयम् । पृथिव्यां प्रवरं क्षेत्रं पावनं भुक्तिमुक्तिदम्
एवं श्रुत्वा तदाध्यात्वा चिन्तयामास नारदः । चिन्तयित्वा चिरं कालमिदं वचनमब्रवीत्
देवराज! स्मृतं पुण्यं क्षेत्रराजमनुत्तमम् । क्षेत्राणामुत्तमं क्षेत्रं प्रयागश्च प्रशस्यते ॥
तस्माद्दशगुणं क्षेत्रं महाकालस्य कथ्यते । भुक्तिदं मुक्तिदं तच्च दर्शनादपि वासव!

एतच्छ्रुत्वा सहस्राक्षो वर्णयित्वा च तं मुनिम् ।
सर्वैर्देवगणैः सार्द्धं विमानस्थस्त्वरान्वितः ॥ १३ ॥

अन्तरिक्षस्थितो जिष्णुरद्राक्षीच्च सुरैः सह । क्षेत्रं लिङ्गैः समाकीर्णमङ्गुलस्यान्तरं नहि
षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च । महाकालवने रम्ये निर्माल्यं लङ्घ्यते कथम्
निर्माल्यलङ्घनाद्दोषो महान्भवति निश्चितम् । इत्यालोच्य पुनर्देवा जग्मुः स्वर्गं मनोरमाः

निर्माल्यदोषभीतास्ते क्षेत्रे न विविशुः सुराः ।
एतस्मिन्नन्तरे देवि! विमानस्था गणोत्तमाः ॥ १७ ॥

गणैर्नानाविधैः सेव्यैर्गीयमानश्च किन्नरैः । चारणैः स्तूयमानस्तु स्वर्गलोकं व्रजन्सुरैः

प्रफुल्लनयनैर्दृष्टः कोऽयं धन्यो महातपाः ।
तेजसा दीप्यमानोऽयमप्सरोभिश्च सेव्यते ॥ १९ ॥

पप्रच्छुरमराः सर्वे कोऽयं रुद्रनिभो गणः । याति कुत्र महाबाहो हृष्टात्मा प्रहसन्मुखः
पृष्टस्तदा सुरैः सर्वैर्विस्मयाविष्टमानसैः । कस्त्वं पुरुषशार्दूल किं त्वया सुकृतं कृतम्
देवानां पुरतो देवि निःशेषं कथितं तदा । महाकालो महादेवः पूजितो भक्तितः स्तुतः
दृष्टेन तेन मे दत्तं गणत्वं यत्सुदुर्लभम् । नाम दत्तं च सुभगं नागचण्ड इति ध्रुवम्
पप्रच्छुरमरास्तच्च सादरं गणसत्तम !। नागचण्ड त्वया तत्र निर्माल्यं पतितं त्वथ
महाकालवने पुण्ये लङ्घितं चरता त्वया । सञ्चारो नास्ति तत्रैव लिङ्गसङ्कीर्णता यतः
उपायस्तेन कथितो देवानां पुरतस्तदा । तत्र तिष्ठति देवेशा लिङ्गं सर्वफलप्रदम् ॥

ईशानेश्वरदेवस्य तिष्ठतीशानभागतः । तस्य दर्शनमात्रेण न स गच्छति दुष्कृतम्
निर्माल्यलङ्घनोद्भूतंयत्पापंजायते महत् । तत्सर्वंनाशमायातितस्यलिङ्गस्यदर्शनात्
ततो देवगणाः सर्वे महाकालवने पुनः । समायातामहाभागा महाकालश्च पूजितः
यथा लिङ्गं च तद्दृष्टं सर्वदोषक्षयङ्करम् । तस्य दर्शनमात्रेण निर्माल्यलङ्घनादिभिः

दोषो नष्टः सुराणां च ततो नामास्य चक्रिरे ॥ ३० ॥

अस्माकं तेनकथितंनागचण्डेनधीमता । नागचण्डेश्वराख्यानमतोलोके भविष्यति

कृत्वास्य नाम ते देवा जग्मुः स्वर्गंहमुत्तमम् ।
पूजयिष्यन्ति ये केचिन्नागचण्डेश्वरं शिवम् ।
निर्माल्यलङ्घनोद्भूतं तेषां नश्यति पातकम् ॥ ३२ ॥

नागचण्डेश्वरं देवं येपश्यन्तिदिनेदिने । अज्ञानाज्ज्ञानतः पापं तेषां नश्यतिनान्यथा

आह्लादं निर्वृतिं स्वास्थ्यमारोग्यं चारुरूपताम् ।
सप्त जन्मान्यवाप्नोति दर्शनेन न संशयः ॥ ३४ ॥
प्राप्नोत्यभिमतान्कामान्देवानामपि दुर्लभान् ।
कीर्त्तनान्नात्र सन्देहो नागचण्डेश्वरस्य च ॥ ३५ ॥

एष ते कथितो देवि! प्रभावः पापनाशनः । नागचण्डेश्वरस्यैव प्रतीहारेश्वरं शृणु

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्येनागचण्डेश्वरमाहात्म्यवर्णनंनामैकोनविंशोऽध्यायः ॥ १९॥

———

# विंशोऽध्यायः

## प्रतीहारेश्वरमाहात्म्यवर्णनम्

### ईश्वर उवाच

प्रतीहारेश्वरं देवि विद्धि विंशतिमं प्रिये !। यस्य दर्शनमात्रेण धनवानिह जायते ॥
दक्षकोपाच्च च देवि!पुराप्राणैर्विसर्जितैः। हिमाचले तथाजाता मयाप्राप्तापुनःप्रिये
प्रारब्धा च मया देवि! त्वया सार्द्धं रतिस्तदा।
दिव्यं वर्षशतं जातं साग्रं देवि प्रमोदतः।
अनुरागवशाच्चैव मन्मथेन प्रपीडिता ॥ ३ ॥
महारतिंसमीक्ष्याथदेवाःसंक्षुब्धमानसाः। चक्रुर्मन्त्रंयथाकालंवासवाद्यायथोचितम्
दिव्यं वर्षशतं रुद्रो गौर्या सह सदारतिम्। कुर्वंन्तिष्ठतिदेवोऽसौमन्दरेचारुकन्दरे
अनयोर्बीजसम्पत्योः पुत्रो योहिभवेत्तदा। विनश्येत्तेन त्रैलोक्यमखिलंच न संशयः
तस्य तेजोऽपि नो वोढुं समर्था निश्चितं वयम्।
तस्मात्तत्क्रियतां कर्म रतिर्येनोपशाम्यति ॥ ७ ॥
उपायं दृष्टवांस्तत्र देवानां गुरुरग्रणीः। बृहस्पतिर्महातेजा वेदशास्त्रार्थपारगः ॥
गच्छन्तु त्रिदशाः सर्वे शिवस्य तु समीपतः।
स्वयं विज्ञाप्यतां देवस्तत्कर्म न करिष्यति ॥ ६ ॥
इति निश्चित्य ते देवि! जग्मुः शीघ्रं सुरास्तदा।
मन्दराद्रेः शुभे द्वारि स्थितास्ते विस्मयान्विताः॥ १० ॥
गणानामधिपोनन्दीद्वारितिष्ठतियत्नतः। त्वयासार्द्धमहंदेविकुर्वंस्तिष्ठामितांरतिम्
अथ प्रवेशो देवानां दुष्करो मम पार्श्वतः। तदाचिन्तयमानाश्चतत्रतिष्ठन्तितेसुराः
अग्निनातद्धितंवाक्यमुक्तंतेषांपुरः शुभम्। हंसरूपंसमास्थाययास्यामिशिवसन्निधौ
वञ्चयित्वा प्रतीहारं कृतं तेन तथैव च। हंसरूपेण कथितं कर्णे मम शुचिस्मिते

इन्द्राद्या अमरा देवा द्वारि तिष्ठन्ति संयताः ।
श्रुत्वा तस्य च तद्वाक्यं ततोऽहं द्वारमागतः ॥ १५ ॥
ततश्च तैः कृतो मह्यं प्रणामश्चयथाक्रमम् । मयादृष्टाश्च तेदेवा युष्माकंकिंकरोम्यहम्
तैरुक्तं त्यज्यतां चैव सम्भोगस्तु सुदारुणः । तथामयाकृतंदेवि गतास्तेत्रिदिवंपुनः
ततः शप्तोमयानन्दी भूलोकंगच्छसत्वरम् । ततःशापपरिभ्रष्टःपृथिव्यां पतितस्तदा
सोच्छ्वासहृदयो दीनो दुःखव्याकुललोचनः ।
विलपंश्च तथा नन्दी विलुठञ्छोकतो भुवि ॥ १६ ॥
वञ्चितश्चाग्निना बाढंवासवेनविशेषतः । किं मया दुष्कृतं कर्म कृतंकिञ्चित्पुरातनम्
स दृष्टो लोकपालैस्तुतामवस्थांगतोगणः । पृष्टश्चतैःकुतोनन्दिन्विलापं कुरुषेमहत्
सर्वं निवेदितं तेन तेषामग्रे च नन्दिना । उपायः कथितस्तैश्च महाकालवनं ततः ॥
ततश्च वचनं श्रुत्वा नन्दी रोमाञ्चकञ्चुकः । महाकालवने देवि!जगाम स तदा गणः
पूजयामास विधिवद्धृत्वा कापालिकीं तनुम् ॥ २३ ॥
अशरीरसमुत्पन्ना वाणी लिङ्गात्तदा प्रिये । सञ्जाता शापमोक्षस्तेप्रतीहार!सुभक्तितः
पूजितोऽसौ महाभक्त्या प्रतीहारेण नन्दिना ॥ २४ ॥
तदाप्रभृति लोकेऽस्मिन्प्रतीहारेश्वरेश्वरः । मया ते कथितोदेवि! प्रतीहारेश्वरस्य च
प्रभावः सर्वलोकानामत्यभीष्टफलप्रदः ॥ २५ ॥
पूजयिष्यन्ति ये भक्त्या प्रतीहारेश्वरं शिवम् ।
स्थानभ्रंशो वियोगश्च तेषां स्वप्नेऽपि नो भवेत् ॥ २६ ॥
सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु । तत्सर्वंनाशमायातिप्रतीहारेश्वरार्चनात्
मनसा ये स्मरिष्यन्ति प्रतीहारेश्वरंशिवम् । एवंतस्य कुलंसर्वंयातिस्वर्गंनसंशयः
इति श्रीस्कान्देमाहापुराणे एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये प्रतीहारेश्वरमाहात्म्यवर्णनंनामविंशोऽध्यायः ॥ २० ॥

---

# एकविंशोऽध्यायः

## कुक्कुटेश्वरमहिमवर्णनम्

### ईश्वर उवाच

एकविंशतिकं विद्धि कुक्कुटेश्वरसञ्ज्ञकम् । यस्यदर्शनमात्रेणतिर्यग्योनिर्न लभ्यते
कौशिकोनाम राजाऽभूत्कुक्कुटो जायते सदा । दृश्यतेवासरेभागे सर्वाभरणभूषितः

व्याप्ता च पृथिवी तेन सशैलवनकानना ।
पूर्वकर्मप्रभावेण प्राप्तं राज्यमकण्टकम् ॥ ३ ॥
विशालानाम विख्याता भार्या तस्य महीपतेः ।
रूपलावण्यसंयुक्ता चतुःषष्टिकलान्विता ॥ ४ ॥

तया चकारसहितः स राज्यंराजसत्तमः । सा वल्लभापिनृपतेःप्राणेभ्योऽपिगरीयसी
तयासार्द्धं कदाचिचसुरतं नास्तिपार्वति !। सन्तप्ता सर्वदा सा चरत्यभावाद्बभूवह
एवं गच्छति काले तु सहराज्ञास्मरातुरा । सर्वसत्त्वरुतज्ञा सा विशालाविपुलेक्षणा

ददर्श कीटमिथुनमनङ्गकलहातुरम् ॥ ७ ॥
प्रसादयंस्तथा कीटः स्वां प्रियां च मुहुर्मुहुः ।
दासोऽस्मि तव कान्तेऽहं रूपसौभाग्यसुन्दरि !॥ ८ ॥

भजस्व मां यथाकाममनङ्गशरपीडितम् । शिरसा प्रणतेनैव रचितस्ते मयाऽञ्जलिः

न त्वया सदृशी लोके कामिनी विद्यते क्वचित् ।
सुवर्णवर्णसदृशी मद्भका चारुहासिनी ॥ १० ॥

कुतो वा मयिदीनेत्वंक्रुद्धेवप्रियवादिनि । किमर्थं वद कल्याणि सरोषवदनास्थिता
सा तमाहप्रकोपाच्चकिमालपसिमांवृथा । त्वयामोदकचूर्णन्तु मां विहायमनोरमाम्

प्रदत्तं कामलुब्धेन अन्यस्यै कीटकाधम !॥ १२ ॥

नाहमेवं करिष्यामि कीटः प्राह पुनः पुनः । स्पृशामि पादौसत्येन प्रणतस्यप्रसीद मे

इति तद्वचनं श्रुत्वा साप्रसन्नाऽभवत्तदा । आत्मानमर्पयामास कामनाय पिपीलिका
दृष्ट्वातन्महदाश्चर्यं सा राज्ञी विललाप ह । धिग्राज्यं धिक्चमे रूपंधिक्चयौवनमद्यमे
न कामिताऽहं कान्तेन मरिष्यामि न संशयः ॥ १० ॥
एवं विलप्य बहुधा विनिःश्वस्य पुनःपुनः । उन्मत्तेवविशालाक्षीगालवस्याश्रमंगता
दृष्ट्वा तमृषिमासीनं तपोयोनिं दृढव्रतम् । उवाच प्रणताङ्गी सा शोकसन्तप्तमानसा
एकोऽयं संशयो ब्रह्मन्हृदयेपरिवर्त्तते । वश्योऽपि हि च मे भर्त्ता रूपलावण्यवानपि
न जाने कारणं किं तु सङ्गमो नोपजायते ॥ १८ ॥
योगत्वाप्रम दाराज्यं जित्वा सर्वाःपुरा रणे । आजहारशुभास्तासांमध्यादष्टौवराङ्गनाः
नैव कामयते तासु किमेतदिति सुव्रत !॥ १६ ॥
वाजिनो वारणाश्चैव धनधान्यमनन्तकम् । वर्त्तते हि जनः सर्वोममाज्ञांपालयन्क्षितौ
केन कर्मविपाकेन ममेदं यौवनं दृढम् । व्यर्थं जातं द्विजश्रेष्ठ! रतिं न कुरुते नृपः ॥
दृश्यते वासरे भागे रात्रौ चैव न दृश्यते । इहजन्मकृतं चैतदाहोस्वित्पारलौकिकम्
दुष्कृतावर्जनं ब्रह्मन्ममेदं वक्तुमर्हसि । तस्यास्तद्वचनं श्रुत्वा गालवोवाक्यमब्रवीत्
शृणुपुत्रि पुरावृत्तं बालभावेन यत्कृतम् । अनेन राज्ञा धर्मज्ञे रात्रौ येन न दृश्यते ॥
विदूरथस्य तनयस्तव भर्ता सः निश्चितम् । मांसाहारीदोषरतिर्विषयासक्तमानसः॥
कुक्कुटानां च मांसेन प्रीतिस्तस्य तदाऽभवत् ।
बहवः कुक्कुटास्तेन भक्षिता राजसूनुना ॥ २६ ॥
एवं भक्षयतस्तस्य बहुशो वत्सरा गताः । कालेन महता राज्ञा ताम्रचूडेन मन्त्रिणः
पृष्टाः किं कारणं नात्र समायान्ति हि कुक्कुटाः ॥ २७ ॥
अथ केनापि कथितं कुक्कुटानां च भक्षणम् ।
विदूरथस्य पुत्रेण कौशिकेन दुरात्मना ॥
भक्षिताः कुक्कुटाः सर्वे विना कारणतो नृप !॥ २८ ॥
ताम्रचूडोऽथसङ्क्रुद्धोददौशापंदुरात्मने । कौशिकायक्षयोरोगोभविष्यतिभयावहः
तदा प्रभृत्यभूत्क्षीणो राजपुत्रो दिने दिने ।

औषधैरधिकोऽभ्येति व्याधिना पीडितो भृशम् ॥ ३० ॥
अथ केनापि कामेन वामदेवाश्रमंगतः । क्षयरोगाभिभूतोऽसौ मरणोत्सुकमानसः ॥
पप्रच्छ वामदेवं स नमस्कृत्य पुनःपुनः ॥ ३१ ॥
भगवन्केन पापेन क्षीयतेऽहर्निशं वपुः । मदीयं पोष्यमाणं हि मांसेन विविधेन च
वामदेवोऽथ तं प्राह कुक्कुटा भक्षितास्त्वया ।
ताम्रचूडेन शप्तोऽसि कुक्कुटानां नृपेण हि ॥ ३३ ॥
तमेव शरणं गच्छ स उपायं गदिष्यति ।
ततः स ताम्रचूडस्याभ्यर्णमागान्नृपात्मजः ॥ ३४ ॥
दृष्ट्वा च ताम्रचूडं तं महाभक्त्याकृताञ्जलिः । प्रोवाचशरणागतोभूत्वापाहिमांशरणागतम्
अज्ञानाद्भक्षितादेव कुक्कुटाःपुष्टिकारणात् । क्षन्तुमर्हसिदेवेश ममागः कृपणस्य च
प्रोवाच ताम्रचूडोऽथयस्मात्प्रार्थयसेनृप । तस्मात्तेवासरेप्राप्ते पुरुषत्वं भविष्यति
शास्ता गोप्ता च लोकानां राजा दण्डधरः प्रभुः ।
कुक्कुटो भविता रात्रौ सर्वरोगविवर्जितः ॥ ३८ ॥
अतो न दृश्यते पुत्रि! तिर्यग्भावं समाश्रितः॥ ३९ ॥
इति तस्य वचःश्रुत्वा गालवस्य महात्मनः ।
सा सम्पूज्य विशालाक्षी गालवं मुनिसत्तमम् ॥
प्रपच्छ परया भक्त्या शापान्तो हि कथं भवेत् ॥ ४० ॥
गालवः कथयामास ध्यानेनालोक्य यत्नतः ॥ ४१ ॥
महाकालवनेलिङ्गं पक्षियोनिविमोचनम् । ज्वालेश्वरस्यदेवस्यपूर्वभागेव्यवस्थितम्
तस्य दर्शनमात्रेण शापस्यान्तो भविष्यति ॥ ४२ ॥
सा प्रणम्य मुनिश्रेष्ठमाजगाम त्वरान्विता ।
यत्रास्ते नृपशार्दूलो विध्यन्बहुविधान्मृगान् ॥ ४२ ॥
प्रफुल्लनयनाभ्यां सा दृष्टा लोकेक्षणाप्रिया । आह्लादिताबहुविधैः कोमलैर्वचनामृतैः
ततस्तेनसदाराज्ञाप्रोक्तासामृगलोचना । इदानींकिमयाकान्ते! कार्यंभवतिकथ्यताम्

तयाप्रोक्तं महाराज गम्यतेऽद्य मया सह । महाकालवने पुण्ये सर्वदुष्कृतनाशने ॥४६

तस्यास्तद्वचनं श्रुत्वा त्वरमाणो मुदान्वितः ।

तया नीतोऽथ नृपतिर्लिङ्गस्यास्य समीपतः ॥ ४७ ॥

पूजयित्वाथतल्लिङ्गं पक्षियोनिविमोचनम् । तत्रैव च स्थितोराजाप्रिययासहपार्वति

तस्यां रात्रौ न सञ्जातःकुक्कुटोयादृशःसदा । शिवप्रसादादभवद्दिव्यरूपीमनोहरः

रूपेण निर्जितः कामस्तेनाप्रतिमतेजसा । ततो विस्मयमापन्नश्चिन्तयामासपार्थिवः

कोऽयं प्रभावो येनाहं शापान्मुक्तः सुदुस्तरात् ॥ ५० ॥

प्रियां पप्रच्छ नृपतिः पूर्णेन्दुवदनां भृशम् । कथंशापाद्विमुक्तोऽहं केनपुण्येन कर्मणा

अथ सा कथयामास वृत्तान्तं विस्तरान्मुदा ।

गालवेन हि यत्प्रोक्तं यत्किञ्चिच्छापमोक्षणम् ॥ ५२ ॥

राजञ्छापाद्विमुक्तोऽसि लिङ्गस्यास्य प्रभावतः ।

पुनः प्रसाद्य तल्लिङ्गं भुक्त्वा भोगांश्चिरं भुवि ॥ ५३ ॥

तयासार्द्धंययौराजा स्वर्गं सुरगणैःस्तुतः । तदाप्रभृति तल्लिङ्गं कुक्कुटेश्वरसञ्ज्ञकम्

विख्यातं देवि! लोकेऽस्मिन्सर्वकामफलप्रदम् ।

तच्च ये पूजयिष्यन्ति कुक्कुटेश्वरसञ्ज्ञकम् ॥

तिर्यग्योनिं न यास्यन्ति न वियोगो भविष्यति ॥ ५५ ॥

न चापिनरकावाप्तिर्न दुःखं न जराभयम् । नाकालेमरणं नृणां न च कष्टं भविष्यति

रूपसौभाग्यसम्पन्ना भविष्यन्ति युगेयुगे । चतुर्द्दश्यांप्रपश्यन्तिलिङ्गं येकुक्कुटेश्वरम्

तेषां कुले च ये केचित्पितरो निरयस्थिताः ॥ ५७ ॥

तिर्यग्योनिगतायेचपशुयोनिंतु ये गताः । वृक्षत्वमथवा प्राप्तास्तेषांमोक्षोभविष्यति

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्ये कुक्कुटेश्वरमाहात्म्यवर्णनं नामैकविंशोऽध्यायः

———

# द्वाविंशोऽध्यायः

## कर्कटेश्वरमाहात्म्यवर्णनम्

### श्रीविश्वनाथ उवाच

द्वाविंशतितमं विद्धि कर्कटेश्वरसञ्ज्ञकम् । यस्य दर्शनमात्रेण तिर्यग्योनिर्न दृश्यते ;
आसीत्पुरा बृहत्कल्पे धर्ममूर्तिर्जनाधिपः । सुहृच्छक्रस्यनिहतायेन दैत्याः सहस्रशः
सोमसूर्यादयो यस्य तेजसा निष्प्रभाः कृताः । प्रजाश्चपालितायेननिहत्यसमरेद्विषः
यथेच्छारूपधारीच सङ्ग्रामेष्वपराजितः । तस्यभानुमतीनामभार्या त्रैलोक्यसुन्दरी

राज्ञस्तस्याग्रमहिषी प्राणेभ्योऽपि गरीयसी ।

दशनारीसहस्राणां मध्ये श्रीरिव राजिता ॥ ५ ॥

नृपो नृपसहस्रेण न कदाचित्प्रमुच्यते । कदाचिदेकान्तगतः पप्रच्छ स्वपुरोहितम्

विस्मयेनावृतमना वशिष्ठमृषिसत्तमम् ॥ ६ ॥

भगवन्केन धर्मेण मम लक्ष्मीरनुत्तमा । कस्माच्च विपुलं तेजो दुःसहं मम दृश्यते ॥

### वसिष्ठ उवाच

पुरा त्वमवनीपाऽऽसीः शूद्रजातिसमुद्भवः । बहुदोषसमाविष्टो दुष्टया भार्ययाऽनया
निवसन्दुष्टहृदयो वर्षाणि सुबहून्यपि । महाक्रोधाभिभूतात्मा सदा निष्ठुरजल्पकः
सदा ब्रह्मस्वहारी त्वं सदावेदविनिन्दकः । सदाचासूयकोराजन्सदाविश्वासघातकः
अथ पञ्चत्वमापन्नः काले नरकमाप्तवान् । ताम्रभ्राष्ट्रे परं दग्धो दशवर्षाणि पञ्च च
रौरवं कुम्भिपाकेचमहारौरवसञ्ज्ञके । सूक्ष्माणितिलमात्राणिकृत्वा खण्डान्यनेकशः
मूषायां धमितो राजन्नसिपत्रे ;च दारितः । शेषपातकशुद्ध्यर्थं धरायामवतारितः

विधाय कार्कटं रूपं यमेन त्वयि पार्थिव ।।

शिवस्य सरो विख्यातं महाकालवनोत्तमे ॥ १४ ॥

दत्तं जप्तं कृतं यच्च हुतं देवार्चनादियत् । सर्वं तदक्षयं कर्म तस्मिन्सरसि विश्रुतम्

निक्षिप्तस्त्वं तदा तेन भाविपुण्येन कर्मणा । तत्र स्थितस्त्वं भूपाल वर्षाणां पञ्चकं तथा

कदाचित्तीरभूम्यां त्वं गतः सङ्क्रीडितुं शनैः ।
समीक्ष्य तत्र काकेन धृत्वा चञ्चुपुटेन च ॥ १७ ॥
आकाशमार्गं चोड्डीनः स त्वया ताडितो भृशम् ।
त्वत्तीक्ष्णपातैश्चरणैस्ताडितो व्यथितस्तदा ॥ १८ ॥

मुक्तस्त्वं चञ्चुपुटतो वायसेनाकुलेन तु । स्वर्गद्वारस्य पूर्वे तु देव्यगारे सुपुण्यदे

शिवस्य क्षिप्तस्त्वं शीघ्रं चञ्च्वाक्षेपप्रपीडितः ।
मृतोऽसि सन्निधौ तत्र देवस्य परमेष्ठिनः ॥ २० ॥

विमुच्य देहं तज्जीर्णं यावत्त्वं कार्कटं पुरा । तत्क्षणाद्दिव्यदेहश्च दिव्याभरणभूषितः

तस्य लिङ्गस्य माहात्म्याद् भूत्वा विद्याधरेश्वरः ।
कामगेन विमानेन पूज्यमानो गणेश्वरैः ॥ २२ ॥
स्वर्गे व्रजंस्त्वं सम्पृष्टः सुरसङ्घैश्च सादरम् ।
कोऽयं महात्मा मुदितो याति दिव्यपथोऽम्बरात् ॥ २३ ॥

ततो रुद्रगणैः सर्वं सुराणां कथितम्पुरा । वृत्तान्तं विस्तरात्सर्वं कार्कटत्वविमोचनम्

तस्य लिङ्गस्य देवेशाः प्रभावोऽयमुपस्थितः ।
देवैः प्रोक्तश्च सहसा लिङ्गस्यास्य प्रभावतः ॥ २५ ॥

कार्कटीयोनिमुक्तस्य प्राप्तं स्वर्गसुखं यतः । कर्कटेश्वरनामायमतो लोके भविष्यति

तदाप्रभृति देवोऽयं कर्कटेश्वरसञ्ज्ञकः । त्वया स्वर्गे महाभोगा भुक्ता राजन्यथेच्छया

आगतोऽसि पुनर्भूमौ लब्धं राज्यमकण्टकम् ।
तस्य लिङ्गस्य माहात्म्याज्जातं सर्वं तवाधुना ॥ २८ ॥

तस्मात्पार्थिव! भूयस्त्वं लिङ्गमाराधयद्रुतम् । जातिस्मरत्वमापन्नो वशिष्ठवचनात्तदा

पूर्वं कर्म स्मृतं तेन स्वकीयं पार्थिवेन तु । पुनर्गत्वा च तल्लिङ्गं पूजयामास यत्नतः

तस्मिँल्लिङ्गे लयम्प्राप्तः स्वशरीरेण पार्वति! ।
येऽर्चयन्ति सदा भक्त्या कर्कटेश्वसञ्ज्ञकम् ॥

भुक्त्वा भोगांश्चिरं भूमौ ते यान्ति परमां गतिम् ॥ ३१ ॥

नियमेन प्रपश्यन्ति ये देवं कर्कटेश्वरम् । अष्टम्यां वा चतुर्दश्यां तेषां पुण्यफलं शृणु
सूर्यदीप्तिप्रतीकाशैर्विमानैः सार्वकामिकैः । मृता मम पुरं यान्ति त्रिसप्तकुलसंयुताः
तत्र दिव्यैर्महाभोगैः स्त्रीसहस्रैर्मनोरमैः । कल्पकोटिशतैर्देवि! सेव्यमानावसन्ति हि
तदन्ते विष्णुभवने तावत्कालं वसन्ति हि । वैष्णवैर्विविधैर्भोगैः स्त्रीसहस्रैस्तु सेविताः

विष्णुलोकाद् ब्रह्मलोकं सम्प्राप्य मुदिताः पुनः ।
भोगान्नानाविधान्भुक्त्वा ततो यान्ति परम्पदम् ॥ ३६ ॥

दशाश्वमेधैर्यत्पुण्यं तत्फलं तीर्थयात्रया । कर्कटेश्वरदेवस्य मेघनादेश्वरं शृणु ॥३७॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्ये कर्कटेश्वरमाहात्म्यवर्णनं नाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशोऽध्यायः

### मेघनादेश्वरमाहात्म्यवर्णनम्

श्रीहर उवाच

मेघनादेश्वरं देवि! त्रयोविंशतिमं शृणु । यस्य दर्शनमात्रेण प्राप्यन्ते सर्वसिद्धयः
राजमूला महादेवि! योगक्षेमाः सुवृष्टयः । प्रजाश्च व्याधयश्चैव मरणं च भयानि च ॥

राजा कृतं तथा त्रेता द्वापरश्च तथा कलिः ।
राजमूलानि सर्वाणि राजा धर्मस्य कारणम् ॥ ३ ॥

राजा बभूव लोकेऽस्मिन्मदान्धो नाम पार्वति । अहङ्कारावृतो दुष्टो देवब्राह्मणकण्टकः
कलिद्वापरयोः सन्धौ तस्य दोषाच्च भामिनि । अनावृष्टिरभूद्घोरा लोके द्वादशवार्षिकी
न ववर्ष सहस्राक्षः प्रतिलोमोऽभवत्प्रभुः । नादृश्यन्तापि राज्यन्ते कुत एवाम्रजातयः

नद्यःसंक्षिप्ततोयौघाःक्वचिदन्तर्हितास्तदा । निवृत्तयज्ञस्वाध्यायानिर्वषट्कारमङ्गलाः
उच्छिन्नकृषिगोरक्षानिवृत्तविपणास्तथा । अस्थिकङ्कालसङ्कीर्णाहाहाभूतनराकुलाः
शून्यभूयिष्ठनगरा दग्धग्रामनिवेशिनः । गोजाश्वमहिषैर्हीना भक्ष्यमाणाः परस्परम्
आश्रमान्सम्परित्यज्य पर्यधावन्नितस्ततः । ब्राह्मणा दुःखबहुला मृतानष्टाश्चपार्वति
सृष्टिरुन्मूलितासर्वा जङ्गमास्थावराखिला । एतस्मिन्नन्तरेदेवाःशक्राद्याभयविह्वलाः
शरण्यं शरणं जग्मुर्देवदेवं जनार्दनम् । क्षीरोदस्योत्तरे कूले श्वेतद्वीपं मनोरमम् ॥
ब्रह्मलोकादिभिर्लोकैरनौपम्यगुणं शुभम् । सदानन्दकरं शान्तं सूर्यकोटिसमप्रभम्

स्वेच्छाकल्पितविन्यासप्रासादशयनासनम् ।
वज्रेन्द्रनीलवैडूर्यचन्द्रकान्तादिदीपितम् ॥ १४ ॥

जरामृत्युभयोपेतसर्वव्याधिविवर्जितम् । तस्मिन्द्वीपेततो देवि सूर्यकोटिसमप्रभम्

साष्टाङ्गां प्रणतिं कृत्वा ते देवाः स्तुतिमब्रुवन् ॥ १५ ॥

भवान्ब्रह्मा च रुद्रश्च महेन्द्रोदेवसत्तमः ।:भवान्कर्त्ताविकर्त्ताचलोकानांप्रभवोऽव्ययः
एवं च सत्यं परमं तपश्च परमं तथा । पवित्रं परमं मार्गं यज्ञस्त्वं परमः प्रभो ॥
परं हौत्रं परं धाम त्वामाहुः पुरुषं परम् । एवं स्तुतस्तदा तैस्तु देवदेवो वरानने !

प्राह देवांस्ततः कृष्णः किं करोम्यद्य वः सुराः ।
विज्ञप्तस्तैर्हरिर्देवो ह्यनावृष्ट्या प्रपीडितैः ॥ १६ ॥

उपायः कथ्यतां देवतुष्टिःपुष्टिर्यथाभवेत् । ध्यानेनचिन्तयित्वाचकथयामासकेशवः
गच्छध्वं त्रिदशाः सर्वे महाकालवने शुभे । लिङ्गं वृष्टिकरं तत्र पुरा मेघैःप्रतिष्ठितम्

मेघा वृष्टिकराः सर्वे तस्मिँल्लिङ्गे च सन्ति वै ।
तस्य लिङ्गस्य माहात्म्याद्वृष्टिरेव भविष्यति ॥ २२ ॥

प्रतीहारेश्वराद्देवादीशाने विद्यते सुराः । तस्य तद्वचनं श्रुत्वा वासुदेवस्य पार्वति
महाकालवनेप्राप्ता यत्रास्ते लिङ्गमुत्तमम् । तुष्टुवुः परया भक्त्या दृष्ट्वा देवंमनोरमम्
नमस्तेऽस्तु महेशाय नमोऽनन्ताय मालिने । नमस्तैजसमूर्त्तायनमः सौन्दर्यशालिने
नमो योगाय वेदाय नमः पिङ्गजटाय ते । अनन्तज्ञानदेहाय नम ईश्वरमूर्त्तये ॥ २६ ॥

नमःशुभ्राट्टहासायनमस्तेऽस्तुशिखण्डिने । शङ्करायनमस्तेऽस्तुनमस्तेस्तुपिनाकिने
नमोऽन्तकायभव्यायत्र्यम्बकायास्तुतेनमः । नमस्तेबहुरूपाय नमस्तेऽचिन्त्यमूर्त्तये
नमो योगशरीराय नमस्ते सर्व सर्वदा । नष्टं देव जगत्सर्वमनावृष्ट्या प्रपीडितम् ॥
सुवृष्ट्या देवदेवेश पाहि नः शरणागतान् । एतस्मिन्नन्तरे मेघा पार्वणाङ्गारवर्चसः
लिङ्गमध्यात्समुत्तस्थुर्वादयन्तो नभस्तलम् । अन्योन्यवेगाभिहतावबृषुर्भूतले तदा
जातं विनिष्प्रभं सर्वं न प्राज्ञायत किञ्चन । तिमिरौघपरिक्षिप्ता रेजुश्चाथदिशोदश
तेतस्यदेवदेवस्यमाहात्म्येनप्रतोषिताः । देवाः प्रीतिपरांजग्मुः सर्वेऽमृतमिवोत्तमाः
ततस्तमः संहरन्तो विनेशुश्च बलाहकाः । प्रवबुःशीतला वाताःप्रशान्ताश्चदिशोदश

शुद्धप्रभाणि ज्योतींषि सोमं चक्रुः प्रदक्षिणाम् ।
अविग्रहं ग्रहाश्चक्रुः प्रशान्ताश्चापि सिन्धवः ॥ ३५ ॥

महर्षयोविशोकाश्चगन्धर्वाश्च कलं जगुः । अभूत्सृष्टिःपुनःसर्वालिङ्गस्यास्यप्रभावतः
सुरैःसम्पूज्यभक्त्यातेचक्रुर्नामयथार्थतः । अस्यलिङ्गस्यमाहात्म्यं दृष्ट्वाप्रीताःसुराबहु
मेघनादेश्वरं नाम भविष्यत्यस्य सर्वतः । मेघनादेश्वराख्यानं मया ते कथितं प्रिये

भविष्यन्ति नरा भूमौ कृतार्थास्तत्प्रभावतः ।
दर्शनादस्य लिङ्गस्य कामवृष्टिर्भविष्यति ॥ ३६ ॥

कल्पकोटिसहस्राणि कल्पकोटिशतानि च । कुर्वंल्लिङ्गस्य स्नपनं रुद्रलोकेमहीयते
प्रभावः पठ्यते यत्र मेघनादस्य पार्वति । अतिवृष्टिश्चैव ततो भविष्यति च भूतले

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये मेघनादेश्वरमाहात्म्यवर्णनंनामत्रयोविंशोऽध्यायः ॥ २३॥

---

# चतुर्विंशोऽध्यायः

## महालयेश्वरमाहात्म्यवर्णनम्

### ईश्वर उवाच

महालयं महाभागे चतुर्विंशतिकं शुभम् । ब्रह्मादिस्तस्वपर्यंतं त्रैलोक्यंसचराचरम् ॥
उत्पादितं धृतं व्याप्तं त्वया देव मया श्रुतम् । त्वयैकेन विशुद्धेन सर्वगेन महात्मना
अत्यर्थं मुनयःसर्वेमुदितामौनिनोऽव्ययाः । वदन्ति कारणंचास्यत्रैलोक्यस्यमहेश्वर
त्वया सर्वमिदं सृष्टं त्रैलोक्यं भूर्भुवादिकम् । उत्पाद्यमानमुत्पन्नं प्रलीयच्चसहस्रशः
देवदानवगंधर्वमुनिचारणभोगिनाम् । उत्पत्तिस्थितिसंहारास्त्वया दृष्टामुहुर्मुहुः ॥
जगच्चराचरं देव कुत्र स्थित्वा सृजस्यलम् । लीलया संहरस्येतत्प्रसादाद्वक्तुमर्हसि

कोऽसौ महालयो रौद्रग्रहरूपी व्यवस्थितः ।
यस्मिन्धृतं त्वया सर्वं त्रैलोक्यं भूर्भुवादिकम् ॥ ७ ॥

इतिपृष्टस्त्वयादेवि!मयातेकथितं पुरा । इदानीं कथयिष्यामि श्रृणुष्वैकाग्रमानसा
पृथिव्यादीनि भूतानि महाकालवने प्रिये । धृतानि प्रलयस्यान्ते एकोद्देशेमहालये
ब्रह्मलोकादिभिर्लोकैरनौपम्यगुणं शुभम् । स्थानं महालयं तत्र ममानन्दकरंपरम् ॥
परंब्रह्ममयं लिङ्गं तत्रतिष्ठति सर्वदा । तस्यलिङ्गस्य मध्ये तु धृतंकृत्स्नंचराचरम्
तत्र ब्रह्मादयो देवाविष्णुस्तत्रैवसंस्थितः । लिङ्गस्याभ्यंतरेदेविसर्वमेवाधितिष्ठति

तस्माल्लिङ्गात्समुत्पन्नो महानात्मा महामतिः ॥ १२ ॥
भूतादिश्चाप्यहङ्कारो विष्णुः शम्भुश्च पार्वति !।
बुद्धिःप्रज्ञा धृतिः ख्यातिः स्मृतिर्लज्जा सरस्वती ॥ १३ ॥
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १४ ॥
अस्माद्भूतानि लिङ्गानि महाभूतानि पञ्च वै ।

पृथिवी वायुराकाशमापो ज्योतिः प्रलीयते ॥ १५ ॥

स्थलमापस्तथाकाशंजन्मचापिचतुर्विधम् अण्डजोद्भिज्जश्चसस्वेदंजरायुजमथापिवा

चतुर्द्धा जन्मचिह्नंयल्लिङ्गेऽस्मिन्नेवलक्ष्यते । तपः कर्म च पुण्यञ्च व्रतं दानं तथैव च

रजःसत्त्वं तमोभावस्तस्माल्लिङ्गाच्च जायते ।

तस्मिंस्तच्छ्रूयते सत्यं ज्योतिर्ब्रह्म सनातनम् ॥ १८ ॥

अव्यक्तकारणं सूक्ष्मं यत्तत्सदसदात्मकम् । यस्मात्पितामहोजज्ञे प्रभुरेकःप्रजापतिः

विश्वेदेवास्तथादित्या वसवोऽथाश्विनावपि ।

यक्षाः साध्याः पिशाचाश्च गुह्यकाः पितरस्तथा ॥ २० ॥

आपो द्यौःपृथिवीवायुरन्तरिक्षं दिशस्तथा ।

सम्वत्सरर्तवो मासाः पक्षाहोरात्रयस्तथा ॥ २१ ॥

यच्चान्यदपितत्सर्वंसम्भूतंलोकसाक्षिकम् । यदिदंदृश्यतेकिञ्चित्तस्यान्तेच प्रलीयते

अतोमहालयोनाम विख्यातोभुवनत्रये । मुक्तीश्वरस्यदेवस्य दक्षिणेसम्व्यवस्थितः

यः पूजयति तल्लिङ्गं रुद्रमूर्त्या महालयम् ।

त्रैलोक्यविजयी नित्यं कीर्त्तिमान्स नरो भवेत् ॥ २४ ॥

महालयेश्वरे पुण्ये पूजिते परमेश्वरे । भक्त्या परमया चैव सर्वे देवाः सुपूजिताः ॥

भवन्तीह महाभागे! यतस्तैरपि पूज्यते ॥ २५ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्ये महालयेश्वरमाहात्म्यवर्णनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

# पञ्चविंशोऽध्यायः

## मुक्तीश्वरवर्णनम्

श्रीहर उवाच

पञ्चविंशतिकन्देवं विद्धि मुक्तीश्वरं प्रिये । यस्य दर्शनमात्रेण मुक्तिर्भवति पार्वति
पुराराथन्तरे कल्पे बभूव द्विजसत्तमः । मुक्तिर्नाममहाभागे संशितात्मा जितेन्द्रियः
महाकालसमीपे तु मुक्तिलिङ्गमनुत्तमम् । महाकालवने रम्ये तत्रास्ते योगतत्परः

ततस्तेपे जिताहारो वत्सराणि त्रयोदश ।

कदाचित्सोऽभिषेकाय आजगाम महानदीम् ॥ ४ ॥

शिप्रांविप्रप्रियांपुण्यांमहापातकनाशिनीम् । तत्रस्नात्वाजपन्विप्रोददर्शायान्तमग्रतः
व्याधं महाधनुष्पाणिं रक्तनेत्रंसुभीषणम् । वदन्तं हन्तुकामम्वै वल्कलानांजिघृक्षया
तं दृष्ट्वा क्षुभितोविप्रोब्रह्मघ्नस्यभयादिति । ध्यायन्नारायणन्देवं तस्थौतत्रैवसद्विजः
तं दृष्ट्वान्तर्गतहरिर्व्याधो भीत इवाग्रतः । विहाय सशरं चापं ततो वचनमब्रवीत् ॥

व्याध उवाच

हन्तुमिच्छुरहं ब्रह्मन्भगवन्तमिहागतः । इदानीं स्वगताबुद्धिस्त्वां दृष्ट्वैव महाप्रभम्

ब्राह्मणानां सहस्राणि स्त्रीणामयुतशस्तथा ।

निहतानि मया ब्रह्मन्वृत्तिहेतोः कुटुम्बिना ॥ १० ॥

नच मे व्यथितंचित्तंकदाचिदपिजायते । इदानींतप्तुमिच्छामितपोऽहंत्वत्समीपतः
उपदेशप्रदानेन प्रसादं कर्तुमर्हसि । एवमुक्तो ह्यसौ विप्रो नोत्तरम्प्रत्यपद्यत ॥१२
ब्रह्महापापकर्मेतिमत्वाब्राह्मणपुङ्गवः । अनुक्तोऽपिस धर्मस्तुव्याधस्तत्रैवतस्थिवान्

स्नात्वा सद्यः समायातो मुक्तिलिङ्गसमीपतः ।

द्विजेन सहितो देवि! दृष्ट्वा देवं सनातनम् ॥ १४ ॥

तत्क्षणाद्दिव्यदेहस्तु तस्मिँल्लिङ्गेलयंगतः । दृष्ट्वातन्महदाश्चर्यं मुक्तिर्विप्रो निजान्तरे

चिन्तयामास सहसा मुक्तिः प्राप्ता वरानने !॥ १५ ॥

व्याधेन पापयुक्तेन समाधिरहितेन च । मया पुनः समाचीर्णं तपः परमदुष्करम्
न प्राप्ता परमा मूर्त्तिर्मुक्तिर्नैव च लभ्यते । एवं सचिन्तयित्वाथवैराग्याद्ब्राह्मणर्षभः

अन्तर्जलगतो भूत्वा चचार विपुलन्तपः ॥ १७ ॥

कस्यचित्त्वथ कालस्य तां नदीमगमत्किल ।

व्याघ्रो बुभुक्षितः साध्वि! तं विहन्तुं समुद्यतः ॥ १८ ॥

अन्तर्जलचरं विप्रं यावद्व्याघ्रो जिघृक्षति ।

नमोनारायणायेति तावद्वाक्यं द्विजोऽब्रवीत् ॥ १६ ॥

व्याघ्रेणापि श्रुतो मन्त्रोऽजहात्प्राणांश्च तत्क्षणात् ।

दिव्याम्बरधरो देवि! दिव्याभरणभूषितः ॥

दिव्यालङ्कारशोभाढ्यः पुरुषश्चाभवच्छुभः ॥ २० ॥

सोऽब्रवीद्यामि तं देशं यत्र विष्णुः सनातनः ।

त्वत्प्रसादाद्द्विजश्रेष्ठ! मुक्त्वा शापान्निरामयः ॥ २१ ॥

इत्युक्ते ब्राह्मणःप्राह कोऽसित्वंपुरुषर्षभ !। सोऽब्रवीदस्मिराजेन्द्रप्रतापीपूर्वजन्मनि
दीर्घबाहुरितिख्यातः सर्वधर्मविशारदः । अहं जानामिवेदांश्चशास्त्राणिविविधानिच
शुभाशुभमहं वेद्मि सर्वज्ञोऽहं महीतले । ब्राह्मणैर्नैव मे कार्यं किं वस्तु ब्राह्मणा इति

तस्यैकस्मिन्दिने विप्राः सर्वे क्रोधसमन्विताः ।

ददुः शापं दुराधर्षं क्रूरो व्याघ्रो भविष्यति ॥ २५ ॥

अपमानेन विप्राणां मांसाहारी भयावहः। सञ्जातोऽस्मिद्विजश्रेष्ठपश्यकालविपर्यये
इत्युक्तोऽहं पुरा तैस्तु ब्राह्मणैर्वेदपारगैः । दुर्धर्षोऽयं मया प्राप्तो ब्रह्मशापोद्विजर्षभ
ततस्ते ब्राह्मणाः सर्वे प्रणिपत्य मयामुने। प्रसादिता भृशं विप्र!तदा गद्गदया गिरा

जानामि तेजो विप्राणां महाभाग्यञ्च धीमताम् ।

अपेयः सागरः क्रोधात्कृतो यैर्लवणोदकः ॥ २६ ॥

तथैवदीप्ततपसां मुनीनांभावितात्मनाम् । येषांक्रोधाग्निरद्यापिकण्डके नोपशाम्यति

ब्राह्मणानां परीभावाद्वातापिश्च दुरात्मवान् ।
अगस्त्यिमृषिमासाद्य जीर्णः क्रूरो महासुरः ॥ ३१ ॥

सर्वभक्षः कृतो वह्निर्भृगुणा कारणान्तरे । गौतमेन पुरा शक्रः स सहस्रभगः कृतः
दशधा केशवो जज्ञे ब्रह्मशापात्सुदुस्तरात् । प्रसन्नैर्वालखिल्यैश्चपक्षीन्द्रोगरुडःकृतः
अश्विनौ देवभिषजौच्यवनेनमहात्मना । विष्टम्भयित्वाकुलिशंकृतौतौसोमपायिनौ
कार्त्तवीर्यार्जुनेनैव बाहूनां च सहस्रकम् । दत्तात्रेयप्रसादेन प्राप्तं परमदुर्लभम् ॥
पुरासेन्द्रावशिष्ठेन रक्षितास्त्रिदिवौकसः । ब्राह्मणप्रभवं सौख्यंकीर्तिरायुर्यशोबलम्
लोकालोकेश्वराश्चैव सर्वे ब्राह्मणपूर्वकाः । एते हि सोमराजान ईश्वराः सुखदुःखयोः
भस्मीकुर्युर्जगदिदं क्रुद्धाःप्रत्यक्षदर्शनाः । प्रभावाबहवश्चापि श्रूयन्ते ब्रह्मवादिनाम्
क्रोधश्चविपुलःसद्यःसद्यःप्रत्ययकारकः । अहं कोपाद्द्विजेन्द्राणांगतोनिरययातनाम्

नित्यं क्रोधाच्छ्रियं रक्षेद्धनं रक्षेत्समत्सरात् ।
विद्यां मानापमानाभ्यामात्मानं तु प्रमादतः ॥ ४० ॥

मयाऽज्ञानात्कृतं पापं राजगर्वेण दैवतः। क्षन्तुमर्हथ विप्रेन्द्रा भवतः शरणागतम् ॥
अथ तुष्टाद्विजाःसर्वेत ऊचुर्मामिदंमुदा । षष्ठान्नकालिकस्तेऽग्रे यदास्थास्यतिकश्चन

मांसभोक्ता च भविता कञ्चित्कालं नराधिप !।
यदा शिप्रान्तरे पुण्ये स्नातस्तु द्विजसत्तमः ॥ ४३ ॥

अन्तर्गलगतेनोक्तो नमो नारायणेति च । जिघृक्षुर्व्याघ्ररूपेण तदा मुक्तो भविष्यसि
एवं स भवता प्रोक्तोनमोनारायणेतिच । मंत्रः श्रुतोमयात्वत्तस्तस्येयं व्युष्टिरागता
जातोऽहं दिव्यदेहस्तुप्रसादात्तवसुव्रत !। स कृतार्थोऽस्मिसञ्जातोभगवन्दर्शनात्तव
परं च गृह्यतां मत्तोयश्च ते संशयो हृदि । तं च ब्रूहि द्विजश्रेष्ठ! सर्वंसम्पादयामिते

तवोपदेशदानेन आनृण्यं गन्तुमुत्सहे ॥ ४८ ॥
इति तस्य वचः श्रुत्वा दिव्यदेहस्य स द्विजः ।
प्रोवाच परया तुष्ट्या प्रफुल्लमुखपङ्कजः ॥ ४६ ॥

अद्य मे सफलं ज्ञानमद्य मे सफलं तपः। अद्य मे सफला जिह्वा सफलं चक्षुरद्य मे॥

श्रुतं देवेन सम्प्रोक्तंत्वात्वापश्यन्तिदेहिनः । प्राक्छरीरगतं तेऽद्य व्याघ्ररूपन्तपोत्तम
तेजोमयं शरीरं तु ब्रह्मरूपं सनातनम् । यदि त्वहमनुग्राह्यो यद्येवं कर्तुमर्हसि॥
कारणं श्रोतुमिच्छामि हृदि मे वर्त्तनेचिरम् । कथं मुक्तिर्महाभागमुक्तिकामेनयत्नतः
योगाभ्यासरतेनापि वत्सरांश्च त्रयोदश । न लब्धा परमाश्चर्यं तपसा दुष्करेण तु

व्याधेनापि भृशं तेन प्राप्ता मुक्तिः क्षणेन तु।

अत्र मे संशयो जातः को हेतुः कथ्यतां भृशम् ॥ ५५ ॥

तस्य तद्वचनं श्रुत्वा ततो वचनमब्रवीत् । कथयामि परं गुह्यं रहस्यंमुक्तिलक्षणम्
महादेवमुपास्याशु मुने मुक्तिः सुदुर्लभा । पुरातनैस्तु विद्वद्भिरिदमुक्तं महात्मभिः
श्रणुष्वैकमना विप्र कुरुयत्नंयथार्थतः । मन्नियोगाद्द्विजश्रेष्ठततोमुक्तिमवाप्स्यसि

शप्तोऽहं तैर्यदा विप्रैस्तदा मे तोषिता भृशम् ।

ममानुकम्पया प्रोक्तं मुक्तिस्ते भविता नृप ! ॥ ५६ ॥

मुक्तिकामो महाकालेमुक्तिर्ब्राह्मणसत्तमः । विद्यतेतपसायुक्तः स ते प्रश्नंकरिष्यति
मुक्तीश्वरंतदा लिङ्गंतस्याग्रेकथयिष्यसि । तवापितस्यमुक्तेश्चमुक्तिरेवंभविष्यति

पूर्वं हि चिह्नितं कर्म देहिनो न विमुञ्चति ।

धात्रा विधिरयं दृष्टो बहुधा कर्मभिश्च यः ॥ ६२ ॥

इतितस्य वचःश्रुत्वा स विप्रोब्रह्मवित्तमः । अन्तर्जलात्समुत्थायततोवचनमब्रवीत्

दिष्ट्या त्वमागतो भूप! दिष्ट्या ते सङ्गतं मया ।

ईदृशा दुर्लभा लोके नरा मुक्तिप्रदर्शकाः ॥ ६४ ॥

इत्युक्त्वा नृपविप्रौ तौ मुक्तिलिङ्गं समागतौ ।

दर्शनार्थं विशालाक्षि! दृष्ट्वा देवं सनातनम् ॥ ६५ ॥

तत्क्षणात्सशरीरौ तौ तस्मिँल्लिङ्गेलयंगतौ । ईदृशोऽयंमयादेवि!महिमाकथितस्तव

अस्य लिङ्गस्य संस्पर्शान्मुक्तिर्भवति नान्यथा ।

येऽर्चयन्ति सदा भक्त्या मुक्तिलिङ्गं सनातनम् ।

अपि पापसमायुक्ताः ( स्ते ) स याति ( न्ति ) परमां गतिम् ॥ ६७ ॥

२ मूढाः किंतपोभिश्च किंदानैर्नियमैश्च किम् । कुरुध्वंमुक्तिलिङ्गस्यदर्शनंमुक्तिदायकम्
न मां विदुर्देवगणा नासुरा न महर्षयः । परं रूपंविशालाक्षियदस्मद्द्युति निर्मलम्
न मे वेत्तिपरंरूपंस्वयंसाक्षात्प्रजापतिः । नविष्णुस्त्रिदशश्रेष्ठाःकुतोऽन्ये मुनयःप्रिये
यदेतद्दृश्यते तेजो लिङ्गरूपं यशस्विनि !। एतदेवशुकाद्याहिध्यायन्तित्रिदशाश्रमी
अनेकजन्मसंशुद्धा योगिनोऽनुग्रहान्मम । प्रविशन्तु तनुं देवि!मदीयांमुक्तिदायिकाम्
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्येमुक्तीश्वरमाहात्म्यवर्णनंनाम पञ्चविंशोऽध्यायः ॥ २५ ॥

——:*:——

# षड्विंशोऽध्यायः

## सोमेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

विद्धि षड्विंशकंदेवि! देवं सोमेश्वरं परम् । यस्यदर्शनमात्रेणनिष्कलङ्कोनरो भवेत्
अत्रिर्नाममहाभागोब्रह्मणो मानसः सुतः । प्रजापतिरभूद्दे वि ! कल्पे वाराहसञ्ज्ञके

तस्य पुत्रोऽभवत्सोमो दक्षोऽथ मातृभागतः ।
सप्तविंशतिर्याः कन्या दाक्षायण्यः प्रकीर्तिताः ॥ ३ ॥
सोमपत्न्यो हि मन्तव्यास्तासां श्रेष्ठा तु रोहिणी ।
तामेव भजते सोमो नेतरा इति शुश्रुम ॥ ४ ॥

इतराःप्रोचुरागत्य दक्षस्याग्रे यथातथम् । दक्षोऽथसतदागत्य तमुवाच सनाकरोत्
यदा न वारितस्तस्थौदक्षःक्रुद्धस्तदाप्रिये । शशापसोमंसङ्क्रुद्धःशीघ्रमन्तर्हितोभव
एवं शप्तस्तुसोमोवै तदाह्यन्तर्हितोऽभवत् । शशापसोमोदक्षंतुःभवानपि भविष्यति
अनेकत्वं विहायैतज्जलदेहं सनातनम् । अतः प्राचेतसो दक्षो ब्रह्मपुत्रोऽपि गीयते ॥
एवमन्तर्हितः सोमो गतो वै दक्षशापतः । देवाश्चनागायक्षाश्च गन्धर्वाः पितृभिःसह

वैराजं ब्रह्मसदनं ब्रह्माणं समुपस्थिताः ॥ ९ ॥
तस्याग्रे कथयामासुर्नमस्कृत्य पुनः पुनः ।
भगवन्सर्वभूतानामादिकर्त्ता स्वयम्भुवः ॥ १० ॥
स्रष्टा च हव्यकव्यानां पाहि नः शरणागतान् । देवानां वचनं श्रुत्वा ज्ञात्वा देवः प्रजापतिः
आश्वासयामास सुरान्सुश्लिष्टैर्वचनाम्बुभिः । अवश्यं त्रिदशास्तेन प्राप्तव्यं कर्मणः फलम्
शापान्तं भगवान्देवो विष्णुरेव करिष्यति । एतच्छ्रुत्वा ततो देवा वाक्यं पङ्कजजन्मनः
शरण्यं शरणं विष्णुमुपतस्थुर्गतव्यथाः ॥ १३ ॥
ब्रह्मणा सहिता देवि! स्तुतिं चक्रुः समाहिताः । नमस्ते देवदेवेश नमस्ते विश्वभावन
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज !॥ १४ ॥
नारायण जगन्नाथ देवास्त्वां शरणं गताः । त्वं हि नः परमो ध्येयस्त्वं हि नः परमो गुरुः
त्वं हि नः परमो देवो ब्रह्मादीनां सुरोत्तम !। अन्तर्धानं गतः सोमो दक्षशापाज्जनार्दन
विना सोमेन चौषध्यो नष्टा देव महीतले । तेषां तद्वचनं श्रुत्वा विष्णुर्वचनमब्रवीत्
भयं त्यजध्वममरा अभयं वो ददाम्यहम् । नष्टं चन्द्रमसं शीघ्रमानयिष्याम्यसंशयम्
एवमुक्त्वा तु भगवान्विसृज्य त्रिदशेश्वरान् । सोमं सस्मार सहसा शङ्खचक्रगदाधरः
यदा स्मृतो नचाभ्येति तदा क्रुद्धो जनार्दनः । पुराणपुरुषो देवो ब्रह्माणमिदमब्रवीत्
देवैरसुरसङ्घैश्च मथ्यतां कलशोदधिः । भविष्यति पुनश्चन्द्रो मथ्यमाने महोदधौ ॥
अमृतं तत्र लप्स्यध्वं रत्नानि विविधानि च ।
तस्य तद्वचनं श्रुत्वा वासुदेवस्य पार्वति !॥ २२ ॥
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा च वासुकिम् । देवा मथितुमारब्धाः समुद्रं निधिमम्भसाम्
सोमार्थे च पुरा देवि तथैवासुरदानवाः । एतैर्मुखमुपाश्लिष्टो नागराजो महेर्ष्यया ॥
विबुधाः सहिताः सर्वे यतः पुच्छं ततः स्थिताः । अतो वै भगवान्देवो यतो नारायणस्ततः
शिरस्युद्यम्य नागस्य पुनः पुनरवाक्षिपत् ।
उदधौ मथ्यमाने वै महाञ्छब्दो बभूव ह ॥ २६ ॥
तत्र नानाजलचरा विनिष्पिष्टा महाद्रिणा । विलयं समुपाजग्मुः शतशोऽथ सहस्रशः

तस्मिंस्तु मथिते देवि! प्रयत्नात्केशवस्य च ।
प्रसन्नात्मा समुत्पन्नः सोमः शीतांशुरुज्ज्वलः ॥ २८ ॥
तमेव देवा मनुजाः पितरश्च यशस्विनि !। उपजीवन्ति वृक्षाश्चतथैवौषधयो विधुम्
समुत्पन्नमथो दृष्ट्वा भगवान्प्राहकेशवः । पालयेमाः प्रजाश्चन्द्र त्वं ज्येष्ठोजगतो भव
इत्युक्तो वासुदेवेन प्रजाःपालयितुं शशी । पूर्वं सोमोऽपि यो नष्टःप्रविष्टोगहनंवनम्
तस्याग्रे नारदः सर्वं कथयामास सत्वरम् ।
देवर्षेर्वचनं श्रुत्वा नारदस्य महात्मनः ॥ ३२ ॥
पीडितो दक्षशापेन सोमोऽप्यन्तर्हितस्तदा । जगाम शरणं देवि ब्रह्माणं परमेष्ठिनम्
तत्र गत्वा यथाशापं कथयामास गद्गदः । पूर्वचन्द्रवचः श्रुत्वा ब्रह्मा वचनमब्रवीत् ॥
अयं मे प्रथमः पुत्रः पीडितः शशिनाभृशम् । नवेनोदधिजातेन किंमयाक्रियते पुनः
विष्णुना च बलं दत्तमस्मै चन्द्रमसे दृढम् । तस्माद्यास्यामि तत्राहंयत्रदेवोजनार्दनः
तं दृष्ट्वा मधुहन्तारं ब्रह्मा विष्णुमुवाचह । त्वदादेशाज्जगन्नाथ एष चन्द्रः कृतो मया॥
स चायं पीडितो देव शशाङ्केन नवेन वै । इत्युक्तोब्रह्मणा देवि!वासुदेवोजगत्पतिः
वृत्तान्तं कथयामास ब्रह्माग्रे च पुनः पुनः ॥ ३८ ॥
ब्रह्मापि पूर्वचन्द्रार्थे विष्णुं लोकनमस्कृतम् ।
तुष्टाव प्रणतो भूत्वा प्राञ्जलिः प्रणतः स्थितः ॥ ३९ ॥
नमःकृष्णनमोविष्णोनमोजिष्णोनमोनमः । नमोवामनगोविंदनमोऽनन्तनमोऽच्युत
जयस्व गोविंद! महानुभाव! जयस्व विष्णो! जय पद्मनाभ !।
जयस्व सर्वाद्य गदाधरेश जयस्व विश्वेश्वर विश्वमूर्त्ते !॥ ४१ ॥
एवं स्तुतस्तदादेवि ब्रह्मणा लोककारिणा । समीपस्थंसमालोक्य सोमंवचनमब्रवीत्
गच्छसोम ममादेशान्महाकालवनोत्तमे । उत्तरे मुक्तिलिङ्गस्य लिङ्गंकान्तिकरंपरम्
तमाराधय यत्नेन स ते देहं प्रदास्यति ॥ ४३ ॥
इत्युक्तो वासुदेवेन ब्रह्मणा च पुनः पुनः । आजगाम महादेवि! महाकालवनोत्तमे ॥
लिङ्गं दृष्ट्वा च तुष्टाव स्तोत्रेणानेन सुव्रते !॥ ४४ ॥

चन्द्र उवाच

नमो देवाधिदेवाय त्रिनेत्राय महात्मने । रक्तपिङ्गलनेत्राय जटामुकुटधारिणे ॥ ४५ ॥
भूतवेतालजुष्टाय महादेवाय शूलिने । भीमाट्टहासयुक्ताय कपर्दिस्थाणवे नमः ॥
पूष्णो दन्तविनाशाय तथान्धकविनाशिने । कैलासवरवासाय सर्वदेवाय ते नमः ॥
विकरालोर्द्ध्वकेशाय भैरवाय नमोनमः । अग्निज्वालाकरालाय कलिधर्मविघातिने
तथा दारुवनध्वंसकारिणे तिग्मशूलिने । कृतकङ्कणभोगीन्द्र कण्ठसूत्राय शूलिने ॥
प्रचण्डदण्डहस्ताय वडवाग्निमुखाय च । वेदान्तवेद्याय नमो यज्ञमूर्त्ते नमोनमः ॥
दक्षयज्ञविनाशाय जगद्भयकराय च । विश्वेश्वराय देवाय स्थूलसूक्ष्माय शम्भवे ॥
कपर्दिने करालाय सर्वदेवाय ते नमः ॥ ५१ ॥

एवं स्तुतस्तदादेविचन्द्रेणान्तर्हितेन च । लिङ्गरूपीमहादेवस्तुष्टो वाक्यमथाब्रवीत्
स्तोत्रेणानेन तुष्टोऽस्मि ब्रूहि सोम! किमिच्छसि ।
यत्तेऽभिलषितं सर्वं तत्कर्त्तास्मि न संशयः ॥ ५२ ॥

सोम उवाच

यदि त्वहमनुग्राह्यो यदि तुष्टोऽसि मे प्रभो !।
कान्त्या दीप्त्या तथा मूर्त्या तथा रूपेण च प्रभो !॥ ५४ ॥

स्वपदं कर्त्तुमिच्छामि त्वत्प्रसादान्महेश्वर !। एवमस्त्विति लिङ्गेनतत्क्षणाद्रजनीचर
द्विजराजेन तत्प्राप्तं लिङ्गस्यास्य प्रसादतः । सोमेनाराधितोयस्माद्देवदेवो महेश्वरि
तेन सोमेश्वरोनाम विख्यातो भुवनत्रये । येऽर्चयन्ति महादेवि देवं सोमेश्वरं परम्
कृतपुण्यानरामर्त्यास्ते यान्ति परमंपदम् ।
यःपश्यति नरो भक्त्या लिङ्गं सोमेश्वरंप्रिये !॥ ५८ ॥

विमुक्तो जन्मदुःखाद्यैर्लीयतेमयि मानवः । तेनराःपशवोलोकेकिं तेषांजीवितेफलम्
यैश्च सोमेश्वरोदेवो न दृष्टो नच पूजितः । संसारेऽस्मिन्महाघोरे जन्मरोगभयाकुले
एकः सोमेश्वरः पूज्यः कुष्ठरोगविनाशनः । स एव सुकृतीलोकेकुलंतेनाप्यलङ्कृतम्
आधारः सर्वलोकानां येन सोमेश्वरोऽर्चितः ।

सकृद्भ्यर्च्य सोमेशं विल्वपत्रेणमानवः। मुक्तोभोगी निरातङ्कोममलोकेवसेच्चिरम्
काञ्चनैःकुसुमैर्देवि लिङ्गंसोमेश्वरम्प्रिये। पूजयन्तिनराभक्त्या तेयान्तिपरमांगतिम्
एष ते कथितो देवि! प्रभावः पापनाशनः। सोमेश्वरस्य देवस्य शृणुष्वानरकेश्वरम्

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्ये सोमेश्वरमाहात्म्यवर्णनं नाम
षड्विंशोऽध्यायः ॥ २६ ॥

---

# सप्तविंशोध्यायः

## अनरकेश्वरवर्णनम्

### श्रीमहादेव उवाच

सप्तविंशतिमं देव्यनरकेश्वरसञ्ज्ञकम्। यस्यदर्शनमात्रेण स्वप्नेऽपि नरकः कुतः ॥१
पुरा कलियुगे देवि! कल्पे वाराहसञ्ज्ञके। कलुषं कालमासाद्य सत्ये च प्रलयंगते

निर्मर्यादा निराधारा निरौकानास्तिका जनाः।
वर्णाश्रमाश्च सञ्जाता वञ्चयन्ति परस्परम् ॥ ३ ॥
नार्चयन्ति सुरान्विप्राः कर्म कुर्वन्ति कुत्सितम्।
लोभमोहपरा भूत्वा कामसक्ताश्च मानवाः ॥ ४ ॥

वैरबद्धाश्च सञ्जाताः परस्परवधे रताः। निवृत्तयज्ञस्वाध्यायपिण्डोदकविवर्जिताः
ब्राह्मणा सर्वभक्ष्याश्च मृषावादपरायणाः। भूयिष्ठं कूटमानैश्च पण्यं विक्रीणते तदा
दृश्यन्ते षोडशे वर्षे नराः पलितिनः।प्रिये !। आयुःक्षयो मनुष्याणां क्षिप्रमेवप्रपद्यते
एवंविधाः समुद्भूता नरा नार्यश्च पातकैः। नरकेषु प्रपद्यन्ते क्रमात्पापानुसारतः॥
कुठारैर्भिन्नमूर्द्धानः क्रकचैः पाटिताः परे। अग्निवर्णैश्च सन्दंशैरुत्पाटितविलोचनाः

भिन्नाश्चायोमयैस्तीक्ष्णैरग्नितप्तैश्च कीलकैः।

पीड्यन्ते शैलशिखरैश्चूर्ण्यन्ते क्रूरभूधरैः ॥ १० ॥
क्षिप्यन्तेतप्तकुण्डेषुदह्यन्तेवह्निराशिषु । अमेध्येऽधोमुखाश्चान्येमर्द्दितादण्डपाणिना
लौहैश्चशृङ्खलैर्बद्धाह्यधोवक्त्रैश्चलम्बितैः। अन्तरिक्षेपरिक्षेपात्क्रन्दन्तोऽतीवदुःखिताः
कृमिभिर्भ्रमरैस्तीक्ष्णैर्दंशैश्च मशकैस्तथा । लोहतुण्डैश्च विहगैर्निर्दयैर्भक्षिता नराः
केचित्कृत्ताः प्रधावन्ति तोयार्थञ्च तृषातुराः ।
स्वमूत्रं पायिताश्चण्डैः क्षुभिताश्चापि घातनैः ॥ १४ ॥
यैश्चाङ्गैःपतितं कर्मक्रियते पुरुषैर्भुवि । तेषांतान्येव चाङ्गानिशोध्यन्तेयातनागतैः
ये पश्यन्ति गुरुं देवान्ब्राह्मणान्क्रुद्धचक्षुषा । दुष्टेन परदारांश्च वीक्षन्ते लोचनेन ये ॥
तेषां नेत्राणि भिद्यन्ते कृष्यन्ते लोहशङ्कुभिः ॥ १६ ॥
श्रवणौ च प्रपूर्यन्ते लौहेन शङ्कुना ततः । पुनश्च शस्त्रैः कृष्यन्तेपुनस्तप्तैश्च कीलकैः
लौहैर्वेगान्निखन्यन्ते यैः श्रुतं गुरुनिन्दनम् ।
मित्राणां देवतानाञ्च साध्वीनामथवा क्वचित् ॥ १८ ॥
शतशःपाट्यते जिह्वावह्निवर्णैरयोमुखैः । शङ्कुभिस्तीक्ष्णसूक्ष्माग्रैःपूर्यन्तेचानिलैःपुनः
तद्वक्त्राणि बहूनवारान्येऽपवादरतानराः । ये गुरुंमातरञ्चापि पारुष्येण वदन्ति वै
ये निघ्नन्ति दुराचाराः सुरार्थायोपकल्पिते । आरामे पुष्पपत्राणितेषामङ्गानिकृन्तति
यैरप्यालिङ्गितानारी परस्यच दुरात्मभिः । तेषामयोमयीनारी वह्निवर्णातुवक्षसि
स्थाप्यते बध्यतेचापिप्रचण्डैर्यमकिङ्करैः । नार्यश्चपुरुषैस्तप्तैरालिङ्ग्यन्तेह्ययोमयैः
तदा लोहमये गेहे ज्वलितानलसंस्तरे ।
निक्षिप्यन्ते नरैः सार्द्धमासाद्य कालसङ्क्षयम् ॥ २४ ॥
यावती वेदना देहे इहलोके प्रदृश्यते । नराणामङ्गपीडावै तस्माच्छतगुणा भवेत् ॥
काकैश्चवृश्चिकैर्गृध्रैर्भक्ष्यन्तेऽप्यपरेनराः। दह्यमानाविलपन्तिभ्रातस्ताततेतिचाकुलाः
वदन्त्यसकृदुद्विग्ना न च शान्तिं लभन्ति वै ॥ २६ ॥
दुःखानि ते प्राप्नुवन्ति यान्यसह्यानि पार्वति !।
एवं ते यातनादुःखं प्राप्नुवन्ति सुनिश्चितम् ॥

निमिर्नाम महाभागो यममार्गं ददर्श ह ॥ २७ ॥

रौद्रं भयानकं दुर्गं पूरितम्पापकर्मभिः। तमसा सम्वृतञ्चैव केशशैवालशाद्वलम् ॥
सम्पृक्तं पापकृद्दुर्गन्धैर्मांसशोणितकर्द्दमैः। वह्निज्वालेनदीप्तेन समन्तात्परिवारितम्
अधोमुखैश्च कर्कोटैर्गृध्रैश्च समभिद्रुतम्। सूचीमुखैस्तथा प्रेतैर्विन्ध्यशैलोपमैर्वृतम्
वृक्षै रुधिरमांसैश्च छिन्नबाहूरुपाणिभिः। निकृत्तोदरहस्तैश्च तत्रतत्र प्रचारितैः ॥
वृतं कुणपदुर्गन्धैरशिवं भोगवर्जितम्। असिपत्रवनञ्चैव समन्तात्परिवारितम् ॥

करम्भवालुकाकीर्णमायसीश्च शिलाः पृथक्।
ददर्श चापि देहोत्थयातनां पापकर्मणाम् ॥ ३३ ॥

स तं दुर्गन्धमालक्ष्य पुरुषं तमुवाच ह। कियदध्वानमस्माभिर्गन्तव्यमिदमब्रवीत्
देशोऽयंकश्चदेवानामेतदिच्छामिवेदितुम्। इत्युक्तोयमदूतस्तुदण्डहस्तोऽग्निसप्रभः

पुरतो दर्शयन्मार्गमित एहीत्युवाच ह ॥ ३५ ॥

भूयःसराजा तं प्राहकिङ्करं विनयान्वितः। भो याम्यपुरुषाचक्ष्वकिंमया दुष्कृतंकृतम्
येनेदं व्यसनम्प्राप्तं मया च धार्मिकेण हि। निमिर्नामाहं विख्यातो जनकनामहंकुले
जातो विदेहविषये सम्यङ्मनुजपालकः। चातुर्वर्ण्यञ्च धर्मस्थं कृत्वा संरक्षितं मया
धर्मप्रधानकल्पेन मनुनाऽत्र यथा पुरा। यज्ञैर्मयेष्टं बहुभिर्धर्मतः पालिता मही ॥ ३६
नोत्सृष्टश्चैव संग्रामोनातिथिर्विमुखोऽभवत्। कृतास्पृहाचन मयापरस्त्रीविभवादिषु

सोऽहं कथमिमं प्राप्तो नरकं भृशदारुणम्।
इति पृष्टस्तदा तेन निमिना यमकिङ्करः॥
उवाच प्रणतो भूत्वा क्रूरोऽपि प्रश्रितं वचः ॥ ४१ ॥

पुरुष उवाच

महाराजयथात्थत्वं तथैतन्नात्रसंशयः। किन्तुस्वल्पंकृतम्पापं भवन्तंस्मारयामितत्

उक्ता या दक्षिणा श्राद्धे न दत्ता सा त्वया नृप !।
प्रमादाद्विस्मृता सैव तस्येदं कर्मणः फलम् ॥ ४३ ॥

एतावदेव ते पापं नान्यत्किञ्चन विद्यते। वैदेहागच्छ पुण्यानामुपभोगायपार्थिव ॥

एवं श्रुत्वा तु राजर्षिर्निमिर्दूतमथाब्रवीत् । यास्यामिदेवानुचरयन्नमां त्वं हिनेष्यसि
किञ्चित्पृच्छामि ते तत्त्वं यथावद्वक्तुमर्हसि ।
वज्रतुण्डास्त्वमी काकाः पुंसां नयनहारिणः ॥ ४६ ॥
पुनःपुनश्च नेत्राणि तद्वत्तेषांभवन्ति हि । किं कृतं कर्मदूनेन्द्र कथयैतज्जुगुप्सितम्
हरन्त्येषां तथा जिह्वांजायमानांपुनर्नवाम् । करपत्रेणपाट्यन्ते कस्मादेतेसुदुःखिताः
किमेतेनष्टचित्ताश्च तुद्यन्तेऽहर्निशंनराः । एताश्चान्याश्च दृश्यन्ते यातनापापकर्मिणाम्
कियत्कालं भविष्यन्ति तन्ममोद्देशतो वद ॥ ४९ ॥

पुरुष उवाच

यन्मांपृच्छसि भूपाल पापकर्मफलोदयम् । तत्तेऽहंसम्प्रवक्ष्यामिसंक्षेपेणतथातथम्
पुण्यापुण्ये हि पुरुषः पर्यायेण समश्नुते । भुञ्जतश्चक्षयं याति पुण्यम्पापमथापिवा
न तु भोगादृते पुण्यं पापं कर्म च मानवः । परित्यजति राजेन्द्र! सत्यमेतदुदाहृतम्
एवमेते महापापा यातनाभिरहर्निशम् । क्षपयन्ति महाघोरं नरकान्तरवर्त्तिनः ॥ ५३॥
देवत्वेऽथ मनुष्यत्वे तिर्यक्त्वेऽथ शुभाशुभम् ।
पुण्यपापोद्भवं भुङ्क्ते सुखदुःखं न संशयः ५४ ॥
एतदुद्देशतोराजन्भवता कथितं मया । स्वकर्मफलमोक्षाणांपुण्यानां पापिनान्तथा
तदेह्यन्यत्र गच्छावो यथादृष्टं त्वयाधुना । ततस्तमग्रतः कृत्वा सराजा गन्तुमुद्यतः
तदाहिसर्वैरुद्घुष्टं यातनास्थायिभिर्नृभिः । प्रसादंकुरुभूपेति तिष्ठतावन्मुहूर्त्तकम् ॥
त्वदङ्गसङ्गा पवनो देहान्ह्लादयते हि नः ॥ ५७ ॥
परितापं च गात्रेभ्यः पीडाबाधाश्चकृत्स्नशः । अपहन्ति नरव्याघ्रकृपांकुरुमहीपते
एतच्छ्रुत्वा वचस्तेषां तं याम्यपुरुषं नृपः । पप्रच्छ कथमेतेषामाह्लादो मयितिष्ठति
किं मया कर्म तत्पुण्यं मर्त्यलोके महत्कृतम् । प्रह्लादजननी दृष्टिर्यस्येयंतदुदीर्यताम्

पुरुष उवाच

त्वया दृष्टो महाकाले विख्यातोऽनरकेश्वरः ।
आश्विनस्य चतुर्दश्यां तस्येदं फलमीदृशम् ॥ ६१ ॥

तत्स्नानाद्गात्रसंसर्गी पवनो ह्लाददायकः । पापकर्मकृतां राजन्यातना न प्रबाधते ॥

राजोवाच

यदिमत्संनिधानेसायातना न प्रबाधते । ततो भद्रमुखात्राहंस्थास्येस्थाणुरिवाचलः

पुरुष उवाच

एहि राजेन्द्र! गच्छाम्बो निजपुण्यसमार्जितान् ।।
भुङ्क्ष्व भोगान्न यास्येतां यातनां पापकर्मणाम् ॥ ६४ ॥

राजोवाच

न स्वर्गे ब्रह्मलोके वा तत्सुखं प्राप्यते नरैः ।
यदार्त्तजन्तुं निर्वाणमानेतुमिति मे मतिः ॥ ६५ ॥
तस्मान्नतावद्यास्यामि यावदेते सुदुःखिताः ।
मत्सन्निधानात्सुखिनो भवन्तु नरकौकसः ॥ ६६ ॥

आप्स्यन्तेतेयदिसुखंवहवोदुःखिते मयि । किन्तुप्राप्तंमयासर्वंतस्मात्त्वंव्रजमाचिरम्

पुरुष उवाच

एष धर्मश्चशक्रश्चत्वांनेतुंसमुपागतौ । अवश्यमस्माद्गन्तव्यं तस्मात्पार्थिवगम्यताम्

एतस्मिन्नन्तरे धर्मः शक्रेण सहितोऽब्रवीत् । निमे परमधर्मज्ञ प्रीता देवगणास्तव॥

ऐह्येहिपुरुषव्याघ्रकृतमेतावताप्रभो । सिद्धिःप्राप्तात्वयाराजँल्लोकाश्चाप्यक्षयान्विताः

नचमन्युस्त्वयाकार्यः शृणु मे वचनंविभो । अवश्यंनरकस्तावद्द्रष्टव्यः सर्वराजभिः

नयामि त्वामहं स्वर्गं त्वयासम्यगुपासितः । विमानवरमारुह्यविमलंचाद्यगम्यताम्

निमिरुवाच

नरके मानवा धर्मपीड्यन्तेऽत्रसहस्रशः । त्राहीतिवार्त्ताक्रन्दन्तोमामतोनव्रजाम्यहम्

इन्द्र उवाच

कर्मणा नरके प्राप्तिरेषां च पापकर्मणाम् । स्वर्गेत्वयाऽपिगन्तव्यं नृप!पुण्येनकर्मणा

राजोवाच

परिजानासि धर्मज्ञ! त्वं वा शक्र शचीपते !। विशिष्टं ममकिं पुण्यंशुभंतद्वक्तुमर्हसि

धर्म उवाच

आश्विनस्य तु मासस्यकृष्णपक्षेचतुर्दशी । तस्यां त्वयामहाबाहोमहाकालवनोत्तमे

दृष्टो देवः सुविख्यातः स्वर्गदोऽनरकेश्वरः ॥ ७६ ॥

तद्विशिष्टं च ते पुण्यं तस्य सङ्ख्या न विद्यते ।

स्वकर्मोपार्जितम्पुण्यं भुङ्क्ष्व राजन्यथासुखम् ॥

एते नारकिकाः सर्वे क्षपयन्तु स्वकर्मजाम् ( यातनामितिशेषः ) ॥ ७७ ॥

राजोवाच

कथं स्पृहां करिष्यन्तिसत्संगेषुचमानवाः । यदि मत्सन्निधावेषामुत्कर्षोनोपजायते

तस्माद्यत्सुकृतं किञ्चिद्विशिष्टतरमस्तिवै । तेन मुच्यन्तु नरकात्पापिनोयातनागताः

धर्म उवाच

राजंस्त्वया कृतं पूर्वेऽनरकेश्वरदर्शनम् । तदुत्पन्नस्य पुण्यस्य कलामेभ्यःप्रयच्छ वै

तत्पुण्यस्य प्रभावेण मोक्ष्यन्तेनरकादिमे । तथा कृते ततस्तेन विमुक्ता नरकाच्च ते

ततोऽब्रवीद्धर्मराजोऽनिमिं शक्रसमन्वितः । एवं श्रेष्ठतरं स्थानं त्वया प्राप्तं महीपते

एतांश्च नारकान्पश्य विमुक्तान्पापकर्मणः । ततोऽपतत्पुष्पवृष्टिस्तस्योपरिमहीपतेः

विमानं चाधिरोप्यैनं स्वर्लोकमनयद्धरिः । येये तत्राभवन्पापा यातनाभ्यःपरिच्युताः

प्रभावात्तस्य देवस्य स्वर्गलोकं गताः प्रिये !।

अतो देवः सुविख्यातः स देवोऽनरकेश्वरः ॥ ८५ ॥

स्तुतो देवगणैः सर्वैर्नरकादवतारकः । जातः स एव सुकृतीकुलं तेनैवपावितम् ॥

यः पश्यतिनरो नित्यं देवञ्चानरकेश्वरम् । येऽर्चयन्तिनराभक्त्या देवञ्चानरकेश्वरम्

तेषां विलीयते पापं पूर्वजन्मशतोद्भवम् ॥ ८७ ॥

येऽनुमोदन्ति देवस्य दर्शनं पर्वतात्मजे । तेऽपिपापविनिर्मुक्ताःप्रयान्तिममममन्दिरे

समतीतं भविष्यच्च कुलानामयुतंनरः । मम लोकं नयत्याशु तस्यलिङ्गस्यदर्शनात्

शिवयोगसमायुक्ता कृष्णा या च चतुर्दशा ।

सा प्रोक्ता वल्लभा तस्य सर्वपापप्रणाशिनी ॥ ९० ॥

ये चायान्ति नरास्तस्यां देवं चानरकेश्वरम् । उपोष्यपापैर्मुच्यन्ते नराःशतजन्मजैः
कर्मणामनसावाचायत्पापंसमुपार्जितम् । तत्क्षालयतिदेवोसौतिथौतस्यांसमर्चितः
एष ते कथितो देवि!प्रभावः पापनाशनः । जटेश्वरस्य देवस्य शृणुमाहात्म्यमुत्तमम्

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-चतुरशीतिलिङ्गमाहात्म्येऽनरके (मनके) श्वरमाहात्म्यवर्णनंनामसप्तविंशोऽध्यायः ॥

---

# अष्टाविंशोऽध्यायः

## जटेश्वरमहिमवर्णनम्

### श्रीदेवदेव उवाच

अष्टाविंशतिकं विद्धि विख्यातं च जटेश्वरम् । यस्यदर्शनमात्रेणमुक्तोभवति मानवः
पुरा राथन्तरे कल्पे वीरधन्वा महीपतिः । धर्मात्मा च यशस्वीचबभूवभुविविश्रुतः
सकदाचिद्वनं गत्वा मृगहेतोर्वरानने !। व्यापादयन्मृगगणान्धनुषा क्रोधविह्वलः ॥
जगाम तत्र यत्रासन्भ्रातरः पञ्च सुव्रताः । सम्वर्त्तस्य सुतादेविमृगरूपेणसंस्थिताः
ते कदाचिद्वने पञ्च दृष्ट्वाहरिणपोतकान् । श्वसतो जातमात्रांश्चकौतूहलसमन्विताः

एकैकं जगृहुस्तत्र मृतास्ते त्वतिदुःखिताः ।
ततः सर्वे च ते पञ्च ययुर्वै पितुरन्तिकम् ॥ ६ ॥

प्रायश्चित्त' समीहन्तःसम्वर्त्तं सांसदैवृतम् । ऊचुस्तेवचनं चेदं मृगहिंसाश्रितंतदा

जातमात्रा मृगाः पञ्च अस्माभिनहताः प्रभो !।
अकामतस्ततोऽस्माकंप्रायश्चित्त' विधीयताम् ॥ ८ ॥

ऊचेस शुद्धिमाप्नोतिप्रायश्चित्तेकृतेसति ।'अनधीत्य धर्मशास्त्रं प्रायश्चित्त'ददातियः

प्रायश्चित्ती भवेत्पूतः किल्बिषं दातरि व्रजेत् ॥'९ ॥

धर्मशास्त्रसमारूढा वेदखड्गधरा द्विजाः ।क्रीडार्थमपि यद्ब्रयुः स धर्मःपरमःस्मृतः

ब्रह्मच्छिद्रंजपच्छिद्रं यच्छिद्रं यज्ञकर्मणि । अच्छिद्रं जायते सर्वंब्राह्मणैरुपपादितम्
अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः ।
प्रणश्यत्यखिलंपापमग्निष्टोमफलं भवेत् ॥ १२ ॥
इत्येवं वदति श्रेष्ठे संवर्त्ते द्विजसत्तमे । समागताश्च मुनयो भृग्वत्र्यङ्गिरसादयः॥
तेषामर्थे यथावृत्तं कथयामासुरेव ते । संवर्त्तस्य सुता दीना भक्तिनम्राः पुनः पुनः
तेऽप्यूचुर्धर्मशास्त्राणि विहितानि यथार्थतः ।
प्रायश्चित्तं यथोद्दिष्टं देशकालविभागतः ॥ १५ ॥
अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः ।
प्रायश्चित्तार्द्धमर्हंति स्त्रियो वै व्याधितस्य च ॥ १६ ॥
देशं कालं वयः शक्ति पापं चावेक्ष्य यत्नतः ।
प्रायश्चित्तं प्रकल्प्यं स्यादितिधर्मो व्यवस्थितः ॥ १७ ॥
इदानीं मृगचर्माणि परिधाय धृतव्रताः । चरध्वं पञ्च वर्षाणि ततः शुद्धाभविष्यथ
एवमुक्तास्तु ते बालामृगधर्मोपजीविनः । वनं विविशुरव्यग्राध्यायन्तोब्रह्मशाश्वतम्
ततो वर्षे ह्यतिक्रान्ते वीरधन्वा महीपतिः ।
तत्राजगाम यस्मिस्ने चरन्ति मृगरूपिणः ॥ २० ॥
ते चाप्येकतरोमूलेमृगधर्मोपजीविनः । जपन्तः संस्थितास्ते हिराज्ञादृष्टामृगाइति
मत्वा विद्धास्तु नाराचैर्मृतास्ते ब्रह्मवादिनः ।
तान्दृष्ट्वा च मृतान्राजा ब्राह्मणान्संशितव्रतान् ।
भयेन वेपमानस्तु देवराताश्रमं ययौ ॥ २२ ॥
तत्रापृच्छद्ब्रह्मवध्या मम जातामहामुने । आमूलान्तंवधन्तस्यकथयित्वा नराधिपः
भृशं शोकपरीतात्मा रुरोद भृशदुःखितः । स ऋषिर्देवकल्पस्तु रुन्दतं नृपसत्तमम्
उवाच मा भैर्नृपतेअपनेष्यामिपातकम् । पाताले सुतलाख्ये तु निमज्जन्तीयथाधरा
उद्धृता देवदेवेन विष्णुना क्रोडमूर्त्तिना । तद्वद्भवन्तं राजेन्द्र ब्रह्महत्यापरिप्लुतम् ॥
उद्धरिष्यति देवोऽसौ स्वयमेव जनार्दनः ॥ २६ ॥

एवमुक्तस्ततो राजा दुरितो ( दुःखितो ?) वाक्यमब्रवीत् ॥ २७ ॥
किमनेन द्विजेनैव निष्प्रभेण दुरात्मना । उद्धर्तुंनैव शक्नोति स्वयमेव द्विजाधमः ॥
इत्युक्त्वा कोपरक्ताक्षः खड्गेनैव जघान तम् । मृतंदृष्ट्वाद्विजंराजाक्रोधेनकलुषीकृतः
तस्मिन्नेवधनेदेविपापसङ्घेनमोहितः । जघान कपिलांदोग्ध्रींसवत्सांगालवस्यच
क्षुधार्त्तश्च तृषार्त्तश्च बाल्यान्मोहाच्च साहसात ।
क्रूरा बुद्धिः समभवज्जटीभूतं च पातकम् ॥ ३१ ॥
जटीभूतेन पापेन बभ्राम गहने वने । स कदाचित्तुरङ्गेण हृतो दूरं महद्वनम् ॥ ३२॥
व्याघ्रसिंहगजाकीर्णं मृगशम्बरसेवितम् । एकाकी तत्रराजासावश्वंमुक्त्वातरोरधः
कुशोपरि तदातत्रसुष्वाप च स निर्भयम् । तत्रव्याधाः समचरन्दृष्ट्वासुप्तंचनिर्भयम्
ते गतास्त्वारिताव्याधाःस्वभर्तुःकथनायवै । स्वामिनातेननिर्दिष्टानिग्रहीतुंप्रचक्रमुः
तावद्राज्ञःशरीरात्तु श्वेताऽभरणभूषिता । उत्थायचक्रमादायतयाम्लेच्छाश्चपातिताः
दस्यून्विहत्य सा देवी तत्रैवादर्शनं गता ॥ ३७ ॥
अथ राजा तया मुक्तः प्रतिबुद्धोऽथ तत्क्षणात् ।
म्लेच्छांश्च निहतान्दृष्ट्वा चिन्तयामास पार्थिवः ॥ ३८ ॥
गोवध्या ब्रह्मवध्या च वने ह्यस्मिन्सुदारुणा । कथं मया नृशंसेनप्राप्तापापपरंपरा ॥
एवं स चिन्तयित्वाऽथ निःश्वस्य च पुनःपुनः । तमेवाश्वंसमारुह्यवामदेवाश्रमंययौ
मुनिना वामदेवेन दृष्टो राजा तथाविधः ।
जटीभूतेन पापेन पीडितो दुःखितस्तदा ॥ ४१ ॥

वामदेव उवाच

अयं स पुरुषव्याघ्रो वीरधन्वा महीपतिः । सोमवंशसमुत्पन्नो दशां कष्टांसमागतः
उद्धरिष्यामि राजानमेनं पुरुषसत्तमम् । इत्यालोच्य तदा विप्रो वामदेवो महातपाः
प्रत्युवाच महीपालं वीरधन्वानमातुरम ॥ ४३ ॥
भोभो राजन्महीपाल! वीरधन्वेति विश्रुतः ।
विदूरथस्य तनयो विख्यातो भुवनत्रये ॥ ४४ ॥

प्राग्भवे व्याधरूपेणनिहिथाविपिने मृगान् । दृढं जागरणंरात्रावामलक्यास्तरोरधः
फाल्गुनामलपक्षे त्वामलक्येकादशीशुभा । पुष्यर्क्षयोगिनीतस्यांजामदग्न्यप्रदक्षिणा
पूजा लोकैः कृताद्दृष्टा विस्मयेनत्वया पुरा । अकामादुपवासोऽभूत्तस्यांजागरणंपुनः
तत्प्रभावादभू राजा महाबलपराक्रमः । तया संरक्षितो राजन्म्लेच्छवर्गाद्वनेऽधुना ॥
निहताः शत्रवः सर्वे तयैव शुभमाप्स्यसि । पूर्वकर्मविपाकेन ब्रह्महत्या समागता॥
ज्ञाता तपःप्रभावेन मया योगबलेन च । जटीभूतं शरीरं ते पापसङ्घेन पार्थिव

इदानीं पालयिष्यामि शृणु मे वचनं परम् ॥ ५१ ॥

इत्युक्तो वामदेवेन मुनिना स महीपतिः । प्रणम्यप्रयतो भूत्वा पप्रच्छ च पुनः पुनः
कथं यास्यन्ति मे हत्या गोब्राह्मणसमुद्भवाः । उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ॥

तस्य तद्वचनं श्रुत्वा वामदेवो महामुनिः ।
कथयामास माहात्म्यं लिङ्गस्यास्य यशस्विनि ॥ ५४ ॥

महाकालवनं गच्छ महाराज ममाज्ञया । तत्रास्ते देवदेवोऽपि जगद्व्यापी जटेश्वरः
पापसङ्घप्रहर्त्ता च सर्ववेदेषु पठ्यते । देवस्यानरकेशस्य उत्तरे स व्यवस्थितः ॥ ५६
तस्य तद्वचनं श्रुत्वा वामदेवस्य पार्थिवः । आजगाम त्वरायुक्तो महाकालवनोत्तमे
तत्र दृष्ट्वा जगद्वन्द्यं देवदेवं जटेश्वरम् । स्तुतिं चकार राजेन्द्रो भक्तया परमया पुनः॥

शिवाय ते नमो नित्यं विश्वकाय नमोनमः ।
नमो दिव्याय गुह्याय गूढव्रतशरीरिणे ॥ ५९ ॥

नमो जटाय रामाय माययाक्रान्तकारिणे । नमोऽस्तु बहुरूपाय नमो नीलाभरूपिणे
नमो भोगाय धूम्राय नमोऽस्तु गगनात्मने । नमो वह्निसमूहाय नमस्ते निर्मलाकर
नमो महान्धकारार्क नमस्ते शत्रुघातिते । नमः संसारपाराय दिव्यरूपशरीरिणे ॥

नमः कनकवर्णाय नमो मोहितमोहिने ॥ ६२ ॥
नमः सुरूपाय सुरार्चिताय नमो विरूपाय प्रकृतेः पराय ।
नमोनमो रूपनिराश्रयाय श्यामासुरूपाय नमो नमस्ते ॥ ६३ ॥

इति स्तुतस्तदा देवि महादेवोमहेश्वरः । जटावेष्टितसर्वाङ्गो लिङ्गमध्याद्विनिस्सृतः

भस्मचर्चितसर्वाङ्गो भोगिभोगाङ्गदोज्ज्वलः ।
हिमराशिनिभाकारो राजताचलनिर्मलः ॥ ६५ ॥
मुक्तालतानिभाभिस्तु जटाभिर्भूषितो विभुः ।
कपिलाभिः करालाभिर्विकटाभिश्च वेष्टितः ॥ ६६ ॥
भोगीन्द्रफणबद्धाभिः सितपीतादिभिस्तथा ।
नदीरूपाभि ( रे ? ) रूताभिः शोभितोऽसौ जटेश्वरः ॥ ६७ ॥

राजानं प्रत्युवाचेदं वचनं पर्वतात्मजे !। स्तोत्रेणानेन राजेन्द्र तुष्टोऽहंतोषितस्त्वया
जटीभूतं घने पापं गतं मद्दर्शनेन वै । तस्मात्स्थानं परं गच्छ मदीयं शाश्वतं मुदा
इत्युक्तो देवदेवेन वीरधन्वामहीपतिः । जगाम परमं स्थानं दाहप्रलयवर्जितम् ॥
कामगेन विमानेन स्तूयमानो गणैः प्रिये । पापसङ्घेन मुक्तोऽसौ जटीभूतेशदर्शनात्

लिङ्गश्चातः समाख्यातो नाम्ना देवो जटेश्वरः ।
जटेश्वरं वरारोहे! ये पश्यन्ति सुभक्तितः ॥
तेषां पापं जटीभूतं तत्क्षणादेव नश्यति ॥ ७२ ॥

येऽर्चयन्ति सदा देवि देवदेवं जटेश्वरम् । तेषां बलंप्रभावश्च सौभाग्यं चभविष्यति
येऽप्यन्ये देवगन्धर्वा यक्षराक्षसमानवाः । लिङ्गंच पूजयिष्यन्तिविधिवद्भक्तिभावतः

तेऽपि कामानवाप्स्यन्ति यांश्च कांश्चसुदुर्लभान् ।
ऐश्वर्यं धर्ममतुलं दीर्घमायुररोगताम् ॥ ७५ ॥
निःसपत्नत्वमतुलं यच्चान्यत्तदवाप्नुयात ।
पापिनः क्रूरकर्माणो येऽपि लिङ्गं समाश्रिताः ॥
तेऽपि पापविनिर्मुक्ता भविष्यन्ति गतज्वराः ॥ ७६ ॥

जटेश्वरंप्रपश्यन्ति भक्त्यायेचदिनेदिने । ते धर्मधनसौभाग्यैर्भविष्यन्ति समन्विताः

व्याधितो व्याधिना मुक्तो दुःखी दुःखात्प्रमुच्यते ।
दर्शनात्तु भवेत्सद्यः सर्वपातकवर्जितः ॥ ७८ ॥
जटेश्वरस्य माहात्म्यं ये पठिष्यन्ति पार्वति !।

श्रोष्यन्ति येऽपि मद्भक्त्या प्रयताः श्रद्धयान्विताः ॥ ७६ ॥
ते सर्वकामानाप्स्यन्ति गतिमन्तेचमत्पुरे । यानारी दुर्भगासापिसौभाग्यंलभतेसदा
गुर्विणी लभते पुत्रमरोगं श्रुतिभूषणम् । शिशुग्रहाश्च नश्यन्ति नापमृत्युभयंभवेत्
मांगल्यमिदमायुष्यं धर्मकामाश्रयंमहत् । दुःस्वप्नजंभयंघोरंपापजंयाति सङ्क्षयम्
दुर्भुक्तंदुर्जनस्पर्शं यच्चाल्पायुःकरंभवेत् । लिङ्गाख्यानकथां श्रुत्वाविनश्यतिनसंशयः
श्राद्धेषु यःपठेदेतां जटेश्वरकथां शुभाम् । तदक्षयं भवेच्छ्राद्धं पितृणां प्रीतिवर्द्धनम्
एष ते कथितो देवि! प्रभावः पापनाशनः ।
जटेश्वरस्य देवस्य शृणु रामेश्वरं शिवम् ॥ ८५ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डेऽचतुरशीतिलिङ्गमाहात्म्ये जटेश्वरमाहात्म्यवर्णनं नामाऽष्टाविंशोऽध्यायः ॥ २८ ॥

---

# एकोनत्रिंशोऽध्यायः

## रामेश्वरमाहात्म्यवर्णनम्

### श्रीहर उवाच

एकोनत्रिंशतं विद्धि देवं रामेश्वरं प्रिये !। यस्य दर्शनमात्रेण मुच्यते ब्रह्महत्यया ॥
पुरा त्रेतायुगे देवि ! रामःःशस्त्रभृताम्वरः । शूरः सर्वगुणोपेतः पितृभक्तो बभूव ह
रेणुकागर्भसम्भूतः स्वयं रामो बभूव ह ।
विष्णुरेवावतीर्णोऽसौ भृगोः शापात्सुदुस्तरात् ॥ ३ ॥
स कदाचिन्नियुक्तोऽसौ मुनिना जमदग्निना ।
शिरश्छिन्धीत्युवाचेदं मातुस्ते विपुलं सुत !॥ ४ ॥
स पितुर्ववचनं श्रुत्वा भ्रातृणां मातुरेवच । शिरांसिचिच्छिदेरामोजमदग्निर्वरंददौ
सर्वेषां पृथिवीशानां त्वमजेयो भविष्यसि । सर्वक्षयकरो भावीन चिरादेव भार्गव

गृहाण परशुं पुत्र वह्निज्वालोद्भवं दृढम्। अनेन शितशस्त्रेण ततःख्यातोभविष्यति
अथ केनापि कालेन कार्त्तवीर्यार्जुनो नृपः। हैहयानां कुले जातः सहस्रबाहुर्विश्रुतः
जघान जमदग्निं तु कामधेनुकृतेकुधीः। पितरं निहतं दृष्ट्वा रामः क्रुद्धोऽब्रवीदिदम्

अथ पश्यन्तु मे वीर्यं त्रयो लोकाः सनातनम्।
स च पश्यतु दुर्बुद्धिर्ब्रह्महा कृतवीर्यजः॥ १०॥

मत्पिता निहतो येन सत्कर्मनिरतः सदा। तस्यबाहुसहस्रं तुछेत्स्यामीह नसंशयः

इत्युक्त्वा क्रोधरक्ताक्षः कार्त्तवीर्यार्जुनं भुवि।
धर्षयित्वा यथाकामं क्रोशमानं पुनः पुनः॥ १२॥

कृत्स्नं बाहुसहस्रं च चिच्छेद भृगुनन्दनः। परश्वधेन तीक्ष्णेनज्ञातिभिःसहितंतदा
रथस्थं पातयामास जघान नृपतिं प्रिये!। त्रिःसप्तकृत्वःपृथिवीतेननिःक्षत्रियाकृता
कृत्वा निःक्षत्रियां चैवभार्गवः स महाबलः। सर्वपापविनाशाय वाजिमेधेनचेष्टवान्

तस्मिन्यज्ञे महादाने दक्षिणां भृगुनन्दनः।
मारीचाय ददौ प्रीतः कश्यपाय वसुन्धराम्॥ १६॥

वारुणांस्तुरगाञ्छुभ्रान्रथं च रथिनां वरः। हिरण्यमक्षयं धेनूर्गजेन्द्रांश्च महामतिः
तदा तस्मिन्महायज्ञे वाजि मेधेमहायशाः। तथापिन गता हत्याह्यनेकप्राणिसम्भवा
एवं किल पुराणेषु सर्वागमभिदादिषु। विश्वस्तघातिनां चैव निष्कृतिःश्रूयतेयथा
अश्वमेधेन यज्ञेन ब्रह्महत्या विनश्यति। अथवा द्वादशाब्देन यद्येकाऽऽस्याकृताभुवि
मया पुनर्नृशंसेन बहवः प्राणिनो हताः। विश्वस्ताश्च प्रमत्ताश्च गर्भस्थाश्च पुनःपुनः
स्त्रियो वृद्धाश्च बालाश्चमाता चैव विशेषतः। इतिदुःखान्वितोरामो विषादंपरमंगतः
चिन्तयित्वा मुहूर्तं तु गतो रैवतकं गिरिम्। तथातपोऽतपद्घोरंबहून्वर्षगणान्प्रिये

तथापि न गता हत्या ह्यनेकप्राणिसम्भवा।
अथ रामो जगामाथ महेन्द्रे मलये तथा॥ २४॥

सह्ये हिमालये रम्ये पुण्ये बदरिकाश्रमे। चरित्वा पर्वतान्सर्वान्स्नानार्थंनर्मदां ययौ

यमुनां चन्द्रभागां च गङ्गां त्रिपथगामिनीम्।

इरावतीं वितस्तां च परां चर्मण्वतीं शुभाम् ॥ २६ ॥
विशालां कपिलां दुर्गां गम्भीरां गोमतीं शिवाम् ।
गोदावरीं दशार्णां च पुण्यां भीमरथीं तथा ॥ २७ ॥
गयां चैव कुरुक्षेत्रं नैमिषं पुष्करं तथा । अट्टहासं प्रभासं च केदारममरेश्वरम् ॥ २८
कृतयात्रोऽपि दुःखार्त्तश्चिन्तयामास भार्गवः ।
न नूनं तीर्थमाहात्म्यं दृश्यते भुवि साम्प्रतम् ॥ २६ ॥
न गताब्रह्महत्यामेकृतोधर्मो निरर्थकः । मिथ्यातत्कथ्यते शास्त्रेतीर्थदानादिभिःशुभैः
यदि स्यात्सत्यमेतच्च नष्टं जातं कथं मम ॥ ३० ॥
एतस्मिन्नेव काले तु नारदो मुनिपुङ्गवः । आजगाम तमुद्देशं यत्र रामोऽव्यवस्थितः
विषण्णवदनो दीनश्चिन्तयानः पुनः पुनः । दृष्ट्वा तथाविधोरामः प्रत्युवाचाथनारदम्
भोभो नारद देवर्षे !शृणु मे परमं वचः । जननी निहता पूर्वं पितुर्वाक्याद्द्विजोत्तम
पितुःपराभवाद्भूमौ भूमिपाला मया हताः ।
गर्भाविदारिताः स्त्रीणां बाला वृद्धाश्चयोषितः ॥ ३४ ॥
निरन्तरा हता लोका विशोकेनादयालुना । पश्चाद्घृणा समुत्पन्ना परलोकं ममेक्षतः
यज्ञः कृतोऽश्वमेधश्च दत्तं दानमनेकधा । स्नातोऽहं सर्वतीर्थेषु सर्वप्रस्रवणेषु च ॥३६
पर्वतेषु तपस्तप्तं हुतं जप्तं निरन्तरम् । ब्रह्महत्याविनाशार्थं किं किं नात्र मया कृतम्
परं नैव गता हत्या तस्मात्सर्वं निरर्थकम् ॥ ३८ ॥
इतितस्यवचःश्रुत्वा नारदोभगवानृषिः । प्रत्युवाच हितंसत्यंचिरंध्यात्वावचस्तदा
भोभो राम! किमात्मानं न स्मरस्यधुना हरिम् ॥ ३६ ॥
त्वयैव कथितं पूर्वं ब्रह्महत्याविनाशनम् । महाकालवने क्षेत्रे क्षेत्राणामुत्तमं परम्॥
तस्मिन्क्षेत्रे महालिङ्गं ब्रह्महत्याविनाशनम् ॥ ४० ॥
जटेश्वरो महाभाग! विद्यते सर्वसिद्धिदम् । कृतावताररामत्वंतत्रगच्छाविलम्बितम्
नारदस्य वचः श्रुत्वा स्मृत्वा क्षेत्रमनुत्तमम् ॥ ४१ ॥
जगाम त्वरितं देवि! महाकालवने ततः । लिङ्गमाराधयामास ततो हत्यागताक्षयम्

लिङ्गमध्यादहं देवि! प्रसन्नो निर्गतस्तदा ॥ ४२ ॥
जामदग्न्यो मया प्रोक्तः कान्तकामं ददाम्यहम् ।
स प्रोवाच ततो रामो भक्तिनम्रात्मकन्धरः ॥ ४३ ॥
त्वत्पादपङ्कजे भूयाद्भक्तिर्मे विपुला सदा । वरमेतं प्रयच्छाद्य यदि तुष्टो महेश्वर ॥
इत्युक्तोऽहंतदातेनयथातुष्टेनपार्वति । तस्मै दत्ता मयाभीष्टावरा कीर्त्तिकरास्थितिः
अद्यप्रभृति ते नाम्ना देवःख्यातोभविष्यति । यदारामेश्वर इति त्रिषु लोकेषु गीयते
भक्त्याये पूजयिष्यन्ति देवं रामेश्वरंपरम् । आजन्मप्रभवं पापंतेषांनश्यतितत्क्षणात्
स एव पुण्यवान्पूज्य इह लोके परत्र च । यःपश्यतिनरो भक्त्या देवं रामेश्वरंशिवम्
येऽनुमोदन्तिदेवस्य दर्शनंयजनं तथा । तेऽपि पापविनिर्मुक्ताः प्रयान्तिममसन्दिरम्
यच्चापि पातकं घोरं ब्रह्महत्यासहस्रकम् । तत्पापं विलयं याति रामेश्वरसमर्चनात्
दुष्प्राप्यं यत्फलं विप्रैर्वाजपेयादिभिर्मखैः । प्राप्यते तत्सुखेनैव श्रीरामेश्वरदर्शनात्
ये हताभिमुखाःशूरागोविप्रार्थे रणाजिरे । गतिरभ्यधिकातेभ्यो दृष्ट्वारामेश्वरंशिवम्
जितास्तेन सदा लोका रामेणेव जगत्त्रयम् ।
दृष्टं येन सदा भक्त्या लिङ्गं रामेश्वरं शिवम् ॥ ५३ ॥
एष ते कथितो देवि! प्रभावः पापनाशनः । रामेश्वरस्य देवस्यशृणुत्वं च्यवनेश्वरम्
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये रामेश्वरमाहात्म्यवर्णनं नामैकोनत्रिंशोऽध्यायः ॥ २६ ॥

---

# त्रिंशोऽध्यायः

## च्यवनेश्वरप्रभाववर्णनम्

### श्रीविश्वनाथ उवाच

त्रिंशत्तमं विजानीहि त्वं देवि! च्यवनेश्वरम् । यस्यदर्शनमात्रेण स्वर्गभ्रंशोनजायते
भृगोर्महर्षेः पुत्रश्च च्यवनोनाम पार्वति !। स्थाणुभूतस्तपस्तेपे निराहारो महामुनिः
वितस्तायास्तटेरम्ये बहुवर्षगणान्किल । सवल्मीकोऽभवद्विप्रोलताभिरभिसम्वृतः

कालेन महतादेवि समाकीर्णः पिपीलकैः।
तथा स सम्वृतो धीमान् मृत्पिण्डइव सर्वशः ॥ ४ ॥

आजगाम समुद्देशं विहर्त्तुं वन उत्तमे । शर्यातिर्नाम धर्मात्मासकुटुम्बो मुदान्वितः
तस्यस्त्रीणांसहस्राणिचत्वार्यासन्परिग्रहः । एकैवतु सुता सुभ्रू सुकन्यानामनामतः

सा सखीभिः परिवृता सर्वाभरणभूषिता ।
सा भ्रम्यमाणा वल्मीके दृष्ट्वा भार्गवचक्षुषी ॥ ७ ॥
सा कौतुकात्कण्टकेन बुद्धिमोहवती तदा।
किं नु खल्विदमित्युक्त्वा निर्बिभेदाऽस्य लोचने ॥ ८ ॥

अभवत्सतयाविद्धो नेत्रयोः परमार्तिमान् । ततःशर्यातिसैन्यस्यशकृन्मूत्रंसमारुणत्
ततो रुद्धे सकृन्मूत्रे पर्यतप्यत पार्थिवः । प्रत्युवाच ततः क्रुद्धो राजा गद्गदया गिरा
केनापकृतमद्येह भार्गवस्य महात्मनः । तपोनित्यस्य वृद्धस्य रोषणस्य विशेषतः
ज्ञातंवायदिवाज्ञातंतदिदं ब्रूत माचिरम् । तमूचुःसैनिकाः सर्वे न विद्मोऽपकृतम्वयम्

ततः स पृथिवीपालः साम्ना चोग्रेण च स्वयम् ।
पर्यपृच्छत्स्ववर्गांश्च भूयोभूयः सुदुःखितः ॥ १२ ॥

पितरंदुःखितं दृष्ट्वा सुकन्यातमथाब्रवीत् । मयाकिञ्चिच्चवल्मीकेदृष्टंसत्त्वमंतिच्छवि

खद्योतवदविज्ञातं तन्मया विद्धमन्तिकम् ।

एतच्छ्रुत्वा तु शर्यातीर्वल्मीकं क्षिप्रमभ्यगात् ॥ १५ ॥
तत्रापश्यत्तपोवृद्धं वयोवृद्धं च भार्गवम् । प्रार्थयामाससैन्यार्थेप्राञ्जलिः स महीपतिः
अज्ञानाद्बालया यत्तेऽपकृतं तु महीसुर । इमामेव च ते कन्यां ददामि सुदृढव्रताम्
भार्यार्थे त्वं गृहाणेमांप्रसीदद्विजसत्तम । ततोऽब्रवीन्महीपालंच्यवनो भार्गवस्तथा
यद्यवस्प्रतिगृह्यैतां क्षमिष्यामि महीपते !। ददौ दुहितरं तस्मै च्यवनाय महीपतिः
प्रतिगृह्य च तां कन्यां भगवान्प्रससाद ह । प्राप्ते प्रसादे राजाथससैन्यो विषयंगतः

सुकन्याऽपि पतिं लब्ध्वा तपस्विनमनिन्दिता ।
नित्यं पर्यचरत्प्रीत्या तपसा नियमेन च ॥ २१ ॥
कस्यचित्त्वथ कालस्य नासत्यावश्विनौ प्रिये !।
कृताभिषेकां विवृतां सुकन्यां तामपश्यताम् ॥ २२ ॥

तां दृष्ट्वा दर्शनीयाङ्गीं देवराजसुतामिव । ऊचतुः समुपद्रुत्य कस्य त्वमतिशोभने ॥
सा प्रोवाचमहाभागा पतिव्रतपरायणा । शर्यातितनयाञ्चैव भार्यां च च्यवनस्य हि
ततोऽश्विनौ प्रहस्यैनामब्रूतां पुनरेव तु । कस्मादेवंविधा भूत्वाजराजर्जरितंपतिम्
त्वमपास्येह कल्याणि कामभोगबहिष्कृता । वृद्धं च्यवनमुत्सृज्य वरयस्वैकमावयोः
एतदर्थं देवगर्भाभे मा वृथा यौवनंकृथाः । एवमुक्ता सुकन्या तु दस्रौ ताविदमब्रवीत्
रताहं च्यवने देवे मैवं मा पर्यशङ्कतम् । ततोऽब्रूतां पुनस्त्वेनामावां देवभिषग्वरौ ॥

युवानं रूपसम्पन्नं करिष्यावः पतिं तव ।
एतेन समयेनावामामन्त्रय सुमध्यमे !॥ २६ ॥
सा तयोर्वचनं श्रुत्वा कथयामास भार्गवे ।
तच्छ्रुत्वा च्यवनो भार्यां क्रियतामित्यभाषत ॥ ३० ॥

ऊचतू राजपुत्रीं तां पतिस्तव विशत्वपः । ततोऽप्सुच्यवनःशीघ्रं रूपार्थीप्रविवेशह
अश्विनावपि तत्काले सरःप्राविशतांप्रिये । ततो मुहूर्त्तादुत्तीर्णाःसर्वेतेसरसस्तदा
दिव्यरूपधराः सर्वे युवानो दिव्यकुण्डलाः । तुल्यवेषधराश्चैव मनसः प्रीतिवर्द्धनाः
तेऽब्रुवन्सहिताःसर्वेवृणीष्वान्यतमंशुभम् । अस्माकमीप्सितंभद्रे पतित्वेवरवर्णिनि

सा समीक्ष्य तु तान्सर्वांस्तुल्यरूपधरान्स्थितान् ।
निश्चित्य मनसा बुद्ध्या देवी वव्रे स्वकं पतिम् ॥ ३५ ॥
लब्ध्वा तु च्यवनो भार्यां वयोरूपं तु वाञ्छितम् ।
हृष्टोऽब्रवीन्महातेजास्तौ नासत्याविदं वच ॥ ३६ ॥
यदहंरूपसम्पन्नोवयसाचसमन्वितः । कृतो भवद्भ्यां वृद्धःसन्भार्यांश्चप्राप्तवानिमाम्
तस्माद्युवां करिष्यामिप्रीत्याहंसोमपायिनौ । सत्यमेतन्नसन्देहोदेवराजस्यपश्यतः
तच्छ्रुत्वाहृष्टमनसौ दिवंदेवौप्रजग्मतुः । याजयामाससोमार्हौनासत्यावश्विनाविति
भिषजौ देवतानां हि कर्मणा तेन गर्हितौ ।
आभ्यामर्थाय सोमं त्वं प्रदास्यसि यदि स्वयम् ॥ ४० ॥
वज्रं ते प्रहरिष्यामि घोररूपं सुदारुणम् । एवमुक्तः स्मयन्निन्द्रमभिवीक्ष्यसभार्गवः
बलिनं वासवं ज्ञात्वा चिन्तयामास सत्वरम् ॥ ४१ ॥
देवमाराधयिष्यामि महादेवं महेश्वरम् । यस्य कर्मकरः शक्रो यस्य देवावशानुगाः
यः समर्थो जगद्गोप्ता सृष्टिसंहारकारकः ॥ ४२ ॥
इत्युक्त्वाच्यवनोदेवि महाकालवनंगत । रामेश्वरस्य देवस्यलिङ्गमीशानतःस्थितम्
श्रद्धयाराधितं तेन च्यवनेन महात्मना ॥ ४३ ॥
तस्यप्रसन्नो रुद्रस्तु स वज्रादभयन्ददौ । तस्य प्रहरतो बाहुं स्तम्भयामासभार्गवः
समाराधनतुष्टस्यलिङ्गस्यास्यप्रभावतः । एतस्मिन्नन्तरेज्वालानिःसृतालिङ्गमध्यतः
तया देवगणाः सर्वे दह्यमाना विचेतसः । प्रोचुर्गद्गदया वाचा धूमेनान्धीकृतेक्षणाः
क्रियेतां सोमपावेतावश्विनौ बलसूदन !। देवानां वचनं श्रुत्वा च्यवनं भयपीडितः
प्रत्युवाच तत शक्रः प्रणामानतकन्धरः ॥ ४७ ॥
सोमपावश्विनावेतावद्यप्रभृति भार्गव !। भविष्यतस्ततः सर्वमेतत्सत्यं ब्रवीमि ते॥
मा तेऽतिथ्याभिसंरम्भो भविष्यति तपोधन !।
लिङ्गस्याऽस्य प्रभावोऽयं यदहं निष्प्रभीकृतः ॥ ४६ ॥
ततस्त्वन्नामधेयेन प्रसिद्धिर्भुवि यास्यति ।

आराधितं यतो देवि! च्यवनेन महात्मना ॥ ५० ॥

च्यवनेश्वरमेतद्वै ख्यातं त्रिभुवनेऽभवत् । भक्ता ये पूजयिष्यन्ति देवेशं च्यवनेश्वरम्

आजन्मप्रभवं पापं तेषां नश्यति तत्क्षणात् ॥ ५१ ॥

यः पश्यति नरो नित्यं च्यवनेश्वरसञ्ज्ञकम् ।

जन्मदुःखजरारोगैर्मुक्तो मुक्तिमवाप्नुयात् ॥ ५२ ॥

यंयं काममभिध्यायेन्मनसाभिमतं नरः । तं तं दुर्लभमाप्नोति च्यवनेश्वरदर्शनात् ॥

नियमेन प्रपश्यन्ति ये देवं च्यवनेश्वरम् । ते प्रयान्ति तनुं त्यक्त्वामदीयेभुवनेप्रिये

यः शृणोति कथां पुण्यां सर्वपापहरां शुभाम् ।

स पुण्यात्मा परं स्थानं याति दिव्यं न संशयः ॥ ५५ ॥

भक्तिहीनः क्रियाहीनो यः पश्यति प्रसङ्गतः ।

स पुण्यां गतिमाप्नोति योगिगम्यां यशस्विनि !॥ ५६ ॥

पुष्पैर्विचित्रैर्ये देवं यजन्ते च्यवनेश्वरम् । संसारार्णवमुल्लङ्घ्यते यान्ति परमं पदम्

एष ते कथितो देवि! प्रभावः पापनाशनः ।

च्यवनेश्वरदेवस्य शृणु खण्डेश्वरं शिवे ॥ ५८ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये च्यवनेश्वरमाहात्म्यवर्णनंनाम
त्रिंशोऽध्यायः ॥ ३० ॥

---

२२

## एकत्रिंशोऽध्यायः

### खण्डेश्वरमाहात्म्यवर्णनम्

श्रीमहादेव उवाच

एकत्रिंशत्तमं विद्धि देवं खण्डेश्वरं प्रिये !। सम्पूर्णं जायते यस्य दर्शाद्दानव्रतादिकम्

आसीत्त्रेतायुगे देवि ! भद्राश्वो नाम पार्थिवः ।

यस्य नाम्नाऽभवद्वर्षं भद्राश्वं नाम नामतः ॥ २ ॥

तस्यागस्त्यः कदाचित्तु गृहमागम्य सत्तमः । उवाच सप्तरात्रं तु वसामि भवतो गृहे

तं राजा शिरसा नत्वा स्वास्यतामित्यभाषत ।

तस्य कान्तिमती नाम भार्या परमशोभना ॥ ४ ॥

तस्यास्तेजः समभवद्द्वादशादित्यसन्निभम् । सपत्नीनां शतं तस्या विद्यते वरवर्णिनि

ता दास्य इव कर्माणि कुर्वन्त्यहरहः सदा ।

कान्तिमत्याः प्रभावेण भयोत्त्रस्ताः सुलोचनाः ॥ ६ ॥

तामगस्त्यस्तथा दृष्ट्वा तन्मुखासक्तलोचनाम् । एवंभूतां तथा दृष्ट्वा राज्ञीं परमशोभनाम्

साधुसाधु जगन्नाथेत्यगस्त्यः प्राह हर्षितः ॥ ७ ॥

द्वितीये दिवसेऽप्येवं राज्ञीं दृष्ट्वा महाप्रभाम् । अहो ह्यङ्गनया मुष्टं जगदेतच्चराचरम्

इत्यगस्त्यो द्वितीयेऽह्नि राज्ञीं दृष्ट्वेत्युवाच ह । तृतीयेऽह्नि च तां दृष्ट्वा पुनरेवमुवाच ह

अहो मूढा न जानन्ति लिङ्गमाहात्म्यमुत्तमम् ।

महाकालवने क्षेत्रे च्यवनेशस्य पूर्वतः ॥ १० ॥

खण्डव्रतानि जायन्ते पूर्णानि दर्शनाद्यतः । चतुर्थे दिवसे हस्तावुत्क्षिप्य पुनरब्रवीत्

साधुसाधु जगन्नाथ साधु भद्राश्व सुव्रत !। पञ्चमे दिवसेऽप्येवं षष्ठे चैव पुनः पुनः

नृत्यन्तं सप्तमे दृष्ट्वा दिने पत्न्या समन्वितः ।

प्रोवाच चैनं राजा स विस्मितेनान्तरात्मना ।

किं हर्षकारणं ब्रह्मन् ! येन नृत्यसमन्वितः ॥ १३ ॥

अगस्त्य उवाच

अहो भूपालमूढस्त्वंमहामूर्खाश्च मन्त्रिणः । अहोपुरोहितो मुग्धोयेनजानन्तिमेमतम्
ईदृशा अपि जायन्ते राजानो यस्य दर्शनात् । एवमुक्तस्ततो राजाकृताञ्जलिरभाषत
न जानीमो वयं ब्रह्मन्नभिप्रायं तवाधुना । कथयस्वमहाभाग यद्यनुग्रहकृद्भवान् ॥

अगस्त्य उवाच

इयं राज्ञी त्वदीयाऽभूद्दासी वैश्यस्य वैदिशे ।:नगरे हरिदत्तस्यत्वमस्याःपतिरेवच
खण्डव्रतप्रभावेण जातः कर्मकरो भवान् ॥ १७ ॥
स च वैश्यो महाकालेगत्वादेवंमहेश्वरम् । अर्चयामासविधिवद्गन्धपुष्पादिभिःशुभैः
अभ्यर्च्य तु गृहं यावद्भवन्तौ रक्षपालकौ । ततः कालेन महता मृतौ द्वावपिदम्पती
तेनपुण्येन ते जन्म प्रियव्रतगृहेऽभवत् । इयं च पत्नी ते जाता पुरा वैश्यप्रदासिका
परकीयप्रसङ्गेन सञ्जाता भूमिरुत्तमा । राज्यं पत्नी सुता साधुरित्युक्तं वचनं मया
तस्य देवस्य माहात्म्याद्यजन्तं विविधैर्मखैः ।
पश्यामि त्वां महीपाल! भूपालशतवेदितम् ।
अतः साधुपुरा प्रोक्तं मया तव महीपते !॥ २३ ॥
इति तस्य वचः श्रुत्वा कुम्भयोनेर्महात्मनः । महाकालवने गन्तुंमतिंचक्रे महीपतिः
ततः सान्तःपुरः प्रायात्तेन सार्द्धं महर्षिणा ॥ २४ ॥
अगस्त्यकथितंलिङ्गं ददर्श श्रद्धया पुनः । पूजयामासविधिवत्पत्न्यासार्द्धंमहीपतिः
ततस्तुष्टस्तदादेवो नृपं प्राहामितद्युतिः । मनोऽभीष्टं तपस्तेऽस्तु भोगमैश्वर्यमेवच
कुलं प्रभावं सौभाग्यं दीर्घमायुररोगिताम् ।
निःसपत्नं ततो राज्यं कृत्वा स्वर्गमवाप्स्यति ॥ २७ ॥
इत्युक्तोदेवदेवेनगतोऽसौविषयं स्वकम् । निष्कण्टकंततोराज्यंकृत्वास्वर्गंगतःप्रिय
अनेकजन्मचरितं खण्डव्रतकदम्बकम् । सम्पूर्णमभवद्देवि लिङ्गस्यास्य प्रभावतः
अतः खण्डेश्वरो देवो विख्यातो भुवनत्रये ।

ये पश्यन्ति नरा देवि! देवं खण्डेश्वरं शिवम् ॥ ३० ॥

खण्डव्रतानि पूर्णानितेषामाशु भवन्ति हि । तपःखण्डंव्रतेखण्डंदानखण्डंचयत्कृतम्

तत्सर्वं पूर्णतां याति श्रीखण्डेश्वरदर्शनात् ॥ ३१ ॥

दृष्ट्वा खण्डेश्वरं देवं पापविघ्नैः प्रमुच्यते । सप्तजन्मकृतैर्देवि! मनोवाक्कायकर्मभिः ॥

दृष्ट्वा खण्डेश्वरं देवं कृतकृत्यत्वमाप्यते ।

तस्य नश्यति दौर्भाग्यं सप्तजन्मोद्भवं प्रिये !॥ ३३ ॥

खण्डेश्वरेऽर्चिते देवे सर्वे देवाः सवासवाः । सन्तुष्टा वरदाश्चैव भवन्तिवरवर्णिनि

देवं खण्डेश्वरं ये वैयजन्ति श्रद्धयाप्रिये । पुण्यैर्नानाविधैःस्नानैःसुगन्धैश्चविशेषतः

धूपदीपैर्नमस्कारैर्जपैः स्तोत्रैः पृथग्विधैः ।

ते सर्वे कामसम्पन्नाः श्रीमन्तो राज्यसंयुताः ॥ ३६ ॥

दीर्घायुषः शुभाचारा जायन्ते देहिनोऽमलाः ।

अतिश्रेष्ठा गतिस्तेषां विशोका नित्यमक्षयाः ।

खण्डेश्वरप्रसादेन जायन्ते नाऽत्र संशयः ॥ ३७ ॥

एते च विष्णुब्रह्मेन्द्रकुवेरदहनादयः । परां सिद्धिं सुसम्प्राप्ताः खण्डेश्वरसमर्चनात्

एष ते कथितो देवि प्रभावः पापनाशनः । खण्डेश्वरस्य देवस्य शृणुवैपत्तनेश्वरम्

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्ये खण्डेश्वरमाहात्म्यवर्णनंनामैकत्रिंशोऽध्यायः ॥ ३१ ॥

———

## द्वात्रिंशोऽध्यायः

### पत्तनेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

त्रिषु लोकेषुविख्यातंद्वात्रिंशत्तममुत्तमम् । विद्धिसिद्धिप्रदंपुंसांपत्तनेश्वरमीश्वरम्
पुराऽहं पर्वते देवि! मन्दरेचारुकन्दरे । क्रीडन्सार्द्धं त्वयापृष्टःकदाचिद्रहसि स्थितः
किमर्थंपर्वतंत्यक्त्वा कैलासंरमणीयकम् । मुक्ताफलशिलाशुभ्रं शङ्खचन्द्रांशुनिर्मलम्
सिद्धचारणगन्धर्वकिन्नरोद्गीतनादितम् । सदा पुष्पद्रुमच्छन्नं कदलीवनराजितम् ॥
अथकोकिलचक्राह्वचकोरकुरराकुलम् । पुण्यलोकोपमं स्थानं त्रिविष्टपविभूषणम्
महाकालवने शून्ये नानागुल्मलतावृते । गजेन्द्रगजशार्दूलसिंहशम्बरसङ्कुले ॥ ६ ॥
ऋक्षवानरगोमायुजन्तुकादिविराजिते । मयूरसर्पमार्जारमूषिकादिविराजिते ॥
कथं वासः कृतो देव! कौतूहलमिदं मम ॥ ८ ॥
इति पृष्टस्त्वया देवि! मन्दरे चारुकन्दरे । मया प्रोक्तं प्रसन्नेन पत्तनं च मम प्रिये ॥
महाकालवनं रम्यं स्वर्गात्सुखकरं परम् । श्मशानपीठसत्क्षेत्रवनोषरसमाश्रितम् ॥
अनौपम्यगुणं विद्धि पत्तनं पर्वतात्मजे !। एवं पत्तनदेवो वै न दृष्टो भुवनत्रये ॥
गीतवादित्रचातुर्यैः स्पर्द्धते यः सुरालयम् ॥ ११ ॥
एतस्मिन्नन्तरे देवि!देवर्षिर्नारदोमुनिः । द्रष्टुकामःसमायातो मन्दरे मां यशस्विनि
विनोदार्थं मया पृष्टस्त्वत्प्रियार्थं कुतूहलात् ।
क्व त्वया गमितः कालः कल्पसङ्ख्यो महामुने !॥ १३ ॥
कस्मिन्नाश्रमसंस्थानेतपसःसंचयःकृतः। तीर्थानिकानिभ्रान्तानिक्वते रतिरभूच्चिरम्
कौतुकं दृष्टपूर्वं तु वद मे मुनिसत्तम !। इति पृष्टो मया देवि! ब्रह्मपुत्रो महामुनिः ॥
कथयामास वृत्तान्तं पत्तनस्य प्रयत्नतः ॥ १५ ॥
बहूनि संपरिक्रम्य तीर्थान्यायतनानि च । पत्तनानि विचित्राणि देशाश्चनगराणिच

अटनार्थं महादेव जम्बूद्वीपे मनोरमे । दृष्टः पत्तनराजश्च सदानन्दकरः परः ॥ १७ ॥

स्वेच्छाकल्पितविन्यासः प्रासादशतकल्पितः ।

इच्छाकामफलावाप्तिरनिर्देश्यसुखावहः ॥ १८ ॥

सर्वर्तुकुसुमामोदसुखस्पर्शानिलावृतः । वीणावेणुरवैर्घुष्टो मनः प्रह्लादकारकः ॥

वज्रेन्द्रनीलवैडूर्यचन्द्रकान्तादिदीपितः । जरामृत्युभयोपेतः सर्वव्याधिविवर्जितः ॥

शक्राग्नियमरक्षोब्धिवायुसोमेशसेवितः । ऊर्द्ध्वाधः सप्तलोकेषुपुण्येषुनिवसन्तिहि

सदा प्रमुदिता देवास्तेऽपि काङ्क्षन्ति पत्तनम् ।

तत्र शान्ता महात्मानो निवसन्ते महेश्वर !॥ २२ ॥

विद्योतितदिशो दान्ताः सूर्यवैश्वानरप्रभाः । दिव्याम्बरधराधीराजटामुकुटधारिणः

विप्रामाहेश्वराः पुण्याःक्षत्रियाहरतत्पराः । मुमुक्षवस्तपोनिष्ठावैश्याःशूद्राश्चिरायुषः

स शुभ्ररूपः स च लोहिताकृतिः स चापि पीतः स सितेतरः क्वचित् ।

स नामधेयः स च नामवर्ज्यः सोऽदृश्यरूपः स च दृष्टरूपः ॥ २७ ॥

क्वचिद्रविसहस्राक्षः क्वचिदेकरविप्रभः ।

क्वचिच्चन्द्राद्विशिष्येत क्वचिदङ्गुलिकान्तिमान् ॥ २६ ॥

जन्ममृत्युजरारोगैर्दुःखानि विविधानि च । प्रयान्तिविलयं तानि प्रसन्नेपत्तनेश्वरे

एषते कथितो देवि! प्रभावः पापनाशनः । पत्तनेशस्य देवस्य आनन्देशमतः शृणु

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्ये पत्तनेश्वरमाहात्म्यवर्णनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

# त्रयस्त्रिंशोऽध्यायः

## आनन्देश्वरमाहात्म्यवर्णनम्

श्रीहर उवाच

त्रयस्त्रिंशत्तमं देवमानन्देश्वरमीश्वरम् । विद्धि पापहरं पुण्यं सर्वसम्पत्करं सदा ॥
पुरा राथन्तरे कल्पे बभूव पृथिवीपतिः । अनमित्र इति ख्यातः सार्वभौमो महीतले
सधर्मात्मा महात्माच्च पराक्रमधनोनृपः । अतीत्यसर्वभूतानि वभौ भानुरिवाव्ययः
समः शत्रौ च पुत्रे च मित्रे च परधर्म्मवित् । गिरिभद्रागिरेःपुत्रीतेनोढा वरवर्णिनी
अतीववल्लभासाच प्राणेभ्योऽपिगरीयसी । आनन्दइतिपुत्रोऽभूत्तस्यज्ञानरतःसुधीः

जातमात्रो निजोत्सङ्गे स्थिरमुल्लाप्य वै पुनः ।
परिष्वजति हार्द्देन उल्लापयति पुनः पुनः ॥ ६ ॥
स जातिस्मरणो जातो मातुरुत्सङ्गमास्थितः ।
जहास च तदा माता सङ्क्षुब्धा वाक्यमब्रवीत् ॥ ७ ॥
भीताऽस्मि किमिदं वत्स! हासो यद्वदने तव ।
अकालबोधः सञ्जातः किंस्वित्पश्यसि शोभनम् ॥ ८ ॥

इत्युक्तोमातरंप्राहसर्वोऽपि स्वार्थमीहते । मां नेतुमिच्छतिपुरोमार्जारीकिंनपश्यसि

अन्तर्धानगता चेयं द्वितीया जातहारिणी ॥ ९ ॥

पुत्रप्रीत्याचमातस्त्वमतःस्वार्थंसमीहसे । उल्लाप्योल्लाप्यवहुशःपरिष्वजसिमांबत

उद्भूते बालके स्नेहात्सम्भ्रमात्स्त्रीजनोऽप्ययम् ।
ततोऽयमागतो हासः शृणु चाप्यत्र कारणम् ॥ ११ ॥

स्वार्थे प्रसक्तामार्जारीलोलुपा मामवेक्षते । तथान्तर्द्धानगा चेयंद्वितीयाजातहारिणी
त्वंतु क्रमेणोपभोग्यंमत्तःफलमभाप्स्यसि । नमांजानासिकोऽप्येवंन वै चोपकृतंमया

सङ्गतिर्नातिबालानां पञ्चसप्तदिनात्मकम् ।

तथापि स्निह्यसि प्रीत्या परिष्वजसि सन्ततम् ॥ १४ ॥

ततेतिवत्स!भोभद्रइत्यलीकं ब्रवीषिमाम् । पुत्रस्यवचनंश्रुत्वाक्रुद्धामाताऽब्रवीदिदम्

नाहं त्वामुपकारार्थं वत्स! प्रीत्या परिष्वजे ।

स्वार्थो मया परित्यक्तो यस्त्वत्तो मे भविष्यति ॥ १६ ॥

इत्युक्त्वा सा तमुत्सृज्य निष्क्रान्ता सूतिकागृहात् ।

जहार तत्परित्यक्तं सा तदा जातहारिणी ॥ १७ ॥

साहृत्वातंतदाबालंपूर्वजातिस्मरंप्रिये । हैमिन्याःशयने न्यस्यद्विक्रान्तस्यमहीभृतः

मत्वा स्वकीयं पुत्रं तु विक्रान्तेन महीभृता । कृतं वै नामकरणमानन्दइति विश्रुतम्

विक्रान्तस्यसुतोनीतोबोधस्यच द्विजन्मनः । चैत्रनामाकृतस्तेनसंस्कृतोवेदमन्त्रकैः

तृतीयं भक्षयामास बोधपुत्रं निशाचरी । जातिस्मरोऽप्यथानन्दः कृतोपनयनस्तदा

गुरुणासमनुज्ञातंक्रियतामभिवादनम् । जनन्याःप्रागुपस्थानमित्युक्तो वाक्यमब्रवीत्

वन्द्या मे कतमा माता जनित्री पालिनी च वा ।

आनन्दस्य वचः श्रुत्वा गुरुर्वचनमब्रवीत् ॥ २३ ॥

नन्वियं ते महाभाग जनित्रीजनकात्मजा । विक्रान्तस्याग्रमहिषी हैमिनीनामनामतः

आनन्द उवाच

चैत्रस्य प्रसवित्रीयंचैत्रोऽयंद्विजवेश्मनि । संस्कृतोब्राह्मणैर्मन्त्रैर्गिरिभद्रासुतस्त्वहम्

गुरुराह ततः कस्त्वं चैत्रः को वा त्वयोच्यते ।

ततः स कथयामास पूर्ववृत्तान्तमादितः ॥ २६ ॥

गुरुरुवाच

अतीव गहनं वत्स सङ्कटं महदागतम् । न वेद्मिकिञ्चिन्मोहेन भ्रमन्तिमम बुद्धयः

आनन्द उवाच

मोहस्यावसरः कोऽत्र जगत्येवं व्यवस्थितः ।

कः कस्य पुत्रो विप्रर्षे! को वा कस्य न बान्धवः ॥ २८ ॥

अतः संसारता हन्ति संसारं प्राणिनामिह । महामोहहतं चेतश्चित्रमत्र कथं गुरो

ब्रह्मपुत्रस्य दुष्टस्य दुःसहस्य सुता भुवि । जातहारिणिकानाम परिवर्त्तयते सुतान्
मातृद्वयं मया प्राप्तमस्मिन्नेव हि जन्मनि । मातृद्वयमथोप्राप्तं जातिं संस्मरतासता

सोऽहं तपः करिष्यामि चैत्रआनीयतामिति ।

ततः सुविस्मितो राजा सभार्यः सह बन्धुभिः ॥ ३२ ॥

तस्मान्निवर्त्यममतामनुमेने च तम्प्रति । चैत्रमानीय तनयं राज्ययोग्यं चकार सः
सन्मान्यब्राह्मणं येन पुत्रबुद्ध्यासपालितः । सोऽप्यानन्दस्तपस्तेपेमहाकालवनेशुभे
इन्द्रेश्वरस्य देवस्य पश्चिमे लिङ्गमुत्तमम् । भक्त्या ह्याराधयामासतपसादुष्करेणतु
तपस्यन्तं ततस्तन्तुदेवः प्राहशुचिस्मिते । किमर्थंतप्यसे वत्स!तपस्तीव्रंब्रवीमिते
मनुनाभविताभाव्यंषष्ठेन व्रजतत्कुरु । अलन्तेतपसा!तस्मिंस्ततो मुक्तिमवाप्स्यसि
इत्युक्तो देवदेवेन तथेत्याह महामतिः । बभूव स मनुर्देवि! ब्रह्मतुल्यो महायशाः ॥

पुत्रानुत्पादयामास लिङ्गस्याऽस्य समर्चनात् ।

कृतं नाम तदा देवैरानन्देश्वरमुत्तमम् ॥ ३९ ॥

आनन्देनयतःप्राप्तासिद्धिर्देवि सुदुर्ल्लभा । अतोनामसुविख्यातमानन्देश्वरमीक्ष्यताम्

ये पश्यन्ति विशालाक्षि आनन्देश्वरमीश्वरम् ।

ते पुत्रपौत्रसम्पन्ना भविष्यन्ति महीतले ॥ ४१ ॥

येषांक्षीणंनृणां पापं कोटिजन्मशतोद्भवम् । तेषां भवतिसाभक्तिरानन्देश्वरदर्शनात्
तदैव पुरुषो मुक्तो जन्ममृत्युजरादिभिः । यदा पश्यति देवेशमानन्देश्वरसञ्ज्ञकम्
मयोक्तं मुक्तिदं नृणामानन्देश्वरदर्शनम् । स्वर्गापवर्गदं देवमानन्दं लिङ्गमुत्तमम् ॥

अत्र देवैर्विशालाक्षि! पूजितं लिङ्गमुत्तमम् ॥ ४४ ॥

एष ते कथितो देवि! प्रभावः पापनाशनः । आनन्देश्वरदेवस्यशृणु त्वं कन्थडेश्वरम्

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्य आनन्देश्वरमाहात्म्यवर्णनं नाम
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

# चतुस्त्रिंशोऽध्यायः

## कन्थडेश्वरमाहात्म्यवर्णनम्

### श्रीहर उवाच

चतुस्त्रिंशत्तमं विद्धि देवम्वै कन्थडेश्वरम् । यस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते
वितस्तायास्तटेरम्ये ब्राह्मणोनिवसन्पुरा । वभूवपाण्डचोनाम दरिद्रेणातिपीडितः
ज्ञातिभिश्चपरित्यक्तो दुष्टया भार्यया तथा ।
कन्थाप्येका स्थिता यस्य सर्वस्वप्रेमधारिणी ॥ ३ ॥
तेनाहं सुतकामेन तोषितो गिरिगह्वरे । मयाऽप्युक्तं विशालाक्षिपुत्रस्तवभविष्यति
तस्य पुत्रः समुत्पन्नः कन्थामध्यादयोनिजः ।
शीतोष्णवारिणी कन्था तस्य पुत्रस्य साऽभवत् ॥ ५ ॥
स च लब्धः प्रसादेन मदीयेन वरानने !। रुद्रेण च वरो दत्तः कन्थाया भविता पुनः
अथ षष्ठे गते वर्षे मौञ्जीबन्धमचिन्तयत् । तदामन्त्र्य मुनीन्सर्वान्प्रसाद्यच पुनःपुनः
नमस्कृत्य ऋषीन्सर्वान्पूजयामास भक्तितः ॥ ७ ॥
फलैर्वित्तानुसारेण मौञ्जी तस्याप्यवन्धत । तेऽप्युक्ता मुनयःसर्वे प्रसाद्यच पुनःपुनः
दीयतामाशिषोह्यस्मैपुत्राय मुनिसत्तमाः । ममपुत्रस्यपुत्रोऽयं दीर्घायुर्जायतांचिरम्
तूष्णीम्भूताः स्थिताः सर्वे तच्छ्रुत्वा नोत्तरं ददुः ।
यदा ते नोत्तरं प्रोचुस्तदा मुनिवरः स्वयम् ॥
ध्यानेन चिन्तयामास नूनमल्पायुषं सुतम् ॥ १० ॥
इतिज्ञात्वा तु सम्मोहमगमत्सहसामुनिः । विललापस दुःखार्त्तःसुतस्नेहेनदुःखितः

### वाडव उवाच

दत्तः स्वयं महेशेन ममाल्पायुः कथं सुतः । रुद्रेण च वरोदत्तः प्रसन्नेन पुरा मम ॥
मत्तुल्यवीर्यः पुत्रस्ते कन्थामध्याद्भविष्यति ।

जातं च दत्त्वा ह्यल्पायु मिथ्या त्र्यक्षस्य तद्वचः ॥ १३ ॥
पितरं दुःखितं दृष्ट्वा तूष्णींभूतोमुनिस्तदा। स बालःसहसावाक्यं बभाषेहर्षवर्द्धनम्
त्यजत भयमिदानीं यन्ममार्थे विषण्णा विनिहतनिजयत्नं प्रेतराजं करोमि।
शृणुत मम गिरस्भोः सेश्वरा लोकपालाः पितृपतिविजयार्थं सत्प्रतिज्ञाममैषा ॥१५
अतिविषमतपोभिः शङ्करंतोषयित्वा स्वपितुरपि च भक्त्या हन्मिमृत्योर्जयाशाम्।
किमतिशयविषादव्याकुलास्तात! सर्वेसपदि पितृपतिं तं स्वे वशे स्थापयामि॥१६

प्रयामि रुद्रं शरणं महेश्वरं देवम्वरं चाप्युमयाऽविहीनम्।
शृण्वन्तु सर्वेमुनयः समन्तान्न मादृशे मृत्युपराभवोऽस्ति ॥ १७ ॥
तपोभिरुग्रैः शितिकण्ठपादौ प्रसाद्य मृत्यु न चिराद्धिनेष्ये।
कन्थाजवाक्यामृतलोलनेत्राः सञ्जातरोमाञ्चलसत्स्वदेहाः ॥ १८ ॥
पप्रच्छुरेनं मुनयः शिशु तं जानासि रुद्रं परमं कथं त्वम्।
वयं चिरं कालमुपासमानास्तपोभिरुग्रैर्व्रतसञ्चयैश्च ॥ १६ ॥
तथापि विद्मो न वयं महेशं ज्ञातस्त्वयाऽसौ कथमर्भकेण।
ईहामहे तं किल पुत्र! सम्यक्छ्रोतुं प्रहर्षाद्भुतजातरोमाः ॥ २० ॥
ज्ञातस्त्वया कुत्र कथं महेशो महेश्वरो वै भुवनैकनाथः ॥ २१ ॥

इति तेषां वचः श्रुत्वा मुनीनां भावितात्मनाम्।
स बालः कथयामास वृत्तान्तं पर्वतात्मजे ॥ २२ ॥
ममात्र क्रीडतः सिद्धः सिद्धिदः समुपागतः।
विज्ञायाऽल्पायुषं मां तु वात्सल्यादब्रवीदिदम् ॥ २३ ॥

गच्छ पुत्र ममादेशान्महाकालवनोत्तमे। दक्षिणे चास्ति यल्लिङ्गमानन्देश्वरलिङ्गतः
तमाराधयशीघ्रं त्वंचिरञ्जीवीभविष्यसि। तस्योपदेशदानेनज्ञातंसम्यङ्महेश्वरात्

नान्यो देवोऽस्ति लोकेषु सत्यं सत्यं मुनीश्वराः !।
तस्मादद्यैव यास्यामि महाकालवने शुभे ॥ २६ ॥
लिङ्गमाराधयिष्यामि विषादस्त्यज्यतामिह।

तस्य तद्वचनं श्रुत्वा तेन सार्द्धं महर्षयः ॥ २७ ॥
पिता चविस्मितोदेवि!सर्वएवसमागताः । देवमाराधयामासबालःकालजिघांसया
लिङ्गमध्यात्ततोवाणीनिःसृतापर्वतात्मजे । अहोतुष्टोऽस्मितेवत्सकंकामंप्रददाम्यहम्

बाल उवाच

यदितुष्टोऽसिमेदेवयेत्वांपश्यन्तिशङ्कर !। पापकन्थाविनिर्मुक्तास्तेसन्तुचिरजीविनः
बालस्यभाषितंश्रुत्वालिङ्गेनोक्तंयशस्विनि । येचमांपूजयिष्यन्तिश्रद्धयापरयायुताः
ते भविष्यन्ति सततं जरामरणवर्जिताः ॥ ३१ ॥
लप्स्यन्ते परमान्कामान्भविष्यन्ति गणोत्तम !।
पूज्याः सर्वेषु लोकेषु सर्वालङ्कारभूषिताः ॥ ३२ ॥
एवंलब्धवरः कन्थः प्राञ्जलिः समुपस्थितः । लिङ्गेनोक्तः प्रसन्नेन भूयो वरयसुव्रत!
वरो वै दुर्लभो लोके :देवदानवगुह्यकैः । मयावतारितोयस्मान्नास्त्यदेयंतवाधुना ॥
बालेनोक्तो महादेव यदि देयो वरः पुनः । मन्नाम्नादेवतेख्यातिर्भू यात्त्रिभुवनेभुवि
एवमस्त्वितिलिङ्गेन प्रोक्तंतुष्टेनपार्वति !। तदाप्रभृति देवेशो विख्यातः कन्थडेश्वरः
यस्य दर्शनमात्रेण चिरायुर्जायते नरः ॥ ३६ ॥
यः समीक्षति तल्लिङ्गं कन्थडेश्वरमीश्वरम् ॥ ३७ ॥
पापकन्थाविनिर्मुक्तोमुक्तियास्यतिगौरिसः । पुण्यंयशस्यंगेयंतल्लिङ्गं पापप्रणाशनम्
पुनाति पातकान्सर्वान्मम नामानुकीर्त्तनात् ॥ ३८ ॥
तेऽधन्याः पुरुषालोके तेषांजन्मनिरर्थकम् । यैर्न दृष्टोमहाकालेदेवोऽसौकन्थडेश्वरः
एष तेकथितोदेवि ! प्रभावः पापनाशनः । कन्थडेश्वरदेवस्य इन्द्रेश्वरमथो शृणु

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्ये कन्थडेश्वरमाहात्म्यवर्णनंनाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

———

# पञ्चत्रिंशोऽध्यायः

## इन्द्रेश्वरमाहात्म्यवर्णनम्

श्रीमहादेव उवाच

पञ्चत्रिंशत्तमं देवमिन्द्रेश्वरमनुत्तमम् । महासिद्धिप्रदं देवि ब्रह्महत्याविनाशनम् ॥ १ ॥

आसीत्प्रजापतिस्त्वष्टा तस्य पुत्रः कुशध्वजः ।

स्वकर्मनिरतो दान्तो वासवेन निपातितः ॥ २ ॥

तस्य पुत्रं हतं श्रुत्वा त्वष्टा क्रुद्धः प्रजापतिः । अवलुच्य जटामेकामिदं वचनमब्रवीत्

अद्य पश्यन्तु मे वीर्यं त्रयो लोकाः सदेवताः । स च पश्यतु दुर्बुद्धिर्ब्रह्महा पाकशासनः

स्वकर्मनिरतो येन मत्सुतो विनिपातितः ।

इत्युक्त्वा कोपरक्ताक्षो जटामग्नौ जुहाव ताम् ॥ ५ ॥

ततो वृत्रः समुत्तस्थौ ज्वालामालासमाकुलः । महाकायो महादंष्ट्रो भिन्नाञ्जनचयप्रभः

इन्द्रशत्रुरमेयात्मा त्वष्टुस्तेजोऽभिवृंहितः । अहन्यहनि सोऽवर्द्धदिषुपातं महाबलम्

वधाय चात्मनो दृष्ट्वा वृत्रं शक्रो महासुरम् । चिन्तयामास सहसा किं कृतं सुकृतं भवेत्

एतस्मिन्नन्तरे प्राप्तो वृत्रो बलवतां वरः । ददर्श वासवं तत्र देवैः सार्द्धं वरानने ॥

दैत्यो वृत्रो महाकायश्चक्रे सङ्ग्राममुल्बणम् ।

नानाशस्त्रास्त्रसङ्क्षोभं भटसङ्घट्टसङ्कटम् ॥ १० ॥

छिन्नभिन्नतनुत्राणक्रोधरक्तधरातलम् । लूनाननाब्जप्रकरं करपल्लवदुर्गमम् ॥ ११ ॥

कबन्धसङ्घघटनं घटितामरसैनिकम् । विकीर्णाभरणस्फीतस्फुरद्योधाङ्गभूषणम्

कल्लोलरुधिरोद्गारपाटलीकृतदिङ्मुखम् । तस्मिन्रणे महाभीमे देवान्भित्त्वा सगुह्यकान्

वासवं बन्धयित्वा तु स्वर्गलोकं जगाम ह । राज्यं चकार निःशङ्को निःसपत्नं वरानने

ततस्तु बद्धे देवेन्द्रे बृहस्पतिरुदारधीः । आजगाम तमुद्देशं यत्र बद्धः शतक्रतुः ॥ १५

दृष्ट्वा तथाविधं शक्रमाशीर्भिरभिनन्द्य च । बन्धनान्मोचयित्वा तु प्रीवाचेदं वचस्तदा

अनुकूलो न कालोऽयं सुरेशस्य तवाधुना । उद्योगःसुमहान्दृष्टःसञ्जातश्चसुरद्विषाम्
दृष्टा हि प्रवराः सर्वे मया तत्र महासुराः ॥ १७ ॥
एकैकोऽपि विजेतुं त्वां शक्तः स्यादिति मे मतिः ।
न तादृक्सङ्गमः शक्र! कदाचित्सुरविद्विषाम् ।
दृष्टो वापि श्रुतो वापि यादृशो ह्यवलोकितः ॥ १८ ॥
बृहस्पतिवचःश्रुत्वा शक्रः सम्भ्रममागमत् । ध्यात्वामुहूर्त्तंप्रोवाच बृहद्बुद्धेबृहस्पते
किमत्र प्रतिकर्त्तव्यं वद तावद् बृहस्पते । बहवोबलवन्तश्च दानवाः स्वल्पकैर्दिनैः॥
मत्सकाशं समेष्यन्ति स च वृत्रो महाबलः ॥ २० ॥
इतिशक्रवचःश्रुत्वा बृहस्पतिरुवाचतम् । उपायः क्रियतां तूर्णं गच्छ शक्र ममाज्ञया
महाकालवने रम्ये खण्डेश्वरस्यदक्षिणे । सर्वसम्पत्करं लिङ्गं विद्यते तत्र वासव
तदाराधययत्नेन तत्तेकामं प्रदास्यति । बृहस्पतिवचःश्रुत्वा शक्रःशीघ्रतरं गतः ॥
महाकालवनेदेवि! दृष्ट्वालिङ्गमनुत्तमम् । स्तुतिं चकार सहसा भक्तिनम्रात्मकन्धरः
नमोदेवाधिदेवाय शङ्कराय वृषाय च । काम्याय बहुरूपाय व्यालयज्ञोपवीतिने ।
वरेण्याय नमोनित्यं नमस्ते सर्वकामद !॥ २५ ॥
आद्यः प्रजासृष्टिकरस्त्वमेव कालः प्रजाः संहरसि त्वमेव ।
अपाम्पतिर्भूतपतिस्त्वमेव धनेश्वरस्त्वं दहनस्त्वमेव ॥ २६ ॥
चन्द्रश्च सूर्यः पवनस्त्वमेव धाता विधाता परमः पुराणः ।
जलाशयस्त्वं वरुणस्त्वमेव शैलोत्तमस्त्वं भुजगेश्वरश्च ।
डिण्डिर्महाकाल वृषस्त्वमेव विनायको गुह्यवरस्त्वमेव ॥ २७ ॥
इतीरितां स्तुतिं श्रुत्वा लिङ्गे नोक्तः शतक्रतुः ।
गच्छ शक्र !ममादेशान्मत्तेजोबृंहितो रणे ।
हनिष्यसि न सन्देहो वृत्रं रिपुविदारण !॥ २८ ॥
तस्यलिङ्गस्य माहात्म्यादपांफेनेन पार्वति । जघानऽमरेवृत्रं पश्यतां त्रिदशद्विषाम्
निहत्य दानवान्पश्चाल्लीलया रणकर्कशः । उवाचेन्द्रस्तदा देवान्हतोवृत्रोमहारणे ॥

त्रैलोक्यस्याध्यक्षतां प्राप्ता भवन्तो मत्पराक्रमात् ।
एवमुक्तास्तु शक्रेण ते देवाविस्मयान्विताः ॥ ३१ ॥
अस्य देवस्य माहात्म्याद्धतो वृत्रो महासुरः ।
शरीरे च स्थिताः पापा दर्शनात्सङ्क्षयं गताः ॥ ३२ ॥
इन्द्रेणाराधितोयस्माद्देवदेवोमहेश्वरः । तस्मादिन्द्रेश्वरोनामख्यातोभुविभविष्यति
दर्शनादस्य लिङ्गस्य पुरीमिन्द्रस्य शोभनाम् ।
पापिनोऽपि गमिष्यन्ति सर्वपातकवर्जिताः ॥ ३४ ॥
यःपश्यतिनरोनित्यं श्रीइन्द्रेश्वरसञ्ज्ञकम् । समुक्तःपातकैःसर्वैर्दिविमोदिष्यतेचिरम्
इन्द्रेणाराधितं लिङ्गं भक्त्या यः पूजयिष्यति ।
सयाति वै परं स्थानं दिव्यकल्पचतुष्टयम् ॥ ३५ ॥
येन चेन्द्रेश्वरोदेवो भक्त्या सम्यक्प्रपूजितः । तेनविष्णुप्रभृतयो वयंसर्वेसवासवाः
मुनयो लोकपालाश्च पूजिताः स्युर्न संशयः ॥ ३७ ॥
इत्युक्तः स सुरैः शक्रो वैकुण्ठाद्यैःसमन्ततः । तैरेवसहितो देवोजगामाथत्रिविष्टपम्
इन्द्रेश्वरस्य देवस्य प्रभावः कथितस्त्वयम् ।
मार्कण्डेयेश्वरं देवं शृणु पार्वति ! साम्प्रतम् ॥ ३८ ॥

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्य इन्द्रेश्वरमाहात्म्यवर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

# षट्त्रिंशोऽध्यायः

## मार्कण्डेयेश्वरमाहात्म्यवर्णनम्

श्रीहर उवाच

मार्कण्डेयेश्वरं विद्धि षट्त्रिंशत्तममीश्वरम् । यस्य दर्शनमात्रेण पुत्रवाञ्जायते नरः॥
ब्रह्मवंशसमुत्पन्नो मृकण्डोनाम तापसः । वेदाध्ययनसम्पन्नः स चापुत्रो बभूव ह॥
पुत्रार्थं चिन्तयामास कथं पुत्रो भवेदिति । अपुत्रस्यकुतो लोक इति वेदेषु पठ्यते
तस्मात्तपःकरिष्यामियेन मे तनयोभवेत् । एवंसञ्चिन्त्यबहुधा स जगामहिमालयम्
चकारवसतिंचापि तपसेभाविनात्मवान् । वायुभक्षोऽम्बुभक्षश्चनिराहारोर्ध्वपादकः
शाकमूलफलाहारः पर्णाश्येकद्विपर्णभुक् । एवमादीनि चान्यानि तपांसिसुबहून्यपि
चकारस मुनिस्तत्र वर्षाणि द्वादशैवतु । न तुष्टोऽहं तदा देवि! तपसा दुष्करेण तु

ततो ज्ञात्वा मतिं तस्य विज्ञप्तोऽहं तदात्वया ।
करोत्येव तपः क्रूरं पुत्रहेतोर्मुनिर्महान् ॥ ८ ॥

तेजसा दीपयञ्छैलं शोषयन्सलिलाशयान् । तपसादुष्करेणैव क्षुभितानाकवासिनः

समुद्राः क्षुभिताः सर्वे चन्द्रादित्यौ तथैव च ।
ऋषयो विस्मृतिं प्राप्ताः कम्पेते चापि रोदसी ॥
अकालप्रलयो देव भविष्यति न संशयः ॥ १० ॥

मुनयेतन्मृकण्डायपुत्रो वै दीयतामिति । मयाप्रोक्तं वरारोहे पुत्रमिच्छत्ययोनिजम्
अक्षयं सुविशालाक्षि सहस्राक्षमिवापरम् । चन्द्राभं चन्द्रवदनं चन्द्रवद्भुवनप्रियम् ॥
नीलोत्पलदलश्यामं नीलोत्पलदलेक्षणम् । विशालचारुजघनं चारुकुण्डलमण्डितम्

पुत्रमिच्छति देवेशि! मृकण्डोऽयं महामुनिः । १२ ॥

त्वयाप्युक्तं पुनर्देवि कारुण्याद्भक्तिवत्सले । न ददासि मुनेः पुत्रं तप्यतो विषमं तपः
फलस्यदातातपसांकथंत्वंगीयसे बुधैः । कस्त्वांनुशरणं गच्छेल्लोकानांसम्भवंभवम्

करोषि सर्वदैत्यानां सर्वदेवाकुलाकुलम् । त्वयाहं सुचिरं देवं सत्कृता करुणाकर
नान्यो मामनुकरुपार्श्वं प्रयच्छेत्प्रवरं वरम् । सत्वंसर्वजगन्नाथ प्रभुः कर्त्ताप्रशासिता
हेतुः स्वामी महेशानो दयालुर्भक्तवत्सलः ।
सर्वेश्वर! स्तुतोऽभीष्टं किं न विप्राय दीयते ॥ १८ ॥
तपसा क्षीणपापस्य ब्रह्मत्वेभावितात्मनः । अस्यपुत्रप्रदानं त्वं कुरु मद्वचनाच्छिव
मया त्वं वर्णिता देवि स्नेहाक्षरपदैः शुभैः । लोलपङ्कजपत्राक्षि गौरि भूधरगात्रजे
स्कन्दमातः कलापूर्णचन्द्रबिम्बनिभानने । कृशोदरि विनिःस्पृष्टचामीकरनिभद्युते
त्वयोक्तं प्रकरिष्यामि वाक्यं द्विरदगामिनि !।
त्वं सिद्धिःसाधकासाध्यं त्वं क्रिया प्रक्रमाश्रया ॥ २२ ॥
त्वं मायाश्रीर्द्युतिः श्रीमच्छ्रद्धारुचिरसंततिः । कृत्वामानंबहुविधं मयैव सहसुन्दरि
भ्राजसे विविधाकारा मोहयित्वाखिलंजगत् । त्वयाप्युक्तंपुनर्देविक्रियतांतुवचोमम
मुनयेऽस्मै तपः क्षीणसर्वगात्राय साम्प्रतम् । वरःप्रदीयतामस्मै ब्राह्मणायमहेश्वर!॥
मयाप्युक्तं विशालाक्षि! श्रूयतां वचनंमम । असौ गच्छतुविप्रेन्द्रोमहाकालवनोत्तमे
पत्तनेश्वरपूर्वे तु तत्रास्ते लिङ्गमुत्तमम् । पुत्रप्रदं विशालाक्षि महापातकनाशनम् ॥
मदीयं वचनं श्रुत्वा त्वयाप्युक्तो द्विजोत्तमः । महाकालवनं गच्छ पुत्रार्थमृषिसत्तम
तत्र लिङ्गं समाराध्य लप्स्यसे पुत्रमुत्तमम् ॥ २८ ॥
त्वया सम्प्रेरितो विप्रस्तथेति कृतनिश्चयः । आशया परयायुक्तः पुत्रकामोजगामसः
तत्र दृष्ट्वा महालिङ्गं पुत्रदं पापनाशनम् । भक्त्या संसेवयामास तपसादुष्करेण तु ॥
अथकेनापि कालेन निःसृतोऽहं त्वयासह । लिङ्गमध्याद्वरारोहे सचप्रोक्तोद्विजोत्तमः
शर्वोऽहमिति जानीहि ब्रूहि किं करवाणि ते ।
आवां पुरा प्रसन्नौ ते ज्ञातं तव विचेष्टितम् ॥ ३२ ॥
यमिच्छसि वरं ब्रह्मंस्तदद्य प्रददामिते । मया प्रोक्तःप्रसन्नेन मुनिः परमविस्मितः
प्रह्वः प्राहसुहृदये स हृष्टो मुनिसत्तमः । अपत्यहेतोर्देवेशौ किमलभ्यं भवेन्मम ॥
मया प्रोक्तस्तदा देवि! मृकण्डो मुनिसत्तमः ।

अयोनिजस्ते:तनयो मानुषो वै भविष्यति ।

ऐश्वर्यज्ञानसम्पन्नो दीर्घायुः सर्वचित्सुधीः ॥ ३५ ॥

एतस्मिन्नन्तरे देवि! प्रादुर्भूतोमहातपाः । पुत्रः परमधर्मात्मा मार्कण्डेयो महामुनिः

स जातमात्रो धर्मात्मा तत्रैव तपसिस्थितः । देवमाराधयामास सतुष्टोऽथवरंददौ

त्वयाऽहं जातमात्रेण तपसा तोषितोयतः ।

तस्मात्ख्यातिं गमिष्यामि त्वन्नाम्ना द्विजसत्तम ॥ ३८ ॥

येमांपश्यन्तिविप्रेन्द्रभक्त्यापरमयायुताः । प्राप्नुवन्तिगतिंनित्यंते सदानन्ददायिनीम्

प्रसंगाद्येगमिष्यन्ति तेसदादुःखवर्जिताः । देवदेवं समाराध्यमोदिष्यन्तिहिते नराः

त्र्यक्षागणेश्वराःसिद्धाःसिद्धगन्धर्वसेविताः । तेभविष्यन्ति सततंममभक्ताश्चयेनराः

ये मां संपूजयिष्यन्ति हृद्यैः पुष्पैः सुगन्धिभिः ।

दीर्घायुषो भविष्यन्ति सदा दुःखविवर्जिताः ॥ ४२ ॥

इत्युक्ते तेन लिङ्गेन मार्कण्डेयो महातपाः । तपश्चचार तत्रैव महाकालवने स्थितः॥

प्रभावः कथितो देवि! मार्कण्डेयेश्वरस्य च ।

शिवेश्वरस्य देवस्य माहात्म्यं शृणु साम्प्रतम् ॥ ४४ ॥

इति श्रीस्कान्देमहापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्ये मार्कण्डेयेश्वरमाहात्म्यवर्णनंनाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

———

# सप्तत्रिंशोऽध्यायः

## शिवेश्वरमाहात्म्यवर्णनम्

**ईश्वर उवाच**

सप्तत्रिंशत्तमं विद्धि शिवेश्वरमनन्तकम् । यस्य दर्शनमात्रेण जायन्ते सर्वसम्पदः ॥
राजा रिपुञ्जयोनाम ब्रह्मकल्पे पुराऽभवत् । महाकालवने रम्ये प्रजापालनतत्परः ॥

देवपूजां व्रतं दानं ध्यानं स्वाध्यायसत्क्रियाम् ।
प्रजापालनकं कृत्वा न स जानाति किञ्चन ॥ ३ ॥

स प्रजाः पालयामासपुत्रवत्परिपालिताः । प्रजास्ताःसुखसंवृद्धाजरामृत्युविवर्जिताः

पुत्रिणो धनधान्याढ्याः सर्वकामसमन्विताः ।
तस्यैव तेजसा व्याप्तं महाकालपुरं प्रिये !॥ ५ ॥

एतस्मिन्नन्तरे पृथ्वीं तस्मिञ्छासतिपार्वति । महाकालवनंदेविस्वपुरंचिह्नितंमया

विना चोज्जयिनीं गन्तुं न रतिं प्राप कुत्रचित् ॥ ६ ॥
तदा मया गणेशस्तु शिवसञ्ज्ञो गणाग्रणीः ।
चिन्तितस्तत्क्षणात्प्राप्तः किं करोमीत्युवाच ह ॥ ७ ॥

मयाप्युक्तो गणेशोहि गच्छ पुत्र मम प्रियम् । महाकालपुरं व्याप्तं राज्ञारिपुञ्जयेनहि
इत्युक्तः स मयादेवितथेत्युक्त्वाकृताञ्जलिः । गतोऽसौमानुषेलोकेममाज्ञाहर्षिताननः
गते शिवगणे देविसन्तुष्टोऽहंशुचिस्मिते । युक्तिज्ञानवृतोदक्षःप्रभोर्भृत्योहिदुर्लभः
ततः सभिक्षुरूपेण बह्वौषधिपरिग्रहः । गृहीत्वादुन्दुभिं स्कन्धे वचनं चेदमब्रवीत्
कश्च भूतविषग्रस्तो नानादोषैःसमाश्रितः । कस्य कोव्याधिरत्युग्रोयमहम्प्रशमंनये
कोऽपुत्रःपुत्रवानस्तुमन्मन्त्रबलमाश्रितः । वैद्योऽस्मि सर्वयुक्तिज्ञःसर्वकामप्रदायकः
तस्यवाक्यंसमाकर्ण्यकौतूहलसमन्वितः । सवृद्धबालनारीकोजनस्तमभिजग्मिवान्
तेषां स नाशयामास व्याधिं दुर्जयमप्यति । तेचतस्मैसुमहतींपूजांचक्रुःसुहर्षिताः

हेमरत्नाम्बरधनैर्धान्यग्रामपुरादिभिः ॥ १५ ॥

एवं स न्यवसत्तत्र वर्षाणि च चतुर्दश। नृपतेरन्तरप्रेक्षी नचान्तरमवापसः ॥ १६ ॥

अहोऽतिदुष्करो राजा अहो:लोकपरायणः।

अहोतेजोनिधिर्वीरो दुर्जयोऽसौ महामतिः ॥ १७ ॥

एवं सचिन्तयंस्तत्रभिक्षुरूपीशिवोगणः। जीर्णोद्यानलताजालगहनेसम्वृतःस्थितः

अत्रान्तरे तु नृपतेस्तस्य लोकव्रतस्य तु। महिषीनिर्जरा राज्ञःप्राणेभ्योपिगरीयसी

रूपेणाप्रतिमा लोके सा चापुत्रा सुतार्थिनी।

सपत्नीवहुला देवी श्रुत्वा भिक्षुं समाश्रिता ॥ २० ॥

सर्वकामप्रदंज्ञात्वानागराणांसकौतुकम्। स्वां सखींप्रेषयामाससुनन्दांनामभामिनी

भिक्षोरायतने गुप्तमन्तःपुरमतन्द्रिता। तया चासादितो भिक्षुर्विचिन्त्यनगरंतदा

उवाच चिन्तापरमं भिक्षुं भिक्षासमन्वितम् ॥ २२ ॥

प्रणम्यप्राञ्जलिर्भूत्वाकार्यार्थंविगतव्यथा। भगवन्महिषीराज्ञःप्राणेभ्योऽपिगरीयसी

वन्ध्या पुत्रार्थिनी देवी गुप्तं त्वां द्रष्टुमिच्छति ॥ २३ ॥

भवान्कृपाकरः प्रायः प्रजानामीहितप्रदः। एवं श्रुत्वा शिवगणो लब्ध्वारन्ध्रमुवाचह

भिक्षुरुवाच

भद्रे! केयं तव मतिर्विपरीतप्रलापिनी। अविज्ञातो नरपतेर्गृहमेहीति भाषसे।

अविज्ञातः पुरे दृष्टः साहसी पुरुषो भवेत् ॥ २५ ॥

एवं मत्वा व्रज क्षिप्रं स्वमेवान्तःपुरं शुभे। नाहं तत्रागमिष्यामि यावन्ननृपतेर्वचः

सा तु तस्य वचः श्रुत्वा भिक्षोः क्षुभितमानसा।

जगामान्तःपुरं तूर्णं देव्यै तच्च न्यवेदयत् ॥ २७ ॥

सखीवचस्तु सा श्रुत्वा देवी दीना उवाच ताम्।

सुनन्दे! क उपायोऽस्ति राजा येन प्रवर्त्तते।

भिक्षोरानयने क्षिप्रं यावन्नासौ व्रजेत्क्वचित् ॥ २८ ॥

उवाचसातां युक्त्यैवंसुनन्दायुक्तभाषिणी। त्वंतस्यवल्लभाराज्ञःप्राणेभ्योपिगरीयसी

तस्मादस्वथचित्तत्वं राज्ञः स्वंसम्प्रदर्शय । हेतुना तेनराजा च वाक्यंतवकरिष्यति
एतस्मिन्नेव काले तु देव्या दर्शनलालसः । जगामान्तःपुरं राजा प्रियांदीनांददर्शह
तामपृच्छत्ततो राजा स्नेहार्द्रीकृतमानसः ॥ ३१ ॥

राजोवाच

किमिदं देवि! ते रूपं विमनस्केव भाषसे । भग्नासि केनदुःखेनकस्यापकृतमीदृशम्
नृपस्य वचनं श्रुत्वा राज्ञीवचनमब्रवीत् । न पुत्रान्नृप मेसन्तितेज मे नास्तिनिर्वृतिः
क्रीडनं पीडनायैव तेषां ये पुत्रवर्जिताः । अपुत्रा जगतो दीनादुःखिताः पुत्रवर्जिताः
अपुत्रे च गतिर्नास्ति सुतापुत्रविवर्जिते ॥ ३४ ॥

सुखिनस्तेजनालोकेये बालंपांसुभूषितम् । परिष्वजन्तिस्वसुतमस्फुटाक्षरभाषकम्
अनेन कारणेनास्मि निर्वेदं परमं गता । उपायो हि मया दृष्टःपुत्रार्थं ममसाम्प्रतम्
इह भिक्षुः समायातो देवरूपी सनातनः । तस्य चाव्याहता शक्तिःश्रूयतेसर्ववस्तुषु
सस्त्रीबालो जनश्चात्र शरणं यस्य गच्छति । तस्यभिक्षोःप्रसादेनसुतवत्योवयंनृप
भविष्यामोऽत्र सन्देहो न मे मनसि वर्त्तते ॥ ३८ ॥

तस्याः स वचनं श्रुत्वा जीर्णोद्यानंजगाम ह । प्रिययामहितोराजातंचभिक्षुं ददर्शह
दृष्टमात्रो नृपतिना भिक्षुर्लिङ्गत्वमागतः । दृष्ट्वा सुमहदाश्चर्यं भक्तिनम्रोमहीपतिः ॥
पूजयामास विधिवत्तल्लिङ्गं भिक्षुरूपकम् ॥ ४० ॥

अपुत्रोऽस्मीत्युवाचेदं धन्येयंमहिषी मम । देहि मे तनयं देव शिवो भवान्महेश्वरः
इत्युक्तो राजसिंहेन भिक्षुर्लिङ्गाकृतिस्तदा । प्रत्युवाच महीपालं पुत्रस्ते भवितानृपः
ततःप्रभृति राजाऽसौ सकलत्रो महामतिः । सर्वभावेन तं देवं जगाम शरणंमुदा ॥
देवदेवस्य माहात्म्यात्पुत्रो जातो महाबलः ।
धर्मात्मा च यशस्वी च सार्वभौमो गुणाधिकः ॥ ४४ ॥

अथाहं मन्दराद्देवि कौतुकात्तुसमागतः । लिङ्गाकारंगणंदृष्ट्वा राजानं सेवकं तथा ॥
योगैश्वर्येण च मयाकृतम्वै पुरमात्मनः । नानारत्नप्रभोद्द्योतं नानासिद्धिनिषेवितम्
तच्छिवं शाश्वतं स्थानं दत्तं देवि! तदा मया ॥ ४६ ॥

मार्कण्डेयेश्वराद्देवादुत्तरे वरवर्णिनि! । तदाप्रभृति देवोऽसौ शिवेश्वरइति स्मृतः॥
येऽर्चयिष्यन्तिसततंशिवेश्वरमनुत्तमम् । निर्धूतसर्वपापास्तेभविष्यन्तिगणोत्तमाः
विदित्वार्भगुरुंलोकंयेद्रक्ष्यन्तिशिवेश्वरम् । अन्तकालेप्रदास्यामि तेषांज्ञानमनुत्तमम्
मोक्षंसुदुर्लभंमत्वासंसारंचातिभीषणम् । अपुनर्भवहेतुत्वात्संसेव्योऽसौशिवेश्वरः

सर्वावस्थोऽपि यो मर्त्यः संश्रयेत्तं शिवेश्वरम् ।
स तां गतिमवाप्नोति यज्ञैर्दानैर्हि या गतिः ॥ ५१ ॥

आख्यानम्प्रयतोमर्त्योयःइदंश्रावयेच्छुचिः । पठेद्वावाचयेद्वापिसमुच्येत्सर्वकिल्बिषैः
एषते कथितोदेवि प्रभावः पापनाशनः । शिवेश्वरस्य देवस्य कुसुमेशमतः शृणु॥

इति श्रीस्कान्देमाहापुराणे एकाशीतिसाहस्र्यां संहितायांपञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये शिवेश्वरमाहात्म्यवर्णनं नाम
सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

## अष्टत्रिंशोऽध्यायः

### कुसुमेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

अष्टत्रिंशत्तमं विद्धि कुसुमेश्वरसञ्ज्ञकम् । देवं स्वर्गप्रदंदेवि महापातकनाशनम्॥
पुरा वैवस्वते कल्पे प्राप्ते वाराहसञ्ज्ञके । प्रादुर्भूते विशालाक्षि कैलासादहमागतः
महाकालवनेरम्ये रममाणस्य पार्वति !। त्वया सार्द्धं ममाक्षैश्च प्रादुरासीन्महास्वनः
पृष्टोऽहञ्चतदाश्रुत्वाशब्दंचातीवदुःसहम् । शब्दोत्पत्तिर्मयादेवि कथितासात्वदग्रतः
एतेगणेशाः क्रीडन्ति मध्येवै वीरकोगणः । कुसुमैर्भूषितोऽत्यर्थंममातीवसुवल्लभः
कुसुमैर्हन्यतेऽत्यर्थं पूज्यते कुसुमोत्करैः । स एव वीरको देवि! सदा मे हर्षदायकः
नानाश्चर्यगुणाधारो गणेश्वरशतार्चितः । मदीयं वचनं श्रुत्वा त्वयाप्युक्तं वरानने !॥

न दृश्यते विना पुण्यैः पुत्रस्याननपङ्कजम् ।
ईदृशस्य सुतस्यापि ममोत्कण्ठा महेश्वर !॥ ८ ॥
कदाहमीदृशं पुत्रं द्रक्ष्याम्यानन्ददायकम् । मया तव वचःश्रुत्वा हसित्वाच पुनःपुनः
प्रोक्तं पार्वति! पुत्रोऽयं प्रदत्तो वीरकोऽधुना ॥ ६ ॥
एष एव सुतस्तेस्तु नयनानन्ददायकः । त्वया मात्रा कृतार्थस्तु वीरकः कुसुमार्चितः
मदीयं वचनं श्रुत्वा प्रेषिता विजया त्वया । दत्तो हरेण मे पुत्रो विजये शीघ्रमानय
विजयोवाच गणपं गणमध्ये च वर्त्तिनम् ।
एहि वीरक! चापल्यात्त्वया देवः प्रकोपितः ॥
किमुन्मत्तवदत्यर्थं नृत्यरागेण मोहितः ॥ १२ ॥
इत्युक्तो भयसन्त्रस्तःकुसुमैर्भूषितस्तदा । त्वत्समीपं समायातोविजयानुगतःशनैः
भूषितं कुसुमैर्दृष्ट्वा भयत्रस्तश्च वीरकम् । त्वयाचाकारितो देवि! गिरा मधुरवर्णया
एह्येहि जातोऽसि मे पुत्रकस्त्वं देवेन दत्तोऽधुना वीरकोऽसि ।
उक्तवत्येवमङ्के निधायाथ तं पर्यचुम्बत्कपोले कलम्बादिनम् ॥ १५ ॥
मूर्ध्न्युपाघ्राय सम्मार्ज्य गात्राणि सा भूषयामास दिव्यैः स्वयम्भूषणैः ।
किङ्किणीमेखलानूपुरैः सन्मणीनिष्ककेयूरहारोत्करैः सद्गुणैः ॥ १६ ॥
कोमलैः पल्लवैश्चित्रितैश्चारुभिर्दिव्यमन्त्रोद्भवैस्तस्य शुभ्रैस्ततः ।
भूतिभिश्चाकरोमिश्रसिद्धार्थकैरङ्गरक्षाविधींस्तस्य तुष्टा सती ॥ १७ ॥
एवमाघ्राय चोवकथ कृत्वा स्रजं मूर्ध्नि गोरोचनापत्रभङ्गोज्ज्वलैः ।
वत्स गच्छाऽधुना क्रीड सार्द्धं गणैरप्रमत्तो यथा बालचर्यां शनैः ॥ १८ ॥
सोऽपि सिद्धध्याकुले गण्डशैले मिलद्व्रतजाले बृहच्छालतालाकुले ।
क्षणं फुल्लमालातमालालिमाले क्षणं वृक्षमूले विलोलालिमाले ॥ १६ ॥
क्षणं स्वल्पपङ्के जले पङ्कजाले क्षणं वृक्षखण्डे शुभे निष्कलङ्के ।
परिक्रीडते बालको वै विहारी-गणेशाधिपो देवतानन्दकारी ॥ २० ॥
एवं विक्रीडतस्तस्य वीरकस्य गणस्य च ।

सन्ध्या तमोमयी प्राप्ता विज्ञप्तोऽहं त्वया प्रिये !॥ २१ ॥
ऐश्वर्यं दीयतामस्य मम पुत्रस्य शङ्कर !। शरीरार्द्धं गणेशत्वं लोकपालत्वमग्रतः॥
लिङ्गत्वमक्षयत्वं च स्थानं दिव्यं सुदुर्ल्लभम् ।
वन्द्यमानं यथा देव! सिद्धगन्धर्वकिन्नरैः ॥
ब्रह्मेन्द्रवरुणादित्यलोकपालेश्वरेश्वरैः ॥ २३ ॥
एतैरेवगणैःसार्द्धं स्तूयमानं महात्मभिः। अलङ्कृतोमयायस्मात्कुसुमैर्विविधैःशुभैः
कुसुमेश्वरसञ्ज्ञस्तुतस्मात्ख्यातोभवत्विति । मयाप्युक्तंविशालाक्षिवीरकंदयितंमम
मत्प्रभावसमं दिव्यं सेवितं गणपैः सदा । श्रृणु गन्धर्वगीतानां माधुर्यममृतोपमम्
पश्य किन्नरनारीणां गायन्तीनांमनोरमम् । पश्याप्सरःसमूहस्य नृत्यमेतन्निरन्तरम्
विद्याधरैः परिवृतः कुसुमेशो वरानने !। विशेषतो मया देवि! प्रथमं प्रमथेश्वरः॥
कुसुमेश्वरतां नीतो यदा कुसुममण्डितः ॥ २८ ॥
स्थानंदत्तं विशालाक्षि शिवलिङ्गस्यचोत्तरे । वरोदत्तोबहुमतो दुष्प्राप्यस्त्रिदशैरपि
ये त्वां द्रक्ष्यन्ति गणप! कुसुमेश्वरसञ्ज्ञकम् । न तेषां जायतेपापं पद्मपत्रेयथाजलम्
कुसुमैरर्चयिष्यन्ति ये नराः कुसुमेश्वरम् ।
मत्स्थानं ते समासाद्य मोदिष्यन्ति गतव्यथाः ॥ ३१ ॥
योऽप्येकं दिवसं मर्त्यस्त्वां पश्यति समाहितः ।
स मुक्तः पातकैः सर्वैर्मम लोकं गमिष्यति ॥ ३२ ॥
यः पूजयति भावेन कुसुमैः कुसुमेश्वरम् । स प्राप्स्यतिपरंस्थानं पुनरावृत्तिदुर्लभम्
एवमादिवरैः पुष्टः कृतोऽयं कुसुमेश्वरः । कृतकृत्यो गणो देवि! लिङ्गेनेश्वरतांगतः
कुसुमेश्वरदेवस्य प्रभावः कथितस्त्वयम् ।
अक्रूरेशस्य देवस्य श्रूयतां तदनन्तरम् ॥ ३५ ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्यांसंहितायांपञ्चमेऽवन्तीखण्डे
कुसुमेश्वरमाहात्म्यवर्णनं नामषट्त्रिंशोऽध्यायः ॥ ३८ ॥

---

# एकोनचत्वारिंशोऽध्यायः

## अक्रूरेश्वरमाहात्म्यवर्णनम्

हर उवाच

अक्रूरेश्वरमेकोनचत्वारिंशत्तमं शृणु। यस्य दर्शनमात्रेण सुबुद्धिर्जायते नृणाम् ॥ १ ॥
पुरा त्वयैव कल्पादौ परया शक्तिरूपया। कृतं कृत्स्नंवरारोहे त्रैलोक्यं सचराचरम्
ततस्त्वं संस्तुता देवैः सकिन्नरमहोरगैः। प्रदक्षिणांप्रकुर्वन्तिगणानानाविधास्तुते
नमस्कारंप्रकुर्वन्तिस्तोत्रं कुर्वन्तिचापरे। नकरोतिनमस्कारमेको भृङ्गिरिटिस्तदा

क्रूरां बुद्धिं समासाद्य गर्वेणातीव गर्वितः ॥ ५ ॥

एको देवोमहादेवः स्त्रियाकिमनयामम। यदानायाति ते पार्श्वंतदा प्रोक्तस्त्वयागतः
कस्मान्न कुरुषे पूजां प्रदक्षिणमथोस्तुतिम्। मद्भक्तोमदधीनोऽसिममपुत्रोमयाकृतः

इत्थं भूतगणेश! त्वं किं वै लौल्येन वर्त्तसे ॥ ७ ॥

इति भृङ्गिरिटिः श्रुत्वाक्रुद्धस्त्वामाह गर्वितः। नाहंपार्वति ते पुत्रःपुत्रोऽहंशङ्करस्यतु
एष एव च मे माता एषएव च मे पिता। एवं रात्रिदिनं यामि शरणं परमेष्ठिनम् ॥
त्वमप्यस्यैवशरणंननु पार्वतिसंस्थिता। यदि चत्वामहंवन्देतद्वन्देसकलान्गणान्

इति भृङ्गिरिटिः श्रुत्वा वाक्यं कुपितया त्वया।
तस्योक्तं प्रमथेशस्य भीरु! भृङ्गिरिटेरिदम् ॥ ११ ॥
सुतो भूत्वा भवान्कस्माददाक्षिण्यं ब्रवीषि माम्।
त्वङ्मांसशोणितान्त्रं च मातृकं तनयस्यतु ॥ १२ ॥

नखदन्तास्थिसङ्घातः शिश्नं वाक्च शिरस्तथा। तथैवशुक्रंगणपपैतृकं तु शरीरकम्
इति भृङ्गिरिटिःश्रुत्वासद्यो योगबलेनतु। मांसादित्यक्तवान्सर्वं मातृकंभागमेवहि
ततः प्रभृति वामोरु! नखदन्तास्थिनासिकः। सचक्रूरांमतिकृत्वाक्रोधसंरक्तलोचनः

त्वां परित्यज्य दुःखार्त्त आजगाम ममांतिकम्।

अथ त्वया तदा शप्तो गणो भृङ्गिरिटिः प्रिये !॥ १६ ॥

क्रूराबुद्धिःकृता यस्मात्त्वयाकुमतिनाभृशम् । तस्मात्त्वंमानुषेलोकेगमिष्यसिनसंशयः
इत्युक्तस्तुत्वयादेवि!गणोभृङ्गिरिटिस्तथा । पपातमानुषं लोकंपुण्यांतेसुकृतीयथा
स गत्वा पुष्करद्वीपं तपसेभावितात्मवान् । तत्रैकपादूर्ध्वभुजोदशपद्मान्यवस्थितः

दग्धीभूतं च तपसा जगद्वै दुष्करेण तु ॥ १६ ॥

ततो ब्रह्मा च विष्णुश्च शक्रश्च त्रिदशैःसह । वयं च चारुजघने तत्समीपं समागताः
उपगम्य ततस्तस्य कथितं पुरतो मया । अलं क्रूरेण तपसालोकस्योत्सादनेन वै ॥
त्रैलोक्यमपि निःसञ्ज्ञं जातमेवंस्थितेत्वयि । संहरस्व तपोघोरं लोकसंतापनंमहत्

प्रार्थ्यतां पार्वती पुत्र सा दास्यति वरं च ते ।

अस्याः प्रसादान्मुक्तिस्ते शापाच्चैव भविष्यति ॥ २३ ॥

एवमुक्तस्तदा तेन प्रार्थितात्वं महेश्वरि !। गणेन भृङ्गिरिटिना भक्तिनम्रेण:सादरात्
त्वया प्रोक्तं विशालाक्षिपुत्र गच्छममाज्ञया । महाकालवनेरम्येतत्राऽक्रूरोभविष्यसि
पुनः प्राप्स्यसि कैलासंसिद्धगन्धर्वसेवितम् । अङ्कपादाग्रतोलिङ्गंसप्तकल्पानुगंमहत्

यस्य दर्शनमात्रेण शुभा बुद्धिः प्रजायते ॥ २६ ॥

कृतघ्ना नास्तिकाःक्रूरायेच विश्वासघातकाः । महापातकिनो येचयेच शापवशंगताः

दर्शनात्तस्य लिङ्गस्य तेऽपि स्वर्गभुजो नराः ॥ २७ ॥

क्रूरांबुद्धिसमासाद्यकंसं हत्वाचकेशिहा । बलदेवेन सहितस्त्यक्त्वातांमथुरांपुरीम्
महाकालवनं गत्वातोषयित्वा महेश्वरम् । अक्रूरत्वंचसम्प्राप्तं कीर्त्तिर्लब्धाचशाश्वती
त्वदीयं वचनं श्रुत्वा गणो भृङ्गिरिटिस्तदा । तत्रेतिप्रत्ययीजातोमहाकालवनंगतः

देवमाराधयामास तपसा दुष्करेण तु ॥ ३० ॥

एतस्मिन्नन्तरे देवि! लिङ्गमध्यात्त्वमुत्थित ।

अर्द्धाङ्गं मामकं कृत्वा स्वकीयाङ्गमथार्द्धता ।

फणीन्द्रबद्धजूटार्द्धमर्द्धधम्मिल्लभूषितम ॥ ३१ ॥

पत्रवल्लीविचित्रार्धमर्द्धचन्द्रविराजितम् । मुक्ताहारनिबद्धार्द्धमर्द्धं सर्पैश्च वेष्टितम् ॥

ततोभृङ्गिरिटिर्देवि! दृष्ट्वा तन्महदद्भुतम् । चिन्तयामास हृदये मयाऽज्ञानादनुष्ठितम्
उमा च शङ्करश्चैव देहमेकं सनातनम् । एका मूर्त्तिरनिर्देश्या द्विधा भेदेन दृश्यते ॥
एवं चिन्तयतस्तस्य भक्तिनम्रस्य पार्वति !। प्रोक्तंत्वया प्रसन्नाहं वरं वरय पुत्रक!

तेनोक्तं यदि तुष्टाऽसि मातर्मम महेश्वरि !।
अस्य लिङ्गस्य माहात्म्यात्क्रूराबुद्धिर्गता मम ॥ ३६ ॥

अक्रूरेश्वरनामायं देवः ख्यातो भवत्विति । त्वं देवि सर्वभावानामेकाकारणमुच्यते

त्वं मूर्ता पुण्यनिचया त्वं गतिः पुण्यसेविनाम् ।
पिता माता सुहृद्बन्धुस्त्वमेका कारणं परम् ॥ ३८ ॥

कुरु पुण्यतमं स्थानं ब्रह्महत्यादिनाशनम् । भुक्तिदं मुक्तिदंचैववाञ्छितार्थप्रदायकम्
तथेति च त्वया प्रोक्तं गिरा मधुरयातदा । यत्ते प्रियतमं वत्स तत्सर्वंप्रकरोम्यहम्
नमेऽस्ति दुष्करं पुत्र त्वत्कृते कनकप्रभ !। अस्मिन्स्थाने तुयेदेवमक्रूरेश्वरसञ्ज्ञकम्

प्रसङ्गादपि पश्यन्ति अपि पापरता नराः ।
तेऽप्यवश्यं भविष्यन्ति त्वत्समा नियतं गणाः ॥ ४२ ॥
भक्त्या स्तोष्यन्ति ये नाम लिङ्गस्यास्य च मानवाः ।
मानसैः पातकैर्मुक्ता यास्यन्ति स्वर्गमक्षयम् ॥ ४३ ॥
स्नात्वा तु विधिवत्पूजां यः करिष्यति मानवः ।
स मुक्तःपातकैःसर्वैःप्राप्स्यते रविमण्डलम् ॥ ४४ ॥
आयुरारोग्यमैश्वर्यं काममत्र हि वाञ्छितम् ।
गोसहस्रफलं चात्र स्पृष्ट्वा प्राप्स्यति मानवः ॥ ४५ ॥

स्नात्वामन्दाकिनीकुण्डे योऽक्रूरेश्वरमीश्वरम् । पूजयेद्विविधैःपुष्पैर्महापापहतोपिवा

विमानं दिव्यमारूढो यावत्कल्पचतुष्टयम् ।
गन्धर्वैर्गीयमानस्तु सोऽपिस्वर्गं गमिष्यति ॥ ४७ ॥
इत्युक्तः स गणो देवि! मत्समीपमुपागतः ।
शापान्मुक्तस्त्वया सार्धं विस्मिता किं वरानने !॥ ४८ ॥

एषतेकथितो देवि प्रभावः पापनाशनः । अक्रूरेश्वरदेवस्य शृणु कुण्डेश्वरं परम् ॥

इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्येऽक्रूरेश्वरमाहात्म्यवर्णनंनामैकोनचत्वारिंशोऽध्यायः ॥

---

## चत्वारिंशोऽध्यायः

### कुण्डेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

चत्वारिंशत्तमंविद्धि कुंण्डेश्वरमतःशृणु । यस्य दर्शनमात्रेण लभ्यते सद्गतिः परा ॥
विज्ञप्तोऽहं त्वया देवि मन्दरेचारुकन्दरे । वीरकंद्रष्टुमिच्छामि क्व गतो मम पुत्रकः
मया प्रोक्तं विशालाक्षि! महाकालवनोत्तमे । जलमध्येस्थितस्तेपेतपः परमदारुणम्

मुनिभिः सहितो धीमान्भ्राजमानोंऽशुमानिव ।
गच्छामस्तत्र तं द्रष्टुं गणैः सार्द्धं वरानने !॥ ४ ॥

मदीयंवचनंश्रुत्वा त्वयाहंप्रेरितस्तदा । उत्तिष्ठशम्भो गच्छामो वृषमारुह सत्वरम्

सप्रस्रवौ स्तनौ जातौ सद्यःसंस्मृत्य वीरकम् ।
मया स्मृतो वृषो देवि! धर्मरूपी सनातनः ॥ ६ ॥

मदीयंचिन्तितंज्ञात्वा ममपार्श्वमुपागतः । आरूढोऽहं त्वयासार्द्धंतस्मिन्नेववृषे तदा

प्रस्थितस्तत्क्षणाच्छीघ्रं गणैर्नानाविधैः सह ।
वेगात्प्रयातो वृषभस्कन्धालम्बितया त्वया ॥ ८ ॥

रणद्वलयबाहुभ्यां गाढमालिङ्गितोह्यहम् । त्वंभीताचतदाज्ञातायदाऽतीवप्रणोदितः
वृषोमया विशालाक्षि सकृष्टोगणपस्तदा । कृष्टंच सत्वरंदृष्ट्वा प्रोक्तं चभीतया तदा
श्रान्तास्मिसाम्प्रतं देववेगेनानेनभीषिता । तद्विश्रमितुमिच्छामि भूधरस्यतटेविभो

क्षणं पद्भ्यां गमिष्यामि विषमोऽयं गिरिर्महान् ।

त्वदीयं वचनं श्रुत्वा बाढमुक्तं प्रिये मया ॥ १२ ॥

मुहूर्त्तं चारुजघने शैलपादमुपाश्रिता। कुरुश्रमापनयनं यावद्वेगात्प्रयाम्यहम् ॥ १३ ॥
पन्थानं त्वत्सुखं यत्र तं वयंमृगयावहे। एषकुण्डोगणाध्यक्षस्त्वत्समीपेवसिष्यति
त्वदाज्ञावशवर्त्ती च किङ्करः स्थापितो मया ॥ १४ ॥
एवमुक्त्वा ततो देवि संस्थाप्यगणरक्षकम्। आरूढोऽहंगिरेःप्रान्तमुदयाद्रिरविर्यथा
ततोऽवलोकितोऽत्यर्थं रमणीयोमहागिरिः। इदं रम्यमिदंरम्यमित्यस्मिन्वरपर्वते
पश्यतोमम शैलेन्द्रं गताःसम्वत्सरादश। त्वयाथचिन्तितंदेवि क्वगतस्त्रिपुरान्तकः
नूनं न मदनातप्तां वेत्तिमां रतिवर्जिताम्। मां विहायमहादेवोनिर्विशङ्कः क्व वर्त्तते
हरस्य क्वापि यातस्य वैरंसंस्मृत्यचित्तजः। बाधतेमामनङ्गोऽपिचापरोपितमार्गणः
विलोकयन्तीं हा दृष्ट्वा विलपन्तीं पुनः पुनः ॥ १६ ॥
ततः कुण्डो गणाध्यक्षो ज्ञात्वा भावं त्वदीयकम्।
उत्कृष्टेन स्वरेणोक्तं मा देवि! विमना भव ॥ २० ॥
आयात एव ते भर्त्ता मा चेतः कलुषं कुरु।
एतच्छ्रुत्वा वचस्तस्य कुण्डस्य कमलानने !॥ २१ ॥
दुःखार्त्तयात्वयाप्रोक्तः कुण्ड!वेत्सि नशङ्करम्। क्वगतःकिं चकुरुतेकालंदीर्घमिमंशिव
दर्शयस्व महादेवमित्युक्तोऽसौ पुनःपुनः ॥ २२ ॥
यदा न दर्शितस्तेन कुण्डेनाहं वरानने। तदाशप्तस्त्वयादेविक्रुद्धया गणरक्षकः॥
गच्छ त्वं मानुषं लोकं यस्मान्नकथितो हरः।
एतस्मिन्नन्तरे देवि !प्राप्तोऽहं त्वत्समीपतः ॥ २४ ॥
पृष्टश्चाहंत्वयादेविविहायक्वगतोऽसिमाम्। दुर्गमेपर्वतेशून्येतस्मात्त्यक्ष्यामिजीवितम्
गत्वाग्रे भूधरस्यास्य किंकृतंचत्वयाविभो। मया तववचःश्रुत्वाकथितंसर्वमेवतत्
दुराधर्षतरः शैलः समन्ताद्दुरतिक्रमः। त्वत्प्रियार्थंमहाभागेमयामार्गोऽवलोकितः
येन मार्गेण विश्रब्धं गमिष्यामः सुमध्यमे।
अयं कुण्डो गणो देवि! विषण्णो व्याकुलः कृतः ॥ २८ ॥

त्वयाप्युक्तं महादेव कुण्डःशप्तोमया गणः । ममाज्ञा नकृतायस्माद्विफलं नवचो मम

तस्माद्यातु ममादेशान्महाकालवनं शुभम् ॥ २६ ॥

भैरवं रूपमास्थाय यत्र त्वं चोत्तरेस्थितः । तस्याग्रतःस्थितंलिङ्गं वर्त्त तेकामदंसदा

तस्यदर्शनमात्रेण गणपोऽयं भविष्यति । कुण्डेश्वरेतिविख्यातःसदेवोवैभैविष्यति

इत्युक्तः सत्वयादेविसमासाद्यपुनः पुनः । प्रस्थापितस्त्वयादेशाद्व्रजकुण्डममाज्ञया

महाकालवनंशीघ्रं लिङ्गमाराध्य सत्वरम् । कीर्तिस्तेभवितापुत्रत्रिषुलोकेषुशाश्वती

इत्युक्तस्तत्क्षणात्प्राप्तो दृष्ट्वा लिङ्गं तु शाश्वतम् ।

उत्तरस्य शिवस्याग्रे पूजयामास भक्तितः ॥ ३४ ॥

ततो देवाः सगन्धर्वाः सिद्धाश्चपरमर्षयः । यक्षाश्चाप्सरसश्चैव समाजग्मुःसहस्रशः

अथाहंतत्क्षणात्प्राप्तस्त्वयासार्द्धं गणैर्वृतः । दृष्ट्वाकुण्डं गणेशंतु लिङ्गाराधनतत्परम्

समाधिध्याननिरतं प्रोक्तमस्माभिरादरात् । तुष्टा ते पार्वतीपुत्रप्रार्थ्यतांवरमुत्तमम्

अक्षयं तु पदं प्राप्तंत्वयालिङ्गस्यदर्शनात् । अद्यप्रभृतिदेवोऽयंख्यातोभुविभविष्यति

नाम्ना कुण्डेश्वरो यस्मात्सर्वसम्पत्करः सदा ।

कुण्डेश्वरमनादिं तु भक्त्या पश्यति यो नरः ।

सोऽश्वमेधसहस्रस्य फलं प्राप्स्यति नान्यथा ॥ ३६ ॥

तस्यदानफलं सर्वं सर्वतीर्थफलंसदा । लिङ्गंकुण्डेश्वरंयस्तु भक्त्यासम्पूजयिष्यति

दशानामश्वमेधानामग्निष्टोमशतस्य च । स्पर्शनात्फलमाप्नोति कुण्डेश्वरस्यसर्वदा

प्रातः पश्यन्ति ये भक्त्या कृत्वा नियमपूर्वकम् ।

सिद्धिं सुकामिकीं हृष्टाः सम्प्राप्स्यन्ति न संशयः ॥ ४२ ॥

एष ते कथितो देवि प्रभावः पापनाशनः । कुण्डेश्वरस्यदेवस्य श्रृणु लुम्पेश्वरं परम्

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्रयां संहितायां पञ्चमेऽवन्तीखण्डे

चतुरशीतिलिङ्गमाहात्म्ये कुण्डेश्वरमाहात्म्यवर्णनं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

---

# एकचत्वारिंशोऽध्यायः

## लुम्पेश्वरमाहात्म्यवर्णनम्

### श्रीमहादेव उवाच

चत्वारिंशत्तमं सैकमीश्वरंविद्धि पार्वति !। लुम्पेश्वरमिति ख्यातं नामयस्यमहीतले
देशेम्लेच्छगणाकीर्णे बभूव जगतीपतिः । लुम्पाधिप इतिख्यातोमहेन्द्रसमविक्रम
तस्यासीद्दयिता भार्याविशालानामनामतः । सायौवनगुणोपेतारूपेणाप्रतिमाभुवि
स युद्धकामो नृपतिः पर्यपृच्छद्द्विजोत्तमान् ॥ ४ ॥
अथ केनापि कथितमाश्रमे सामगो द्विजः । तेनसार्द्धं महाबाहोयुध्यस्वत्वंनृपोत्तम
ततः स प्रस्थितो राजा म्लेछैः सार्द्धं सहस्रशः ।
तुषारैर्बर्बरैर्लुम्पैः पह्लवैः श्वगणैस्तथा ॥ ६ ॥
दस्युभिः सम्वृतः क्रूरैः क्रोधेनाकुलितेन्द्रियः ।
आजगामाश्रमं पुण्यं सामगस्य मुनेस्तदा ॥ ७ ॥
मुनिना पूजितस्तेन मधुपर्कादिविष्टरैः । एतस्मिन्नन्तरे राजा होमधेनुं ददर्श ह ॥
प्रार्थयामास सहसा न दत्ता मुनिना तदा । प्रमथ्य चाश्रमं तस्य होमधेनुं जहारसः
वनं बभञ्ज सकलं तस्य विप्रस्य पश्यतः ॥ ९ ॥
काल्यमानां च गां दृष्ट्वा वत्सं चातीव दुःखितम् ।
उवाच वचनं विप्रो मा राजन्साहसं कुरु ॥ १० ॥
एवं वदन्तं विप्रेन्द्रं शरैस्तीक्ष्णैर्जघान ह । लुम्पः क्रोधसमाविष्टो दुष्टो दुष्टजनैर्वृतः
असकृत्पुत्रपुत्रेति विलपन्तमनाथवत् । हत्वा च सामगं विप्रंजगाम स्वगृहं नृपः ॥
एतस्मिन्नन्तरे पुत्रः समित्पाणिरुपागतः । दृष्ट्वा च पितरं विप्रं तदामृत्युवशङ्गतम्
अनागसं महात्मानं विललाप सुदुःखितः ॥ १३ ॥
केनेदं कुत्सितं कर्म कृतं पापेन मे पिता । अयुध्यमानो वृद्धःसन्हतः शरशतैः शितैः

विलप्यैवं सकरुणं बहुनानाविधं तथा। प्रेतकार्याणि सर्वाणि पितुश्चक्रे विधानतः

दग्दाह पितरं चाग्नौ तोयमादाय सत्वरम्।

तस्य लुम्पाधिपस्याऽपि ददौ शापं सुदारुणम् ॥ १६ ॥

स्वधर्मनिरतो विद्वान्येन मे निहतः पिता। सपापात्मादुराचारःकुष्ठरोगमवाप्नुयात्

एतस्मिन्नन्तरे राजा कुष्ठरोगेण पीडितः। अचङ्क्रमणतां प्राप्तोलुम्पाधीशोवरानने

औषधैरधिकोऽस्येति ब्रह्मशापप्रभावतः।

वैराग्यान्मर्तुकामोऽसौ काष्ठान्यादाय दुःखितः ॥ १९ ॥

चितां कर्तुं समारेभे समायातोऽथ नारदः। पूजितो विधिना तेनदुःखितेननृपेणहि

अथ पप्रच्छ लुम्पोऽसौ नारदं मुनिसत्तमम्। अकस्मान्मम देवर्षे कुष्ठरोगोबभूव ह

तेनाहं पीडितोऽतीव न च शान्तिं व्रजत्यसौ ॥ २१ ॥

औषधैर्वर्द्धतेकस्मादेतदाख्यातुमर्हसि। न तेऽस्त्यविदितंकिञ्चिदिह लोके परत्र च

तस्य तद्वचनं श्रुत्वा लम्पाधीशस्य नारदः। कथयामास तत्सर्वंब्रह्मशापंसुदुस्तरम्

ततः सभार्यो नृपतिः प्रार्थयामास नारदम्।

कथं मे भगवञ्छापो दुस्तरो यास्यति क्षयम् ॥ २४ ॥

एवमुक्तस्तुलुम्पेन नारदो भगवानृषिः। कारुण्यात्कथयामाससभार्यस्ययशस्विनि

महाकालवने राजँल्लिङ्गं कुष्ठहरं परम्। सर्वसम्पत्करं तत्र विद्यते पापनाशनम्॥

शिप्रायाश्च तटे रम्ये केशवार्कस्य पूर्वतः।

तत्र त्वं गच्छ राजेन्द्र! कान्त्यायुक्तो भविष्यसि ॥ २७ ॥

एवमुक्तस्तुलुम्पोऽसौ ह्याजगाम त्वरान्वितः। महाकालवनं रम्यंमहर्षिगणसेवितम्

प्राप्तः स्वर्गोपमं भूयः शिप्रयापरिशोभितम्।

विवेश च मुदायुक्तो दृष्ट्वा लिङ्गमनुत्तमम् ॥ २९ ॥

स्नात्वा शिप्राजले पुण्ये महापातकनाशने। दर्शनात्तस्य लिङ्गस्यदिव्यरूपोबभूवह

कुष्ठरोगेण मुक्तस्तु मुक्तो वै ब्रह्महत्यया।

कृतकृत्यो नृपो जातो दर्शनादेव पार्वति !॥ ३१ ॥

सतत्र तामुषित्वैकां रजनीं पृथिवीपतिः । तापसानां परं चक्रे सत्कारं भार्यया सह

ततः कृतस्वस्त्ययनस्तापसैस्तैर्महात्मभिः ।

दिव्यज्ञानान्वितैर्दिव्यैः सूर्यवैश्वानरप्रभैः ॥ ३३ ॥

कृतं नाम तदातस्य लिङ्गस्य कमलानने । लुम्पेनाराधितोयस्माद्देवोऽयंकुष्ठनाशनः

लुम्पेश्वर इति ख्यातो भविष्यति महीतले ॥ ३४ ॥

पूजयिष्यन्ति ये भक्त्या लिङ्गं लुम्पेश्वरं परम् ।

स्नात्वा शिप्राजले पुण्ये ते यास्यन्ति परं पदम् ॥ ३५ ॥

प्रार्थयिष्यन्ति यान्कामान्मनसाचेप्सितान्प्रियान् ।

तानाप्स्यन्ति न सन्देहो लुम्पेशस्य च दर्शनात् ॥ ३६ ॥

महापापसमायुक्तो:यःपश्यतिसमाहितः । लिङ्गंलुम्पेश्वरंसोऽपिदेवतुल्योभविष्यति

गोघ्नश्चैव कृतघ्नश्च मातृहा गुरुतल्पगः । दुष्टकर्मसमाचारो भ्रातृहा पितृहा तथा ॥

लुम्पेश्वरं सकृत्पश्यन्मुच्यतेसर्वकिल्बिषैः । पूजितोऽपिदहेत्पापंसप्तजन्मार्जितंचयत्

इत्युक्त्वा मुनयः सर्वेपूजयामासुरन्विताः । कुष्ठरोगविनिर्मुक्तोराजास्वविषयंगतः

एष ते कथितो देवि! प्रभावः पापनाशनः । लुम्पेश्वरस्य देवस्य श्रृणु गङ्गेश्वरं परम्

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्ये लुम्पेश्वरमाहात्म्यवर्णनं-
नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

——:*:——

# द्विचत्वारिंशोऽध्यायः

## गङ्गेश्वरमाहात्म्यवर्णनम्

श्रीहर उवाच

द्वाचत्वारिंशतं देवं गङ्गेश्वरमथो शृणु । यस्य दर्शनमात्रेणसर्वतीर्थफलं लभेत् ॥

ध्रुवाधारं जगद्योनेः पदं नारायणस्य तु ॥ १ ॥

पदात्प्रवृत्ता या देवी गङ्गा त्रिपथगा नदी ।

सा प्रविश्य सुधायोनिं सोममाधारमंभसाम् ॥ २ ॥

ततः सम्वर्द्धमानार्करश्मिसङ्गतिपावनी । पपात मेरुपृष्ठे च सा चतुर्धा ततो ययौ

मेरुकूटतटान्तेभ्यो निपतन्ती यशस्विनी ।

विकीर्यमाणसलिला निरालम्बा पपत सा ॥ ४ ॥

मन्दरादिषु शैलेषु प्रविभक्तोदकासमम् । तत्र सीतेतिविख्याता ययौ चैत्ररथम्वनम्

तत्प्लावयित्वा च ययावरुणोदं सरिद्वरा ॥ ६ ॥

तथैवालकनन्दाख्या दक्षिणे गन्धमादने । मेरुपादवनं गत्वा नन्दने देवनन्दने ॥ ७ ॥

मानसञ्च महावेगात्प्लावयित्वासरोवरम् । तस्माच्चशैलराजानं रम्यंत्रिशिखरंगता

तस्माच्च पर्वताः सर्वे प्लाविवतास्तत्क्षणात्प्रिये !।

तान्प्लावयित्वा सम्प्राप्ता हिमवन्तं महागिरिम् ॥ ९ ॥

मया धृता च तत्रैव जटाजूटेन पार्वति !। न मुक्ता च यदा गङ्गा तदा क्रुद्धा ममोपरि

गात्राणि प्लावयामास मदीयानि वरानने । मया च रुद्धाक्रोधेन जटामध्येयशस्विनि

तत्रैव सा तपश्चक्रे बहुकल्पशतानि च । भगीरथेनोपवासैः स्तुत्याचाराधितोह्यहम्

तदामुक्ता मया देविगङ्गात्रिपथगामिनी । महाकालमनुप्राप्ता प्लावयित्वोत्तरान्कुरून्

समुद्रमहिषी जाता प्राणेभ्योऽपि गरीयसी । नदीनामुत्तमागङ्गा समुद्रेण कृतातदा

स तया सहितो रेमे समुद्रः सरितांपतिः ॥ १४ ॥

ततः कदाचिद्ब्रह्माणमुपासाञ्चक्रिरे सुराः । तथार्णवोजगामाथब्रह्मलोकं सनातनम्

गङ्गया सहितो देवि! दर्शनार्थं महोत्सवे ॥ १५ ॥

अथ गङ्गा सरिच्छ्रेष्ठा समुपायात्पितामहम् ।

तस्या वासः समुद्धूतं मारुतेन शशिप्रभम् ॥ १६ ॥

ततोऽभवन्सुरगणाः सहसाऽवाङ्मुखास्तदा ।

महाभिषस्तु राजर्षिर्निःशङ्को दृष्टवान्नदीम् ॥ १७ ॥

तस्य भावं विदित्वाऽथ ब्रह्मणा स तिरस्कृतः ।

उक्तस्तु जातो मर्त्येषु पुनर्लोकानवाप्स्यसि ॥ १८ ॥

गङ्गाशप्ताथक्रुद्धेनसमुद्रेणयशस्विनि । मांविहायान्यसक्तासितस्माद्यास्यसिमानुषम्

लोकमल्पायुषंदीना तत्रदुःखमवाप्स्यसि । तं शापं दारुणं श्रुत्वा गङ्गावचनमब्रवीत्

विनापराधाच्छप्ताहं कस्माद्वै देवसंसदि । पतिव्रता पतिप्राणा पतिना परमार्थतः

प्रमादाद्वस्त्रमुद्धूतंवायुना व्यापकेन तु । प्रत्युवाच ततोब्रह्मा तां नदींलोकपावनीम्

वसूनां कारणाद्देवि! शप्ता यस्मान्महानदि !।

भाव्यर्थे तोयनिधिना तस्माच्छीघ्रं व्रजाधुना ॥ २३ ॥

महाकालवने रम्ये सिद्धगन्धर्वसेविते । शिप्राया दक्षिणे भागे विद्यते लिङ्गमुत्तमम्

सर्वसिद्धिकरं पुण्यं सर्वपातकनाशनम् ।

तमाराधय यत्नेन स ते दास्यति वाञ्छितम् ॥ २५ ॥

पितामहवचः श्रुत्वा तुष्टा त्रिपथगामिनी । गमनं तत्र मेऽभीष्टंविद्यते यत्सखी मम

शिप्राऽपि मे प्रिया पुण्या महापातकनाशिनी ॥ २६ ॥

इति सञ्चिन्त्य मनसा दिव्यादेवनदीतदा । आजगाममहाकाले ह्यपश्यल्लिङ्गमुत्तमम्

पूजयामास पयसा दिव्येन विधिनातदा । दृष्ट्वाशिप्रांसखीं तत्र संश्लेषंचाभवत्तयोः

ततःप्रभृतिसञ्जाता साशिप्रापूर्ववाहिनी । त्रिषुलोकेषुविख्यातोदेवोगङ्गेश्वरःस्वयम्

गङ्गयाऽऽराधितो यस्मात्समीहितफलप्रदः ॥ २६ ॥

संस्तुता देवगन्धर्वैर्गङ्गा देवनदी तदा । ऋषिभिर्वालखिल्याद्यैस्तथान्यैर्मुनिभिर्मुदा

समुद्रस्तत्र सम्प्राप्तो मानिता सा महानदी ।
लिङ्गेनोक्ता तदा गङ्गा कलया स्थीयतामिति ॥ ३१ ॥
तत्समीपे महापुण्ये यावत्तिष्ठति मेदिनी । अङ्गीकृतंसमुद्रेण यथोक्तश्चतथास्त्विति
एवमुक्त्वा गता गङ्गा कलया तत्र संस्थिता ।
गङ्गेश्वरं तु यः पश्येत्स्नात्वा शिप्राम्भसि प्रिये !॥ ३३ ॥
गोसहस्रफलं तस्य जायते नात्र संशयः । सर्वतीर्थफलं तस्य सर्वधर्मफलं तथा॥
सर्वयज्ञफलं सम्यक्सर्वदानफलं तथा । सर्वयोगफलं देवि! प्राप्नोत्येव निरन्तरम्
तत्र तीर्थानि सुभगे ! पृथिव्यां यानि कानिचित् ।
धर्मारण्यं फल्गुतीर्थं पुष्करं नैमिषं गया ॥ ३६ ॥
प्रयागश्च कुरुक्षेत्रं केदारममरेश्वरम । चन्द्रभागा विपाशा च सरयूर्देविका कुहूः॥
गोदावरी शतद्रुश्च बाहुदा वेत्रवत्यपि । सर्वा एवात्र सरितः सङ्गताः सन्ति गङ्गया
गुप्तानिपुण्यतीर्थानि सिद्धक्षेत्राणिचैवहि । तत्रसर्वाणितिष्ठन्ति कलामात्रेणपार्वति
एतेषांफलमाप्नोतियःपश्यतिसमाहितः । स्नात्वागङ्गेश्वरं देवं सत्यमेतन्मयोदितम्
अतः पुण्यतमं स्थानं गीयते गणवन्दिते !॥ ४० ॥
एष ते कथितो देवि प्रभावः पापनाशनः । गङ्गेश्वरस्य देवस्य शृण्वङ्गारेश्वरम्परम्
इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्येगङ्गेश्वरमाहात्म्यवर्णनंनाम द्वाचत्वारिंशोऽध्यायः॥४२॥

---

# त्रिचत्वारिंशोऽध्यायः

## अङ्गारेश्वरमाहात्म्यवर्णनम्

### श्रीशिव उवाच

चत्वारिंशत्तमं विद्धि त्र्यधिकं पर्वतात्मजे। यस्य दर्शनमात्रेण जायन्ते सर्वसम्पदः '

आदिकल्पे पुराजातो वक्त्राङ्गो लोहितच्छविः।
रौद्रस्त्वङ्गारसदृशो मम गात्राद्वरानने !।
मया धृतो धरण्यां स विख्यातो भूमिपुत्रकः ॥ २ ॥
जातमात्रे सुते तस्मिन्महाकाये भयावहे।
कम्पिता धरणी देवी देवास्त्रस्ताः सवासवाः ॥ ३ ॥

क्षोभंगताः समुद्राश्च चेलुश्च धरणीधराः। तेनैव पीडितंसर्वं सदेवासुरमानुषम् ॥
ऋषयो वालखिल्याश्च देवाःशक्रपुरोगमाः। बृहस्पतिपुरस्कृत्य ब्रह्मलोकंगताः प्रिये!

सोच्छ्वासाः कथयामासुर्नमस्कृत्य पितामहम्।
वृत्तान्तं विस्तरात्सर्वं लोकत्रयविनाशनम् ॥ ६ ॥

हरगात्रोद्भवेनैव जातमात्रेण लीलया। लोकत्रयं समाक्रान्तं पीडितं भक्षितं तथा

तच्छ्रुत्वा वचनं तेषां ब्रह्मा लोकपितामहः।
चिन्तयित्वा तु तैः सार्द्धमाजगाम ममान्तिकम् ॥ ८ ॥
मया पृष्टास्तु ते सर्वे किमर्थं भयविह्वलाः।
सोच्छ्वासहृदया दीनाः कस्माद्वो भयमागतम् ॥ ९ ॥

तैःसर्वं कथितं देवि! ममाग्रे भयविह्वलैः । त्वदङ्गसम्भवेनैव देवदेव जगत्पते ॥

पीडितं भक्षितं चैव सदेवासुरमानवम् ॥ १० ॥

इति तेषां वचः श्रुत्वाक्षेमार्थं कृपया मया। आकारितोमत्समीपमुवाच वदतां वरः
आदेशो दीयतां देव किंकरोमीत्युवाचसः। नाकर्षत्वंजगदिदं मया प्रोक्तः पुनः पुनः

ममाङ्गाद्रजसा जातस्तेनाङ्गारक उच्यसे ।
लोकानां स्वस्तये नित्यं मङ्गलोऽसि मया कृतः ॥ १३ ॥
इदानीं वक्रतां यातो वक्रस्त्वं गीयसेबुधैः । विज्ञप्तोऽहंतदा तेनमम वाक्यंश्रुतंयदा
आहारेण विना देव! कथं तृप्तिर्भविष्यति ॥ १४ ॥
तस्मान्मे देहि सुस्थानमाधिपत्यं च देहि मे । शक्तिंचदेहिमे शीघ्रमाहारं देहिमेप्रभो
तस्य तद्वचनं श्रुत्वा पुत्रोऽयंमम वल्लभः । तस्माद्दास्यामि परमंस्थानमक्षयमुत्तमम्
इति सञ्चिन्त्य मनसा स्मृतं स्थानं मयोत्तमम् ।
उत्सङ्गे च सुतं कृत्वा प्रेम्णा प्रोक्तं पुनः पुनः ॥ १७ ॥
दत्तं पुत्र मया स्थानं महाकालवनोत्तमे । गङ्गेश्वरस्य पूर्वे तु प्रशस्यंस्थानमुत्तमम्
खगर्ता चैव शिप्रा च सङ्गमस्तत्र विद्यते ॥ १९ ॥
यदामया धृता गङ्गातदासाचन्द्रमण्डलात् । प्रमादात्पतिता भूमौ महाकालवनोत्तमे
खगर्तेति च विख्याता खाद्भ्रष्टाप्रापतत्क्षितौ । अतोमयावतारस्तुसहसातत्रवै कृतः
लिङ्गमूर्तिरहं पुत्रतिष्ठामिसुरपूजितः । तत्स्थानं दुर्लभं देवैस्तस्मात्त्वं गच्छसत्वरम्
पूजितोऽहं त्वया तत्र सङ्गमे लोकपूजिते ।
त्रिषु लोकेषु यास्यामि ख्यातिं वै तव नामतः ॥ २३ ॥
मध्ये ग्रहाणां सर्वेषामाधिपत्यं मया तव । दत्तंतृतीयकं स्थानं तत्र तृप्तिर्भविष्यति
पूजां प्राप्स्यसितत्रैवग्रहमध्ये व्यवस्थितः । तिथिर्दत्ता चतुर्थींतेतस्यांयेव्रततत्पराः
त्वामुद्दिश्य करिष्यन्ति पूजां शान्ति सदक्षिणाम् ।
तेन सर्वेण ते तृप्तिर्भविष्यति न संशयः ॥ २६ ॥
वारश्चैकश्च ते दत्तो मङ्गलार्थं मया तव । नववस्त्रपरीधानं विद्यारम्भं दिने तव ॥
तैलाभ्यङ्गं करिष्यन्ति न च प्राप्स्यन्ति ते बलम् ॥ २७ ॥
इत्युक्तस्तुमयादेवि चक्राङ्गो मङ्गलःसुतः । अङ्गारकेति विख्यातस्तथेत्यङ्गीचकारसः
सन्तुष्टस्तेन वाक्येन मदीयेन वरानने । आजगाम मुदा युक्तो महाकालवनोत्तमे ॥
शिप्रायाश्च तटे रम्ये खगर्त्तासङ्गमान्तिकम् । दृष्टोऽहं लिङ्गरूपेण परांतुष्टिमुपागतः

मया चालिङ्गितः प्रेम्णा चुम्बितः शिरसि प्रिये !।
वरो दत्तो विशालाक्षि! वाञ्छितं ते भविष्यति ॥ ३१ ॥
दृष्टोऽहं च त्वया पुत्र भक्त्या चाराधितस्त्वया ।
मम वाक्यं कृतं यस्मात्तस्मात्तुष्टोऽस्मि मङ्गल! ॥ ३२ ॥
अङ्गारेश्वरनामाहमद्यप्रभृति पुत्रक!। त्रिषु लोकेषु विख्यातो भविष्यामि न संशयः
ये मांपश्यन्ति सततं सङ्गमेऽत्र व्यवस्थितम् । नतेषांपुनरावृत्तिर्भविष्यतिमहीतले
येमांसम्पूजयिष्यन्ति ह्यङ्गारकदिने नराः । कलौयुगेकृतार्थास्तेभविष्यन्तिनसंशयः
चतुर्थ्यां मङ्गलदिने येमां पश्यन्ति सुव्रताः । नतेयास्यन्तिसंसारे घोरेदुःखशताकुले
अमावास्या च भौमश्च संयोगो दृश्यतेयदा । खगर्त्तायाश्चशिप्रायाःसङ्गमेदेवपूजिते
स्नात्वा तदा प्रपश्यन्ति मामत्रैव व्यवस्थितम् ।
तेषां पुण्यफलं देवि! समासाच्छृणु साम्प्रतम् ॥ ३८ ॥
वाराणस्यां प्रयागे च कुरुक्षेत्रे च यत्फलम् ।
गयायां पुष्करे प्रोक्तं तत्पुण्यमधिकं भवेत् ॥ ३९ ॥
एष ते कथितोदेवि प्रभावः पापनाशनः । अङ्गारेश्वरदेवस्य श्रूयतामुत्तरेश्वरम् ॥ ४०
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्येऽङ्गारकेश्वरमाहात्म्यवर्णनं नाम
त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

———

# चतुश्चत्वारिंशोऽध्यायः

## उत्तरेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

चत्वारिंशत्तमं विद्धि चतुर्भिरधिकंपरम् । यस्यदर्शनमात्रेण समीहितफलं लभेत् ॥
उत्तरेशमिति ख्यातं समीहितफलप्रदम् ॥ १ ॥
पुरानियुक्ताः शक्रेण ये मेघा वृष्टिकारकाः । तैः प्लावितं जगत्सर्वं सपर्वतमहीतलम्
एकार्णवे ततो जाते देवा भीता वरानने !।
निःस्वाध्यायवषट्काराः स्वधास्वाहाविवर्जिताः ॥ ३ ॥
नैवाप्यायनमस्माकं विना होमेन जायते । वयमाप्यायिता विप्रैर्यज्ञभागैर्यथोचितैः ॥
तेषांवयंप्रयच्छामः कामान्यज्ञादिपूजिताः । नास्तितत्सर्वमेवैतदन्योन्यमवदन्सुराः
दृष्ट्वा पृथ्वींजलेमग्नां ब्रह्माणंशरणंगताः । कथयामासुरत्युग्रं नमस्कृत्य पितामहम् ।
एकार्णवा मही जाता विनष्टाःक्रतवःप्रभो । निःस्वाध्यायवट्कारं जगज्जातं पितामह
देवानां वचनंश्रुत्वा ब्रह्मालोकपितामहः । मुहूर्तंचिन्तयामास किमेतदितिविस्मितः
अकाले प्रलयःकस्मान्निमग्ना पृथिवीजले । गतास्त्राष्ट्रेमदीया तुव्यर्थं जातं वचो मम
इतिसञ्चिन्त्य हृदये सस्मार बलसूदनम् । स्मृतमात्रस्तुबलहाह्याजगाम पितामहम्
प्रोवाच वचनं श्रुत्वा नमस्कृत्य पितामहम् ।
स्मृतोऽहं केन कार्येण देह्याज्ञां मे पितामह !॥ ११ ॥
ब्रह्मणोक्तस्तदाशक्रःकिमर्थंप्लावितामही । असंबद्धैस्त्वदीयैश्चमेघैः किंसहसाकृतम्
ततःसर्वे समाहूता मेघाः शक्रेण पार्वति !। पितामहसमक्षं तुसमायाताश्चतत्क्षणात्
पितामहेन शक्रेण मर्यादाच कृतातदा । गजोनाम महामेघः पूर्वस्यांदिशि निर्मितः
गजाकारैस्ततो मेघैः सहस्रैर्दशभिर्वृतः । गवयो दक्षिणामाशां षट्सहस्राधिपःकृतः
शरभःपश्चिमामाशां सहस्राधिपतिःकृतः । उत्तरोनाम यो मेघो मेघैः कोटिभिरावृतः

उत्तरस्यां दिशि तद्वाप्रभुत्वे सम्प्रतिष्ठतः । मर्यादा च कृता देवि! ब्रह्मणा वासवेन तु
प्रावृट्काले च वर्षध्वं नक्षत्रैर्जलजैर्द्रुतम् ।
आर्द्रादिस्वातिपर्यन्तं नक्षत्रदशकं स्मृतम ॥ १८ ॥
ब्रह्मशक्रवचः श्रुत्वा तथेति कृतनिश्चयाः । ववृषुर्नियते काले तन्नामानि भवन्ति हि
एवं व्यवस्थिते लोके मर्यादायां स्थिता घनाः ।
ब्राह्मणा विज्वरा जातास्त्रिदशा मुदिता भृशम् ॥ २० ॥
क्रूरग्रहैरथो रुद्धास्ते मेघा वृष्टिकारकाः । शनैश्चरेण भौमेन भास्करेणाथ केतुना ॥
पीडिताः शरणं जग्मुर्वासवं भयविह्वलाः । निवेदितं भयात्सर्वं नमस्कृत्य पुनः पुनः
मेघानां वचनं श्रुत्वा सन्त्रस्तो वासवस्तदा । उवाचवचनं तेषां नाहंशक्तोनिवारणे
ग्रहाणामसमर्थोऽहं सर्वदैव पयोधराः ॥ २३ ॥
अहं राज्यात्परिभ्रष्टः कृतः क्रूरग्रहैःपुरा । स्थापितोऽहं कदाचिच्च सुप्रसन्नैर्ग्रहैः पदे
मम मान्याश्च पूज्याश्च ग्रहा एव यतोधिकाः ।
ग्रहाः सर्वहराः प्रोक्ता इति मे वर्त्तते मतिः ॥ २५ ॥
एतस्मिन्नन्तरे भूमौ सञ्जाता शतवार्षिकी । अनावृष्टिर्महारौद्रा सर्वप्राणिविनाशिनी
अस्थिकङ्कालशकला श्वेतपर्वतसन्निभा । पृथिवी तत्क्षणाज्जाता विनातोयेनपार्वति
देवाः सर्वे पुनर्भीता ब्रह्माणं शरणं गताः । ऊचुश्च प्रणताः सर्वेत्राहिनःशरणागतान्
अनावृष्ट्या जगत्सर्वं पीडितं चपितामह !। अकाले प्रलयो जातः पुनरेव च तादृशः
त्वया च वासवेनैव नियुक्ता ये पयोधराः । क्रूरग्रहैरतीवोग्रैः पीडितास्ते पितामह
देवानां वचनं श्रुत्वा ब्रह्मा लोकपितामहः । अहं बिभेमि भो देवा ग्रहैस्तैर्बलवत्तरैः
सर्वं जानामि माहात्म्यं ग्रहाणांक्रूरचेतसाम् । शनैश्चरेणवक्रेणभवन्तःपीडिताःसदा
वरुणो यादसां नाथो मङ्गलेन प्रपीडितः । राज्यभ्रष्टस्तु बहुधा केतुना वासवःकृतः
शिरश्छेदो मया प्राप्तो वक्रेण रविणा पुरा ।
एकैकशः समर्थास्ते किं पुनः सङ्घशस्त्वमी ।
तस्मात्सर्वे महादेवं गच्छामः शरणं वयम् ॥ २४ ॥

ब्रह्मणो वचनं श्रुत्वा सर्वे देवाः सवासवाः । ब्रह्माणं च पुरस्कृत्य मामेवशरणंगताः
उक्तोऽहं त्रिदशैः सर्वैः पाहि नः शरणागतान् ।
त्वं नो धाता विधाता च सृष्टिसंहारकारकः ॥ ३६ ॥
क्रूरग्रहैर्महादेव! रुद्धा मेघाः समन्ततः । नकुर्वन्ति प्रभो वृष्टिमनावृष्टिः सुदारुणा॥
सर्वप्राणिविनाशाय सञ्जाता शतवार्षिकी । तेषां तद्वचनं श्रुत्वा मयाज्ञातं वरानने !॥
क्रूरग्रहाणां सामर्थ्यं यथा च विदितं मम ॥ ३८ ॥
इति ज्ञात्वा महादेवि! उपायश्चिन्तितोमया । उत्तरोनामयोमेघोमेघैःकोटिभिरावृतः
आहूतस्तत्क्षणात्प्राप्तः किं करोमीत्युवाचह ॥ ३६ ॥
मया प्रोक्तो ममादेशाद्गच्छत्वं घनसंयुतः । महाकालवनं रम्यं वाञ्छितार्थफलप्रदम्
गङ्गेश्वरस्यदेवस्य दक्षिणे लिङ्गमुत्तमम् । तमाराधय यत्नेनसतेदास्यतिवाञ्छितम्
एवमुक्तो मया मेघ उत्तरो मेघसंयुतः । जगाम त्वरया युक्तो महाकालवनोत्तमे ॥
दृष्ट्वा वृष्टिकरं लिङ्गं पूजयामासभक्तितः । शिप्राजलंगृहीत्वातुस्नात्वास्नात्वाप्रयत्नतः
तावद्यावज्जलं शिप्रां पुनरेवागतं प्रिये !॥ ४२ ॥
एतस्मिन्नन्तरेतस्मादुद्भूतंधूममण्डलम् । लिङ्गमध्याद्वरारोहेज्वालामालाकुलंमहत्
ततो ज्वालामयं सर्वमभूदम्बरगोचरम् । तस्य ज्वालासमूहेन दग्धं वै ग्रहमण्डलम्
सनक्षत्रपथं यावत्ततो भीता ग्रहाः प्रिये !। तमेव शरणं प्राप्ता धूमज्वालाकुलाननाः॥
ततो ब्रह्मा च विष्णुश्चतद्दृष्ट्वामहदद्भुतम् । देवैर्वृतःसहस्राक्षोलिङ्गान्तिकमुपागतः
तल्लिङ्गं सुमहाज्वालं ज्वालाभिः पूरिताम्बरम् ।
दुष्प्रेक्ष्यं दुर्विदं भीमं वर्द्धमानं ददर्श सः ॥ ४८ ॥
अक्ष्णोर्निमेषमात्रेणववृधेयोजनायुतम् । दृष्ट्वातुवर्द्धमानस्यलिङ्गस्यात्यद्भुताकृतिम्
सुरेशो मोहमापन्नो विसञ्ज्ञाश्च ग्रहास्तदा ॥ ४६ ॥
ततस्तु तस्य लिङ्गस्यवारिधाराविनिःसृताः । एकोद्देशाद्वरारोहेधरात्वेकार्णवीकृता
लिङ्गस्यान्यप्रदेशात्तु वायुः समभवन्महान् । इतरस्मिन्प्रदेशे तु समूहस्तडितामभूत्
सधूमा समभूज्ज्वाला लिङ्गस्यान्यप्रदेशतः ॥ ५२ ॥

एवमत्यद्भुतं दृष्ट्वा वर्द्धमानं समन्ततः । लिङ्गमव्यक्तमुद्भूतमापूरितनभोऽन्तरम् ॥

ग्रहाश्च विह्वला जाता धूमेनाकुलितेन्द्रियाः ।

तुष्टुवुश्च तदा लिङ्गं दह्यमानाः समन्ततः ॥ ५४ ॥

ग्रहा ऊचुः

नमः सुरूपाय सुरार्चिताय नमो विरूपप्रकृतिक्रियाय ।

नमोनमो रूपनिराश्रयाय जलस्वरूपाय नमो नमस्ते ॥ ५५ ॥

इतिस्तुतोयदादेविग्रहैःक्रूरैस्तदाप्रिये । लिङ्गात्प्रादुरभूत्खस्थःस्वरूपोविग्रहाकृतिः

भस्मधूसरसर्वाङ्गो भोगिभोगाङ्गदोज्ज्वलः ।

हिमराशिनिभाकारोरजताचलनिर्मलः ।

उवाच चैतान्प्रणतान्ग्रहान्कम्पितकन्धरान् ॥ ५७ ॥

किं वा काममनोऽभीष्टंभवद्भ्यो यद्ददाम्यहम् । ममामोघमिदंसर्वदर्शनंचातिदुर्लभम्

भवद्भ्यो लोकतुष्ट्यर्थं दर्शनंहिददाम्यहम् । एवमुक्त्वाग्रहाःसर्वेप्रोचुःप्राञ्जलयस्तदा

यदि देयोवरोदेवयदि तुष्टोऽसि शङ्कर !। कर्मारम्भेषु सर्वेषुपूजाऽस्माकंयथा भवेत्

तथा कुरु महादेव! तेन तृप्तिर्भविष्यति ॥ ६० ॥

एवंभविष्यतीत्युक्त्वामेघंचोत्तरमुक्तवान् । तुष्टोऽस्म्यहंतुतेवत्सगृहाणवरमीप्सितम्

तच्छ्रुत्वा वचनं तत्र ह्युत्तरः प्राह हर्षितः । यन्मे तुष्टोऽसिभगवंस्तन्मह्यंदीयतांवरम्

यदास्माकं महाबाधां कदाकोऽपि करिष्यति ।

तदा वृष्टिर्विधातव्या त्वया देव! सदा भुवि ॥ ६३ ॥

रक्षाकार्या च मेघानां रक्षणीयास्त्वयावयम् । एवमस्त्वितितेनोक्तंलिङ्गेननगगात्रजे

अद्यप्रभृतितेनाम्ना ख्यातिं यास्यामिभूतले । उत्तरेश्वरसञ्ज्ञोऽहंभविष्यामिनसंशयः

ये मां सम्पूजयिष्यन्ति भक्त्या परमयायुताः ।

तेषां दास्यामि सततं वाञ्छितार्थफलम्भुवि ॥ ६६ ॥

पश्यन्ति प्रयता ये मां कृत्वा नियमपूर्वकम् ।

ते यास्यन्ति पुरं शैवं यावत्कल्पाष्टकायुतम् ॥ ६७ ॥

आरूढाःसूर्यसङ्काशैर्विमानैः सार्वकामिकैः । रुद्रकन्यासमाकीर्णैर्हंससारससंयुतैः ॥
नृत्यवादित्रनिर्घुष्टैरुत्कटध्वनिनादितैः । दोधूयमानैश्च नरैः स्तूयमानाः सुरासुरैः ॥
प्रसङ्गाद्भक्तिहीनोऽपि यो मां पश्यत्यशाठ्यतः ।
ऐश्वर्यं तस्य दास्यामि ह्युत्तरेषु कुरुष्वथ ॥ ७० ॥
स्मरिष्यति च यो नित्यंप्रभातेचोत्तरेश्वरम् । स यातिपरमंस्थानंदाहप्रलयवर्जितम्
एष ते कथितो देवि! प्रभावः पापनाशनः । उत्तरेश्वरदेवस्य शृणु त्रिलोचनेश्वरम् ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्य उत्तरेश्वरमाहात्म्यवर्णनं नाम
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

## पञ्चचत्वारिंशोऽध्यायः

### त्रिलोचनेश्वरमाहात्म्यवर्णनम्

श्रीदेवदेव उवाच

पञ्चचत्वारिकं विद्धि देवं त्रिलोचनेश्वरम् । यस्यदर्शनमात्रेण सर्वसिद्धिरवाप्यते ॥
इतिहासमिहासीद्यत्पीठे विरजसञ्ज्ञके । त्रिलोचनस्यप्रासादेमणिमाणिक्यनिर्मिते
नानाभङ्गिगवाक्षाढ्ये रत्नसानाविवापरे । देदीप्यमानसौवर्णकलशेन विराजिते ॥
पार्वणेन शशाङ्केन खेदादिव समासिते । तत्र पारावतद्वन्द्वं वसत्स्वैरं कृतालयम्
प्रातः सायं च मध्याह्ने कुर्वन्नित्यं प्रदक्षिणम् ।
उड्डीयमानं परितः पक्षपातैरितस्ततः ॥ ५ ॥
रजःप्रासादसँल्लग्नं दूरीकुर्वद्दिशो दश । त्रिलोचनेति सततं नाम भक्तैरुदाहृतम् ॥
त्रिविष्टपेति च तथा तयोः कर्णातिथीभवेत् ॥ ६ ॥
चतुर्विधानिवाद्यानि शम्भुप्रीतिकराण्यलम् । तयोःकर्णगुहास्प्राप्यप्रतिशब्दंप्रतन्वते

मङ्गलारात्रिकज्योतिस्त्रिसन्ध्यं पक्षिणोस्तयोः ।
नेत्रान्तं निर्विशन्नित्यं भक्तचेष्टां प्रदर्शयन् ॥ ८ ॥
प्राणयात्रां विहायापि कदाचित्स्थिरमानसौ ।
नोड्डीय वाञ्छितं यातः पश्यन्तौ कौतुकं खगौ ॥ ९ ॥

तत्रासकृज्जनाकीर्णंप्रासादंपरितोऽवनौ । तण्डुलादिचरन्तौतौकुर्वन्तौच प्रदक्षिणम्
देवदक्षिणदिग्भागेविष्णुदेहोद्भवञ्जलम् । तृषार्त्तौपिवतोनित्यं स्नात्वाचाजग्मतुश्चतौ
तयोरित्थंविचरतोस्त्रिलोचनसमीपतः । अगाद्बहुतिथःकालोद्विजयोःसाधुचेष्टयोः

अथ देवालयस्कन्धे गवाक्षान्तर्गतौ च तौ ।
श्येनेन केनचिद्दृष्टौ क्रूरदृष्ट्या सुखं स्थितौ ॥ १३ ॥

तच्च पारावतद्वन्द्वं श्येनः परिजिघृक्षया । अवतीर्याम्बराद्दाशु उपविष्टः शिवालये ॥
ततो विलोकयामास तदागमविनिर्गमौ । केनमार्गेण विशतो दुर्गमेण पतत्रिणौ

केनाध्वना च निर्यातः किंकाले कुरुतश्च किम् ।
कथं युगपदेतौ मे ग्राह्यौ स्वैरं भविष्यतः ॥ १६ ॥

दुर्वलोऽप्याकलयितुं सहसारिर्नशक्यते । करिणां च सहस्रेण वराश्वानांञ्च लक्षतः
न कर्म सिद्ध्येन्नृपतेर्दुर्गेणैकेनयद्भवेत । दुर्गस्थोनाभिभूयेत विपक्षःकेनचित्क्वचित्

स्वतन्त्रं यदि दुर्गं स्यादपमार्गप्रकाशकम् ॥ १८ ॥
इति दुर्गे बलं शंसञ्छ्यनो रोषारुणेक्षणः ।
असाध्वसौ कलरवौ वीक्ष्य यातो नभोङ्गणे ॥ १९ ॥

अथ परावती दक्षा विपक्षक्षपणेक्षणम् । महाबलं दुर्गबलात्प्राह पारावतं पतिम् ॥

कलरव्युवाच

प्रिय पारावत प्राज्ञ सर्वकामसुखावह । तव दृग्विषयं प्राप्तः श्येनोऽयं प्रबलो रिपुः ॥
सचतद्वाक्यमाकर्ण्यपारावत्याश्चसत्पतिः । पारावतीमुवाचेदं काचिन्तेतितव प्रिये

पारावत उवाच

कतिनाम न सन्तीह सुभगे व्योमचारिणः । कतिदेवालयाद्येषु खगानोपवसन्तिहि

कति चैव न पश्यन्ति नौ सुखस्थाविह प्रिये! ।
तेभ्यो यदीह भेतव्यं कुतो नौ तत्सुखं प्रिये! ॥ २४ ॥
रमत्वं च मया सार्द्धंत्यजचिन्तामिमां शुभे !। अस्यश्येनवराकस्य गणनापिनमेहृदि।
इत्थंपारावतवराच्छ्रुत्वापारावतीवचः । मौनमालम्ब्यसन्तस्थेपत्युःपादार्पितेक्षणा
हितवत्योपदिश्यापि प्रियं प्रियचिकीर्षया ।
पत्न्या जोषं समास्थेयं कार्यं पत्युर्वचः सदा ॥ २७ ॥
अन्येद्युरप्यथायातःश्येनःपश्यन्सदम्पती । अपरिच्छन्नयाद्दृष्ट्यायथामृत्युर्गतायुषम्
अथमण्डलगत्यास प्रासादम्परितो भ्रमन् । प्रोवाचप्रेयसीनाथद्दृष्टोदुष्टस्त्वयाऽहितः
तस्या वाक्यं समाकर्ण्य पुनः कलरवोऽब्रवीत् ।
किं करिष्यत्यसौ मुग्धे! मम व्योमविहारिणः ॥ ३० ॥
दुर्गश्च स्वर्गतुल्यं मे यत्र नास्त्यरितो भयम् ।
अयं न तां गतिं वेत्ति यां वेदाहं नभोङ्गणे ॥ ३१ ॥
प्रडीनोड्डीनसण्डीनकाण्डव्याण्डकपाटिका ।
स्रंसिनी मण्डलवती गतयोऽष्टावुदाहृताः ॥ ३२ ॥
यथैतासुहिकौशल्यं मयि वर्त्तति च प्रिये । गतिषुक्कापिकस्यापिपक्षिणोनतथाम्बरे
सुखेन तिष्ठ का चिन्ता मयि जीवति ते प्रिये !॥ ३३ ॥
इति तद्वचनं श्रुत्वा आस्थिता मूकवत्सती । अपरेद्युरपि श्येनस्तत्रायातः शिलातले
कियदन्तरमासाद्यउपविष्टोऽतिहृष्टवत् । आयामान्तेचसस्थित्वातत्कुलायकुलस्यच
पुनः श्येनो विनिर्यातः सापि कान्ताऽब्रवीत्पुनः ।
प्रिय! स्थानमिदं त्याज्यं दुष्टदृष्टिविदूषितम् ॥ ३६ ॥
असौ क्रूरोऽतिनिकटमुपविष्टोऽतिहृष्टवत् ।
सावज्ञं स पुनःप्राह किं करिष्यत्यसौ प्रिये !॥ ३७ ॥
मृगाक्षीणां स्वभावोऽयं प्रायशोभीरुवृत्तयः । इतरेद्युरपि प्राप्तः सच श्येनोमहाबलः
तयोरभिमुखंतत्र स्थितो यामद्वयावधि । पुनर्विलोक्यतंद्वन्द्वं शीघ्रं यातो यथागतम्

गतेऽथ शकुनौ तस्मिन्सा बभाषे विहङ्गमम् ।
नाथ! स्थानान्तरं यावो मृत्युर्वै निकटेऽन्वगात् ॥ ४० ॥
पुनर्दृष्टेप्रणष्टःस्यादावासश्चसुखंप्रिय!। प्रिययस्यास्तिपक्षस्यगतिःसर्वत्रसिद्धिदा
स किं स्वदेशरागेण नाशं प्राप्नोति बुद्धिमान् ।
सोपसर्गं निजं देशं त्यक्त्वा योऽन्यं तु न व्रजेत् ॥ ४२ ॥
स पङ्गुर्नाशमाप्नोति कूलस्थित इवद्रुमः । प्रियोदितं निशम्येतिसभचित्रीदशार्दितः
तां वाक्यं पुनरप्याह प्रिये माभैःखगार्दिता । अपरस्मिन्नहनिच स श्येनः प्रातरेवहि
तद्द्वारदेशमासाद्य सायंयावत्स्थितोऽचलः ।
अस्ताचलस्य शिखरं याते भानौ गते खगे ॥ ४५ ॥
कुलायाद्व बाह्यमागत्योवाच पारावती पतिम् ।
नाथ! निर्गमनस्यायं कालः कालोऽस्ति दूरतः ॥ ४६ ॥
यावत्तावद्विनिर्याहि त्यक्त्वा मामपि शंसिनीम ।
त्वयि जीवति दुष्प्राप्यं न किञ्चिज्जगतीतले ॥ ४७ ॥
पुनर्दाराः पुनः पुत्राः पुनर्वसु पुनर्गृहम् । यद्यात्मा रक्षितः पुंसां दारैरपि धनैरपि
तदा सर्वंहरिश्चन्द्रभूपतेरिव लभ्यते । अयमात्माप्रियोबन्धुरयमात्मा महद्धनम् ॥
धर्मार्थकाममोक्षाणामयमात्मार्जकः परः । यावदात्मनि वै क्षेमं तावत्क्षेमं जगत्त्रये
सोऽपिक्षेमः सुगतिना यशसा सहवाञ्छ्यते । यशोहीनं तुयत्क्षेमंतक्षेमान्निधनंवरम्
तद्यशः प्राप्यतेपुम्भिर्नीतिमार्गप्रवर्तिभिः । अतोनीतिपथंचिन्त्यंनाथस्थानादितोव्रज
न व्रजिष्यसि चेत्प्रातस्ततो मां संस्मरिष्यसि ॥ ५२ ॥
इत्युक्तोऽपिसवै पत्न्यापारावत्यासुमेधया । ननिर्ययौततःस्थानाद्भवित्र्याप्रतिवारतः
अथोषसि समागत्य श्येनेन बलिना तदा । निर्गमद्वारमारुद्धं किञ्चिल्लक्ष्यवता तदा
दिनानि कतिचित्तत्रातिष्ठच्छ्येनोमहाबलः । पारावतमुवाचेदंधिक्त्वांपौरुषवर्जितम्
किं वा युध्यस्व दुर्बुद्धे! किं वा निर्याहि मे गिरा ।
क्षुधाक्षीणो मृतः पश्चान्निरयं पश्यसि ध्रुवम् ।

विधिरेव हि साहाय्यं न कुर्यात्तव नोदितम् ॥ ५६ ॥
इत्थंश्येनेन स प्रोक्तः पत्न्या ससहितःखगः । अयुध्यत्तेनश्येनेनस्वदुर्गद्वारमाश्रितः
क्षुधितस्तृषितः सोऽथ श्येनेनबलिना धृतः । चरणेनदृढेनाशु चञ्च्वासापिधृताखगी
तावादायोड्डुयाञ्चक्रे श्येनो व्योमनि सत्वरम् ।
चिन्तयन्भक्षणस्थानमन्यत्पक्षिविवर्जितम् ॥ ५६ ॥
अथपत्न्याकलरवः प्रोक्तस्तत्र सुमेधया । यतोऽवमानितानाथत्वयाहंस्त्रीतिबुद्धितः
अतोऽवस्थामिमां प्राप्तः किं कुर्यामबलायतः । अधुनापिवचश्चेत्कंकरोषियदिमेप्रिय
तदा हितं तेवक्ष्यामिकुर्वेतदविचारितम् । ममैकवाक्यकरणात्स्त्रीजितोनभविष्यसि
यावदास्यं गतास्म्यस्य यावत्खस्थो न भूमिगः ।
तावदात्मविमुक्त्यै त्वं चञ्च्वा पादं दृढं दश ॥ ६३ ॥
इतिपत्नीवचःश्रुत्वा तथा स गतवान्खगः । स पीडितोदृढंपादे श्येनश्चीत्कृतवान्बहु
तेन चीत्करणेनाथ मुक्ता सा मुखसम्पुटात् ।
पादाङ्गुलीनां शून्यत्वे सोऽपि पारावतोऽपतत् ॥ ६५ ॥
विपद्यपिचप्राज्ञैर्न सन्त्याज्यः क्वचिदुद्यमः । क्वचञ्चुपुटस्तस्यक्वचतत्पादपीडनम्
क्व च द्वयोस्तथाभूतं दूरेमोक्षणमद्भुतम् । दुर्बलेऽप्युद्यमःश्रेयानितिशास्त्रेषु गीयते
तस्माद्भाग्यानुसारेण फलत्येव सदोद्यमः । प्रशंसन्त्युद्यमंचातो विपद्यपिमनीषिणः
अथ तौ कालयोगेन जम्बूमार्गे मृतौ तदा । जम्बूमार्गे मृतायेवैतेषांस्वर्गःसदाऽक्षयः
पुण्यशेषे तदा जातो गन्धर्वतनयः शुभः । मन्दारदामतनयो नाम्ना परिमलालयः ॥
अनेकविद्यानिलयः कलाकौशलभाजनम् । कौमारं वपुरासाद्य शिवभक्तिपरोऽभवत्
नियमं चापिजग्राहविजितेन्द्रियमानसः । एकपत्नीव्रतंनित्यंचरिष्यामीतिनिश्चितम्
परयोषित्समासक्तिरायुः कीर्तिर्बलं सुखम् ।
हरेत्स्वर्गगतिं चापि तस्मात्तां वर्जयेत्सुधीः ॥ ७२ ॥
अपरंचापिनियमं सशुचिष्मान्समाददे । गतजन्मांतराभ्यासात्त्रिलोचनसमाश्रयात्
समस्तपुण्यनिलयः समस्तार्थप्रकाशकः । समस्तकामजनकं परानन्दैककारणम्

यावच्छरीरं निरुजं यावन्नेन्द्रियविप्लवः ।
तावत्त्रिलोचनोऽवन्त्यां मन्तव्यो नात्र संशयः ॥ ७६ ॥

इत्थं मन्दारदामिःसकाश्यांपरिमलालयः । नित्यंत्रिविष्टपंद्रष्टुं समागच्छेत्प्रयत्नतः
पाराधत्यपि सञ्जाता रत्नदीपस्य मन्दिरे । नागराजस्यपाताले नाम्ना रत्नावलीति च
समस्तनागकन्यानां रूपशीलकलागुणैः । एकैव रत्नभूताऽऽसीद्रत्नदीपोरगात्मजा
तस्याःसखीद्वयंचासीदेकानाम्ना प्रभावती । कलावतीतथान्याच नित्यंतदनुगे शुभे
स्वदेहादनपायिन्यौ छायाकान्तीयथातथा । पूर्वं सख्यौभवेतांहिरत्नावल्यामहेश्वरि
सा तु बाल्येऽव्यतिक्रान्तेकिञ्चिदुद्भिन्नयौवना । शिवभक्तंस्वपितरंदृष्ट्वानियममग्रहीत्

पितस्त्रिलोचनं काश्यामर्चयित्वा दिने दिने ।
आभ्यां सखीभ्यां सहिता मौनं त्यक्ष्यामि नान्यथा ॥ ८३ ॥

एवं नागकुमारीसा सखीद्वयसमन्विता । त्रिलोचनं समभ्यर्च्य गृहानहरहर्व्रजत् ॥

मां प्रत्यग्रैः सकुसुमैः सुशुभैरिष्टगन्धिभिः ।
सुविचित्राणि माल्यानि परिगुम्फ्याऽर्चयेद्विभुम् ॥ ८५ ॥
तिस्रोऽपि गीतं गायन्ति ललितं चैव सुस्वरम् ।
नारीमण्डलभेदेन लास्यं तिस्रोऽपि कुर्वते ॥ ८६ ॥
वीणावेणुमृदङ्गांश्च लयतालविचक्षणाः ।
वादयन्ति मुदा युक्तास्तिस्रोऽपि विरमन्ति वै ॥ ८७ ॥

इत्थमाराधयन्तीशंतिस्रोनागकुमारिकाः। विचित्रभङ्गीमालाभिरर्चयन्त्यस्त्रिलोचनम्

प्रातश्चतुर्थ्यां ताः स्नात्वा तीर्थे पिलिपिले शुभे ।
त्रिलोचनं समभ्यर्च्याथ प्रसुप्ता रङ्गमण्डपे ॥ ८९ ॥

सुप्तासुतासु स शिवस्त्रिनेत्रःशशिभूषणः । वामार्द्धविलसच्छक्तिर्नागयज्ञोपवीतकः
लिङ्गादेव हि निर्गत्य गङ्गापन्नगमेखलः । प्रत्युवाच ततः कन्या विभुरुत्तिष्ठतेतिसः
उत्थायता विनिर्मथ्य लोचने श्रुतिसङ्गमे । अङ्गमोटनवत्यश्च तदानिर्घूर्णितेक्षणाः
यावत्पश्यन्ति पुरतःसम्भ्रमापन्नमानसाः । अतर्कितागमस्तावत्ताभिर्दृष्टस्त्रिलोचनः

ववन्दिरेऽथ ता बाला ज्ञात्वा लक्ष्मभिरीश्वरम् ।
तुष्टुवुश्च प्रहृष्टास्ताः सन्नकण्ठ्योऽतिविक्लवम् ॥ ९४ ॥
जयशम्भो जयेशान जयसर्वग सर्वद । जय त्रिपुरसंहर्तर्जयान्धकनिषूदन ॥ ९५ ॥
जय जालन्धरहर! जयकन्दर्पदर्पहृत् । जय त्रैलोक्यजनक जय त्रैलोक्यवन्दित !॥
जय भक्तजनाधीश जय प्रमथनायक !॥ ९६ ॥
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ।
त्रिलोचन! नमस्तुभ्यं त्रिविष्टप! नमोऽस्तु ते ॥ ९७ ॥
इत्युक्त्वा दण्डवद्भूमौ प्रणिपेतुःकुमारिकाः ।
अथोत्थाप्य कुमारीस्ताः प्रोवाच शशिभूषणः ॥ ९८ ॥
सुतो मन्दारदाम्नश्च नाम्ना परिमलालयः । पतिर्विद्याधरवरो भवतीनां भविष्यति
चिरं विद्याधरे लोके भोगान्भुक्त्वा समन्ततः ।
ततो ह्यवन्तिकां प्राप्य मां ध्यात्वा सिद्धिमाप्स्यथ ॥ १००
जन्मान्तरेऽपिमे भक्तिर्भवतीभिश्चतेन च । विहितातेनवोजन्मनिर्मलम्भक्तिभावितम्
एतत्प्रभावतीस्तोत्रंयेपठिष्यन्तिमे पुरः । तेभ्यःकामान्प्रदास्यामि भवतीनामयंवरः
इत्युक्तवतिदेवेशे ताः कन्या हृष्टमानसाः । प्रणम्यप्रोचुरीशानं प्रबद्धकरसम्पुटाः ॥

नागकन्या ऊचुः

पृच्छामो ब्रूहि नो नाथ करुणाकर शङ्कर !। जन्मान्तरे कथं सेवा चतुर्भिर्भवतः कृता
ततः प्राक्तनवृत्तान्तमेतस्यापिकृतात्मनः । अस्माकमपिचाख्याहि कृपांकुरुकृपानिधे!
इतिश्रुत्वाप्रणयतोबालोदीरितमीप्सितम् । प्रोवाचतासामपिचभवान्तरविचेष्टितम्

ईश्वर उवाच

शृणुध्वं नागतनयास्तिस्रोऽपि हि समाहिताः ।
प्राग्भवं भवतीनाञ्चतस्यापिकथयाम्यहम् ॥ १०७ ॥
एषारत्नावलीपूर्वमासीत्पारावती खगी । स च विद्याधरवरःपतिरस्याःखगोऽभवत्
प्रासादे च ममैताभ्यामुषितं सुचिरं सुखम् ।

रजः प्रासादसँल्लग्नं तुन्नं पक्षानिलैः पुनः ॥ १०६ ॥

उपरिष्टादधस्ताच्चकृताभूरिप्रदक्षिणाः । व्योम्नि सञ्चरमाणाभ्यांसञ्चीर्णंचममाजिरे

स्नातं चतुर्नदे तीर्थे पीतं तत्राम्बुचासकृत् । आभ्यांकलरवाभ्याञ्च कृताःकलरवामुदा

एताभ्यां।स्थिरचित्ताभ्यां मुदिता त्वमतीव हि ।

दृष्ट्वा हि कौतुकान्यत्र मम भक्तैः कृतान्यपि ॥ ११२ ॥

अमूभ्यांबहुशो दृष्टा मम मङ्गलदीपिकाः । पीतंश्रुतिपुटाभ्याञ्च मम नामाक्षरामृतम्

तिर्यग्योनिप्रभावेण न मृतौ मम सन्निधौ ॥ ११३ ॥

जम्बूमार्गे मृतौ यस्मात्स्वर्गप्राप्तिकरे ध्रुवम् ।

तस्मात्पारावती ह्येषा रत्नदीपसुताऽभवत् ॥ ११४ ॥

पतिःपारावतोऽस्याश्चजातो विद्याधराङ्गजः । एषाप्रभावतीनागीनागराजस्यसद्मनि

इह जन्मनि कन्यासीत्पूर्वजन्म ब्रवीमि च ॥ ११५ ॥

त्रिशिखस्योरगेन्द्रस्यसुताचेयंकलावती । एतस्याअपिवृत्तान्तंनिशामयतुवच्म्यहम्

भवान्तरेतृतीयेऽतःकन्येचारायणस्यच । आस्तांमहर्षेः शीलाढ्ये प्रेमवत्यौपरस्परम्

पित्रा चारायणेनापि ताभ्यां सम्प्रेरितेन वै ।

आमुष्यायणपुत्राय दत्ते नारायणाय हि ॥ ११८ ॥

अप्राप्तयौवनोऽरण्ये समिदाहरणाय वै । गतो विधिवशाद्दष्टो दन्दशूकेन कानने ॥

भवानीगौतमीनाम्न्यौ ते तु चारायणाङ्गजे । वैधव्यदुःखमापन्ने दैन्यग्रस्ते बभूवतुः

अत एव प्रयत्नेन परिणेता विवर्जयेत् ।।देवतासरिदाह्वान कन्यापाणिग्रहं सुधीः ॥

अथर्षेः कस्यचिद्दैवादाश्रमे देवसन्निभे । रम्भाफलान्यदत्तानि मोहाज्जग्रहतुस्तदा ॥

कृत्वा नानोपवासादिव्रतानि ब्राह्मणाङ्गजे ।

अध्यास्य निधनं कालाच्छाखामृग्यौ बभूवतुः ॥ १२३ ॥

फलचौर्यविपाकेन वानरत्वं तयोरभूत् । शीलरक्षणभावेनावन्त्यां जनिमवापतुः ॥

स च नारायणोविप्रः पितृशुश्रूषणे रतः । दष्टोऽपिदन्दशूकेन काश्यांपारावतोऽभवत्

एवं भवान्तरे चासीदेतयोःपतिरेव सः । तिसृणांभवतीनां च भावी भर्ता पुनःसवै

प्रासादस्यापि पार्श्वे तु न्यग्रोधश्च महानगः ।
तस्मिञ्छाखिनि वासाढ्ये शाखामृग्यौ बभूवतुः ॥ १२७ ॥
विष्णुदेहजले तीर्थे क्रीडया च ममज्जतुः । पपतुश्चापिपानीयं तस्मिंस्तीर्थेतृषातुरे
जातिस्वभावचापल्यात्क्रीडन्त्यौ च प्रदक्षिणम् ।
चक्रतुर्बहुकृत्वश्च लिङ्गं ददृशतुर्बहु ॥ १२६ ॥
विचरन्त्यावितः स्वैरं तत्र न्यग्रोधसन्निधौ । केनचिद्योगवेषेण पाशेनचनियन्त्रिते
भिक्षार्थं शिक्षिते तेन न प्लुतिर्ननिवर्त्तनम् । अथ ते क्वापिमर्कट्यौ कालधर्मवशंगते
अवन्तीवासपुण्येन त्रिलोचनस्य सेवया । प्रादक्षिण्यानुरूपेण जाते नागसुते अपि
अधुना तं पतिम्प्राप्य विद्याधरकुमारकम् ।
निर्विश्य स्वर्गभोगांश्चावन्त्यां निर्वृतिमाप्स्यथ ॥ १३३ ॥
यैरल्पमपि चावन्त्यां कृतं कर्म शुभाशुभम् ।
तस्य मोक्षः परीपाको निश्चितं मदनुग्रहात् ।
त्रैलोक्येऽपि च सर्वस्मिञ्छ्रेष्ठाऽवन्तीपुरी सदा ॥ १३४ ॥
ततोऽपि लिङ्गमोङ्कारं ततोऽप्यत्र त्रिलोचनम् ।
तिष्ठमानोऽत्र लिङ्गेऽहं भुक्ति मुक्ति ददामि वै ॥ १३५ ॥
अतःसर्वप्रयत्नेनावन्त्यांपूज्यस्त्रिलोचनः । इत्युक्त्वादेवदेवेशस्तत्प्रासादान्तरेऽविशत्
लिङ्गस्वरूपमासाद्य शुभं त्रिभुवनादपि । ताश्चस्वसदनं प्राप्यतद्वृत्तान्तमशेषतः ॥
स्वमातुः पुरतश्चोक्त्वा कृतकृत्या इवाऽभवन् ॥ १३७ ॥
एकदा माधवेमासि सहसार्थाः समागताः ।
विद्याधरास्तथा नागा मिलिताः सपरिच्छदाः ॥ १३८ ॥
विरजस्के महाक्षेत्रे त्रिलोचनसमीपतः । देवस्यवरदानाच्चपृष्ट्वाऽन्योन्यं कुलावलिम्
विद्याधरायताः कन्या नागैस्तिस्रोऽपि कल्पिताः ।
मन्दारदामा सन्तुष्टः प्राप्य तच्च स्नुषात्रयम् ॥ १४० ॥
रत्नदीपैश्चनागेन्द्रःपद्मी च भुजगेश्वरः । विशिखोऽपिफणीन्द्रश्च दृष्ट्वा एतेत्रयोऽपिच

जामातरं समासाद्य शुभं परिमलालयम् ।। १४१ ॥
अन्योऽन्यं स्वजनास्ते तु मुदा विकसितेक्षणाः ।
विवाहोत्सवमारच्य स्वं स्वं भवनमाविशन् ॥ १४२ ॥
त्रिलोचनस्य लिङ्गस्य वर्णयन्तोऽपि गौरवम् ।
स च विद्याधरः श्रीमान्नागीभिर्विपुलं सुखम् ॥
भुक्त्वाऽवन्तीं ततः प्राप्य संसेव्य च त्रिलोचनम् ॥ १४३ ॥
गायन्गीतंसुमधुरंनागीभिः सहितःकृती । आत्मानंचातिविस्मृत्यमध्येलिङ्गंलयंगतः
त्रिलोचनस्य महिमा कलौ देवेनगोपितः । ततोऽल्पसत्त्वा मनुजान तल्लिङ्गमुपासते
त्रिलोचनकथामेतां श्रुत्वा पापान्वितोऽप्यहो ।
विपापो जायते मर्त्यो लभते च परां गतिम् ॥ १४६ ॥
एष ते कथितो देवि! प्रभावःपापनाशनः । त्रिलोचनस्य देवस्य शृणु वीरेश्वरंपरम्

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्ये त्रिलोचनमाहात्म्यवर्णनंनाम
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

## षट्चत्वारिंशोऽध्यायः

### वीरेश्वरमाहात्म्यवर्णनम्

श्रीहर उवाच

षट्चत्वारिंशकं देवि! वीरेश्वरमथो शृणु । यस्य दर्शनमात्रेणकुलवृद्धिर्भवेद्ध्रुवम् ॥
निशामय महा देवि! वीरेशाविर्भवं परम् । यच्छ्रुत्वा पितरःपुण्यंप्राप्नुयुर्विपुलं शिवे!
आसीदमित्रजिन्नाम राजा परपुरंजयः । धार्मिकः सत्त्वसम्पन्नः प्रजारञ्जनतत्परः ॥२
यशोधनो वदान्यश्च सुधीर्ब्राह्मणदैवतः । सदैवावभृथस्नातः परिक्लिन्नशिरोरुहः ॥

विनीतो नीतिसम्पन्नः कुशलः सर्वकर्मसु। विद्याविशारदश्चाथ गुणवान्गुणिवत्सलः

कृतज्ञो मधुरालापः पापकर्मपराङ्मुखः।
सत्यशौचनिलयः सत्यवाग्विजितेन्द्रियः ॥ ६॥
रणांगणे कृतान्तस्य सङ्ख्यावांश्च सदोजिरे।
कामिनीकेलिकालज्ञो युवाऽपि स्थविरप्रियः ॥ ७ ॥

धर्मार्थधनकोशश्च समृद्धबलवाहनः। सुभगश्च सुरूपश्च सुमेधाः सुप्रजाप्रियः ॥ ८ ॥
स्थैर्यधैर्यसमापन्नो देशकालविचक्षणः। मान्यानां मानदो नित्यंसर्वदूषणवर्जितः॥

वासुदेवाङ्घ्रियुगले चेतोवृत्तिं निधाय च।
चकार राज्यं निर्द्वन्द्वं धिग्धिगीतिविवर्जितम् ॥ १० ॥
अलङ्घ्यशासनः श्रीमान्विष्णुभक्तिपरायणः।
अभुनक्प्रवरान्भोगान्समन्ताद्विष्णुसंस्कृतान् ॥ ११ ॥

हरेराराधनान्युच्चैः प्रतिसौधं पदेपदे। तस्य राज्ये समभवन्महाभागनिधेः शिवे !
गोवृन्दगोपगोपालगोपीजनमनोहर !। गदापाणे ! गुणातीत! गुणाढ्य! गरुडध्वज!

केशिहन्कैटभाराते! कंसारे! कमलापते !॥ १४ ॥

कृष्ण केशव! कञ्जाक्ष! कीनाशभयनाशन !। पुरुषोत्तम पापारे पुण्डरीकविलोचन !॥
पीतकौशेयवसन! पद्मनाभ! परात्पर !। जनार्द्दन! जगन्नाथ! जाह्नवीजलजन्मभूः॥
जन्मिनां जन्महरण! जंजपूकौघनाशन !। श्रीवत्सवक्षः!श्रीकण्ठ!श्रीकरश्रेयसांनिधे!
श्रीरङ्गशाङ्गकोदण्ड! शौरेशीतांशुलोचन !। दैत्यारे! दानवाराते!दामोदर! दुरन्तक!
देवकीहृदयानन्द! दन्दशूकेश्वरेशय। विष्णो ! वैकुण्ठनिलय! बाणारे !विष्टरश्रवः!

विष्वक्सेन! विभो! वीर! वनमालिन्वलिप्रिय !।
त्रिविक्रम! त्रिलोकेश! चक्रपाणे! चतुर्भुज !॥ २० ॥

इत्यादीनि पवित्राणि नामानि प्रतिमन्दिरे। स्त्रीवृद्धबालगोपालवदनोदीरितानितु
श्रूयन्ते यत्र कुत्रापि रम्याणिमधुविद्विषः। सुरम्यकाननान्येवविलोक्यन्ते गृहे गृहे

विचित्राणि चरित्राणि गीयते च गृहे गृहे।

सौधभित्तिषु दृश्यन्ते चित्राणि कृत्रिमाणि च ॥ २३ ॥

ऋतेहरिकथायास्तु नान्यावार्त्तानिशम्यते । हरिणानैववध्यन्ते हरिणामांसधारिणः

तस्यराज्ञो भयाद्व्याघ्रैररण्ये सुखचारिणः । नमत्स्यानैव च बकावराहाश्चनकेनचित्

हन्यन्ते क्वापि तद्भीत्या मत्स्यमांसाशिनाऽपि वै ।

अपुत्रा न नरास्तस्य राष्ट्रेऽमित्रजितः क्वचित् ॥ २६ ॥

स्तनपानं न कुर्वन्ति संप्राप्य हरिवासरम् । पशवोऽपि तृणाहारं परित्यज्य हरेर्दिने

उपोषणपरा जाता अन्येषां का कथा नृणाम् ॥ २७ ॥

महामहोत्सवः सर्वैः पुरौकोभिर्वितन्यते । तस्मिन्प्रशासति भुवंसंप्राप्ते हरिवासरे

यो विष्णुभक्तिरहितः प्राणैरपि धनैरपि ।

सएवदण्ड्यो भुङ्क्ते यो राज्ञोऽमित्रजितः क्षितौ ॥ २६ ॥

अन्त्यजा अपि तद्राष्ट्रे शङ्खचक्राङ्कधारिणः ।

सम्प्राप्य वैष्णवीं दीक्षां दीक्षिता इति संस्थिताः ॥ ३० ॥

शुभानि यानि कर्माणिक्रियन्तेऽनुदिनंजनैः । वासुदेवेसमर्प्यन्तेतानितैरफलेप्सुभिः

विनामुकुन्दगोविन्दपरमानन्दमच्युतम । नान्योजप्येत नम्येतसभाज्येतजनःक्वचित्

कृष्ण एव परो बन्धुस्तस्यासीदवनीपतेः ॥ ३२ ॥

एवंतस्मिन्महीपालेराज्येसम्यक्प्रशासति । एकदानारदःश्रीमांस्तंदिदृक्षुःसमाययौ

राज्ञा समर्चितः सोऽथ मधुपर्कविधानतः । नारदो वर्णयामास तममित्रजितं नृपम्॥

श्रीनारद उवाच

धन्योऽसि कृतकृत्योऽसि मान्योऽप्यसि दिवौकसाम् ।

सर्वभूतेषु गोविन्दं परिपश्यन्विशाम्पते !॥ ३५ ॥

यो वेदपुरुषोविष्णुर्योयज्ञपुरुषोहरिः । योऽन्तरात्मास्यजगतःकर्त्ताहर्ताऽविताविभुः

तन्मयं पश्यतो विश्वं तव भूपालसत्तम । दर्शनं प्राप्य शुभदं शुचित्वमगमं परम् ॥

एष एव हि सारोऽत्र संसारे क्षणभङ्गुरे । कमलाकान्तपादाब्जभक्तिभावोऽखिलप्रदः

परित्यज्य हि यः सर्वं विष्णुमेकं सदा भजेत् ।

सुमेधसं भजन्ते तं पदार्थाः सर्व एव हि ॥ ३९ ॥
हृषीकेशोहृषीकाणियस्यस्थैर्यंगतान्यहो । सएवस्थैर्यमाप्नोति ब्रह्माण्डेऽतीवचञ्चले
यौवनं धनमायुष्यं जलं पद्मदले यथा । अतीव चञ्चलं ज्ञात्वाऽच्युतमेव सदाश्रयेत्
वाचि चेतसि कर्णेऽथ यस्य देवो जनार्दनः ।
स एव सर्वदा वन्द्यो नररूपी जनार्दनः ।
निर्व्याजप्रणिधानेन शीलयित्वा श्रियः पतिम् ॥ ४२ ॥
पुरुषोत्तमतां को नप्राप्तस्त्वमिवभूतले । अनयाविष्णुभक्त्यातेसन्तुष्टेन्द्रियमानसः
उपकर्तुमना ब्रूयां तन्निशामय भूपते !॥ ४३ ॥
मालाविद्याधरसुता नाम्ना मलयगन्धिनी । क्रीडन्ती पितुराक्रोडेहृताकङ्कालकेतुना
कपालकेतुपुत्रेण दानवेन वलीयसा । आगामिन्यांतृतीयायां तस्याःपाणिग्रहःकिल
पाताले चम्पकावत्यां नगर्यां सास्ति साम्प्रतम् ।
हाटकेशात्समागच्छंस्तयाऽहं साश्रुनेत्रया ॥ ४६ ॥
दृष्टः प्रणम्य विज्ञप्तो यथा तच्च निशामय । ब्रह्मचारिन्मुनिश्रेष्ठ! गन्धमादनशैलतः ॥
वालक्रीडनकासक्तां मां जह्रे त्रस्तमानसाम् ।
कङ्कालकेतुर्दुर्वृत्तस्तस्य नास्ति च घातकः ॥ ४८ ॥
स स्वत्रिशूलघातेन म्रियते नान्यथा रणे । जगत्पर्याकुलीकृत्य निद्रात्यथविनिर्भयः
यदि कोपि कृतज्ञो मां हत्वेमं दुष्टदानवम् । मद्दत्तेन त्रिशूलेन नयेद्भद्रं च वै कृतम् ॥
यद्यत्रोपचिकीर्षुस्त्वं रक्ष मां दुष्टदानवात् । ममापि हिवरोदत्तोभगवत्योमयापुरा
विष्णुभक्तो युवा धीमान्पुत्रि! त्वां परिणेष्यति ॥ ५१ ॥
आतृतीयातिथि यथा तद्वाक्यं तथ्यतां व्रजेत् ।
तथा निमित्तमात्रं त्वं भव यत्नं समाचर ॥ ५२ ॥
इति तद्वचनाद्राजन्विष्णुभक्तिपरायणम् । युवानं चापि धीमन्तंत्वामनुप्राप्तवानहम्
तद्गच्छ कार्यसिद्ध्यै त्वं हत्वा तं दुष्टदानवम् ।
आनयाऽऽशु महावाहो! शुभां मलयगन्धिनीम् ॥ ५४ ॥

सातुविद्याधरीबालाविलोक्यत्वांनरेश्वरं ।अवश्यमेवतच्छूलंदास्यतीतिविनिश्चितम्

पार्वतीवचनाद् दुष्टं घातयिष्यस्यसंशयम् ॥ ५५ ॥

इतिनारदवाक्यंसनिशम्यामित्रजिन्नृपः । अनल्पोत्कलिकोजातोविद्याधरसुतांप्रति

उपायं चापि पप्रच्छ गन्तुं वै चम्पकावतीम् ॥ ५६ ॥

नारदेन पुनः प्रोक्तः स राजा गिरिराजजे !। तूर्णमर्णवमासाद्य पूर्णिमादिवसे नृप !॥

भवान्द्रक्ष्यति पोतस्थकल्पवृक्षरथास्थिताम् ।

तत्र दिव्याङ्गनां काञ्चिद्दिव्यपर्यङ्कसुस्थिताम् ।

वीणामादाय गायन्तीं गाथामत्यन्तसुस्वरम् ॥ ५८ ॥

यत्कर्म विहितं येनशुभंवाप्यथवाऽशुभम् । सएवभुङ्क्तेतत्तथ्यंविधिस्तत्रनियन्त्रितः

गाथामिमां तु सङ्गीय सरथा समहीरुहा । सपर्यङ्काक्षणादेवमध्येसिन्धुं प्रवेक्ष्यति

भवानप्यविशङ्कं च ततः पोतान्महार्णवे । तमनुव्रजतु क्षिप्रं यज्ञवाराहसात्मवान् ॥

ततो द्रक्ष्यसि पाताले नगरीं चम्पकावतीम् । महामनोहरांराजन्सनाथांबालयातया

इत्युक्त्वान्तर्हितो देवि स चतुर्मुखनन्दनः । राजाप्यर्णवमासाद्ययथोक्तंपरिलक्ष्य च

विवेशान्तःसमुद्रं चनगरीमाससाद ताम् । सापिविद्याधरीबालानेत्रयोःप्राघुणीकृता

तेन राज्ञा त्रिजगतीसौन्दर्यश्रीरिवैकिका । पाताले देवतेयं वाममनेत्रोत्सवायकिम्

निरमायिममोद्देशात्स्रष्टृसृष्टिर्विलक्षणा । कुहूराहुभयद्वेषात्कान्तिश्चान्द्रमसीकिमु

योविद्रूपंसमाश्रित्यतिष्ठत्यत्राकुतोभया ।इत्थंक्षणंचनिर्वर्ण्यसराजाऽगच्छदन्तिकम्

सा विलोक्याथ तं बालं नितरां मधुराकृतिम् ।

विशालोरःस्थलतलप्रलम्बतुलसीस्रजम् ॥ ६८ ॥

शङ्खचक्राङ्कसुभगभुजद्वयविराजितम् । हरिनामाक्षरसुधासुधौतरदनावलिम् ॥

भवानीभक्तिबीजोत्थभूरुहं पुरुषाकृतिम् । अनेनात्र कृतं कस्य भवनं मधुराकृति ॥

इति पर्याकुलीकृत्य चक्षुषीच मुहुर्मुहुः । कङ्कालकेतुदुर्वृत्तस्त्ववध्यः परहेतिभिः

तावद्गुप्तं समातिष्ठ शस्त्रागारेऽत्र गह्वरे ।

न मे कन्याव्रतं भग्नं सामर्थ्याच्चण्डिकावरात् ॥ ७२ ॥

आगामिन्यां तृतीयायां परश्वः पाणिपीडनम् ।
स चिकीर्षति दुष्टात्मा गतायुर्मम शापतः ॥ ७३ ॥
मा तद्भीतिं कुरु युवंस्त्वत्कार्यं भविताऽचिरात् ।
विद्याधर्येति चोक्तः स शस्त्रागारे निगूढवत् ॥ ७४ ॥
स्थिरो वीरो महाबाहुर्दानवागमनेक्षणः ॥ ७५ ॥

अथसायं समायातोदानवोभीषणाकृतिः । त्रिशूलं कलयन्पाणौमृत्योरपिभयावहम्
आगत्य दानवो रौद्रः प्रलयाम्बुदनिस्वनः । विद्याधरीं जगादेति मदाघूर्णितलोचनः
गृहाणेमानि रत्नानिदिव्यानिवरवर्णिनि । कन्यात्वंहिपरश्वस्तेपाणिग्राहोभविष्यति
दासीनामयुतं प्रातर्दास्यामि तवसुन्दरि !। आसुरीणांसुरीणांच दानवीनांमनोहरम्

गन्धर्वीणां किन्नरीणां सततंपरिचारिकाः ।
विद्याधरीणां नागीनां यक्षीणां च शतानि षट् ॥ ८० ॥

राक्षसीनां शतान्यष्टौशतमप्सरसांवरम् । एतास्तेपरिचारिण्योभविष्यन्त्यमलाशये
यावत्सम्पत्तिसंभारो दिक्पालानां गृहेषुवै । मत्परिग्रहतां प्राप्तौतावतस्त्वंमहेश्वरी

दिव्यान्भोगान्मया सार्द्धं भोक्ष्यसे मत्परिग्रहात ।
कदा परश्वो भविता यस्मिन्वैवाहिको विधिः ॥ ८३ ॥

त्वदंगसंगसंस्पर्शसुखस्वादातिमेदुरः । परांनिर्वृतिमाप्स्यामि परश्वोनिकटं यदि
मनोरथाश्चिरं यावद्ये मेहृदि समेधिताः । तान्कृतार्थीकरिष्यामि परश्वस्तवसंगमात्

जित्वा देवान्रणे सर्वानिन्द्रादीन्मृगलोचने !।
त्रैलोक्यैश्वर्यसंपत्तेस्त्वां करिष्यामि चेश्वरीम् ॥ ८६ ॥

आधायाङ्केत्रिशूलं चसुष्वापेतिप्रलप्यसः । नरमांसस्यस्वादेनप्रमत्तोवीतसाध्वसः
वरंस्मरन्ती सागौर्या विद्याधरकुमारिका । विज्ञायतं प्रमत्तंचप्रसुप्तं चातिनिर्भयम्

आहूय तं नरवरं वरं सर्वाङ्गसुन्दरम् ॥ ८८ ॥

विष्णुभक्तिकृतत्राणं प्राणनाथेतिजल्प्यच । शूलंतदंकादादाय ददौ तस्मै च सुन्दरी
तमादायत्रिशूलंच स तदाऽमित्रजिन्नृपः । संस्मरंश्चक्रिणं चित्ते जगद्रक्षामणिंहरिम्

जगादोत्तिष्ठ रे दुष्ट कन्यादूषणलालस। युध्स्वच मया सार्द्धं न सुप्तं हन्म्यहं रिपुम्
इतिसंश्रुत्यसस्प्राप्तःकस्यदृष्टोऽद्यचान्तकः। कआयुषाद्यसंत्यक्तोयःप्राप्तोममगोचरम्
मम प्रचण्डदोर्दण्डकण्डूकण्डूयनक्षमः। माल्यो नरोऽयं भवितार्किंत्रिशूलेनसुन्दरि
मा भैर्मे कौतुकं पश्य भक्षोऽयं ममसांप्रतम्। कालेनमत्तोभीतेनस्वयमेवोपढौकितः

इत्युक्त्वा मुष्टिघातेन तेनोच्चैर्दण्डसूनुना।
हृदये निहतो राजा शिलातिकठिने द्रुतम्॥ ९५॥
स चक्रिणा कृतत्राणः पीडां नाल्पीयसीमपि।
विवेद कठिनोरस्कः करस्तस्य प्रपीडितः॥ ९६॥

अथ कोपवता राज्ञाहतो वक्त्रे चपेटया। आघूर्णितशिरा भूमौ पतित्वा पुनरुत्थितः

उवाच च वचोधैर्यमवष्टभ्य महाबली॥ ९७॥

दानव उवाच

ज्ञातं तत्त्वंमनुष्योऽसि नृरूपेणचतुर्भुजः। ततस्त्वंछिद्रमासाद्यहन्तुंमां दानवान्तक
एवंविधो हि मधुभिद्यदि त्वंबलवानसि। विहायैतन्महच्छलं युध्यस्वस्वायुधैर्मया
त्वया कपटरूपेण बलिना कैटभादयः। न बलेन हताः सङ्ख्येहता एव च्छलेन हि
बलिपातालमनयस्त्वं नृवामनतांदधत्। नृमृगत्वेन भवता हिरण्यकशिपुर्हतः॥१०१
तथा जटिलरूपेणलङ्केशोविनिपातितः। गोपालवेषमालम्ब्यकंसाद्याघातितास्त्वया

स्त्रीभूय चाहरस्त्वं हि विप्रतार्याऽसुरान् सुधाम्॥ १०२॥

यादोरूपेण भवता शंखाद्यानिहता इह। मायाविनात्वयाऽगण्याः सर्वमर्मज्ञ माधव
न त्वत्तोऽहं बिभेम्यद्य सद्यःपातः शरीरिणाम्। वरंतव श्रयेमृत्युं बलेनापिछलेनवा

न त्यक्ष्यसि त्रिशूलं त्वं न त्वां योत्स्याम्यहंरणे।
अवश्यमेव मर्त्तव्यं मया प्रातः शरीरिणा॥ १०५॥

इयंविद्याधधरीकन्यानमया दूषितासती। साक्षाच्छ्रीरिवमन्तव्यातथार्थंरक्षितामया
इत्युक्त्वा वामदोर्दण्डप्रहारेणापिनिष्ठुरम्। निजघानदनोःसूनुस्तं शिलोच्चयघातिना
नृपतिस्त्वथ संधार्य विषह्य रणमूर्द्धनि। जघानाशु तदा क्रूरं त्रिशूलेनाथ वक्षसि॥

तत्प्रहारान्महाबाहुः पञ्चत्वमगमत्क्षणात् । लक्ष्यीचकारतद्वक्त्रं त्रिशूलंतोलयन्करे
पश्यतोऽस्य महाबाहोः स च प्राणाञ्जहौ क्षणात् ।
इत्थं कङ्कालकेतुं स निहत्य सुरकम्पनम् ॥ ११० ॥
विद्याधरीं प्रपश्यन्तीं प्राह हृष्टतनूरुहः । नारदस्यमुनेर्वाक्यात्तव सुश्रोणिवाञ्छितम्
कृतं मया कृतज्ञे! किं करवाण्यधुनावद । श्रुत्वेतितस्यसा वाक्यंप्राह गम्भीरचेतसा

मलयगन्धिन्युवाच

अत्युदारमते वीरनिजप्राणैःपणीकृताम् । किमांपृच्छसियुवतींकुलकन्यामदूषिताम्
इति ब्रुवन्त्यां कन्यायां पुनः स्वैरचरोमुनिः ।
अतर्कितागमः प्राप्तो नारदो देवलोकतः ॥ ११४ ॥
ततस्तुष्टुवतुस्तौ तुतंदृष्ट्वा मुनिसत्तमम् । कृतप्रणामौ मुनिनाप्रतिज्ञाप्रापिताशिषौ
पाणिग्रहेण विधिनाऽभिषिक्तौ नारदेनतु । जग्मतुर्नारदादिष्टवर्त्मना कृतमङ्गलौ ॥
तया मलयगन्धिन्या वृतः सोऽमित्रजिन्नृपः ।
पुरीं चोज्जयिनीं प्राप्य पौरैर्विहितमङ्गलाम् ॥ ११७ ॥
तद्वीक्षणादपि नरोनारकींनैव जातुचित् । गतिंप्राप्नोतिमेधावी तां पुरीमविशन्नृपः
यस्यां पुर्यां प्रवेशं न लभन्ते वासवादयः । कैवल्यजयजैत्र्यां हि तांपुरीमविशन्नृपः
सापि विद्याधर्यवन्तीं समृद्धांवीक्ष्यदूरतः । निनिन्दस्वर्गलोकं च पातालनगरीमपि
प्राप्याऽमित्रजितं कान्तं तथा दृष्ट्वा न सा वधूः ।
यथा दृष्ट्वाऽप्यहोऽवन्तीं परमानन्ददायिनीम् ॥ १२१ ॥
सा कृतार्थामिवात्मानं मन्यमाना मनस्विनी ।
तेन पत्योज्जयिन्यां च परां निर्वृतिमाप सा ॥ १२२ ॥
सोऽप्यमित्रजिदासाद्यपत्नींमलयगन्धिनीम् । धर्मप्रधानंसंसेव्यकामंप्रापोत्तमंसुखम्
सा पतिं विष्णुभजने रतं प्रोवाच भामिनी ॥ १२४ ॥

राज्ञ्युवाच

भूपाऽभीष्टतृतीयायां चरिष्यामि महाव्रतम् ।

राजोवाच

देव्यभीष्टतृतीयायां व्रतं कीदृग्भवेद्वद ॥ १२५ ॥

इति राज्ञोदिता राज्ञी प्रवक्तुमुपचक्रमे । इतिकर्त्तव्यतां तस्य व्रतस्य सविधानकाम्

राज्ञ्युवाच

पुरा देवर्षिणा चेदंव्रतं लक्ष्म्यैप्रतिश्रुतम् । तयाप्राप्तास्तुसकलाःकामाःस्वर्गापवर्गदाः

मार्गशीर्षतृतायायां शुक्लायां कलशोपरि ।

ताम्रपात्रं निधायैव तन्दुलैः परिपूरितम् ॥ १२८ ॥

अच्छिद्रञ्च नवीनञ्च रजनीरागरञ्जितम् । वासःपात्रोपरिन्यस्यसूक्ष्मासूक्ष्मतरम्परम्

तस्योपरिशुभंपद्मं रविरश्मिप्रकाशितम् । तत्कर्णिकायाउपरिचतुःस्वर्णविनिर्मितम्

विधिं सम्पूजयेद्भक्त्या रक्तमाल्याम्बरादिभिः ॥ १३० ॥

पुष्पैःसुगन्धैः कर्पूरकस्तूर्यादिभिरर्चयेत् । रात्रौजागरणंकार्यं विप्राणांपरमोत्सवैः

होमःकार्यो महाभक्त्या सहस्रपरिसङ्ख्यया ।

नवप्रसूतां कपिलां दद्याच्च सुपयस्विनीम् ॥ १३२ ॥

दद्यादाचार्यवर्यायसालङ्कारांसदक्षिणाम् । उपोष्यदम्पतीभक्त्यानवाम्बरविभूषितौ

प्रातःस्नात्वा चतुर्थ्याञ्च सम्पूज्याचार्यमादितः ।

वस्त्रैराभरणैर्माल्यैर्दक्षिणाभिर्मुदान्वितः ॥

सोपस्करां च तां मूर्तिमाचार्याय प्रदापयेत् ॥ १३४ ॥

मन्त्रः

नमोविश्वविधानज्ञे!विघ्नेविविघ्नकारिणि !। सुतञ्चशङ्करंदेहितुष्टाह्यस्माद्व्रतोत्तमात्

सहस्रंभोजयित्वाथ द्विजानां भक्तिपूर्वकम् । भुक्तशेषेण चान्नेनकुर्याद्वै पारणंततः

इत्थमेतद्व्रतं नाथ! चिकीर्षामि त्वयाज्ञया । कुरुष्वैतत्प्रियं मह्यमभीष्टफललब्धये ॥

इति भूपालवर्येण श्रुत्वा संहृष्टचेतसा । तदा व्रतं समाचीर्णं सान्तर्वत्नीबभूव ह ॥

तयाऽथ प्रार्थिता गौरी गर्भिण्या भक्तितोषिता ।

पुत्रं देहि महामाये! साक्षाद्विष्णवंशसम्भवम् ॥ १३६ ॥

जातमात्रो व्रजेत्स्वर्गं पुनरायातिचात्र वै । भक्तः सदाशिवेऽत्यर्थं प्रसिद्धःसर्वभूतले
विनैव स्तन्यपानेन षोडशाब्दाकृतिः क्षणात् ॥ १४० ॥
एवम्भूतः सुतो गौरि! यथा स्यान्मे तथा कुरु ।
मृडान्यापि तथेत्युक्ता राज्ञीःभक्त्यातितुष्टया ॥ १४१ ॥
अथ कालेन तनयं मूलर्क्षेसाऽप्यजीजनत् । हितैरमात्यैरथ सा विज्ञप्तारिष्टसंस्थिता
देविराजार्थिनीत्वंतुत्यजदुष्टर्क्षजंसुतम् । सा मन्त्रिवाक्यमाकर्ण्य केवलम्पतिदेवता
अत्याक्षीत्तं तथाप्राप्तं तनयं नयकोविदा । धात्रिकां तु समाहूय प्राहेदं सा नृपाङ्गना
पञ्चमुद्रेमहापीठे विकटानाम मातृका । तदग्रे स्थापयित्वामुं बालं धात्रि!त्विदं वद
गौरि ! दत्तः शिशुरसौ तवाग्रे विनिवेदितः ।
राज्ञ्या पत्युः प्रियैषिण्या मन्त्रिविज्ञप्तिनुन्नया ॥ १४६ ॥
सापि राज्ञ्युदितं श्रुत्वा बालं शिशुशशिप्रभम् ।
विकटायाः पुरोभागे संस्थाप्य गृहमागता ॥ १४७ ॥
अथ सा विकटादेवीसमाहूय च योगिनीः । उवाच नियतक्षिप्रं शिशुं मातृगणाग्रतः
तासामाज्ञां चक्रुरुतःरक्षतामुंप्रयत्नतः । योगिन्योविकटावाक्यात्खेचर्यस्तत्क्षणेनतम्
निन्युर्गगनमात्रेण ब्राह्मन्याद्यायत्र मातरः । प्रणम्य योगिनीवृन्दंतंशिशुं सूर्यवर्चसम्
पुरोनिधाय मातृणां प्रोचुश्च विकटोदितम् ।
ब्रह्माणी वैष्णवी रौद्री वाराही नारसिंहिका ॥
कौमारी चापि माहेन्द्री चामुण्डा चैव चण्डिका ॥ १५१ ॥
दृष्ट्वा तं बालकं रम्यं विकटाप्रेषितं ततः । पप्रच्छुर्युगपद्वाक्यं कस्तेबाल प्रमुख्यकः
मातृभिश्चेतिपृष्टस्तुयदा किञ्चिन्नवक्तिसः । तदाचयोगिनीचक्रंप्राहमातृगणस्त्विवति
राज्ययोग्योभवत्येषमहालक्षणलक्षितः। पुनस्तत्रैवनेतव्योयोगिन्यस्त्वविलम्बितम्
पञ्चमुद्रामहादेवी तिष्ठते यत्र कामदा । यस्याः संसेवनान्नृणां निर्वाणश्रीरदूरतः॥
तत्पीठसेवनादस्य षोडशाब्दाकृतेःशिशोः । सिद्धिर्भवत्री परमा रुद्रस्यानुग्रहात्परा
एवं मातृगणात्सद्योयोगिनीभिःक्षणेन तु । प्रापितोमातृवाक्येन पञ्चमुद्रान्तिकम्पुनः

सम्प्राप्य तन्महापीठं स्वर्गलोकादिहागतः ।
महाकालवने पुण्ये ततापं विपुलं तपः ॥ १५८ ॥

तपसाऽतीव तीव्रेणनिश्चलेन्द्रियमानसः । तस्य राजकुमारस्य प्रसन्नोऽभूदुमाधवः
आविर्वभूव पुरतो लिङ्गरूपेण शङ्करः । उवाच च प्रसन्नोऽस्मि वरं ब्रूहि नृपाङ्गज ।
सर्वज्योतिर्मयं लिङ्गं पुरतो दृष्टवान्स्वयम् । सप्तपातालमुद्भिद्योत्थितं बृहदनुग्रहात्
प्रणम्य दण्डवद्भूमौ परितुष्टाव धूर्जटिम् । सूक्तैर्जन्मान्तराभ्यासात्सुहृष्टो रुद्रदैवतैः

वरञ्च प्रार्थयाञ्चक्रे परिहृष्टतनूरुहः ॥ १६२ ॥

देवदेव महादेव! यदि देयो वरो मम । तदत्र भवता स्थेयं भवतापहृता सदा ॥१६३

अस्मिंल्लिङ्गे स्थितः शम्भो! कुरु भक्तसमीहितम् ।
विना मुद्रादिकरणं मन्त्रेणापि विना विभो! ॥ १६४ ॥

अस्य लिङ्गस्य ये भक्ता मनोवाक्कायकर्मभिः । सदैवानुग्रहस्तेषु कर्त्तव्यो वर एष मे
इति तद्वरमाकर्ण्य लिङ्गरूपोऽवदत्प्रभुः । एवमस्तु यदुक्तं ते वीर! वैष्णवसूनुना ॥

वीर वीरेश्वरंनाम लिङ्गमेतत्त्वदाख्यया ।
अवन्त्यां सम्प्रदास्यामि भक्तानां चिन्तितान्यहो ॥ १६७ ॥

अत्र दत्तं हुतं जप्तं स्तुतमर्चितमेव च । तदक्षयं भवेदत्र भक्तानां नात्र संशयः ॥१६८

त्वं तु राज्यं परम्प्राप्य सर्वभूपालदुर्लभम् ।
भुक्त्वा भोगांश्च विपुलानन्ते सिद्धिमवाप्स्यसि ॥ १६६ ॥

एष ते कथितो देवि! प्रभावः पापनाशनः । वीरेश्वरस्य देवस्य नूपुरेशमथो शृणु

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये वीरेश्वरमाहात्म्यवर्णनं नाम
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

# सप्तचत्वारिंशोऽध्यायः

## नूपुरेश्वरमाहात्म्यवर्णनम्

श्रीदेवदेव उवाच

सप्ताधिकं विजानीहि नूपुरेश्वरसञ्ज्ञकम्। यस्य दर्शनमात्रेण प्राप्यन्ते सर्वसिद्धयः
पुराराथन्तरे कल्पे नूपुरोनाम वै गणः। रुद्रभक्तिपरो नित्यं पञ्चमुद्राविभूषितः॥

स एकदा कुवेरस्य सभायां प्राप्य संस्थितः।
द्रष्टुं महोत्सवं तत्र अप्सरोभिः कृतं तदा॥ ३॥

ननृतुश्चापरास्तत्र ह्युर्वशी योषितां वरा। रम्भा तिलोत्तमा मेना ननृतुर्हर्षसंयुताः॥
तासां नृत्यं तदा वीक्ष्य नूपुरो गणपस्तदा। कामवाणार्दितो नूनं तासां मध्येननर्त्तह
नृत्यमानस्ततो हृष्टः पुष्पगुच्छेन वक्षसि। उर्वशीं ताडयामास कामबाणप्रपीडितः
उर्वशी तु ततः क्रुद्धा पुष्पगुच्छेन ताडिता। जगाम शरणं देवं धनदं सर्वकामदम्

उवाच धनदस्तत्र क्रोधेनाकुलमानसः॥ ८॥

यस्मत्त्वया रङ्गभङ्गः कृतःकामार्दितेन वै। तस्मात्त्वं मानुषे लोके पतस्व पापपूरुष!
कुवेरस्य च शापात्तु जगाम धरणीतलम्। विललापसुदुःखार्त्तःकिंकृतंपापिनामया
विलप्यसुभृशं सोऽथ शरणंपरमेश्वरीम्। जगाम मनसादेवि त्वांसवैवरदायिनीम्
त्वं तुष्टा तु तदा जाता प्रत्यक्षा परमेश्वरी। उवाचगणपं प्रीत्या भक्तिनम्रं तदाभुवि
गच्छ पुत्र! ममादेशान्महाकालवनं शुभम्। प्राची सरस्वतीतत्रवाप्याकाराचविद्यते

तस्या दक्षिणतो वत्स विद्यते लिङ्गमुत्तमम्।
वाप्यां स्नात्वा च तल्लिङ्गं समाराधय भक्तितः॥ १४॥
सा प्राची स च देवेशस्त्वन्नाम्ना ख्यातिमेष्यति।
इत्युक्तो नूपुरो देवि! महाकालवनं गतः॥ १५॥
त्वया च प्रेरितो देवि! कीर्त्यर्थं तत्र गम्यताम्।

इत्युक्तो नूपुरो दिव्यो गणो हृष्टःकृताञ्जलिः ॥ १६ ॥

महाकालवनं रम्यं देवगन्धर्वसेवितम् । ददर्श तत्र तल्लिङ्गं सुरगन्धर्वसेवितम् ॥

प्राची सरस्वती तत्र वाप्याकारा च संस्थिता ।

तस्यां स्नात्वा ततो देवं पूजयामास नूपुरः ॥ १८ ॥

ततो देवः प्रसन्नात्मा प्रत्युवाचाथ नूपुरम् । साधुनूपुरभद्रं तेस्वस्तिप्राप्नुहिसर्वदा

भविता वल्लभोदेव्याःपार्वत्याः शङ्करस्य च । इत्युक्तस्तेनलिङ्गेनतत्क्षणान्नूपुरःप्रिये

उदितादित्यसङ्काशोविभावसुसमद्युतिः । तेजोराशिश्चसञ्जातोदुर्निरीक्ष्यस्त्रिविष्टपैः

प्रभावं तादृशं दृष्ट्वा देवैरुक्तं वरानने !। अहो लिङ्गस्य माहात्म्यं दृश्यतेऽत्यद्भुतं भुवि

प्राप्ता च कामिकी सिद्धिर्नूपुरेण च दर्शनात् ।

अतो देवोऽद्यप्रभृति विख्यातो भूतलेऽभवत् ॥ २३ ॥

सर्वकामप्रदो नित्यंनूपुरेश्वरनामतः । दर्शनंयेकरिष्यन्तिस्नात्वावाप्यांसमाहिताः

नूपुरेश्वररुद्रस्य ते यान्ति परमं पदम् । येचपूजांकरिष्यन्ति भक्तिभावसमन्विताः

वसन्ति मुदिताः सर्वे यावदाभूतसम्प्लवम् ॥ २५ ॥

जन्ममृत्युजरारोगदुःखानि विविधानि च । प्रयान्ति विलयं सद्यः पूजितेनूपुरेश्वरे

वापी गङ्गासमा सा तु स्वयमेवशुभेक्षणे । सङ्गमस्तुवितस्तायांयमुनायास्तुसुव्रते

प्रयागमेतज्जानीहि भूधरेन्द्राङ्गसम्भवे !॥ २७ ॥

सोमतीर्थं तदा देवि सर्वपातकनाशनम् । तत्र स्नात्वा पुमान्देविवाजपेयफलंलभेत्

कृष्णाष्टम्यां च यः स्नात्वा पूजयेन्नूपुरेश्वरम् ।

कुलं वै तारयेत्सोऽपि मातृकं पितृकं शतम् ॥ २६ ॥

एष ते कथितो देवि! प्रभावःपापनाशनः । नूपुरेश्वरदेवस्यश्रूयतामभयेश्वरम् ॥ ३०॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डेऽ-

चतुरशीतिलिङ्गमाहात्म्ये नूपुरेश्वरमाहात्म्यवर्णनंनाम

सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

# अष्टचत्वारिंशोऽध्यायः

## अभयेश्वरमाहात्म्यवर्णनम्

श्रीरुद्र उवाच

अष्टाधिकं विजानीहि चत्वारिंशत्तमं प्रिये !। यस्य दर्शनमात्रेणन भवस्यभयंभवेत्
कल्पावसाने प्रथमे पाद्मे पद्मनिभेक्षणे। नष्टचन्द्रार्कनक्षत्रे नष्टभूमित्रिविष्टपे।
ब्रह्मा वै चिन्तयामास कथं सृष्टिर्भवेदिति ॥ २ ॥
इत्याकुलितरूपस्य तस्य नेत्रद्वयात्तदा। पपाताश्रुकणः स्थूलोनेत्राद्वामान्महात्मनः
तस्मादश्रुकणाज्जातो हारवोनाम दानवः। तीक्ष्णदंष्ट्रो महाकायो भिन्नाञ्जनचयप्रभः
दक्षिणान्नयनाज्जातः कालकेलीतिविश्रुतः।
कृष्णदेहोऽतिदीर्घश्च महादंष्ट्रोर्ध्वरोमकः ॥ ५ ॥
करालवदनो दुष्टो यमरूपो दुरासदः। कृष्णाञ्जनचयाकारः पाशपाणिर्विभीषणः॥
तौ तु दैत्यौ समागत्य कृतसङ्केतकौ तदा।
ब्रह्माणं हन्तुमिच्छन्तौ प्रमत्तावभिधावितौ ॥ ७ ॥
ततो ब्रह्मा भयाविष्टः कान्दिशीकश्चचार ह ।
ततोजलेऽतिगम्भीरे सोऽपश्यदमितद्युतिम् ॥ ८ ॥
पुरुषं पीतवसनं शङ्खचक्रगदाधरम्। तमालोक्य ततो ब्रह्मा संत्रासं परमं गतः ॥
उवाच को भवाञ्छेते निःशेषेऽस्मिश्चराचरे ॥ ६ ॥
तमुवाच ततो विष्णुरहमेव जगत्पिता। लोककृल्लोकसंहर्त्तालोकस्थितिविधायकः
इत्युक्तः पद्मजस्तेन कृष्णेनाक्लिष्टकर्मणा। प्रत्युवाच तदा ब्रह्मा स्रष्टाऽहं भुवनत्रये
मया सृष्टं जगत्सर्वं सदेवासुरमानुषम्। अत्रान्तरे च तौदैत्यावायातौ बलदर्पितौ
भोक्तुकामौ क्षुधाविष्टौ दृष्ट्वाब्रह्माब्रवीदिदम्। कृष्णं कमलपत्राक्षंकम्पिताधरपल्लव
यदि त्वं कारणं किञ्चिदस्य लोकस्य कथ्यसे।

तदा तावसुरौ भीमौ हन्तुमर्हसि साम्प्रतम् ॥ १४ ॥

तच्छ्रुत्वा तु तदा विष्णुर्ज्ञात्वा दुःखं परस्परम् ।

क्षणं विश्रम्यतां तावत्पश्चाद्द्वन्द्वं भविष्यति ॥ १५ ॥

इत्युक्त्वाकृतसङ्केतौ तौ दैत्यौबलगर्वितौ । ब्रह्मनारायणौहन्तुंधावितौतुत्वरान्वितौ

ब्रह्मविष्णूतदा दृष्ट्वा दानवौ दुर्जयौ रणे । सन्त्रासं जग्मतुस्तत्र स्वेदकम्पपरिप्लुतौ

अन्योन्यमूचतुस्तौ हि देशकालोचितं वचः । कर्तव्यंकिं नुवाकार्यममवातववाभवेत्

उपस्थितंभयंघोरं तत्र किं कार्यमस्तिनौ । आसन्नं मरणं दृष्ट्वा ब्रह्मा प्रोवाचकेशवम्

गम्यतांकृष्ण शीघ्रम्वै महाकालवनोत्तमम् । प्रलयेऽप्यक्षयम्प्रोक्तं तत्ररक्षाभविष्यति

अहं तत्र गमिष्यामि व्रज त्वं तत्र केशव !॥ २० ॥

इत्युक्तो ब्रह्मणाकृष्णो जगाम सह तेन वै । महाकालवनम्प्राप्तौ न च दृष्टो महेश्वरः

तत्रापि दशसाहस्रं कालः पर्यटतोस्तयोः ॥ २१ ॥

ततोज्वालामयं दिव्यंनूपुरेश्वरदक्षिणे । दृष्ट्वातल्लिङ्गमाहात्म्यं ब्रह्मविष्णूततःस्वयम्

प्रार्थयाञ्चक्रतुर्देवमभयं देहि नौ प्रभो! ॥ २२ ॥

शरणं भव देवेश! दानवाभ्यां प्रपीडितौ । अभयं च ततो दत्तं तेन लिङ्गेन पार्वति!

शुश्राव गर्जितं ताभ्यां दानवाभ्यां पितामहः ।

प्रत्युवाच भयत्रस्तो लिङ्गं कम्पितकन्धरः ॥ २४ ॥

स एष मृत्युरस्माकमेति शीघ्रं भयावहः । दीयतामभयं देव! कृष्णेनोक्तं तदा प्रिये!

भयार्त्तवचनं श्रुत्वा ब्रह्मणः केशवस्य च । तौ देवौ तेन लिङ्गेन जठरे सन्निवेशितौ

दृष्टं ताभ्यां जगत्सर्वं सार्कचन्द्रमहीधरम् ।

ससिद्धगन्धर्वकुलं शैलताललताकुलम् ॥ २७ ॥

समुद्रपीठसंयुक्तं नानावर्णाश्रमोज्ज्वलम् । सपातालतलं देवी सभुजङ्गमहीरुहम् ॥

ससप्तलोकविन्यासं सदेवासुरराक्षसम् ।

पुनस्तौ निःसृतौतस्माज्जठराद्विस्मयान्वितौ ॥ २६ ॥

दृष्टौ भस्मीकृतौ दैत्यौ तेनलिङ्गेन पार्वति !। तुष्टुवातेपरंलिङ्गं भक्त्यापरमयायुतौ

लिङ्गेनोक्तं प्रसन्नेन भवद्भ्यां किं ददाम्यहम् ।
ममामोघमिदं देवौ दर्शनञ्चातिदुर्लभम् ॥ ३१ ॥
ततो ब्रह्मा च विष्णुश्च वरयामासतुर्वरम् । यदि देयो वरोऽस्माकं नृणामभयदोभव
ये तां पूजयिष्यन्ति यक्ष्यन्तिच समाहिताः । संस्मरिष्यन्तिसततंतेषामभयदोभवे
अभयेश्वरसञ्ज्ञस्तु ख्यातो भुवि भविष्यसि ।
ते कृतार्था भविष्यन्ति ये त्वां पश्यन्ति भक्तितः ॥ ३४ ॥
भविष्यति भयं नैव संसारपतनं तथा । धनपुत्रकलत्राणां वियोगोन भविष्यति ॥
दुःखितादुर्भगा नारी दर्शनं याकरिष्यति । सौभाग्यसुखसंयुक्ताभविष्यतिनसंशयः
वीरं तु गुर्विणी कन्या पतिमाप्स्यति शोभनम् ॥ ३६ ॥
यं यं काममभिध्याय ये त्वां पश्यन्ति मानवाः ।
तं त मनोरथं सर्वं गमिष्यन्ति न संशयः ॥ ३७ ॥
एवं भविष्यतीत्युक्त्वा लिङ्गेन परमेश्वरि !।
विसर्जितौ गतौ देवौ ब्रह्मविष्णू स्वमालयम् ॥ ३८ ॥
एष ते कथितो देवि प्रभावः पापनाशनः । अभयेश्वर देवस्य श्रूयतां पृथुकेश्वरम् ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्येऽभयेश्वरमाहात्म्यवर्णनंनामाऽ-
ष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

# एकोनपञ्चाशत्तमोऽध्यायः

## पृथुकेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

शृणु पञ्चाशदेकोनं देवेशं पृथुकेश्वरम् । यस्य दर्शनमात्रेण सार्वभौमो नरो भवेत् ॥
वंशे स्वायम्भुवे देवि! ह्यङ्गो राजाबभूव ह । मृत्योस्तुदुहितातेन परिणीतासुदुर्मुखा
वेननामा सुतोजातो नास्तिको धर्मदूषकः । देवब्रह्मस्वहारी च परभार्यापहारकः ॥
स च शप्तो द्विजैर्देवि! तत्क्षणान्निधनंगतः । तदूरोर्मथ्यमानात्तु निपेतुर्म्लेच्छजातयः
शरीरे मातुरंशेन कृष्णाञ्जनचयप्रभाः । पितुरंशात्समुत्पन्नो धार्मिको द्विजसत्तमैः ॥
मथिताद्दक्षिणाद्धस्तात्पृथुः प्रथितविक्रमः ॥ ५ ॥
स विप्रैरभिषिक्तश्च तपः कृत्वा सुदुष्करम् । विष्णोर्वरेण महता प्रभुत्वमगमन्नृपः
स च स्वाध्यायरहिता निर्वषट्कारनिर्द्धनाः ।
हाहाभूताः प्रजा दृष्ट्वा ततोऽभूद्दुःखितो नृपः ॥ ७ ॥
स दोग्धुमैच्छत्त्रैलोक्यं स देवासुरमानुषम् ॥ ८ ॥
एतस्मिन्नन्तरे प्राप्तो नारदो मुनिसत्तमः । क्रोधाविष्टं पृथुं दृष्ट्वा वाक्यं चेदमुवाचह
लोकत्रयविनाशायमाकोपंकुरुभूपते । पृथ्व्याऽनयाग्रासितानि सस्यानिविविधानिच
गिलितानि च अन्नानि विद्ध्येवैतन्मतं मम ॥ १० ॥
नारदस्यच वाक्येन क्रोधश्चक्रेपृथुस्तदा । निर्दग्धधुमैच्छत्पृथिवीं सशैलवनकानाम्
मुमोच शस्त्रमाग्नेयं तेन सा धरणी तदा ।
दह्यमाना भयार्त्ता च गौर्भूत्वा पृथुमभ्यगात् ॥ १२ ॥
सा वध्यमाना तेनैव नृपं वचनमब्रवीत् । शरणं समनुप्राप्ता गौरहं नृपसत्तम !॥ १३॥
गौरवध्या महीपाल ! वत्सं कृत्वा च दोग्धि माम् ॥ १४ ॥
तस्यास्तद्वचनं श्रुत्वा दुदोह नृपसत्तमः ।

भास्वद्रत्नानि सस्यानि कृत्वा वत्सं हिमालयम् ॥ १५ ॥
जाताः प्रजाश्च सुमुखाः प्रवृत्तश्च महोत्सवः ।
प्रवृत्ता यागदानादिक्रिया मङ्गलपूर्विकाः ॥ १६ ॥
राजाऽथ चिन्तयामास मया पापमिदं कृतम् ।
अवध्याश्च स्त्रियः प्रोक्ता गौरवध्या द्विजस्तथा ॥ १७ ॥
स्त्रीरूपधारिणी पृथ्वी मोहादेषा मया हता । गोवधेचकृता बुद्धिरहो पापपरम्परा॥
तस्माद्वह्निं प्रवेक्ष्यामि चितां कृत्वा न संशयः ॥ १८ ॥
एवं चिन्तयतस्तस्य पृथोरमिततेजसः । आजगाम पुनस्तत्र नारदो भगवानृषिः ॥
दृष्ट्वा तथाविधं दीनं चिन्तयानं पृथुं प्रिये!। उवाच नारदोधीमान्किमेतदितिपार्थिव
ततः स कथयामास मया पापमिदं कृतम् ।
अवध्या स्त्री हता विप्र कृता बुद्धिश्च गोवधे ॥ २१ ॥
काँल्लोकान्नु गमिष्यामि कृत्वाकर्मसुदारुणम् । मरिष्यामिनसंदेहो ब्रह्महापापपूरुषः
अथ चेष्टोपदेशेन दुःखादुद्धर मां द्विज !।
तस्य तद्वचनं श्रुत्वा कथयामास नारदः ॥
महापापप्रशमनं लिङ्गमाहात्म्यमुत्तमम् ॥ २३ ॥
महाकालवने लिङ्गमभयेश्वरपश्चिमे । महापापक्षयकरं विद्यते तत्र भूपते !॥ २४॥
गच्छ त्वं सहसा राजंस्तत्र पूतो भविष्यसि ॥ २५ ॥
नारदस्यवचः श्रुत्वापृथुस्तत्रजगामसः । दृष्ट्वालिङ्गं च वैरम्यंविपापस्तत्क्षणादभूत्
द्वादशादित्यसङ्काशो बभूव पृथिवीपतिः ॥ २६ ॥
ततोऽन्तरिक्षगैर्देवि! कृतं नाम वरानने । पृथुना पूजितो यस्माद्भविष्यति महीतले
अद्यप्रभृति विख्यातो देवोऽयं पृथुकेश्वरः ॥ २७ ॥
ये च द्रक्ष्यन्ति देवेशं पृथुकेश्वरमीश्वरम् । ते सर्वकामसम्पूर्णा भविष्यन्तिमहीतले
अज्ञानाज्ज्ञानतो वाऽपि यत्पापं जायते नृणाम् ।
तत्पापं यास्यति क्षिप्रं पृथुकेश्वरदर्शनात् ॥ २८ ॥

वाचिकं मानसं चापि कायिकं गुह्यसम्भवम् । प्रकाशं वाकृतंपापंप्रसङ्गादपियत्कृतम्
तत्सर्वं यास्यति क्षिप्रं पृथुकेश्वरदर्शनात् ॥ ३० ॥
पूजयिष्यन्ति ये भक्त्या देवं वै पृथुकेश्वरम् ।
राज्यं प्राप्स्यन्ति ते सम्यङ्नृलोके च त्रिविष्टपे ॥ ३१ ॥
भुक्त्वा राज्यं मनुष्याणां देवानां च महीतले ।
यास्यन्ति परमं स्थानं ब्रह्मणः परमेष्ठिनः ॥ ३२ ॥
इत्युक्त्वा देवसङ्घैश्च पूजितः पृथुकेश्वरः । पृथुः शशास पृथिवींसपत्तनांसपर्वताम्
एष ते कथितो देवि ! प्रभावः पापनाशनः । पृथुकेश्वरदेवस्य शृणु वै स्थावरेश्वरम्

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये पृथुकेश्वरमाहात्म्यवर्णनं
नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४६ ॥

---

## पञ्चाशत्तमोऽध्यायः

### स्थावरेश्वरमाहात्म्यवर्णनम्

श्रीमहादेव उवाच

शृणु देवि! प्रयत्नेन पञ्चाशत्तममीश्वरम् । यस्य दर्शनमात्रेण ग्रहबाधा न जायते
संज्ञानामरवेर्भार्यासासुताविश्वकर्मणः । भर्त्तुस्तेजोऽसहन्त्याथकदाचिच्चैवसञ्ज्ञया
छायामयी चात्मनस्तु निर्मिता तरसा तया ॥ २ ॥
सा प्रोक्ता सादरेणैव स्थीयतां सूर्यसन्निधौ । पृष्ट्यापि न वाच्यंते मदीयंगमनंरवेः
इत्युक्त्वा सा तदा सञ्ज्ञा जगाम भवनं पितुः ।
सञ्ज्ञेयमिति मन्वानो द्वितीयायां दिवस्पतिः ।
जनयामास तनयं नामतो यः शनैश्चरः ॥ ४ ॥

तस्मिञ्जातेभयं जग्मुः सदेवासुरमानुषाः । त्रैलोक्यं जातमात्रेण क्रान्तं सचराचरम्
इन्द्रोऽपि भयसन्त्रस्तो ब्रह्माणं शरणं गतः । सूर्यपुत्रस्यवृत्तान्तंकथयामासगद्गदम्
भिन्नन्तु रोहिणीचक्रं व्याप्तंनक्षत्रमण्डलम् । जातमात्रेणचाक्रान्तंत्रैलोक्यंरविसूनुना
वालवस्य वचः श्रुत्वा ब्रह्मा लोकपितामहः । आहूय सहसा सूर्यं वचनंचेदमब्रवीत्
मर्यादाक्रियतांभानोवार्यतांपुत्र औरसः । आक्रान्तंतेजसातेनत्रैलोक्यं भूर्भुवादिकम्

ब्रह्मणो वचनं श्रुत्वा रविणा प्रोक्तमीदृशः ।
असाध्योऽयं मम सुतो वार्यतां स्वयमेव तम् ॥ १० ॥
पश्य मे चरणौ दग्धौ दृष्टिमात्रेण लीलया ।
ब्रह्मापि भयसन्त्रस्तो जगाम मनसा हरिम् ॥ ११ ॥
सूर्यस्य वचनं श्रुत्वा हरिः प्राप्तस्तु तत्क्षणात् ।
ब्रह्मणो वचनं श्रुत्वा भीतः कृष्णोऽब्रवीदिदम् ॥ १२ ॥

गम्यतां तत्र यत्रास्ते देवदेवो महेश्वरः । कृष्णस्य वचनात्सर्वैममान्तिकमुपागताः

वृत्तान्तः कथितः सर्वैरविपुत्रस्य पार्वति !।
मया स्मृतस्तु सम्प्राप्तः सूर्यपुत्रस्तु तत्क्षणात् ॥ १४ ॥

अधोदृष्टिर्मयादृष्टो वक्राङ्गोरूपतोऽसितः । स्थैर्यंकृत्वानमस्कृत्यविज्ञमोऽहंशनैःशनैः
किमर्थं वै स्मृतोदेव देह्याज्ञांममशङ्कर । आदेशेनवतिष्ठामि किं करोमि प्रशाधिमाम्
इत्युक्तोऽहं तदा तेन रविपुत्रेणपार्वति । मया सवारितोऽत्यर्थं मापीडयजगत्त्रयम्

तेनोक्तं देहि मे स्थानं पानमाहारमेव च ।
मया दत्तं विशालाक्षि! पूजार्थं स्थानमुत्तमम् ॥ १८ ॥
मेषादिराशिसंस्थः संस्त्रिशन्मासान्प्रपीडय ।
मानुषान्क्रमशो वत्स ! तत्र तृप्तिमवाप्स्यसि ॥ १६ ॥

अष्टमश्च चतुर्थश्च द्वितीयोजन्मसंस्थितः । द्वादशराशिसंस्थोपि विरुद्धोभवसर्वदा
एकादशोवा षष्ठोवा तृतीयस्थानगोऽथवा । भव भव्यतरोनृणामतःपूजा भविष्यति
पञ्चमोनवमश्चैव उदासीनस्तु सप्तमः । भवराशिगतोनित्यं मानुषे, कर्मभिर्युते ॥२२

पूजां प्राप्स्यसि चात्यर्थं ग्रहाणामधिकं सदा ।
गतिः स्थिरा भवित्री ते वरः श्रेष्ठोऽभिधीयते ॥ २३ ॥
अतस्ते स्थावरं नाम भविष्यति महीतले ।
शनैश्चरस्त्वं राशिस्थो ग्रहाणामधिको यतः ॥ २४ ॥

अतःशनैश्चरोनाम भविष्यसि सदा भुवि । गजगण्डनिभाकारोममकण्ठसमोपि च
चर्णतोह्यसितोनाम भविष्यसि महीतले । ग्रहमध्ये ह्यधोदृष्टिर्गतिर्मन्दा भविष्यति

तुष्टो ददासि राज्यं च रुष्टो वै हरसि क्षणात् ॥ २६ ॥

देवासुरमनुष्याश्च सिद्धविद्याधरोरगाः । त्वत्क्रूरदृष्टिनिहितानाशंयास्यन्तिनान्यथा

तव प्रसादात्प्राप्स्यन्ति मनोऽभीष्टं सुदुर्लभम् ।
अन्यच्च ते प्रदास्यामि स्थानं गुह्यं मनोहरम् ॥ २८ ॥

मनोऽभीष्टकरं पुण्यं देवदानवदुर्लभम् । प्रलयेऽप्यक्षयं प्रोक्तं महाकालवनं परम् ॥
तत्रगच्छममादेशात्पृथुकेश्वरपश्चिमे । विद्यते तत्र यल्लिङ्गं तत्ते नाम्ना भविष्यति

कीर्त्तिरेषा त्वदीयाऽपि त्रैलोक्ये भविता ध्रुवम् ॥ ३१ ॥
इत्युक्तः स्थावरो देवि! ममाज्ञापालकस्तदा ।
जगाम त्वरितो रम्यं महाकालवनं शुभम् ॥ ३२ ॥

दृष्ट्वा तत्रैव तल्लिङ्गं स्थानंलब्धंसुशोभनम् । तल्लिङ्गं भुवनेख्यातंनामतःस्थावरेश्वरम्

शनिनोक्तं तदा देवि ! येऽत्र द्रक्ष्यन्ति भक्तितः ।
मया प्रपूजितं लिङ्गं विख्यातं स्थावरेश्वरम् ।
तेषां पीडा मदीया तु न भविष्यति कर्हिचित् ॥ ३४ ॥

मदीयेचदिनेयोवै नियमेन प्रपश्यति । तस्याहं सकलां बाधां शमयिष्याम्यसंशयम्
धक्ष्यामि सततं पीडामन्यग्रहकृतामपि । मदीयं च भयंतस्यस्वप्नेऽपि नभविष्यति
नग्रहा नपिशाचाश्च न यक्षान च राक्षसाः। विघ्नंकुर्वन्तितस्यापि मयितुष्टेऽनसंशयः

सङ्क्रान्तौ शनिवारे च व्यतीपातेऽयने तथा ।
ये पश्यन्ति नरा भक्त्या लिङ्गं वै स्थावरेश्वरम् ॥

भविष्यत्यक्षयस्तेषां स्थिरो वासस्त्रिविष्टपे॥ ३८ ॥
नियमेन प्रपश्यन्ति मम वारेऽत्रयेनराः। न तेषांदुष्कृतं किंचिद्दुष्कृतोत्थानचापदः
भविष्यतिन दारिद्र्य न चैवेष्टवियोजनम्। दास्यामि पुत्रकामस्यफलंपुत्रकृतंसदा
अधनस्यधनंचैव भयार्त्तस्याभयंतथा। स्वर्गंवैस्वर्गकामस्यप्रयच्छामिचवाञ्छितम्
इत्युक्त्वा पूजयामासभूयोलिङ्गंशनैश्चरः। पूजयित्वाशुभैः पुष्पैर्भक्त्यातत्रैवसंस्थितः
एषते कथितो देवि! प्रभावः पापनाशनः। स्थावरेश्वरदेवस्य शूलेश्वरमथो शृणु॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्ये स्थावरेश्वरमाहात्म्यवर्णनं नाम
पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

# एकपञ्चाशत्तोऽध्यायः

## शूलेश्वरमाहात्म्यवर्णनम्

### ईश्वरउवाच

एकाधिकं विजानीहि पञ्चाशत्तममीश्वरम्। देवंशूलेश्वरं देवि!सर्वव्याधिविनाशनम्
आद्ये कल्पे प्रवृत्ते च राज्यहेतोर्वरानने!। देवानां दानवानां च युद्धमासीत्सुदारुणम्
दैत्यनामीश्वरे जम्भे देवानां च शचीपतौ ॥ २ ॥
ततो देवाः पराभूता दैत्या विजयिनोऽभवन्। अन्धकोमन्दरंप्राप्तोदूतंमेप्राहिणोत्तदा
स दूतो मामुवाचोच्चैः सगर्वोदुष्टमानसः। अन्धकेनाहमादिष्टः शृणु शङ्कर मद्वचः
गौरीं मे देहि पत्न्यर्थं मन्दरस्त्यज्यतामयम्।
एवं कृते कृतार्थस्त्वमन्यथा नास्ति ते गतिः ॥ ५ ॥
उक्तोऽहं तेन दूतेन त्वया सह महागिरौ। स्मिताननःक्षणं भूत्वामयाप्रोक्तमिदंवचः
गच्छदूत ममादेशादन्धकं ब्रूहिसत्वरम्। इहाभ्येत्याहवंकृत्वा जित्वेमां सुन्दरीं नय

इत्युक्तः प्रययौ दूतस्तेनाख्यातं वचो मम ।
अन्धकोऽपि तदा दैत्यः समरार्थी तु मन्दरम् ॥
समायातः सहामात्यो बलेन चतुरङ्गिणा ॥ ८ ॥
मया सहततस्तस्य घोरंयुद्धमभूच्चिरम् । अन्धकस्यरथो घोरश्छिन्नोभिन्नःसमन्ततः
ततः क्रुद्धोऽन्धको देवि! रथात्तस्मादवप्लुतः । मद्रथंबलवान्गृह्यमयासह बलोत्कटः
युयुधे स महादैत्यः शूलेन ताडितो मया ॥ १० ॥
मया धृतोऽन्तरिक्षेसशूलप्रोतोमहासुरः । शूलप्रोतोऽथवैदुष्टस्तावत्सम्भ्रामितोमया
सुस्राव तस्य गात्रेभ्यः शोणितौघस्ततो महान् ।
बिन्दौ बिन्दौ तु रक्तस्य तत्तुल्या दानवास्तथा ॥ १२ ॥
सम्भूताः कोटिशो देवि! तैरहं पुनरर्द्दितः ।
किं कर्त्तव्यमिति ध्यायन्स्थितोऽहं तत्र भामिनि !॥ १३ ॥
मया चोत्पादिता दुर्गा रक्तदन्तासुभीषणा । अन्धकस्यतदा पीतंरक्तं बहुविधंतया
तस्मिन्पातेततो रक्तेनोत्तस्थुर्देविचापरे । पूर्वोत्थितास्तयैवाशु निहतादानवाधिपाः
तेन शूलवरेणैव तत्क्षणान्निधनं गताः ॥ १५ ॥
स मामुवाच हृष्टात्मा कृताञ्जलिपुटोऽन्धकः । त्वयिभक्तिःसदामेस्तुदुर्लभंतवदर्शनम्
स्वामिना निहतश्चाहं कोऽन्यो धन्यतरो हि मत् ।
त्वच्छूलेन विनिर्भिन्नो ह्यन्तरिक्षे ततोऽप्यहम् ॥ १७ ॥
संकल्पाक्षेपविक्षेपं कल्पकार्यप्रवर्त्तकम् । सहस्रवक्त्रशिरसं त्वामहं शरणं व्रजे ॥१८
गिरीन्द्रतनयानाथं गिरीन्द्रशिखरालयम् । महालयकृतावासं त्वामहं शरणं व्रजे ॥
एवं स्तुतोऽहंदैत्येनशूलप्रोतेन सुन्दरि !। ततो मे करुणाजाताकृतोऽन्धकोगणस्तदा
स च शूलवरो देवि! मया प्रोक्तोमुदातदा । एहिशूलहतोदैत्यस्त्वयादुष्टोऽन्धकोमृधे
परितुष्टः प्रयच्छामि परमंस्थानमुत्तमम । न देवैर्न च गन्धर्वैर्नापि तत्परमर्षिभिः ॥
सम्प्राप्यं मामनाराध्य तथा विध्वस्तकल्मषैः ।
मामुवाच ततः शूलः प्रणम्यानतकन्धरः ॥ २३ ॥

यदि प्रसन्नो भगवन्करुणा मयि तेयदि । कथयस्व परं स्थानंमनो मेयत्रशुद्ध्यति

दुष्टसम्पर्कसञ्जातमन्यत्पातकमात्मनः ॥ २४ ॥

ततो मया समादिष्टः करुणाश्लिष्टचेतसा ।

महाकालवनं रम्यमतिपुण्यफलप्रदम् ॥ २५ ॥

तत्रास्मत्प्राप्तिदं लिङ्गं लोकानुग्रहकारकम् । पृथुकेश्वरपूर्वेणतदाराधय यत्नतः ॥ २६

मदीयं वचनं श्रुत्वा स जगाम त्वरान्वितः । ददर्श तत्रतल्लिङ्गमनेकफलदायकम् ॥

लिङ्गेन च पुनर्दृष्टः शूलः शङ्करवल्लभः ।

सम्भूतोऽनेकवक्त्रस्तु हर्षाद्विस्मितमानसः ॥ २८ ॥

स्नेहात्संश्लेषितोऽत्यर्थं पृष्टस्तु कुशलं पुनः । कथितं तेन शूलेन दुष्टान्धकवधं तदा

प्रभुणा प्रेरितोऽत्यर्थं शुद्ध्यर्थं भवतोऽन्तिके ।

त्वद्दर्शनेन पूतोऽहं यास्यामि शिवसन्निधौ ॥

अद्यप्रभृति भूर्लोके मन्नाम्ना ख्यातिमेष्यसि ॥ ३० ॥

ततो भविष्यत्यधिकं दर्शनात्ते वृणोम्यहम् ।

किं तीर्थैर्विविधैः स्नातैः किं दानैर्विविधैः कृतैः ॥ ३१ ॥

तेप्राप्स्यन्ति फलं सर्वं ये त्वां द्रक्ष्यन्ति भक्तितः ॥ ३२ ॥

यः करिष्यति ते पूजां भक्तियुक्तोऽपि मानवः ।

अष्टम्यां वा चतुर्दश्यां दिने भौमस्य भक्तितः ॥ ३३ ॥

विमानवरमास्थाय कामगं रत्नभूषितम् । उदितादित्यसङ्काशं स मुदा विचरिष्यति

त्वन्नाम ये ग्रहीष्यन्ति सर्वदा भयपीडिताः ।

व्याधिभिः पीडिता नित्यं दुःखैर्वा क्लेशिता भृशम् ॥

न भविष्यति भीस्तेषां घोरसंसारसागरे ॥ ३५ ॥

ये त्वां द्रक्ष्यन्ति पुरुषा भावहीनाः प्रसङ्गतः ।

न पतिष्यन्ति संसारे नरकेघातिदारुणे ॥ ३६ ॥

इत्युक्तं तेन शूलेन लिङ्गमाश्लिष्य यत्नतः । एषते कथितो देवि! प्रभावः पापनाशनः

शूलेश्वरस्य देवस्य अथोङ्कारेश्वरं शृणु ॥ ३८ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्ये शूलेश्वरमाहात्म्यवर्णनंनामैक-
पञ्चाशत्तमोऽध्यायः ॥ ५१

---

# द्विपञ्चाशत्तमोऽध्यायः

## ओङ्कारेश्वरमाहात्म्यवर्णनम्

श्रीविश्वेश्वर उवाच

द्व्यधिकं देवि! जानीहि पञ्चाशत्तममीश्वरम् ।
ओङ्कारेश्वर इत्याख्या यस्याऽस्ति भुवनत्रये ॥ १ ॥
प्राकृते कल्पसङ्ज्ञे तुप्रथमे प्रथमं मया । वक्त्रादुत्पादितो देवि पुरुषः कपिलाकृतिः
ततःस पुरुषो दिव्यः किं करोमीत्युपस्थितः ।
विभजात्मानमित्युक्तो मयान्तर्द्धानगोऽभवत् ॥ ३ ॥
निर्वाणस्येव दीपस्य गतिस्तस्य न लक्षिता ।
ततस्तस्याऽऽभवच्चिन्ता कथमात्मा विभज्यते ॥ ४ ॥
एवं चिंतयतस्तस्य चतुर्मित्थोत्थितस्ततः । त्रिवर्णस्वररूपी च चतुर्वर्गफलप्रदः ॥
ऋग्यजुः सामनामा च ब्रह्मविष्णुशिवात्मकः ।
व्याप्नुवन्सकलाँल्लोकान्प्रभावैः पृथुभिस्तदा ॥ ६ ॥
ओङ्कारइतितस्याख्यामयादत्ताप्रसादतः । तदोक्ताभिरुदाराभिर्वाणीभिःसमलङ्कृतः
हृदयात्तस्य देवस्य वषट्कारः समुत्थितः । छन्दसांप्रवरा देवि ! चतुर्विंशाक्षरापरा
षट्कुक्षिःसात्रिपादाच पञ्चशीर्षोपलक्षिता । समीपवर्त्तिनीदेवीपार्श्वेतत्रव्यवस्थिता
गायत्रीमधुराभाषासावित्री लोकविश्रुता । सचोकारोमयाप्रोक्तोगायत्र्यासहपार्वति

सृष्टिं कुरु ममादेशाद्विचित्रामनया सह ॥ १० ॥
इत्युक्तस्त्रिशिखो भूत्वा हिरण्यसदृशाकृतिः ।
सृष्टिमुत्पादयामास स्वशरीरान्ममाऽऽज्ञया ॥ ११ ॥
पूर्वं देवगणाश्चैव त्रयस्त्रिंशच्च देवताः । मनुष्याऋषयश्चैव वेदप्रामाण्यतः कृताः ॥ १२
तेषां देहे प्रविष्टानां प्रादुर्भावः पुनर्भवेत् । यथा सूर्यस्य सततमुदयास्तमनं भवेत्
संहृत्योङ्कारमखिलान्सदेवासुरपन्नगान् । कृतात्मगर्भे भगवानोङ्कारो जगतः प्रभुः ॥
ससर्ज सर्वभूतानि कल्पान्ते पर्वतात्मजे । अव्यक्तःशाश्वतश्चैव तस्य सर्वमिदंजगत्
कर्त्ता चैव विकर्त्ता च संहर्ताचमहांस्तुयः । ओङ्कारपूर्वकादेवा यज्ञाश्चोङ्कारपूर्वकाः
ओङ्कारपूर्वकं ज्ञानं तपश्चोङ्कारपूर्वकम् । स्वयम्भूरिति विज्ञेयः स ब्रह्मा भुवनाधिपः
स वायुरिति विज्ञेयः सर्वज्ञः स प्रजाकरः ।
विश्वेदेवास्तथा साध्या रुद्रादित्यास्तथाश्विनौ ॥ १८ ॥
प्रजानां पतयश्चैव सप्त चैव महर्षयः । वसवोऽप्सरसश्चैव गन्धर्वाश्चैव राक्षसाः ॥
दैत्याः पिशाचा रक्षांसि भूतानि विविधानि च ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा म्लेच्छादयो भुवि ॥
सर्वे चतुष्पदाश्चैव तिर्यग्योनिगतास्तदा ॥ २० ॥
जङ्गमानिच सत्त्वानियच्चान्यज्जीवसञ्ज्ञकम् । कृत्वासर्वमशेषंच ममान्तिकमुपागतः
प्रणम्य प्रयतो भूत्वा वचनं चेदमब्रवीत् । कृता सृष्टिर्मयादेव! त्वत्प्रसादान्महेश्वर!
देहि मे परमं स्थानं यथा कीर्त्तिर्ध्रुवाभवेत् । ओङ्कारस्यवचः श्रुत्वामयाप्रोक्तंवरानने
ममाभीष्टकरं स्थानं नित्यमव्ययमक्षयम् । महाकालवनं दिव्यंसर्वसम्पत्करं शुभम्
तत्र ते भविताकीर्त्तिः शाश्वती नात्र संशयः । शूलेश्वरस्य देवपूर्वभागेव्यवस्थितम्
त्रिकल्पप्रभवं लिङ्गं त्वन्नाम्ना ख्यातिमेष्यति ।
ओङ्कारेश्वर इत्याख्या भविष्यति जगत्त्रये ॥ २६ ॥
इत्युक्तो हि मया देवि! ओङ्कारोहृष्टमानसः । ददर्श तत्रतल्लिङ्गं तस्मिँल्लिङ्गे लयंगतः
ततः प्रभृति वेदेषु ओङ्कारः क्रियते द्विजैः । पुण्यार्थं मङ्गलार्थं च प्रथमं सर्ववस्तुषु

लयंगतो यदोङ्कारस्तदाप्रभृति पार्वति !। मयोच्यमानं लिङ्गस्य प्रभावातिशयं शृणु
यद्युगादिसहस्रेषु व्यतीपातशतेषु च । अयनानां सहस्रेषु यत्पुण्यं समुदाहृतम् ॥
तत्पुण्यमधिकं देवि! ॐकारेश्वरदर्शनात् ॥ ३० ॥
चतुर्ष्वपि च वेदेषु समधीतेषु यत्फलम् । ततोऽधिकं फलंप्रोक्तमोङ्कारेश्वरदर्शनात्
ब्रह्मचर्येण यत्पुण्यं यावज्जीवं कृतेन च । तत्पुण्यमधिकंप्रोक्तमोङ्कारेश्वरदर्शनात् ॥
करीषसाधने पुण्यं यच्चपुण्यमनाशके । तत्पुण्यमधिकं देवि! ॐकारेश्वरदर्शनात् ॥
पूजायां यत्फलं प्रोक्तं तस्य सङ्ख्या न विद्यते ॥ ३४ ॥
किं यज्ञैर्बहुवित्ताढ्यैः किं तपोभिः सुदुष्करैः । ॐकारदर्शनादेव तत्फलंलभतेयतः
पूजनात्स्पर्शनाद्वापि कीर्त्तनाच्छ्रवणात्तथा । ॐकारेश्वरदेवस्यनराःस्युर्मुक्तिभाजनाः
एष ते कथितो देवि! प्रभावः पापनाशनः । ॐकारेश्वरदेवस्य शृणु विश्वेश्वरं परम्

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्यॐकारेश्वरमाहात्म्यवर्णनं नाम
द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

---

## त्रिपञ्चाशत्तमोऽध्यायः

### विश्वेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

त्रिपञ्चाशत्तमं विद्धिसुप्रसिद्धमथेश्वरम् । परंविश्वेश्वरं ख्यातं विश्वेषुभुवनेष्वपि
बभूव नृपतिः पूर्वं विदर्भायां विदूरथः । सोऽन्तः पुरायुतोपेतंचक्रे राज्यमकण्टकम्
जघानतापसंसोऽथ प्रमादान्मृगयांगतः । कृष्णाजिनधरंशान्तंध्यायन्तंब्रह्मशाश्वतम्
मृगं मत्वा महारण्ये ब्राह्मणं दैवमोहितः । तेन कर्मविपाकेन देहान्ते रौरवं गतः ॥

तत्रासौ यातना घोरा अनुभूयात्मकालतः ।

तस्मादिहागतो मर्त्ये सर्पो विषधरोऽभवत् ॥ ५ ॥

अदशत्सोऽपि कोपेन ब्राह्मणंचरणे प्रिये !! लकुटेन हतःसोऽपिपञ्चत्वं तत्क्षणाद्गतः
च्युतस्तु नरकात्सिंहोद्वितीयेऽभूत्सुदारुणः । राजानं भक्षयामासराजलोकैर्निपातितः
पुनर्व्याघ्रो बभूवासौ तृतीयेऽपि भवान्तरे । तीक्ष्णपादनखैर्घोरैर्घातयामास सूकरान्
तेनापि वैश्यो निधनं नीतःकश्चिद्वनान्तरे । निषादैर्निहतःसोऽपिबाणैःपञ्चत्वमागतः
चतुर्थेऽपिगजो जातः सिंहाद्वधमवाप्तवान् । पञ्चमेमकरोजातः क्षाराम्भसिमहोदधौ
स्नातुकामामथो रामामाजघानातिपापकृत् । र्ध.वरैःकृतधिक्कारैर्बडिशैःसन्निपातितः
पुनः षष्ठे भवेजातः पिशाचः पिशिताशनः । सिद्धमन्त्रैरथोदग्रैरथर्वप्रभवैर्भृशम् ॥
मन्त्री मन्त्रविदां श्रेष्ठो ब्राह्मणस्तं जघानह । सप्तमेसपुनर्जातो दुर्निरीक्ष्यवपुर्भृशम्

तीक्ष्णदंष्ट्रः करालास्यो मांसशोणितभोजनः ।

शुष्काङ्गो मरुभूमीषु (?) पापिष्ठो ब्रह्मराक्षसः ॥ १४ ॥

आक्रम्य निमिराजेन राज्ञा राक्षसशत्रुणा ।

समारोप्य धनुः सङ्ख्ये ब्रह्मास्त्रेण निपातितः ॥ १५ ॥

दारुणः सारमेयोऽभूदतिकृष्णोऽष्टमे भवे । स शूकरखुराघातव्रणैः पञ्चत्वमागतः ॥

नवमे जम्बु कोजातः श्मशाने स च मांसभुक् ।

लौल्यात्स निधनम्प्राप्तो दुःखार्त्तो दाववह्निना ॥ १७ ॥

दशमे त्वभवद्गृध्रस्तीक्ष्णतुण्डो भयावहः । पूतिमांसवसाहारो रोगेण निधनंगतः

एकादशेऽपिचाण्डालो गतोऽवन्त्यां वरानने! ।

द्रव्यस्य हरणार्थं वै प्रविष्टो द्विजवेश्मनि ॥ १६ ॥

स दण्डपाशिकेनैव प्राप्तोबद्धश्च तत्क्षणात् । आनीतोह्विवधार्थायवृक्षाग्रेह्यवलम्बितः
तत्रैव लिङ्गमासन्नं साध्विशूलेश्वरोत्तरे । तस्य दृष्टिपथं प्राप्तमतिविक्लवचेतसः ॥
क्षणेन निधनं प्राप्तः स गतस्त्रिदशालयम् । तत्र भुक्त्वा वरान्भोगानवतीर्यचभूतले
जातःख्यातोविदर्भायांविश्वेशोनामपार्थिवः । जातिस्मरत्वमापन्नोलिङ्गदर्शनपुण्यतः

दुर्लभान्बुभुजे भोगान्प्राप्तं राज्यञ्चकार सः ।
सोऽभिषिच्य सुतं राज्ये विनीतमतिधर्मवित् ॥
संस्मरन्पूर्ववृत्तान्तं जगामाऽवन्तिकां पुरीम् ॥ २४ ॥
तत्र दृष्ट्वा महल्लिङ्गं दुर्दर्शमतितेजसा । दिव्येनचक्षुषाऽपश्यल्लिङ्गमध्ये चराचरम् ॥२५
लिङ्गमध्येस्थिताःसर्वेसागराःसरितस्तथा ।द्वीपाश्चपर्वताश्चैवतथान्यादिव्यभूतयः
चन्द्रमाः सह नक्षत्रैरादित्यश्चाग्निना सह । धनदोवरुणश्चैव यमः शक्रोमरुत्पतिः
मरुतो देवगन्धर्वा ऋषयश्च तपोधनाः । नागायक्षाःपिशाचाश्च राक्षसा भीमविक्रमाः
ब्रह्माद्या देवताश्चान्याः स्कन्दो लम्बोदरस्तथा ।
सर्वं त्रिभुवनं देवि! लिङ्गमध्ये विलोकितम् ॥ २६ ॥
प्रभावं तस्य लिङ्गस्य ज्ञात्वा सम्यङ् महीपतिः ।
संयतः पूजयामास विश्वयोनिं महेश्वरम् ॥ ३० ॥
प्रसन्नश्चाभवत्तस्य वचनंचेदमब्रवीत् । वरं वरय भद्रं ते किमभीष्टं ददामि ते ॥३१॥
तेनोक्तंवचनंराज्ञायदितुष्टोऽसि मे प्रभो । ये त्वांपश्यन्तिमनुजाःश्रद्धयाऽश्रद्धयाऽथवा
मा भूत्तेषां प्रपतनं घोरे संसारसागरे । विश्वेश्वरेति नाम्ना वै प्रसिद्धो भव भूतले
इत्युक्ते वचने भूयो विश्वेशोऽलङ्कृतोगणैः । विमानेनसुदीप्तेनगतोलोकं मदीयकम्
गणैर्नानाविधैःसार्द्धंस्तूयमानो वरानने! । किरीटीकुण्डलीचैव मुक्ताहारविभूषितः
विमानं तस्य तद्दिव्यं परिक्रम्य समन्ततः ॥ ३५ ॥
समहेन्द्रधनाध्यक्षनानानाकनिवासिनः । मुनयःसिद्धगन्धर्वास्तथाचाप्सरसांगणाः
नृत्येनाऽमरनारीणांविलोकितविनोदकः । युगकोटिसहस्रं तु मत्समीपेव्यवस्थितः
अतो देवि भुवि ख्यातोदेवोविश्वेश्वरेश्वरः । दृष्ट्वा लिङ्गञ्चविश्वेशं पातकैर्विप्रमुच्यते
सप्तजन्मकृतैर्देही मनोवाक्कायकर्मभिः । दृष्ट्वा विश्वेश्वरं लिङ्गं कृतकृत्यत्वमाप्यते ॥
तस्य नश्यति दौर्भाग्यमलक्ष्मीर्नाशमेति च ।
प्राप्नोति देही कामांश्च समृद्धिं मानसीं सदा ॥ ४० ॥
दुःस्वप्नो व्याधयः क्रूरा ग्रहा भूताश्च दारुणाः ।

प्रणश्यन्ति वरारोहे! विश्वेशे पूजिते सदा ॥ ४१ ॥

ये केचिच्छ्रद्धया युक्ता लिङ्गमाराधयन्ति वै । ते सर्वकामसम्पन्ना जायन्तेचयुगेयुगे
अन्तेगतिश्चसादिव्याजायतेमत्प्रसादतः। यत्रसम्पूज्यतेलिङ्गंतस्मिन्देशेशुभाःक्रियाः
न तत्र दुर्भिक्षभयं नापमृत्युभयं क्वचित् । प्रेतयोनौच वैताला न नागा नच दंष्ट्रिणः
एते च विष्णुब्रह्मेन्द्रकुबेरवरुणादयः । लिङ्गार्चनेन सम्प्राप्ता परां सिद्धिं महौजसः

एतु ते कथितो देवि! प्रभावः पापनाशनः ।
विश्वेश्वरस्य देवस्य कण्टेश्वरमतः शृणु ॥ ४६ ॥

इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये विश्वेश्वरमाहात्म्यवर्णनं नाम
त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

---

## चतुःपञ्चाशत्तमोऽध्यायः

### कण्टेश्वरमाहात्म्यवर्णनम्

श्रीमहादेव उवाच

चतुः पञ्चाशतं विद्धि देवं कण्टेश्वरम्प्रिये! । यस्य दर्शनमात्रेण कृतकृत्यो नरोभवेत्

आद्यकल्पे पुरा देवि! राजाऽभूत्सत्यविक्रमः ।
स शत्रुभिर्जितः सङ्ख्ये हृतकोशोऽतिदुःखितः ॥ २ ॥

वनं जगाम गहनमेकाकी श्रमकर्शितः । तत्राऽऽश्रमं ददर्शाऽथ वशिष्ठस्य महात्मनः
तेनर्षिणा वसिष्ठेन दृष्टमात्रः स भूपतिः । पूजितो विष्टराद्येन राजार्हेणच सादरम्
ज्ञात्वा तपःप्रभावेण सूर्यवंशोद्भवं नृपम् । पप्रच्छागमनं देवि! कुशलं च पुनः पुनः

स नृपः कथयामास वसिष्ठाय सुदुःखितः ।
राज्यं च सकलं ब्रह्मन् ! हृतं विद्वेषिभिर्मम ॥ ६ ॥

त्वामहं शरणं प्राप्तो दुःखैकायतनो यतः ।
निष्कण्टकं कथं राज्यं भविष्यति पुनः प्रभो !॥
उपदेशप्रदानेन प्रसादं कर्त्तुमर्हसि ॥ ७ ॥
तस्यतद्वचनंश्रुत्वा वसिष्ठो भगवानृषिः । ध्यात्वाचकथयामास बहुकौतूहलान्वितः
महाकालवनंभूप! व्रज त्वं कार्यसिद्धये । दिव्या नदी वने तत्र विश्रुता भुवनत्रये ॥
तस्यास्तीरे शुभं लिङ्गं पृथुकेश्वरदक्षिणे । द्रक्ष्यसेनृपशार्दूलतपस्यन्तं च तापसम्
अस्थिचर्मावशेषं तु चीरवल्कलधारिणम् ॥ १० ॥
वचनात्तस्य विप्रस्य वसिष्ठस्य महात्मनः ।
जगाम सहसा राजा महाकालवनं शुभम् ॥ ११ ॥
ददर्श तापसं तत्र चिरञ्जीविनमव्ययम् । उपवासकृतक्षामं द्वादशादित्यवर्चसम् ॥
तापसेन नृपो दृष्टो मित्रोऽयंमम वल्लभः । प्राप्तोराज्यपरिभ्रष्टो ज्ञात्वा वचनमब्रवीत्
एह्येहि नृपशार्दूल! दिष्ट्या प्राप्तोऽसि मेऽन्तिके । ।
इत्युक्त्वा तापसेनैव हुङ्कारश्च कृतस्तदा ॥ १४ ॥
तद्धुङ्कारात्तु पातालं भित्त्वा पञ्च च कन्यकाः ।
निर्ययुः काञ्चनं पीठमेका तासां प्रगृह्य वै ॥ १५ ॥
भृङ्गारंतुगृहीत्वान्यानिःसृताजलसम्भृतम् । पादप्रक्षालनार्थाय तृतीया समुपस्थिता
अन्येद्वे व्यजनेगृह्य पार्श्वाभ्याञ्च व्यवस्थिते । ततो हुङ्कारमकरोत्पुनरेव महातपाः
तेन हुङ्कारशब्देन देवलोकात्समागतम् । दृष्ट्वाऽप्सरसां सङ्घं नृत्यगीतमनोहरम्
अनन्तरं ददर्शाथ लिङ्गं ज्योतिष्करं परम् ।
उत्पन्नं च जगद्यस्मिंल्लीयते सचराचरम् ॥ १६ ॥
तद्दृष्ट्वा विस्मयाविष्टो बभूव नृपसत्तमः । प्रणम्यशिरसाविप्रं किमिदं द्विजसत्तम
एवंपृष्टोनृपेणाथ स विप्रो वाक्यमब्रवीत् । सप्तजन्मनिराजेन्द्र! त्वयाऽहंपरितोषितः
अतस्ते दर्शितामाया तपसादुष्करेण तु । लिङ्गस्यास्य प्रभावेण पश्यमेतपसोबलम्
हुङ्कारेण कृतापृथ्वी जलपूर्णा तु तत्क्षणात् । हुङ्काराच्चजलंग्रस्तं मुखादग्निरजायत

हुङ्कारात्पृथिवी सर्वा जातावह्निमयी तदा। संहृत्य तत्क्षणाद्वह्निमुखाद्वायुर्विनिर्ययौ
हुङ्कारेण कृतं सर्वं तत्क्षणादेव पार्वति !।
न दिशः प्रदिशो वापि न नक्षत्रग्रहास्तदा ॥ २५ ॥
ततो बभ्राम तत्रास्ति स नृपो विस्मयान्वितः।
चिन्तयामास सहसा क्व लिङ्गं क्व च तापसः ॥ २६ ॥
एवंचिन्तयतस्तस्यततः शब्दो महानभूत्। तस्माच्छब्दाच्चसञ्जातंपुरंप्राकारसम्वृतम्
सुहर्म्यकक्ष्यारचितं विशालं विशुद्धजाम्बूनदभूषितं च।
दिव्यैर्जनैः सेवितमात्मयिद्भिर्ददर्श राजा सहसा पुरं तत् ॥ २८ ॥
भूयोभवन्महाशब्दस्तस्मात्स्त्रीयुगलंवभौ। सितवस्त्रधराचैकाकृष्णवस्त्रधरासिता
पुनः शब्दो बभूवाथ तस्मात्पुरुषसत्तमः। द्विशिराःषण्मुखश्चैव पादैर्द्वादशभिर्युतः
पुनः शब्दाच्च सञ्जज्ञे पुरुषः सप्तधा गतः। संहृतं हि पुनस्तच्च दर्शयित्वाद्विजेन तु ॥
प्रोक्तमित्थं विशालाक्षि! जातं कण्टकितं नृपम् ॥ ३१ ॥
पश्य लोकमिमं मह्यं तपसा निर्मितं नृप। त्वत्प्रियार्थमयं लोको दर्शितस्तेनृपोत्तम
एवमुक्तस्तदा तेन तापसेन नराधिपः। विस्मयापन्नहृदयः पप्रच्छ प्रयतः सुधीः ॥
भगवन् सितकृष्णे द्वे के स्त्रियौ द्विजसत्तम !।
कोऽसौ द्वादशपाद्विप्र द्विशिराः षण्मुखः पुनः ॥ ३४ ॥
कश्चासौ पुरुषो ब्रह्मन्य एकः सप्तधाऽभवत।
तस्य तद्वचनं श्रुत्वा कथयामास तापसः ॥ ३५ ॥
एते स्त्रियौ त्वया दृष्टे सितकृष्णे नृपोत्तम। ते च रात्र्यहनीप्रोक्तेब्रह्मणानिर्मितेपुरा
शीर्षद्वयञ्च यद्दृष्टं तेऽयने द्वे प्रकीर्तिते। मुखानियानि दृष्टानिषट्चतेह्यृतवः स्मृताः
पादा द्वादश ये दृष्टा मासा द्वादश ते स्मृताः ॥ ३७ ॥
यः पुमान्सप्तधा जात एकीभूतो नरेश्वर !। स समुद्रस्तुविज्ञेयःसप्तधैकोव्यवस्थितः
एतत्सम्वत्सरं चक्रं त्वत्प्रियार्थं निदर्शितम्।
एवं विदित्वा राजेन्द्र! न शोकं कर्तुमर्हसि ॥ ३९ ॥

सर्वो विनश्वरो लोकः सदेवासुरमानुषः। मया दृष्टोहि बहुशोलिङ्गस्यास्यप्रभावतः
कुरु शत्रुविनाशाय लिङ्गस्यास्य च दर्शनम्।
राज्यं निष्कण्टकं राजन्भविष्यति न संशयः॥ ४१॥
एवमुक्तस्तदा राजा दृष्टवाँल्लिङ्गमुत्तमम्। दर्शनात्तस्य लिङ्गस्य कण्टका ये महीभृतः
विद्वेषिणो मृतास्तेऽपि श्रुतास्तेन महीभृता॥ ४२॥
गतस्तंविषयं राजा चक्रवर्ती बभूव ह। लिङ्गस्यास्यप्रभावेण राज्यंकृत्वा महाधनैः
यज्ञैश्चविविधैरिष्ट्वा परं निर्वाणमाप्तवान्। तापसेन श्रुतं सर्वं दृष्टं ध्यानेन तेन वै॥
लब्धं निष्कण्टकं राज्यं लिङ्गस्यास्य च दर्शनात्।
मम मित्रेण सहसा राज्यभ्रष्टेन तेन वै॥ ४५॥
अतोनाम सुविख्यातंकण्टेश्वरइतिक्षितौ। भविष्यति न सन्देहोदर्शनाद्राज्यदायकः
अद्यप्रभृति पश्यन्ति देवंकण्टेश्वरंशिवम्। तेषाञ्चकण्टकाःसद्योविनश्यन्तिनसंशयः
नैमिषेऽथ कुरुक्षेत्रे गङ्गाद्वारेच पुष्करे। स्नानात्संसेवनाद्वापि यत्पुण्यं च भविष्यति
तत्पुण्यं भविता सम्यक्छ्रीकण्टेश्वरदर्शनात॥ ४८॥
गृहिणो लिङ्गिनो वापि ये पश्यन्ति यतव्रताः।
देवं कण्टेश्वरं भक्त्या तेषां सिद्धिर्भविष्यति॥ ४९॥
जन्मान्तरसहस्रेण यत्पापं पूर्वसञ्चितम।
तत्सर्वं यास्य[ति] क्षिप्रं श्रीकण्टेश्वरदर्शनात्॥ ५०॥
दत्तंजप्तं हुतं चेष्टं तपस्तप्तं कृतं च यत। ध्यानमध्ययनञ्चैव सर्वं भवति चाक्षयम्
एवं ब्रुवाणं तं वि[प्र]ं तापसं संशितव्रतम्। लिङ्गेनोक्तं विशालाक्षि! तुष्टेन वरपूर्वकम्
जरारोगविनिर्मुक्तः सर्वशोकविवर्जितः। भविष्यति गणाध्यक्षो वरदः सर्वपूजितः
अवध्यश्चापि सर्वेषां योगैश्वर्यसमन्वितः॥ ५३॥
एवमुक्तोऽथ लिङ्गेन तापसो गणतांगतः। गणैः परिवृतो देवि! मम पार्श्वमुपागतः
अन्धकेन पुरा युद्धे सिंहनादो यदा कृतः।
तदा देवि! मदीयन्तु जातं कण्टकितं वपुः॥ ५५॥

उत्पन्नं च तदालिङ्गमशेषारिविनाशनम् । देवानां कण्टका येचदग्धालिङ्गाग्निनायतः
अतः कण्टेश्वरो देवो विख्यातो भुवनत्रये ।। ५६ ।।
एष ते कथितो देवि! प्रभावः पापनाशनः ।
कण्टेश्वरस्य देवस्य शृणु सिंहेश्वरम्परम् ।। ५७ ।।

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्ये कण्टेश्वरमाहात्म्यवर्णनं नाम चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

---

# पञ्चपञ्चाशत्तमोऽध्यायः

## सिंहेश्वरमाहात्म्यवर्णनम्

श्रीईश्वर उवाच

पञ्चाधिकं विजानीहि पञ्चाशत्तममीश्वरम् । सिंहेश्वरंवरारोहे महाभयविनाशनम् ॥
सद्यःकल्पे त्वयादेवि!मदर्थं हिमहत्तपः । कृतं नीलोत्पलापाङ्गि! भीषणंसंशितव्रतम्
तपसा तव रौद्रेण दग्धं हि भुवनत्रयम् ॥ २ ॥
दुष्करं हितपो ज्ञात्वाभगवांश्चतुराननः । आगत्योवाचदेवेशोदेवि! त्वांशुभयागिरा
किं पुत्रि प्राप्तुकामासि किमलभ्यं ददामि ते ।
विरम्यतामतिक्लेशात्तपसोऽस्मान्ममाज्ञया ॥ ४ ॥
त्वया च वचनंश्रुत्वा गुरोर्गौरवगर्भितम् । प्रियंतथ्यंहितंतत्र वर्णनिर्णीतवाञ्छितम्
प्रत्युक्तः स तदाब्रह्माप्रणामनम्रया त्वया । तपसा दुष्करेणाप्तः पतित्वे शङ्करो मया
स मां श्यामलवर्णेति बहुशः प्रोक्तवान्भवः । श्यामाहं काञ्चनाकाराचवल्लभेनचसंयुता
भर्त्ता भूतपतिर्विश्वयः कथं स्यादिति मे तपः ॥ ७ ॥
त्वदीयं वचनं श्रुत्वा वरार्हो वरदः प्रभुः । एवं भविष्यतीत्याह ब्रह्मा लोकपितामहः

कियता चैव कालेन वाञ्छासिद्धिर्भविष्यति ।
गौरीनाम्ना तु ते मूर्त्तिः कान्त्या दीप्ता भविष्यति ॥ ९ ॥
एतच्छ्रुत्वा त्वया वाक्यं ब्रह्मणः परमेष्ठिनः ।
क्रुद्धा त्वं गिरिजेऽत्यर्थं कालेऽभीष्टं भविष्यति ॥ १० ॥
क्रोधात्सिंहः समुद्भूतो वदनात्तेभयावहः । विवृतास्योमहारौद्रोजटाजटिलकन्धरः
प्रोद्धूतवल्गुलाङ्गूलो दंष्ट्रोत्कटमुखोत्कटः ।
तस्याऽऽस्ये पतितुं देवि! व्यवसायःकृतस्त्वया ॥ १२ ॥
सोऽपि सिंहः क्षुधाविष्टस्त्वां भक्षयितुमुद्यतः ।
नचैवासौ समर्थोऽभूद्वीक्षितुं वा तपोधिकाम् ॥ १३ ॥
स दह्यमानः सहसा तेजसा तपसा तव । पराङ्मुखः समभवत्प्राणत्राणपरायणः ॥
ततस्तवाभूत्करुणासिंहंप्रति यतव्रते !। क्षुधितस्य त्वया तस्य क्षीरंह्यमृतसन्निभम्
उत्पादितंस्तनाभ्यांतुतस्यसिंहस्यकारणात् । तथापिदह्यतेऽत्यर्थं दुष्टभावंयतोगतः
तेनोक्तं दह्यमानेन मातर्दग्धोस्मि तेजसा । त्वदीयेन दुराचारोदुष्टोऽहं पापविग्रहः ॥
त्वामत्तुकामोदुष्टात्मात्वयाहं जनितोऽधुना । तस्माद्यास्यामिनरकंमातृहागुरुघातकः
तस्यतद्वचनंश्रुत्वादुःखितस्य सुतस्यतु । ममत्वेन विशालाक्षिसिंहस्यकथितंत्वया
अघघ्नं विद्यते क्षेत्रं महाकालवनं सुत !। तत्र गच्छ ममादेशाच्छीघ्रं देवविनिर्मितम्
कण्टेश्वरस्य देवस्य समीपे लिङ्गमुत्तमम । सिंहनादात्समुत्पन्नं शङ्करस्य महात्मनः
अन्धकासुरयुद्धे वै पीडिते वासवे पुरा । त्वदीयं वचनं श्रुत्वासिंहस्त्वरितविक्रमः
गतो महाकालवनं दृष्टो देवोऽथ तत्क्षणात् ।
दिव्यदेहो मृगारिस्तु जातोलिङ्गस्य दर्शनात् ॥ २३ ॥
ममत्वात्तस्यलिङ्गस्यत्वंगतातत्रपार्वति । सिंहिकारूपमास्थायशीघ्रंसिंहस्त्वयाप्रिये
दृष्टो दिव्यशरीरस्तु लिङ्गस्यास्य प्रभावतः । तवतुष्टिः पराजाताद्दृष्ट्वासिंहंमहाद्युतिम्
कृतं नाम त्वया देवि! लिङ्गस्यास्य वरानने ।
दिव्यदेहस्तु सिंहोऽयं जातो लिङ्गस्य दर्शनात् ॥ २६ ॥

अतः सिंहेश्वरो देवोभुविख्यातो भविष्यति । एतस्मिन्नन्तरे ब्रह्मासंप्राप्तस्तत्रसुव्रते
उवाच त्वां वरारोहे! देवैः परिवृतस्तदा ॥ २७ ॥
यएषसिंहः संभूतस्तव क्रोधात्सुतोयतः। ततोऽसौवाहनो देवि!भविष्यतिनसंशयः
लिङ्गं सिंहेश्वरं भक्त्या यः पश्यति समाहितः ।
तस्य वासोऽक्षयो दिव्यो भविष्यति त्रिविष्टपे ॥ २९ ॥
कीर्तनान्मुच्यतेपापाद्दृष्ट्वाभद्राणिपश्यति । स्पर्शनादस्य लिङ्गस्यपुनात्यासप्तमंकुलम्
मनसा चिन्तितान्कामांस्तांश्च प्राप्नोति पुष्कलान् ।
तदैव पुरुषो मुक्तो जन्मदुःखजरादिभिः ॥ ३१ ॥
यदा पश्यति सिंहेशं संसारार्णवतारकम् ।
व्यालव्याघ्रादयश्चौरास्तथा साहसिकाश्च ये ॥ ३२ ॥
तेभ्यो भयं न भवति श्रीसिंहेश्वरदर्शनात् । यज्ञानां तपसां चैवदानादीनांचयत्फलम्
तत्फलं जायते सम्यग्दृष्ट्वा सिंहेश्वरं शिवम् ॥ ३३ ॥
मदीयं लोकमाप्नोति सुरासुरनमस्कृतम् । यः पश्यतिप्रयत्नेन देवं सिंहेश्वरं तदा ॥
इत्युक्त्वाऽसौ जगामाऽथ ब्रह्मा लोकं स्वकं प्रिये !।
यद्वपुस्तव पूर्वं स्यात्कालकान्तिकलङ्कितम् ॥
प्रभावात्तपसस्तस्य गौरत्वं प्राप्तमद्भुतम् ॥ ३५ ॥
एष ते कथितो देवि! प्रभावः पापनाशनः । सिंहेश्वरस्य देवस्य रेवन्तेशमतः शृणु
इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्ये सिंहेश्वरमाहात्म्यवर्णनंनाम
पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

---

# षट्पञ्चाशत्तमोऽध्यायः

## रेवन्तेश्वरमाहात्म्यवर्णनम्

श्रीमहादेव उवाच

षट्पञ्चाशत्तमं विद्धि रेवन्तेश्वरसञ्ज्ञकम् । यस्य दर्शनमात्रेण परा सिद्धिः प्रजायते
असहन्ती पुरा सञ्ज्ञारवेस्तेजोऽतिदुःसहम् । तपःकर्त्तुं गतादेवि! ज्ञातासूर्येणसुव्रता
अश्वरूपं ततः कृत्वा जगामाथोत्तरान्कुरून् । ददृशेतत्र सञ्ज्ञांचवडवारूपधारिणीम्
गता सा सम्मुखं तस्यपृष्ठरक्षणतत्परा । ततोऽभून्नासिकायोगस्तयोस्तत्र समेतयोः
नासत्यदस्रौ तनयावश्ववक्त्रौविनिर्गतौ । रेतसोऽन्तेच रेवन्तः खड्गीचर्मीतनुत्रधृक्
अश्वारूढः समुद्भूतस्ततो वाणधनुर्द्धरः । तेन वै जातमात्रेण अश्वारूढेन लीलया
निर्जितं च जगच्चेदं सदेवासुरमानुषम् ॥ ७ ॥
ततो देवाः पराभूता ब्रह्माणं शरणं गताः । प्रणम्य कथयामासुर्भयकम्पितकन्धराः ॥
अस्माकं विभवं तेजो रविपुत्रेण नाशितम् । रेवन्तेन सुरेन्द्रेण शृणु लोकपितामह
तस्य गात्रसमुद्भूतो वह्निर्धावति कालजित् ।
ज्वलन्ति पादपास्तेन पतन्ति शिखराणि च १० ॥
सर्वतो व्याकुलीभूतंहाहाकारमचेतनम् । तेनैवपीडितं सर्वं ज्वालामालासमाकुलम्
दशदिक्षु प्रवृत्तोऽयं समृद्धो हव्यवाहनः । सर्वं किंशुकसङ्काशं प्रज्वलन्निव दृश्यते ॥
इति तेषां वचः श्रुत्वा ब्रह्मणोक्तंवरानने !। ज्ञातं मया सुरश्रेष्ठाभवतां कार्यमीदृशम्
भविष्यति च वस्तच्च काङ्क्षितं यत्सुरोत्तमाः ।
गच्छध्वं सहसा तस्माच्छङ्करं शरणं सुराः !॥ १४ ॥
ब्रह्मणो वचनं श्रुत्वा ममान्तिकमुपागताः । त्रिदशा भयसंत्रस्तानत्वामामिदमब्रुवन्
आदित्यतनयेनैव रेवन्तेन महेश्वर !। दग्धं त्रिभुवनं सर्वं शरीरस्थेन वह्निना ॥
तेजसा महता चैव विक्रमेण बलेनच ॥ १६ ॥

असाध्यः किल सोऽस्माकं सर्वेषां देवसत्तम । भवान्प्रभवतेतस्यनान्यःशङ्करकश्चन
त्वां प्रपद्यामहे सर्वे भयार्त्ताः शरणार्थिनः । शरणं वरदं देवं त्रिदशानां महेश्वर !॥
मया स्मृतः सूर्यपुत्रो रेवन्तस्तत्क्षणात्प्रिये । प्राप्तःप्रीतिप्रसन्नात्मावचनंचेदमब्रवीत्
किं मया देव कर्त्तव्यं ब्रूहि सर्वमशेषतः । ततो मया सूर्यपुत्र उत्सङ्गे च कृतस्तदा

स्नेहादाचुम्बितोमूर्ध्नि परिष्वक्तः पुनः पुनः ।
ददामि ते महाभाग! वरं वरय सुव्रत !॥ २१ ॥

परितुष्टोऽस्मि ते कामं यथेष्टंकाममाप्नुहि । इदमाज्ञापयामित्वांश्रेयश्चैवमवाप्स्यसि
ममाभीष्टं परं स्थानं विद्यते पृथिवीतले । अक्षयं प्रलये पुत्र! महाकालवनं शुभम् ॥

तत्र दास्यामि ते स्थानं तत्र कीर्त्तिर्भविष्यति ॥ २३ ॥

पूर्वे कण्टेश्वरस्यापि स्थानं परमदुर्लभम् । तत्र त्वं वसरेवन्तलिङ्गंद्रक्ष्यसिशाश्वतम्

सर्वदा त्रिदशैः पूज्यो भविष्यसि न संशयः ।
गुह्यकाधिपतिस्त्वं च स्वर्गलोके भविष्यसि ॥ २५ ॥

अश्वशालासु सर्वासुपूजनीयोभविष्यसि । नृपतीनां गृहेचैवभविष्यसि सुपूजितः

तेजो मदीयं तत्स्थानं लिङ्गाकारं सनातनम् ।
पूजितं त्रिदशैस्तत्र संसेव्यं यत्नतस्त्वया ॥ २७ ॥

एवमुक्तोमया देवि! रेवन्तोरविजस्तदा । जगामाकाशमाविश्य महाकालवनंक्षणात्
ददर्श तत्र तल्लिङ्गं ज्योतीरूपं सनातनम् । सूर्यपुत्रस्तुरेवन्तोदृष्टो लिङ्गेन पार्वति !॥
प्रोक्तः प्रणयपूर्वेणदिष्ट्याद्दृष्टोऽसिसूर्यज !। अद्यप्रभृतितेनाम्नाख्यातियास्यामिभूतले
स्थातव्यं मत्समीपे तु सूर्यपुत्रत्वयासदा । अक्षया भविताकीर्त्तिस्त्वदीयाभुवनत्रये
रेवन्तेश्वरसञ्ज्ञोऽहं भविष्यामि न संशयः । येमांद्रक्ष्यन्तिरेवन्तभक्त्यापरमयायुताः

तेषामश्वा भविष्यन्ति विजयो यश ऊर्जितम् ॥ ३२ ॥

ऐश्वर्यं दानशक्तिश्च पुत्रपौत्रमनन्तकम् । गुह्यकानांपतिर्भूत्वा स्वर्गलोकेसवत्स्यति
लिङ्गस्य वचनं श्रुत्वा प्रोक्तं वै रविसूनुना । रेवन्तेन विशालाक्षिसन्तुष्टेनान्तरात्मना

देहि मे ह्यचलां भक्तिं देहि मे स्थानमुत्तमम् ।

देहि मे परमं ज्ञानं ध्रुवां कीर्तिं च देहि मे ॥ ३५ ॥

भगवन्भूतभव्येश भवबन्धभयापह !। संस्कृतार्थोऽस्मिसञ्जातस्तव देवस्य दर्शनात

जन्मकोटिसुसंशुद्धा ये त्वां पश्यन्ति देहिनः ।

न तेषां पुनरावृत्तिर्घोरसंसारसागरे ॥ ३७ ॥

इत्युक्त्वा रविसूनुर्वै रेवन्तो रविवल्लभः । रेवन्तेश्वरदेवस्य समीपे संव्यवस्थितः

एष ते कथितो देवि! प्रभावः पापनाशनः । रेवन्तेश्वरदेवस्य घण्टेश्वरमथो शृणु ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-

चतुरशीतिलिङ्गमाहात्म्ये रेवन्तेश्वरमाहात्म्यवर्णनंनाम-

षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

——:*:——

## सप्तपञ्चाशत्तमोऽध्यायः

### घण्टेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

सप्तपञ्चाशतं विद्धि घण्टेश्वरमथो शृणु । यस्य दर्शनमात्रेण कामावाप्तिश्च जायते ॥

घण्टोनाम गणश्रेष्ठो बभूव मम वल्लभः । चाक्षुषस्य मनोः काले कौतुकार्थंयदृच्छया

प्रस्थितो ब्रह्मसदनं द्रष्टुं ब्रह्माणमव्ययम् ॥ २ ॥

अथायान्तं समालोक्य गन्धर्वं गीतकोविदम् ।

चित्रसेनं गणश्रेष्ठः पप्रच्छ कुशलं मुदा ॥ ३ ॥

मया तत्रैव गन्तव्यं सदने परमेष्ठिनः । गीतैराराधयिष्यामि ब्रह्माणं जगतां पतिम्

चित्रसेनोऽथतंदेवि! प्रत्युक्तोघण्टमब्रवीत् । पद्मयोनिः सुरैःसार्धंगुह्यंमन्त्रमचीकरत्

एतच्छ्रुत्वा गणो घण्टस्तस्थौ विस्मितमानसः ।

मुहूर्तं चिन्तयामास प्रतिहारनिवारितः ॥ ६ ॥

हित्वा स्वामिनमीशानंद्रष्टुं ब्रह्माणमागतः । प्रवेशोपिनलभ्येतप्रसादोदूरतःस्थितः
एवं चिन्तयतस्तस्य साग्रः संवत्सरो गतः ।
घण्टस्य ब्रह्मणो द्वारि प्रवेशो देवि! नाऽभवत् ॥ ८ ॥
निर्गच्छन्तमथालोक्यवीणाहस्तंसमुत्सुकम् । नारदं सगणश्रेष्ठः पद्मयोनिगृहोदरात्
प्रोक्तो घण्टेन सहसा मां निवेदय नारद !। गणोऽहं गीततत्त्वज्ञो महादेवस्य वल्लभः
दर्शनार्थं समायातो ब्रह्मणः परमेष्ठिनः । घण्टस्य वचनं श्रुत्वा प्रीतिमानभवन्मुनिः
नारदः प्रत्युवाचेदं समाश्वास्य सकैतवम् ॥ ११ ॥
अहं बृहस्पतेः पार्श्वे प्रेषितोऽस्मि गणाधिप !।
किञ्चित्कार्यान्तरं प्रष्टुं ब्रह्मणालोककर्तृणा ।
आयास्यामि क्षणेनैव तावत्कालं प्रतीक्ष्यताम् ॥ १२ ॥
इत्युक्त्वा नारदो देवि! ममपार्श्वमुपागतः । वृत्तान्तंकथयामासघण्टस्यमुनिसत्तमः
ईदृशो दुर्ल्लभो भृत्यो घण्टेनसदृशःप्रभो । यस्त्वांत्यक्त्वागणोदेवसेवार्थैपरमेष्ठिनः
स्थितः संवत्सरं साग्रं प्रवेशं न च लब्धवान् ॥ १४ ॥
तच्छ्रुत्वा वचनं तस्य नारदस्य मुनेस्तदा । मयाशप्तस्तुकोपेन पत घण्ट! महीतले
मां त्यक्त्वा हि गतोन्यत्र सेवार्थं परवेश्मनि ।
मयेत्युक्ते च वचने ब्रह्मद्वारि स्थितोऽपि सन् ॥ १६ ॥
पतितो भूतले घण्टो देवदारुवनान्तिके । आत्मानं पतितं दृष्ट्वा भूमौघण्टेनपार्वति!॥
प्रोक्तं शोकोत्तरेणैव वचनंगद्गदाक्षरम् । सेवार्थं यातियोऽन्यत्रपरिहृत्य स्वकंप्रभुम्
स याति नरकं घोरमपकीर्तिं च विन्दति । नारदेन मम त्वद्य वञ्चितस्यद्वयंगतम्
यस्मात्स्वामी न मे ब्रह्मा न च देवो महेश्वरः ॥ १९ ॥
एवं विलपतस्तस्य नारदो मुनिसत्तमः । आजगाम तमुद्देशं यत्र घण्टोऽयवंस्थितः
देवदारुवने देवि! दर्शनार्थं तपस्विनाम् । घण्टेन नारदो दृष्टो भीतेनाऽऽकुलचेतसा॥
अवस्थामीदृशीं कृत्वा किमन्यन्मे करिष्यति ।
एवं तं चिन्तयानं तु नारदो वाक्यमब्रवीत् ॥ २२ ॥

गणाध्यक्ष! नतेकार्योमन्युःपुण्यविनाशनः । कीर्त्त्यर्थंपतितोघण्टप्रायश्चित्तार्थमेवच
प्रायश्चित्तविशुद्धात्मा प्रभुं प्राप्स्यसि शङ्करम् ।
तस्माद्गच्छ ममादेशान्महाकालवनं शुभम् ॥ २४ ॥
रेवन्तेश्वरपूर्वे तु विद्यते लिङ्गमुत्तमम् । सर्वसम्पत्करं दिव्यंत्वन्नाम्नाख्यातिमेष्यति
इत्युक्तो नारदेनैव जैगीषव्यः समागतः । तेनापि कथितं सर्वं सत्यमुक्तमनेन वै ॥
नारदेन गणाध्यक्ष! कीर्त्तिस्ते भविताऽक्षया ।
कश्यपेन मृकण्डेन कण्वेन जमदग्निना ॥ २८ ॥
अत्रिणा भृगुणा देवि! लोमशेनसुरर्षिणा । प्रोक्तोघण्टोगतः शीघ्रं महाकालवनंशुभम्
यत्र घण्टानिनादेन युध्यतो मम संयुगे । पापक्षयकरं देवि! संभूतंलिङ्गमुत्तमम् ॥
दृष्टं तत्र गणेनैव लिङ्गं तेजोमयं शुभम् ॥ २९ ॥
दर्शनात्तस्य लिङ्गस्य भूयो घण्टो गणोऽभवत् ।
लक्ष्म्या कान्त्या समायुक्तः सहस्रकिरणाकृतिः ॥ ३० ॥
घण्टोऽभिनन्दितोऽत्यर्थं विमानैः सार्वकामिकैः ।
मम पार्श्वं समायातो ममातीव प्रियोऽभवत् ॥ ३१ ॥
ये पश्यन्ति विशालाक्षि! देवं घण्टेश्वरं शिवम् ।
ते घण्टाभिर्नादितास्तु विमानैः सार्वकामिकैः ॥ ३२ ॥
यास्यन्तिसुचिरंकालंममलोकंसनातनम् । घण्टेश्वरंपरंलिङ्गंनाख्येयंयस्यकस्यचित्
व्याधितो यदि वादीनो दुःखितो वा भवेन्नरः । यःपश्यतिप्रसङ्गेनदेवंघण्टेश्वरंप्रिये
दीप्तकाञ्चनवर्णाभैर्विमानैः सार्वकामिकैः ॥ ३४ ॥
गन्धर्वाप्सरसां मध्ये स्वर्गे मोदति मानवः ।
ईप्सिताँल्लभते कामान्वीणावेणुविनोदितः ॥ ३५ ॥
ततः स्वर्गात्परिभ्रष्टः सर्वैश्वर्यसमन्वितः । हिरण्यधान्यसम्पूर्णे समृद्धेजायते कुले
राजा वा राजतुल्यो वा जम्बूद्वीपपतिर्भवेत् ॥ ३६ ॥
यः पूजयतिदेवेशं श्रद्धया परया युतः । स याति परमं स्थानमपुनर्भवकारणम् ॥

एष ते कथितो देवि! प्रभावः पापनाशनः । घण्टेश्वरस्य देवस्यप्रयागेशमथो शृणु

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्ये घण्टेश्वरमाहात्म्यवर्णनंनाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

---

## अष्टपञ्चाशत्तमोऽध्यायः

### प्रयागेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

प्रयागेश्वरसञ्ज्ञं तु सर्वकामकरं परम् । अष्टाधिकं विजानीहि पञ्चाशत्तममीश्वरम्

आसीत्प्रथमकल्पे तु मनुः स्वायम्भुवःपुरा । तस्यप्रियव्रतःपुत्रोयज्वापरमधार्मिकः

स चेष्ट्वाबहुभिर्यज्ञैः समाप्तवरदक्षिणैः । सप्तद्वीपेषु सम्प्राप्य भरतादीन्सुतान्प्रिये ॥

स्वयं विशालां बदरीं गत्वा तेपे महत्तपः । कालेन बहुना तत्रनारदः समुपस्थितः

पूजितो विष्टरार्घेण राज्ञा प्रियव्रतेन च । स पृष्टः पूजयित्वा तु किमाश्चर्यंवदस्वमे

इत्युक्तः कथयामास नारदो मुनिसत्तमः । श्वेतद्वीपे मया राजन्कन्याद्दृष्टा सरोवरे

सा च पृष्टा विशालाक्षी कस्माद्वससि निर्जने ।
काऽसि भद्रे! कथं वासि किं वा कार्यमिह त्वया ॥ ७ ॥

कर्तव्यं चारुसर्वाङ्गि तन्ममाचक्ष्व शोभने !। एवमुक्तामयासाहिमांदृष्ट्वामीलितेक्षणम्

स्मृत्वा तूर्ष्णींस्थिता यावत्तावन्मे ज्ञानमुत्तमम ।
विस्मृताः सर्ववेदाश्च सर्वशास्त्राणि चैव हि ॥ ६ ॥

ततोऽहंविस्मयाविष्टश्चिन्तामोहसमन्वितः । तामेवशरणंगत्वायावत्पश्याम्यिपार्थिव

तावद्दिव्यःपुमांस्तस्याःशरीरेसमदृश्यत । तस्यापिपुंसोहृदयेद्वितीयस्तस्यचोरसि

तस्यापि हृदये चान्यस्तृतीयस्तु व्यवस्थितः ॥ ११ ॥

ततः पृष्टा मया देवी सा कुमारी कथञ्चन। वेदा नष्टाममाशेषा भद्रेकिंब्रूहिकारणम्

कन्योवाच

मातहंसर्ववेदानां सावित्रीनाम नामतः। मां न जानासियेन त्वमतोवेदा हृतास्तव

एवमुक्ते मया पृष्टा विस्मयेन महीपते!। वेदानां त्वं तु माता वैकथयस्वममानघे

त्वदीयहृदये देवि! क एते पुरुषास्त्रयः॥ १५॥

कन्योवाच

य एष मच्छरीरस्थः शुभाङ्गश्चारुशोभनः। एष ऋग्वेदनामा तु यजुर्वेदो द्वितीयकः

सामवेदस्तृतीयस्तु त्रयो वेदा मयि स्थिताः।

त्रयोऽग्नयस्त्रयो देवा मच्छरीरे स्थिता द्विज!॥ १७॥

इत्युक्त्वा सा तदा कन्या पश्यतो मम भूपते!।

अन्तर्द्धानं गता सद्यस्ततोऽहं विस्मितोऽभवम्॥ १८॥

किं करोमि क गच्छामि शरणं यामि कं प्रभुम्।

कथमाविर्भविष्यन्ति वेदाः शास्त्राणि साम्प्रतम्॥ १९॥

कामिकस्तीर्थराजस्तुप्रयागःश्रूयते श्रुतौ। अहंतत्रगमिष्यामिज्ञानंसम्यग्भविष्यति

नष्टवेदेन रैभ्येण प्राप्ता सिद्धिरनुत्तमा। सावित्री श्रूयते तत्र अक्षयवटसन्निधौ॥

एवं मनसि सन्ध्यायगतोऽहं नृपसत्तम!। प्रयागं कामिकं तीर्थं सर्वदेवनमस्कृतम्॥

तपस्तीव्रं मया तत्र तप्तं परमदुष्करम्। अथाजगाम राजेन्द्र प्रयागोमूर्त्तिमान्स्वयम्

उक्तोऽहं प्रणयात्तेन न मांतापय नारद। ब्रह्मपुत्र! प्रयागोऽहं भीषितस्तपसा तव॥

भवतः पार्श्वमायातः प्रणयेन तपोधन!। धन्योऽसिसर्वथा ब्रह्मंस्तपसाचविशेषतः

मया सार्धं त्वयाब्रह्मन्!गतिःकार्याऽविकल्पतः। महाकालवनेरम्येतत्रतेज्ञानमुत्तमम्

भविष्यति न सन्देहो मम कीर्त्तिश्च सुस्थिरा॥ २६॥

एवं हि ब्रुवतस्तस्य प्रयागस्य नृपोत्तम!। प्रादुर्बभूव सहसा पीतवासा जनार्द्दनः॥

शङ्खचक्रगदापाणिर्गरुडस्थो वियद्गतः। उवाच मेघगम्भीरं वाक्यं स पुरुषोत्तमः॥

एहि नारद! गच्छामः प्रयागो यत्र यास्यति।

कृष्णस्य वचनं श्रुत्वा मया प्रोक्तो जनार्दनः ॥ २६ ॥
ज्ञानं मे देहि देवेश! कथं यास्यामि तद्वनम् । महाकालं जगन्नाथ श्रुतज्ञानविवर्जितः
इत्युक्तः श्रीधरेणाहं महाकालवनं नृप । आनीतस्तत्क्षणाच्छीघ्रं प्रयागसहितस्तदा
घण्टेश्वरस्य पूर्वे तु नवनद्यास्तु दक्षिणे । तत्र लिङ्गमनादिं तु ज्योतीरूपं सनातनम्
प्रयागः पूजयामास पश्यतो मम भूपते । लिङ्गेनोक्तं प्रसन्नेन किमर्थं त्वमिहागतः ॥
प्रयाग! प्रयतो भूत्वा प्रसन्नोऽहं सदा तव । दर्शनं च मदीयं तुविफलं न भविष्यति
इत्युक्तस्तेन लिङ्गेन मदर्थं प्रार्थितस्तदा । ज्ञानंदेहि द्विजायास्मै नारदाय महात्मने ॥
नष्टा वेदाश्च शास्त्राणि सावित्र्या दर्शनात्प्रभो !॥ ३६ ॥
ततो लिङ्गात्समुत्तस्थौब्रह्मा वेदैर्वृतस्तदा । षडङ्गैःसरहस्यैश्च पुराणैःसहितस्तदा
इत्युक्तोऽहं तदा देव्या सावित्र्या नृपसत्तम !।
लिङ्गस्यास्य प्रभावेण प्रयागाभ्यर्थितस्य वै ॥ ३८ ॥
प्रतिभास्यन्ति ते वेदा धर्मशास्त्राणिनारद !। इत्युक्ते वचने भूयःप्राप्ता वेदा मया नृप
ज्ञानं षडङ्गसहितं शास्त्राणिविविधानिच । लब्धज्ञानेन राजेन्द्र मयाप्रोक्तंवचस्तदा
प्रयागेनार्चितो देवो मम ज्ञानस्य कारणात् ।
प्रयागेश्वरसञ्ज्ञस्तु ख्यातिं लोकेषु यास्यति ॥ ४१ ॥
तदाप्रभृति तल्लिङ्गं तीर्थकोटिशतैर्वृतम् । स्वर्गापवर्गफलदं तत्र त्वं गन्तुमर्हसि ॥
किमनेनाश्वमेधेन इष्टेन नृपसत्तम । अश्वमेधशतफलं जायते तस्य दर्शनात् ॥ ४३ ॥
तपसा किं सुतप्तेन कायक्लेशकरेण तु । वाञ्छितं लभते सद्यःप्रयागेश्वरदर्शनात् ॥

ईश्वर उवाच

नारदस्य वचः श्रुत्वा स्वायंभुवसुतोनृपः । प्रियव्रतोमहादेवि ! महाकालवनं गतः
ददर्श तत्र तल्लिङ्गं नवनद्यास्तु दक्षिणे । दर्शनात्तस्य लिङ्गस्य मत्समीपं समागतः ॥
मया सम्मानितो देवि! गणानामधिपः कृतः ।
ये पश्यन्ति नरा भक्त्या प्रयागेश्वरमीश्वरम् ॥
ते धन्या मानुषे लोके क्लिश्यन्त्यन्ये निरर्थकाः ॥ ४७ ॥

या गतिर्योगयुक्तस्य सत्त्वस्थस्य मनीषिणः ।
सा गतिर्जायते सम्यक्प्रयागेश्वरदर्शनात् ॥ ४८ ॥
माघमासे समेष्यन्ति प्रयागेश्वरदर्शनम् । कर्त्तुं ये मानुषास्तेषामश्वमेधः पदे पदे ॥
एष ते कथितो देवि! प्रभावः पापनाशनः । प्रयागेश्वरदेवस्य शृणु सिद्धेश्वरं परम्

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्ये प्रयागेश्वरमाहात्म्यवर्णनं नामाऽष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

# एकोनषष्टितमोऽध्यायः

## सिद्धेश्वरमाहात्म्यवर्णनम्

श्रीमहादेव उवाच

एकोनषष्टिक विद्धि देवं सिद्धेश्वरं प्रिये । तस्य दर्शनमात्रेण सिद्धिःपुंसां प्रजायते
आसीदश्वशिरानाम राजा परमधार्मिकः । सोऽश्वमेधेन यज्ञेन इष्ट्वा स बहुदक्षिणम्
स्नातश्चाऽवभृथे दृष्टो ब्राह्मणैः परिवारितः ।
यावदास्ते स राजर्षिस्तावत्सिद्धोऽतिदीप्तिमान् ॥ ३ ॥
नानौषधिप्रभावज्ञोमन्त्रतन्त्रविशारदः । आययौकपिलःश्रीमाञ्जैगीषव्यश्चसिद्धराट्
तयोस्त्वरितमुत्थाय सराजाभ्यागतक्रियाम् । चकारपरयायुक्तोमुदावैपृथिवीपतिः
तावर्चितावासनस्थौ क्षमाशीलौ शुचिव्रतौ ।
महौजसौ महाभागौ मुमुक्षू मुनिपुङ्गवौ ॥ ६ ॥
विद्याविनयसम्पन्नौब्रह्मचर्यपरायणौ । अनेकसृष्टिसंहारस्थितिकार्यपरायणौ ॥ ७ ॥
उदयादित्यसङ्काशौ विभावसुसमद्युती । तेजोराशिसमायुक्तौ दुर्निरीक्ष्यौपृथग्जनैः
विनयेनोपसङ्गम्य प्रणिपत्याभिवाद्य च । स राजा प्राञ्जलिर्भूत्वा प्रश्नमेनमपृच्छत

अश्वशिरा उवाच

श्रुतंमयामुनिश्रेष्ठौनान्योदेवोजनार्द्दनात् । ध्यातोथपूजितोनृणांमुक्तिदोभवबन्धनात्
संस्मृते तु हृषीकेशे नराणां कोटिजन्मजम् । अशुभंक्षयमाप्नोति कथंनप्रणमेद्धरिम्

समाराध्य जगन्नाथं शक्राद्यास्त्रिदिवौकसः ।
वसन्ति मुदिताःस्वर्गे दिव्यद्युतिसमन्विताः ॥ १२ ॥

जन्ममृत्युजरा रोगैर्दुःखानि विविधानिच । प्रयान्तिविलयंसद्यः प्रसन्ने गरुडध्वजे
इतिपृष्टस्तदातेनप्राथितेन यशस्विना । ऊचतुस्तं नृपं सिद्धौसिद्धिविज्ञानकोविदौ
कथंप्रोच्यते राजंस्त्वया नारायणोऽधुना । आवांनारायणौद्वौतुत्वत्प्रत्यक्षंगतौनृप

अश्वशिरा उवाच

भवन्तौ ब्राह्मणौ सिद्धौ तपसा दग्धकिल्विषौ ।
युवां नारायणौ कस्मादिति वाक्यमुवाच सः ॥ १६ ॥

शङ्खचक्रगदापाणिः पीतवासा जनार्द्दनः । गरुडस्थो हृषीकेशः कस्तस्यसदृशोभुवि

तस्य राज्ञो वचः श्रुत्वा संसिद्धौ योगकोविदौ ।
दर्शयामासतुस्तौ हि कृत्वा नारायणं वपुः ॥ १८ ॥
कपिलो मन्त्रमाहात्म्यात्स्वयं विष्णुर्बभूव ह ।
शङ्खचक्रगदापाणिः पीतवासाश्च तत्क्षणात् ॥ १९ ॥

जैगीषव्यश्च गरुडस्तत्क्षणात्समजायत । ततः समभवत्तत्र राजवेश्मनिकौतुकम् ॥
दृष्ट्वा नारायणं देवं गरुडस्थं सनातनम् । आश्चर्यं तादृशं दृष्ट्वा स राजाविस्मयान्वितः

उवाच क्ष ( क्षा ) म्यतां सिद्धौ नायं विष्णुरथेदृशः ॥ २१ ॥

तस्य ब्रह्मा समुत्पन्नो नाभिपङ्कजमध्यतः । तस्मात्तुब्रह्मणो रुद्रः सविष्णुःपरमेश्वरः

इति राज्ञो वचः श्रुत्वा तदा तौ सिद्धसत्तमौ ।
चक्रतुः परमां मायां योगाचार्यौ सुमान्त्रिकौ ॥ २३ ॥

कपिलः पद्मनाभस्तु पद्ममध्ये प्रजापतिः । बभूव स्वयमेवात्र सहसा योगतस्तदा ॥
जैगीषव्योऽथ रुद्रस्तु तस्यैवाङ्केव्यवस्थितः । ददर्शमहदाश्चर्यं सराजायोगमोहितः

कौतुकात्प्रत्युवाचेदं भीतः कम्पितकन्धरः ।
नेत्थं भवति विश्वेशो मायैषा योगिनां तदा ॥
सर्वरूपी हरिः श्रीमान्सर्वगः सर्वदः स्मृतः ॥ २६ ॥
ततोवाक्यावसाने तु तस्यराज्ञश्चसंसदि । मशका मत्कुणायूका भ्रमराःपक्षिणोमृगाः
अश्वा गावो हयाः सिंहा व्याघ्रा गोमहिषास्तथा ।
अन्येऽपि पशवः कीटा ग्राम्यारण्याश्च सर्वशः ॥ २८ ॥
दृश्यन्ते राजभवने कोटिशः पर्वतात्मजे । तं दृष्ट्वाभूतसंघातं राजाविस्मितमानसः ॥
यावच्चिन्तयतेकिंस्यात्तावज्ज्ञातंनृपेणहि । जैगीषव्यस्यमाहात्म्यंकपिलस्यमहात्मनः
कृताञ्जलिपुटो भूत्वा स राजाऽश्वशिरास्तदा ।
पप्रच्छ च द्विजौ भक्त्या किमिदं सिद्धसत्तमौ !॥ ३१ ॥
सामर्थ्यमीदृशं लब्धं कस्माद्वै तपसोबलात् । अद्यमेलफलोत्पत्तिरद्यमेसफलं श्रुतम्
सफला मे मनोवृत्तिर्युवयोर्दर्शनेन वै । तस्य तद्वचनं श्रुत्वा कपिलोवाक्यमब्रवीत्
महाकालवने राजन्विद्यते लिङ्गमुत्तमम् । ख्यातं सिद्धेश्वरं नाम्नासिद्धैरभ्यर्चितंसदा
सौभाग्येश्वरपूर्वे तु सौभाग्यारोग्यदायकम् ।
प्रभावात्तस्य लिङ्गस्य प्राप्ता सिद्धिरनुत्तमा ॥ ३५॥
जैगीषव्येन सिद्धेनमया वै नृपसत्तम !। तस्माद्व्रज महाबाहो महाकालवनं शुभम् ॥
तत्रद्रक्ष्यसि सर्वेशंशङ्खचक्रगदाधरम् । लिङ्गमूर्त्तौस्थितंविष्णुंयस्तेसिद्धिप्रदास्यति
संसिद्धा बहवस्तत्र सनकाद्या नरेश्वर !। तस्य तद्वचनं श्रुत्वा कपिलस्य महात्मनः
जगाम सहसा तत्रस राजाऽश्वशिरास्तदा । ददर्श चैव तौसिद्धौसिद्धेश्वरसमीपतः
अन्येच बहवः सिद्धाः सिद्धनाथास्तथापरे ।
ज्ञात्वासिद्धेश्वरं देवं सिद्धसङ्घैः समर्चितम् ॥ ४० ॥
लिङ्गमध्ये स्थितं विष्णुं ज्ञात्वास नृपसत्तमः । पूजयामासभावेन परमेणसमाधिना
ततस्तुष्टोऽब्रवीद्देवो वरं वरय सुव्रत !। यत्तेऽभिलषितं सर्वमहं दास्यामि भूपते
लिङ्गस्यवचनंश्रुत्वानृपेणोक्तंचतच्छृणु । यदिमेऽस्तिदया देवप्रसन्नोऽसिहिचेत्प्रभो

यत्तेरूपं परं नाथ तद्दर्शय ममाऽच्युत !। एतदेव हि मे देव!सदाभिलषितं हृदि ॥ ४४
आजन्मनोजगन्नाथ कदा द्रक्ष्ये जनार्द्दनम् । एतदिच्छाम्यहं देव वराणांप्रवरं वरम्
दीयमानं त्वयाऽभीष्टं ख्यातं सिद्धेश्वरं क्षितौ ॥ ४५ ॥
नृपस्यवचनं श्रुत्वा लिङ्गेनोक्तं वरानने । न मे विदुर्देवगणा नासुरा न महर्षयः ॥
परं रूपं नृपश्रेष्ठ! कृष्णोऽहं लिङ्गतां गतः । ममलोकं तु ये प्राप्तामुनयोमन्त्रभूषिताः
न चैते मां विजानन्ति परमार्थेन पार्थिव । यदेतद्दृश्यतेतेजो लिङ्गरूपेणमामकम्
एतदेव हि ब्रह्माद्याध्यायन्तित्रिदशास्त्वमी । अतोनमे परंरूपंद्रष्टुं कश्चित्क्षमोभवेत्
अनेकजन्मसंशुद्धा योगिनो मदनुग्रहात् । प्रविशन्ति तनौमह्यं मुक्ताःसंसारबन्धनैः
एवं हि ब्रुवतस्तस्य सिद्धिः प्राप्ता नृपेण हि ।
विष्णुरूपं समास्थाय तस्मिँल्लिङ्गे लयं गतः ॥ ५१ ॥
अतो देवि! सुविख्यातं लिङ्गं सिद्धेश्वरं परम् ।
ये पश्यन्ति नरा भक्त्या तेषां सिद्धिश्च शाश्वती ॥ ५२ ॥
अञ्जनंपादलेपंच पादुकासिद्धिरेव च । गुटिका खड्गसिद्धिश्च महासिद्धिःसुदुर्लभा
दिव्यौषधैश्च यासिद्धिर्मन्त्रस्पर्शाद्धवाचया । एतास्तुसिद्धयःप्रोक्ताअपरालघिमादयः
धर्मार्थकामसिद्धिश्च मोक्षसिद्धिरनुत्तमा । जायतेनात्र सन्देहः श्रीसिद्धेश्वरदर्शनात्
एष ते कथितो देवि! प्रभावः पापनाशनः ।
सिद्धेश्वरस्य देवस्य मतङ्गेशमथो शृणु ॥ ५६ ॥

इति श्रीस्कान्देमहापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये सिद्धेश्वरमाहात्म्यवर्णनं
नामैकोनषष्टितमोऽध्यायः ॥ ५६ ॥

---

# षष्टितमोऽध्यायः

## मतङ्गेश्वरमाहात्म्यवर्णनम्

श्रीमहादेव उवाच

मतङ्गेश्वरसञ्ज्ञं तु षष्टिसङ्ख्याकमीश्वरम्। विद्धिपापहरं देवि!समीहितकरं सदा
सुगतिर्नाम विप्रेन्द्रो बभूव द्वापरे युगे। सत्यवादी सदा दान्तो वेदाध्ययनतत्परः

मतङ्गस्तस्य पुत्रोऽभूद् बाल्याद्दारुणतां गतः।
स बालं गर्द्दभं देवि! तिष्ठन्तं मातुरन्तिके॥
दण्डकाष्ठेन सहसा ताडयामास चापलात्॥ ३॥

तं तु तीव्राहतं दृष्ट्वा गर्द्दभी पुत्रगृद्धिनी। उवाच माशुचः पुत्र चण्डालोऽयंनवैद्विजः
ब्राह्मणे दारुणं नास्ति मैत्रो ब्राह्मणउच्यते। तुदन्पापाकृतिरयं बाले न कुरुतेदयाम्
स्वकीयां भजते चाथ प्रकृतिं मानवःसदा। एतच्छ्रुत्वा मन्तगस्तुदारुणं गर्द्दभीवचः
दण्डकाष्ठं परित्यज्य रासभीं प्रत्यभाषत। ब्रूहिरासभि कल्याणि मातामेयेनदूषिता

कथं मां वेत्सि चण्डालं यायावरकुलोद्भवम्।
केन जातोऽस्मि चण्डालो ब्राह्मण्यं येन मे गतम्॥ ८॥

गर्दभ्युवाच

नापितेन प्रमत्तेनब्राह्मण्यां वृषलेन हि। ततस्त्वमसि चाण्डालो ब्राह्मण्यंतेनतेगतम्
एवमुक्तो मतङ्गस्तु पितरं वाक्यमब्रवीत्। तताश्चर्यंश्रुतं मेऽद्य जातोऽहं नापितेनवै

गर्दभ्या कथितं सम्यक्तस्मात्तप्स्ये महत्तपः।
एवमुक्त्वा स पितरं प्रतस्थे कृतनिश्चयः॥ ११॥

स गत्वा च ततोऽरण्यमतप्यत महत्तपः। ततःसन्तापयामासविबुधांस्तपसान्वितः
तं तथा तपसायुक्तमुवाचहरिवाहनः। मतङ्ग! तप्यसे किं त्वंभोगानुत्सृज्य मानुषान्

वरं ददामि तेऽहं तं वृणीष्व त्वं यदिच्छसि॥ १३॥

मतङ्ग उवाच

ब्राह्मण्यं कामयानोऽहमिदमारब्धवांस्तपः । देहि मे शाश्वतं शक्र! वर एषवृतोमया
एतच्छ्रुत्वा तु वचनं तमुवाच पुरन्दरः । ब्राह्मण्यं याचसे त्वंहिदुष्प्रापमकृतात्मभिः
नाशमेष्यसि दुर्बुद्धे!तदुपारम मा चिरम् । चण्डालयोनौ जातेन नतत्प्राप्यंकथञ्चन
एवमुक्तो मतङ्गस्तुसंशितात्मा यतव्रतः । अतिष्ठदेकपादेन वर्षाणां शतसङ्ख्यया
तमुवाच ततः शक्रः पुनरेव महायशाः । ब्राह्मण्यं दुर्लभं वीर मा कृथाःसाहसं वृथा
न हि शक्यंप्राप्तुमेवमचिरान्नाशमेष्यसि । वृणुवाकाममन्यं त्वंब्राह्मणत्वंसुदुर्लभम्
एवमुक्तो मतङ्गस्तु संशितात्माद्वढव्रतः । सहस्रमेकं पादेन ततोऽब्दानामवर्त्तत ॥
तदेव च पुनर्वाक्यमुवाच बलवृत्रहा । चण्डालयौनौ जातेन नावाप्यं ते कथञ्चन॥

अन्यं वरं वृणीष्व त्वं मा कृथास्तत्त्वयं श्रमम् ।
एवमुक्तो मतङ्गस्तु भृशं शोकपरायणः ॥ २२ ॥

अतिष्ठत गयां गत्वरासोऽङ्गुष्ठेन शतं समाः । सुदुष्करं वहन्योगंप्राणायामपरायणः
त्वगस्थिभूतो धर्मात्मा ततापं परमं तपः । तपन्तं तमभिद्रुत्य परिजग्राह वासवः

वराणामीश्वरो दाता सर्वभूतहिते रतः ॥ २५ ॥

शक्र उवाच

मतङ्गब्राह्मणत्वं हि विरुद्धमिह दृश्यते । ब्राह्मण्यं दुर्ल्लभं तातह्यसतांपापशीलिनाम्

ब्राह्मणे सर्वभूतानां योगक्षेमः समाहितः ।
तदुत्सृज्येह दुष्प्राप्यम्ब्राह्मण्यमकृतात्मभिः ॥ २७ ॥
अन्यं वरम्वृणीष्व त्वं दुर्लभोऽयं हि ते वरः ॥ २८ ॥

मतङ्ग उवाच

किं मां तुदसि दुःखार्तं मृतं मारयसे च माम् ।
तं तु शोचामि यो लब्ध्वा ब्राह्मण्यं नानुपालयेत् ॥ २९ ॥
ब्राह्मण्यं यदि दुष्प्राप्यं त्रिभिर्वर्णैः शतक्रतो !।
तपसा च कथं लब्धं विश्वामित्रेण भूभुजा ॥ ३० ॥

वीतहव्यश्चराजर्षिस्तपसाविप्रतांगतः । तस्मात्तपःकरिष्यामिनिर्द्वन्द्वोनिष्परिग्रहः
अहिंसादमसत्यस्थः कथंनार्हामि विप्रताम । दैवेन कृतमेतद्धि यद्यहम्मातृदोषतः
एतामवस्थां सम्प्राप्तो दैवयोगात्पुरन्दर । नूनं दैवं न शक्यंतु पौरुषेण निवर्त्तितम्
यदहं यत्नवानेवं न लभेविप्रतां विभो !। एवंज्ञात्वातु देवेश! दातुमर्हसि मे वरम् ॥
यदि तेऽहमनुग्राह्यः किञ्चिद्वा सुकृतं मम । सदुपायं हि मेशंसकथंविप्रोभवामि वै
यथाममाक्षया कीर्त्तिर्भवेद्वापि पुरन्दर !। कर्तुमर्हसितद्देव! शिरसा त्वां प्रसादये ॥
इत्युक्तो हि मतङ्गेन वासवोबलवृत्रहा । कथयामास सन्तुष्टोलिङ्गमाहात्म्यमुत्तमम्

इन्द्र उवाच

महाकालवने लिङ्गं स्थापितं ब्रह्महापुरा । दिव्यमूर्त्तिधरंदिव्यं श्रीसिद्धेश्वरपूर्वतः
तस्यदर्शनमात्रेण विप्रत्वं समवाप्स्यसि । वासवस्यवचवाक्येन मतङ्गो गतवांस्तदा
महाकालवनंरम्यं सिद्धक्षेत्रमथापरम् । ददर्श तत्र तल्लिङ्गमशेषफलदायकम् ॥ ४०
दृष्ट्वासम्पूजयामास पुष्पैर्नानाविधैस्तदा । पूजितः प्रत्युवाचेदं मतङ्गं देवसत्तमः ॥

अहो महान्सभाग्योऽसि यस्त्वया तोषितोऽस्म्यहम् ।
मत्तः सर्वं समुद्भूतं ब्रह्माण्डं भूर्भुवादिकम् ॥ ४२ ॥
वरदोऽस्मि वरार्हाणां शापदोऽस्मि दुरात्मनाम् ।
ब्राह्मण्यं मत्प्रसादाच्च अक्षयं ते भविष्यति ॥ ४३ ॥

ततोऽसौ विप्रतांयातो मतङ्गोलिङ्गदर्शनात् । पुनः पूजाप्रभावेणब्रह्मलोकंगतोद्विजः
ब्राह्मण्यं दुर्लभं लब्धं लिङ्गस्यास्य प्रभावतः । मतङ्गेनवरारोहे तस्माद्देवोविगीयते
मतङ्गेश्वरको लोके ब्रह्मलोकप्रदायकः । वर्णाश्रमेषु विद्विष्टाः पाषण्डवचने रताः ॥

निर्मर्यादा निराचारा निःशङ्काश्चातिलोलुपाः ।
निर्घृणाः क्रूरकर्माणो धृष्टाः कलियुगे नराः ।
दर्शनात्तस्य लिङ्गस्य तेऽपि यान्ति त्रिविष्टपम् ॥ ४७ ॥
ये विशुद्धा महाभागा ध्यानिनो मुक्तिभागिनः ।
ते पश्यन्ति कलौ देवि ! मतङ्गेश्वरमीश्वरम् ॥ ४८ ॥

ब्रह्मध्यानपरा ये च यज्ञदानक्रियारताः । ते पश्यन्ति कलौ देवि! मतङ्गेश्वरमीश्वरम्
येऽर्चयन्तिमहादेवि! मतङ्गेश्वरमीश्वरम् । कृतपुण्यानरामर्त्यैतेषां वासोऽक्षयोदिवि
एष ते कथितो देवि! प्रभावः पापनाशनः । मतङ्गेश्वरदेवस्यश्रृणु सौभाग्यमीश्वरम्

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्ये मतङ्गेश्वरमाहात्म्यवर्णनंनाम षष्टितमोऽध्यायः ॥

———

# एकषष्टितमोऽध्यायः

## सौभाग्येश्वरमाहात्म्यवर्णनम्

### ईश्वर उवाच

एकषष्टितमं विद्धि सौभाग्येश्वरमीश्वरम् । यस्यदर्शनमात्रेण सौभाग्यमतुलं भवेत्
प्रथमे प्राकृते कल्पे राजाभूदश्ववाहनः । प्राग्ज्योतिषपुरे रम्ये धर्मात्मा कीर्त्तिवर्द्धनः
अनेकयज्ञकृत्प्राज्ञः सङ्ग्रामेष्वपराजितः । तस्यभार्या विशालाक्षि! नाम्नामदनमञ्जरी
काशिराजसुतासुभ्रूरूपेणातीव शोभना । दक्षासुशीलाधर्मिष्ठा गृहव्यापारकोविदा
चतुःषष्टिकलायुक्ता सदाभर्तृहिते रता । पूर्णेन्दुवदनासौम्या सदा मधुरभाषिणी
पूर्वकर्मवशाद्देवि! दुर्भगासमजायत । सानेष्टा तस्यनृपतेर्नेत्रोद्वेगकरी सदा ॥ ६ ॥
श्रोत्रोद्वेगकरं वाक्यं तस्यराज्ञः करोति सा । ददाहलोचनेराज्ञस्तस्याःसंदर्शनंसदा

मूर्छां प्राप्नोत्यसह्यां स तस्याः स्पर्शेन भूपतिः ।
कदा चालोकितो राजा तया प्रेम्णा वरानने! ॥
दह्यमानोऽतितीव्रेण वह्निना वाक्यमब्रवीत् ॥ ८ ॥

द्वाःस्थैतां दुर्भगां भार्यामादाय विपिने वने । परित्यजाशु नैतत्ते विचार्यं वचनं मम
ततोनृपस्यवचनमविचार्यमवेक्ष्य सः । द्वाःस्थस्तत्याज तां सुभ्रूमारोप्यस्यन्दनंवने
सा च त्यक्ता वने शून्ये रुदती च मुहुर्मुहुः । सस्मार तं महीपालं तममन्यत दैवतम्

अथसाचारुसर्वाङ्गीतत्रासक्तात्ममानसा । निःश्वासपरमानिन्ये दिनशेषंतथानिशाम्
निःश्वसन्त्यनवद्याङ्गी हाहेति रुदतीमुहुः । मन्दभाग्येतिचात्मानं निनिन्दमदिरेक्षणा
न विहारे न चाहारे रमणीये न तद्वने । न कन्दरेषु शैलानां सा बबन्ध तदा रतिम्॥

त्यक्ता तेन वरारोहे! निनिन्द निजयौवनम् ॥ १४ ॥

दुर्भगाऽहं क्व जाताऽत्र दुष्टदैववशीकृता । कथं प्राप्तः स मे भर्त्ता तादृशो नृपसत्तमः

धन्योऽयमतिपुण्योऽयं योऽयं यौवनगोचरः ।
अन्यासामसतीनां च रमिष्यति न संशयः ॥ १६ ॥
अभीष्टा कस्यचित्कान्ता कान्तः कस्याश्चिदीप्सितः ।
परस्परानुरागाढ्यं दाम्पत्यमतिदुर्लभम् ॥ १७ ॥

ममाऽयं वल्लभो राजा न चाहं नृपवल्लभा । परस्परानुरागो हि धन्यानामेव जायते
यद्यद्य स महीपालो न मया सङ्गमेष्यति । तत्कामाग्निरवश्यंमांक्षपयिष्यतिदुःसहः
रमणीयमभूद्यत्तु पुंस्कोकिलनिनादितम् । हीनं हि वल्लभेनैवं दहतीवाद्य मे वनम्
इत्थं सा मदनाविष्टा विलपन्ती पुनः पुनः । ददर्श तापसं तत्र त्रिकालज्ञं दृढव्रतम्
मेखलाजिनकौपीनदण्डकाष्ठोपजीवनम् । महौजसंमहाभागं मुमुक्षुं मुनिपुङ्गवम्

उदयादित्यसङ्काशं विभावसुसमद्युतिम् ।
तं दृष्ट्वा सहसोत्थाय सा राज्ञी दुर्मता सती ॥ २३ ॥
विनयेनोपसङ्गम्य प्रणिपत्याऽभिवाद्य च ।
वियोगकारणं राज्ञः पप्रच्छ प्रणता सती ॥ २४ ॥

भगवन्काशिराजस्य सुताहमतिवल्लभा । भगिनी शत्रुसेनस्य मातुश्चातीव वल्लभा
अश्ववाहनसञ्ज्ञेन नृपेणोढा महामुने! । धर्मतो धर्मकल्पेन प्रजापतिसमेन तु ॥२६॥

सा किमर्थं न चाभीष्टा जाताऽहं तस्य भूपतेः ।
स चातीव ममाभीष्टो नृपतिः सर्वदा विभो !॥ २७ ॥

दुर्भगाहं कथंजाता कर्मणा केन तापस !। कथम्भवति वश्यो मे भर्त्ता नृपतिसत्तमः

सौभाग्यं च कथं मे स्यादिति सत्यं च कथ्यताम् ॥ २८ ॥

तस्यास्तद्वचनंश्रुत्वासमुनिःसंशितव्रतः । ज्ञानेनकथयामास तस्यादौर्भाग्यकारणम्
पाणिग्रहणकालेत्वंग्रहैःपापैर्विलोकिता । भर्तातेनृपतिः पुत्रि!ग्रहैःसौम्यैर्विलोकितः

तेन ते वल्लभो राजा न त्वं भूपस्य वल्लभा ।
इति तस्य वचः श्रुत्वा सा राज्ञी दीनमानसा ॥
पप्रच्छ विनयोपेता भक्तिनम्रात्मकन्धरा ॥ ३१ ॥

भगवन्केन दानेन स्नानेन नियमेन च । कर्मणा केन सौभाग्यं परमं हि कथम्भवेत् ॥

इति तस्या वचः श्रुत्वा स मुनिः संशितव्रतः ।
कथयामास माहात्म्यं सौभाग्यं येन लभ्यते ॥ ३३ ॥

महाकालवनेपुत्रि! लिङ्गंसौभाग्यदायकम् । मतङ्गेश्वरपार्श्वे तु विद्यतेऽभीष्टदायकम्

तस्य दर्शनमात्रेण सौभाग्यं समवाप्स्यसि ॥ ३४ ॥
इन्द्राण्याऽऽराधितं लिङ्गं पुरा सौभाग्यकारणात् ।
सौभाग्यं परमं लब्धं नष्टः शक्रोऽपि लब्धवान् ॥
तस्माद्गच्छ ममादेशान्महाकालवनं शुभम् ॥ ३५ ॥
सौभाग्यं भविता तत्र कान्तेन सह दर्शनम् ।
पुत्रो भविष्यति शुभे! तस्य लिङ्गस्य दर्शनात् ॥ ३६ ॥

इत्युक्ता सा तदा तेन तापसेन वरानने !। विद्यते यत्र तल्लिङ्गं महाकालवनंगता ॥
ददर्शप्रणयोपेतालिङ्गंसौभाग्यदायकम् । दर्शनात्तस्यलिङ्गस्यराजासस्मारतांप्रियाम्
पप्रच्छजमदग्निं तु क गता मे प्रिया विभो!। भक्षिताविपिनेविप्रसिंहव्याघ्रनिशाचरैः

मया त्यक्ता नृशंसेन अहं तस्यास्तु वल्लभः ।
एवं ब्रुवाणो नृपतिः प्रत्युक्तो जमदग्निना ॥ ४० ॥

न भक्षितासाभूपाला सिंहव्याघ्रनिशाचरैः । साचाविप्लुतचारित्रात्वद्भक्ताचपतिव्रता
महाकालवनंराजन्!गतासौभाग्यकाम्यया । भार्यारक्ष्यामहीपालइतिसाश्रुतिरुत्तमा

भार्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता ।
आत्मा हि जायते तस्यां सा रक्ष्याऽतो नरेश्वर !॥ ४३ ॥

धर्महानिश्चानुदिनमभार्यस्य भवेन्नृप। नित्यक्रियाया विभ्रंशः स चापिपतनाय वै

पत्न्याऽनुकूलया भाव्यं यथाशीलेऽपि भर्त्तरि।

दुःशीला दुर्भगा भार्या पोषणीया नरेश्वर!॥ ४५॥

इति तस्य वचः श्रुत्वा समायातो नरेश्वरः। महाकालवनेरम्ये ददर्शस्वांप्रियां तदा

सौभाग्यालङ्कृतंसुभ्रू पूजयन्तींमहेश्वरम्।दृष्ट्वास्नेहेनचालिङ्ग्यप्रत्युवाचसतांप्रियाम्

विरहेण त्वदीयेन सन्तप्तोऽहं वरानने!। अद्य मे सफलं चक्षुर्जीवितं च सुजीवितम्

यत्त्वां पश्यामि सुभगे! कृतार्थोऽहं कृतस्त्वया।

एवं दृष्ट्वाऽतिहर्षेण सा ददर्श तदा पतिम्॥

उवाच च प्रसीदेति भूयो भूयो मुदान्विता॥ ४९॥

ततः स राजा रभसात्परिष्वज्याऽऽह भामिनीम्।

प्रिये प्रसन्न एवाहं भूयो भूयो ब्रवीमि किम्॥ ५०॥

ततः समागमो जातो जातः पुत्रोऽतिधार्मिकः।

तस्य लिङ्गस्य माहात्म्याद्भक्तोनाम स गीयते॥ ५१॥

सौभाग्यमतुलं लब्धं तया देव्या हिमात्मजे!।

सौभाग्येश्वरसञ्ज्ञं तु ततः प्रभृति भूतले॥ ५२॥

ये पश्यन्ति विशालाक्षि सौभाग्येश्वरमीश्वरम्।

तेषां कुले न दौर्भाग्यं जायते पर्वतात्मजे!॥ ५३॥

भविष्यति न दारिद्र्यं वियोगो न च बन्धुभिः।

पुत्रमित्रकलत्राणां लिङ्गस्य च समर्चनात्॥ ५४॥

नोपसर्गभयं तेषां ये पश्यन्ति वरानने!। सौभाग्येश्वरसञ्ज्ञं तु न ग्रहादिभयं भवेत्

सर्वबाधाविनिर्मुक्तो धनधान्यसमन्वितः। मनुष्योजायतेदेवि!सौभाग्येश्वरदर्शनात्

सम्पूज्यः सर्वलोकेषु सौभाग्यैकनिधिर्भवेत्॥ ५६॥

जायते भूपतिर्लोके सार्वभौमो वरानने। नापुत्रा नाधना नारी न दीनानचदुःखिता

जायते दुर्भगा नैव सौभाग्येश्वरदर्शनात्॥ ५७॥

नवैधव्यं नच व्याधिर्नाकालमरणं प्रिये !। नपुत्रभर्तृजं दुःखं जायते लिङ्गदर्शनात् ॥
यथा लक्ष्मीर्हरेर्नित्यं सावित्री ब्रह्मणः स्मृता ।
रोहिणीवल्लभा चेन्द्रोः शची शक्रस्य वल्लभा ॥
तथा सा जायते नारी सौभाग्येश्वरदर्शनात् ॥ ५६ ॥
एष ते कथितो देवि! प्रभावः पापनाशनः । सौभाग्येश्वरदेवस्य शृणु रूपेश्वरंप्रिये

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्ये सौभाग्येश्वरमाहात्म्यवर्णनं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

————

# द्विषष्टितमोऽध्यायः

## रूपेश्वरमाहात्म्यवर्णनम्

### ईश्वर उवाच

द्विषष्टिकं विजानीहि देवं रूपेश्वरं प्रिये !। यस्यदर्शनमात्रेण रूपवाञ्जायते नरः ॥ १
पाद्मकल्पे महादेवि! पद्मोनाम महीपतिः । पद्मगर्भसमुद्भूतो बभूवातिपराक्रमी ॥
पृथिव्याश्चतुरन्ताया जातो धर्मरतो बली ॥ २ ॥
सकदाचिन्महाबाहुः प्रभूतबलवाहनः । वनं जगाम गहनं हयनागशतैर्वृतः ॥ ३ ॥
बिल्वार्कखदिराकीर्णं कपित्थधवसङ्कुलम् । मृगसिंहैर्वृतंघोरैरन्यैश्चापि वनेचरैः ॥
तत्र वन्यसहस्राणि हत्वा सबलवाहनः । राजा मृगप्रसङ्गेन वनमन्यद्विवेश सः ॥ ५
एक एवोत्तमबलः क्षुत्पिपासासमन्वितः । स वनस्यांतमासाद्य महदारण्यमासदत्
तच्चाप्यतीत्य नृपतिर्ददर्शाश्रममुत्तमम् । मनःप्रह्लादजननं दृष्टिकान्तकमतीव च ॥ ७
पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलम् ।
ततोऽगच्छन्महाबाहुरेकोऽमात्यान्विसृज्य तान् ॥ ८ ॥

नापश्यदाश्रमे तस्मिंस्तमृषिं संशितव्रतम् । उवाच कइहेत्युच्चैर्वनं सन्नादयन्निव

श्रुत्वाऽथ तं तथा शब्दं कन्या श्रीरिव रूपिणी ।

निश्चक्रामाश्रमात्तस्मात्तापसाकारधारिणी ॥ १० ॥

सा तं दृष्ट्वैव राजानं पद्मगर्भसमुद्भवम् । आसनेनार्चयित्वा च पप्रच्छ नाम तं तदा ॥

उवाच स्मयमानाथ किं कार्यं क्रियतामिति ।

तामब्रवीत्ततो राजा कन्यां मधुरभाषिणीम् ॥ १२ ॥

दृष्ट्वा चैवानवद्याङ्गीं यथावत्प्रतिपूजितः । आगतोऽहं महाभागे मुनिश्रेष्ठमुपासितुम्

क गतो भगवान्भद्रे तन्ममाचक्ष्व शोभने ॥ एवमुक्तातु सा कन्या तेन राज्ञा तदाश्रमे

हसन्ती प्रत्युवाचेदं वाक्यं समधुराक्षरम् ॥ १४ ॥

कन्याहं पृथिवीपाल! कौमारब्रह्मचारिणः । तपस्विनोधृतिमतो धर्मज्ञस्यमनस्विनः

सुता कण्वस्य मामेवं विद्धि त्वंमनुजाधिप ॥ कण्वंहिपितरं मन्येपितरंस्वमजानती

तस्यास्तद्वचनं श्रुत्वा नृपेणोक्तं वरानने ॥ सुव्यक्तंराजपुत्रीत्वंयथाकल्याणिभाषसे

भार्या मे भव सुश्रोणि ब्रूहि किंकरवाणिते । सुवर्णरत्नवासांसि कुण्डलेपरिहारके

आहरामि तवाद्याहं भार्या मे भव शोभने ॥ गान्धर्वेणचमां भीरु विवाहेनैवसुन्दरि

विवाहानां च रम्भोरु गान्धर्वः श्रेष्ठ उच्यते ॥ १६ ॥

नृपस्य वचनं श्रुत्वा कन्या वचनमब्रवीत् । मुहूर्त्तंसंप्रतीक्षस्व स मांतुभ्यंप्रदास्यति

राजोवाच

इच्छामि त्वां वरारोहेभजमानमनिन्दिते । तदर्थं मांस्थितंविद्धित्वयामेऽपहृतंमनः

आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः । आत्मनैवात्मनोदानं कर्तुमर्हसिधर्मतः

कन्योवाच

यदि धर्मपथस्त्वेष यदि चात्माप्रभुर्मम । सत्यंमे प्रतिजानीहि दत्तमात्मानमद्य मे ॥

इति तस्या वचः श्रुत्वापरिणीता नृपेणहि । गान्धर्वेणविवाहेन कामासक्तेनपार्वति

कामिता सानृपेणैवततोगन्तुं समुद्यतः । एतस्मिन्नंतरे देवि! कण्वश्चाश्रममभ्यगात्

सा कन्या पितरं दृष्ट्वा ह्रिया नोपजगाम तम् ।

विज्ञायाऽथ च तां विप्रो दिव्यज्ञानो महातपाः ॥ २६ ॥
उवाचपरमं क्रुद्धस्तांकन्यांकाममोहिताम् । त्वयाऽपिदुष्टे रहसिमामवज्ञाय यत्कृतः
स्वयं स्वयम्वरो मोहात्तस्मात्कृष्णा भविष्यसि ।
कुत्सिता निर्घृणा दीना निर्लज्जा रूपवर्जिता ॥ २८ ॥
अयं ते नृपतिर्भर्त्ता दुष्टरूपो भविष्यति ॥ २९ ॥
इत्युक्त्वा तत्क्षणाज्जातासा कन्यारूपवर्जिता । कुरूपोनृपतिर्जातःशापात्तस्यमहात्मनः
अथ प्रसादयामास सा कन्यापितरं तदा । बालानभिज्ञामूढाहं मन्मथेन प्रपीडिता
अज्ञानाच्च कृतं पापं तात त्वं क्षन्तुमर्हसि । अयंमहीपतिस्तात प्रत्यग्लीनो महाव्रतः
न चाहं प्रार्थिता तेन मयासौ प्रार्थितोनृपः । तस्मादनुग्रहं तातकर्तुमर्हसि चावयोः
इति तस्या वचः श्रुत्वा स विप्रोऽतिकृपान्वितः ।
उवाच स्वां दुहितरमाश्वास्यैवं पुनः पुनः ॥ ३४ ॥
नैववागनृतं पुत्रि! यावदद्य स्मराम्यहम् । दैवमत्रपरं मन्ये धिग्बुद्धिं धिक्पराक्रमम्
अकार्यं कारितो येन बलादहमनिन्दिते !। उपदेशं प्रदास्यामि तत्त्वं कर्तुमिहार्हसि ।
महाकालवने पुण्ये लिङ्गं रूपप्रदायकम् । पशुपेश्वरपूर्वेतु विद्यतेऽभीष्टदायकम् ॥
तत्त्वं गच्छत्वरायुक्ता सह भर्त्रानृपेणहि । रूपंप्राप्स्यसि दुष्प्राप्यं लिङ्गदर्शनमात्रतः
इत्युक्ता सा तदा कन्या सह भर्त्रा गता प्रिये !।
महाकालवने रम्ये यत्र लिङ्गमनुत्तमम् ॥ ३९ ॥
ददर्श परया भक्त्या सच राजा नरोत्तमः । तत्क्षणाद्दिव्यदेहासा रूपेणातिमनोहरा ॥
दिव्यवस्त्रपरिधाना दिव्यालङ्कारभूषिता ॥ ४० ॥
सच राजा तथा जातःकन्दर्पसदृशाकृतिः । रूपेणाप्रतिमो लोकेतस्यलिङ्गस्यदर्शनात्
अतोलोकेषु विख्यातो देवो रूपेश्वरः प्रिये । रूपदोधनदोऽस्त्यर्थं पुत्रदःस्वर्गदस्तथा
स च राजा स्वकं प्राप्तो राष्ट्रं सस्यादिसंयुतम् ।
प्रियया परया सार्द्धं चक्रे राज्यमकण्टकम् ॥ ४३ ॥
राज्यं कृत्वा गतः स्वर्गं भार्ययासहपार्वति । देदीप्यमानो वपुषाद्द्वितीय इवभास्करः

विमानेन सुदीप्तेन वन्द्यमानो दिवालये । दर्शनात्तस्य लिङ्गस्य प्राप्तः पदमनामयम्
ये पश्यन्ति विशालाक्षि देवं रूपेश्वरं शिवम् । नतेरूपेण हीयन्ते यशसाचकुलेन च
सदा रूपकरं लिङ्गं भुक्तिमुक्तिफलप्रदम् । ये पश्यन्तिवरारोहे तेषांलोकाःसदाऽक्षयाः
येऽर्चयन्ति नरा नित्यं देवं रूपेश्वरं परम् । तेऽर्चितायान्ति यानेनममलोकंसनातनम्
सएव सुकृती लोके कुलं तेनाप्यलङ्कृतम् । यः पूजयति रूपेशंरूपसौभाग्यदायकम्
यः पूजयति देवेशं प्रसङ्गादपि पार्वति !। धनवान्रूपवान्सोऽपि राजा भवति भूतले
एष ते कथितो देवि! प्रभावः पापनाशनः । रूपेश्वरस्य देवस्य धनुःसाहस्रकं श्रृणु

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये रूपेश्वरमाहात्म्यवर्णनंनाम
द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

# त्रिषष्टितमोऽध्यायः

## धनुःसाहस्रेश्वरमाहात्म्यवर्णनम्

### श्रीहर उवाच

धनुःसाहस्रनामानमीश्वरंश्रृणु पार्वति !। त्रिषष्टिसङ्ख्यकं दिव्यंदर्शनात्पापनाशनम
विदूरथोनाम नृपःख्यातकीर्त्तिरभूद्भुवि । तस्यपुत्रद्वयं जातंसुनीतिः सुमतिस्तथा
एकदा तु वनं यातो मृगयां स विदूरथः । ददर्श गर्त्तं सुमहद्भूमेर्मुखमिवोद्गतम्
तं दृष्ट्वा चिन्तयामास किमेतदिति पार्थिवः । पातालविवरं मन्ये वडवानलसन्निभम्
चिन्तयन्निव तत्रासौ ददर्श विजने वने । ब्राह्मणं सुव्रतं नाम तपस्विनमकल्मषम् ॥
स तं पप्रच्छ नृपतिः किमेतदिति भो द्विज !॥ ६ ॥

### ब्राह्मण उवाच

दानवः सुमहावीर्यो वसत्युग्रो रसातले ।

कुजम्भोनाम विख्यातो भिनत्ति वसुधामिमाम् ॥ ७ ॥
तमजित्वा कथं राज्यं भोक्ष्यसे वसुधाधिप !।
तेन विध्वंसिता विप्रा रात्रौ निःसृत्य पार्थिव !॥ ८ ॥
उपद्रुतास्तथादेशा ध्वस्ताश्चैवतथाश्रमाः। आप्याययतिदैत्योऽयंसवलीमुशलायुधः
यदि त्वं घातयस्येनं पातालान्तरगोचरम्। ततः समस्तवसुधापतिरेव भविष्यसि
इति विप्रवचः श्रुत्वा मन्त्रयामास पार्थिवः।
मन्त्रिभिः सहितोऽमोघं श्रुत्वा मुशलमद्रिजे !॥ ११ ॥
तंमन्त्रं क्रियमाणंतुसूनुभ्यांसहमन्त्रिभिः। तत्पार्श्ववर्त्तिनी कन्याशुश्रावाथमुदावती
ततः कतिपयाहे तु तां कन्यां जलजेक्षणाम्।
जहारोपवनाद्दैत्यः कुजम्भः स्वसखीवृताम् ॥ १३ ॥
एतच्छ्रुत्वा महीपालः क्रोधपर्याकुलेक्षणः। उवाच पुत्रौजानेऽहंस कुजम्भो महासुरः
दृष्ट्वा भूमौ पुरा गर्त्ते तत्र संशयिते मयि। कथितो द्विजमुख्येनमया पृष्टेन पुत्रकौ॥
स हन्यतां सोऽपहर्त्ता मुदावत्याः सुदुर्मतिः।
प्रस्थितौ नृपभक्त्याऽथ स्वसैन्यपरिवारितौ ॥ १६ ॥
तौ सुतौतत्रसम्प्राप्तौपातालेपितृशासनात्। युयुधातेकुजम्भेनस्वशक्त्यासेनयावृतौ
ततः परिघनिस्त्रिंशशक्तिशूलपरश्वधैः। बाणैश्चिरतरं युद्धं तेषामासीत्सुदारुणम्॥
ततो मायाबलवता तेन दैत्येनतत्क्षणात्। अमोघेनाद्वितीयेन मुशलेन वरानने !॥१९
हतसैन्यौ रणे बद्धौ राजपुत्रौ महाबलौ ॥ २० ॥
ततः श्रुत्वा महीपालो विवर्णवदनोऽभवत्। बद्धपुत्रः परामार्त्तिं जगाम गिरिपुत्रिके
रुरोद बहुधाऽत्यर्थं पुत्रस्नेहेन पार्थिवः। ततो विलपतस्तस्य मार्कण्डेयो महामुनिः
अनेकसृष्टिसंहारदृष्टकार्यपरावरः ॥ २२ ॥
उदितादित्यसङ्काशः सप्तकल्पानुगो वशी। आजगामनृपाभ्याशे विलपन्तं ददर्शसः
राजानं कथयामास त्रिकालज्ञो महामुनिः ॥ २३ ॥
मा शुचस्त्वं महीपाल क्षत्रियोऽसि दृढव्रतः।

क्व शोकः क्व महीपालो दुर्जेयो लोकपालवत् ॥ २४ ॥
शोकं कुपुरुषाचीर्णं त्यजत्वं राजसत्तम !। उद्यमं कुरु राजेन्द्र कुजम्भं घातयिष्यसि
नात्युच्चंमेरुशिखरं नातिनीचंरसातलम् । व्यवसायःसखातस्यनास्तिदूरेमहोदधिः
महाकालवने लिङ्गमाराधय समाहितः । रूपेश्वरस्य देवस्य पार्श्वेदक्षिणतःस्थितम्
धनुः साहस्रतुल्यं तु मुशलस्य निवारणम् ।
धनुः प्राप्स्यसि राजेन्द्र! कुजम्भं विनिपातय ॥ २८ ॥
धनुः साहस्रहस्तैस्तु रक्षितं योधसत्तमैः । लिङ्गंदेवासुरैर्युद्धे सहस्राक्षेण सेवितम्
इन्द्रेण च धनुर्लब्धं जम्भो वै येन पातितः ॥ २६ ॥
तस्य तद्वचनं श्रुत्वा स राजाथविदूरथः । जगामत्वरितो देवि! महाकालवनं शुभम्
ददर्श तत्र तल्लिङ्गं पूजयामास भक्तितः । तस्यतुष्टस्तदा देवोददौदिव्यं धनुस्तदा
धनुः साहस्रतुल्यं च मुशलस्य निवारणम् ।
धनुर्लब्ध्वा तदा राजा बद्धगोधांगुलित्रवान् ॥
जगाम धीरः पातालं तेन गर्तेन सत्वरम् ॥ ३२ ॥
ततो ज्यास्वनमत्युग्रं स चक्रे पार्थिवस्तदा । येनपातालमखिलमासीदापूरितान्तरम्
ततोज्यास्वनमाकर्ण्यकुजम्भोदानवेश्वरः । आजगामातिकोपेनस्वसैन्यपरिवारितः
ततो युद्धमभूत्तस्यसह राज्ञा वरानने !। दिनानि त्रीणिसयदा योधितस्तेनदानवः
ततः कोपपरीतात्मा मुशलायाभ्यधावत ।
गन्धमाल्यैस्तथा धूपैः पूज्यमानः स तिष्ठति ॥ ३६ ॥
यावद्गृह्णाति मुशलं तावत्सा च मुदावती । पस्पर्शचन्दनव्याजैरनेकैश्च पुनः पुनः ॥
ततः स गत्वा युयुधे मुसलेनासुरेश्वरः । तदा मुसलपातास्ते धनुषा निष्प्रभीकृताः
धनुर्ज्याघातशब्देन पतिते भूतले तदा । ततो वैवस्वतं लोकं कुजम्भोनाम दानवः
ततोऽपतत्पुष्पवृष्टिस्तस्योपरि महापतेः । जगुर्गन्धर्वपतयो देववाद्यानि सस्वनुः
स चापि राजा तं हत्वा पुत्रौ लब्ध्वा सुतां तदा ।
मुदावतीं मुदा युक्तो हर्षगद्गदनिर्भरः ॥ ४१ ॥

पुत्राभ्यां सहितो देवि ! सुसम्पूर्णमनोरथः । सान्तःपुरपरीवारः पुनरायाद्वरानने! ॥
महाकालवने रम्ये यत्र तल्लिङ्गमुत्तमम् । पूजयामास रत्नैश्च वस्त्रैराभरणैस्तथा ॥
ततः स पूजितोदेवैःशक्रेण च पुनःपुनः । अस्य लिङ्गस्यमाहात्म्याद्धनुःप्राप्तंनृपेणवै
कुजम्भोऽपि हतोदैत्योदेवविद्वेषकारकः । धनुःसाहस्रनामायमतः ख्यातिंगमिष्यति
भक्त्या ये पूजयिष्यन्ति धनुःसाहस्रमीश्वरम् ।
यास्यन्ति शत्रवस्तेषां क्षयं नैवाऽत्र संशयः ॥ ४६ ॥
अर्चिते देवदेवेशे धनुःसाहस्रिके शिवे । अर्चिताःसर्वदेवाःस्युर्वरदाश्च न संशयः ॥
प्रातर्मध्येऽपराह्णे च धनुःसाहस्रकं शिवम् ।
ये नमन्ति नरा नित्यं न ते नरकभोगिनः ॥ ४८ ॥
तीर्थानां च यथा गङ्गा रक्षिता योधसत्तमैः ।
तथाऽयं रक्षको देवो नाम्ना धनुःसहस्रकः ॥ ४९ ॥
तत्र गङ्गादितीर्थानि विद्यन्ते विविधानि च ।
सुरहस्यातिपुण्यानि सद्यः पापहराणि च ॥ ५० ॥
तेषांफलंविनिर्दिष्टं ये पश्यन्ति तु भक्तितः । धनुःसाहस्रकंनाम सदा शत्रुक्षयङ्करम्
एष ते कथितो देवि! प्रभावः पापनाशनः । धनुःसाहस्रदेवस्य देवं पशुपतिं शृणु ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्ये धनुःसाहस्रमाहात्म्यवर्णनंनाम
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

———

# चतुःषष्टितमोऽध्यायः

## पशुपतीश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

शृणु त्वं पशुपत्याख्यं चतुःषष्टिकमीश्वरम् । यस्यदर्शनमात्रेण पशुयोनिर्न लभ्यते
पशुपालो महादेवि! बभूव भुवि विश्रुतः । राजा परमधर्मिष्ठः पशूनां पालने रतः ॥२

दिदृक्षुः स कदाचिच्च गतस्तोयनिधिं प्रति ।
ददर्श तत्र पुरुषान्पञ्च प्राधान्यतः स्थितान् ॥
एका स्त्री मुक्तकेशा सा भ्रमन्ती च पुनःपुनः ॥ ३ ॥

अथ राजाभयाविष्टोविसञ्ज्ञःसमपद्यत । सम्वेष्टितोदस्युभिस्तैस्तयानार्याविशेषतः
ततोन्येसमपातंचआगत्यनृपसत्तमम् । सम्वेष्ट्य संस्थितैःसर्वैस्ततोरुद्धोमहीपतिः
रुद्धे राजनि ते सर्वे एकीभूतास्तु दस्यवः । पतिताःपशुपालेन न मृताः पुनरुत्थिताः

तस्य तां धृष्टतां ज्ञात्वा स्थैर्यं च नृपतेर्मृधे ।
तस्यैव नृपतेर्देहे लीनास्ते दश दस्यवः ॥ ७ ॥

अमूर्त्ताइवतेसर्वेएकीभूतास्ततोऽभवन् । तान्दृष्ट्वादुःखितोराजापशुपालोऽभवत्क्षणात्
अथापश्यत्तदाऽयान्तं नारदं मुनिपुङ्गवम् । ब्रह्मपुत्रं तपोयुक्तं पप्रच्छ स नृपस्तदा

पशुपाल उवाच

भगवन्ब्रह्मपुत्राद्य मया दृष्टं तु कौतुकम् । अकस्मात्पुरुषाःपञ्च समायाता भयावहाः

तैरहं वेष्टितो दुष्टैर्व्याकुलश्च कृतस्तदा ।
मुष्टिभिर्हन्यमानोऽहं स्वस्थो जातो द्विज! क्षणात् ॥ ११ ॥
ततोऽन्ये पुरुषाः पञ्च समायाता नियुध्य माम् ।
हन्यतां हन्यतामेष मुक्तिकामो नृपाधमः ॥ १२ ॥

एवंतैः पीडितोऽत्यर्थं पुनर्मोहमुपागतः । एतस्मिन्नन्तरे सा स्त्री मामुवाचपुनःपुनः

दृढोभव महाराज मा विषादंकुरु प्रभो!। हीनवीर्या ह्यमीघोराःसमर्थस्त्वंस्थिरो भव
तस्या वाक्येन विप्रेन्द्र! मया धैर्येण संयुगे । दश प्रधानपुरुषाजितास्तेनमृताः प्रभो
प्रलीना मच्छरीरे तु केऽप्यते काऽपि साऽबला ।
पशुपालवचः श्रुत्वा नारदो वाक्यमब्रवीत् ॥ १६ ॥
ये त्वया पुरुषा दृष्टास्त्वयि लीना जिता मृधे ।
बुद्धीन्द्रियाणि ते पञ्च पञ्च कर्मेन्द्रियाणि च ॥
भ्रमन्ती या च नारी सा त्वया दृष्टा नृपोत्तम!॥ १७ ॥
मनोरूपेण सा बुद्धिर्भ्रमत्येवहि न स्थिरा । जितानितानि पूर्वेणब्रह्मणालोककर्तृणा
सोऽपिक्रोधवशंनीत इन्द्रियैर्विषयैःप्रियैः । पितामहेनस्वेयज्ञेशम्भोर्भागोन कल्पितः
महादेवो जगन्नाथः सृष्टिसंहारकारकः । इन्द्रियैर्मोहितो राजन्क्रोधश्चक्रेसुरान्प्रति
सुरा विभूतयो यस्य क्रीडार्थं भुवनत्रयम् ।
तेन भागनिमित्तार्थं चक्रे राज्यं धनुस्तदा ॥ २१ ॥
पूषणश्च दन्ताः सम्भग्ना मोहितश्च दिवाकरः ।
नेत्रे भग्ने भगस्यापि विद्धो यज्ञो मृगाकृतिः ॥ २२ ॥
पशवश्च कृता देवा मुनयो वेदवर्जिताः । ऋषीणांधर्मशास्त्राणि हृतानिविभुनातथा
दुर्जयानीन्द्रियाण्याहुर्मुनयो वेदपारगाः । मनोरूपेण या बुद्धिः सा चातीव सुदुर्जया
तस्माद्राजन्महाबाहो मा विषादं वृथा कृथाः । तस्यतद्वचनंश्रुत्वानारदस्यमहात्मनः
पशुपालो महादेवि वक्तुं समुपचक्रमे ॥ २५ ॥

पशुपाल उवाच

कथंतेभगवन्मुक्तादेवाःशक्रपुरोगमाः । पशुभावाच्च ब्रह्मापिश्रोतुमिच्छामिकथ्यताम्
तस्य तद्वचनं श्रुत्वा नारदः पुनरब्रवीत् ।
पशुत्वेऽपि गता देवाः ऋषिभिर्मुनिभिः सह ॥ २७ ॥
ब्रह्माणमग्रतःकृत्वा गताः शरणमीश्वरम् । स्तुतिभिस्तोषितोदेवो भक्तानुग्रहकारकः
उवाच वचनं राजन्यत्कर्तव्यं तदुच्यताम् ॥ २६ ॥

देवा ऊचुः

वेदशास्त्राणि विज्ञानं देहि नो भव मा चिरम् ॥

देवस्त्वं पूर्ववद्देव! यदि तुष्टो महेश्वरः ॥ ३० ॥

ईश्वर उवाच

भवन्तः पशवः सर्वे मया सार्द्धं च गम्यताम् । महाकालवनेक्षेत्रे पशुभावविमोक्षके

अहंपतिर्वोभविता ततोमोक्षमवाप्स्यथ । भवतामनुकम्पार्थं लोकानुग्रहकारणम्

लिङ्गरूपी भविष्यामि नाम्ना पशुपतीश्वरः ॥ ३२ ॥

अथ ते त्रिदशाः सर्वे दृष्ट्वादेवं तमीश्वरम् । पशुभावविनिर्मुक्ता गताहृष्टास्त्रिविष्टपम्

ब्रह्मा पशुपतिं प्राह प्रसन्नेनान्तरात्मना ॥ ३३ ॥

ये त्वां पश्यन्ति देवेश!भक्त्यापरमया युताः । तेषांकुलेपशुत्वं चये गताःपितरःप्रभो

स्वकैः कर्मविपाकैश्च तेषां मोक्षो भविष्यति ॥ ३४ ॥

अज्ञानाज्ज्ञानतो वापि यत्पापं क्रियते नरैः । तत्पापंविलयं यातुतस्यदेवस्यपूजनात्

ते नराः पशवो लोके किं तेषां जीविते फलम् ।

यैर्न दृष्टः पशुपतिः पशुयोनिविमोचकः ॥ ३६ ॥

कौमारे यौवने वाल्ये वार्द्धक्येयदुपार्जितम् । तत्पापंविलयंयातिदृष्ट्वापशुपतिंशिवम्

पौषमासे तु सम्प्राप्ते ये त्वां पश्यन्तिमानवाः । तेषांत्वंवरदोदेवसदाभीष्टकरोभवेत्

सूर्यग्रहे यथादत्तं कुरुक्षेत्रेविशेषतः । पात्रे दानं सुवर्णस्य प्रोक्तमक्षय्यमव्ययम् ॥ ३९

पौषमासे दिनैकेन नराणामधिकं तथा । तद्दर्शनेन देवेश! भविष्यति न संशयः ॥४०

इत्युक्त्वा भगवान् ब्रह्मा ब्रह्मलोकंगतो नृप !। कृतकृत्यःप्रहृष्टात्मामुनिभिःकविभिःसह

तस्मात्त्वमपि राजेन्द्र! यदीच्छसि परां गतिम् ।

समाराधय तल्लिङ्गं पशुयोनिविमोचनम् ॥

महाकालवनं गत्वा इन्द्रेश्वरस्य दक्षिणे ॥ ४२ ॥

तस्य तद्वचनं श्रुत्वा नारदस्य महात्मनः । जगाम पशुपालोऽपिमहाकालवनंप्रिये ॥

दर्शनात्तस्य लिङ्गस्य गतोऽसौ परमां गतिम् ॥ ४३ ॥

एष ते कथितो देवि! प्रभावः पापनाशनः । पशुपत्याख्यदेवस्य शृणु ब्रह्मेश्वरं शिवम्

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्ये पशुपतीश्वरमाहात्म्यवर्णनं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

## पञ्चषष्टितमोऽध्यायः

### ब्रह्मेश्वरमहिमवर्णनम्

श्रीहर उवाच

पञ्चषष्टिकसङ्ख्याकं विद्धि ब्रह्मेश्वरं प्रिये । यस्य दर्शनमात्रेण ब्रह्मलोको ह्यवाप्यते
पुलोमानाम दैत्येन्द्रो महाबलपराक्रमः । पौलोमानां सहस्रैस्तु पूज्यमानःस तिष्ठति
आनर्चुस्तेऽपि तं दैत्यं सुरेशं त्रिदशा इव । स कदाचित्समक्षं तु दैत्यानामिदमब्रवीत्

अद्यापि लोकपालानामर्केन्दुज्वलनाम्भसाम् ।
शतक्रतोर्द्धनेशस्य यमस्य वरुणस्य च ॥ ४ ॥

यदि नाम ततः किमेतपसा जीवितेन च । सोऽहं विद्रावयिष्यामि सर्वानेव दिवौकसः
सर्वैरेतैः परिवृतः पौलोमैर्बलवत्तरैः । इत्युक्त्वा गतवान्देवि! सागरं दैत्यसम्वृतः ॥

तावच्छयानं सहसा ह्यपश्यन्मधुसूदनम् ॥ ६ ॥

शारदाभ्रसमाभासं मध्येकालं यथा घनम् । तमालोक्य ततो दैत्यानब्रवीदनुगांस्तथा
अयं स दानवगिरिवज्रो हि मधुसूदनः । कीर्त्तिकान्ताकलाकेलिवैधव्यादेशकोद्विषाम्
दैत्यसीमन्तिनीकान्तपत्रवल्लीप्रभञ्जकः । अयमस्मज्जयवधूवैधव्यादेशकः परः ॥ ६ ॥

गतशङ्कः स्वपित्येकः सर्वदा कुटिलाशयः ।
हन्तव्यस्त्वरया दुष्टः काङ्क्षितो दर्शनं गतः ॥ १० ॥
इत्युक्त्वा स हि दैत्येन्द्रः पुलोमाऽतिरुषान्वितः ।

अभिदुद्राव वेगेन तावदग्रे पितामहम् ।

ददर्श नाभिकमले चिन्तयानं पुनः पुनः ॥ ११ ॥

अथ व्याकुलतां प्राप्तोब्रह्माद्दृष्ट्वातदद्भुतम् । आयान्तंदैत्यसिंहानांसैन्यंरणसुदुर्जयम्

अथ बोधं गतः क्षिप्रं कैटभारिर्महाबलः । ददर्शाग्रे पुलोमं तु स्वसैन्यपरिवारितम्

अजेयः सङ्गरे धीरो ब्रह्माणमिदमब्रवीत् ॥ १४ ॥

विष्णुरुवाच

पुलोमस्यविनाशार्थमुद्योगःक्रियतामिति । असौलब्धवरोदैत्यःसहसामांविजेष्यति

तस्माद्गच्छ त्वरायुक्तो महाकालवने शुभे । लिङ्गं द्रक्ष्यसितत्रैवसप्तकल्पोद्भवम्परम्

उत्तरे च्यवनेशस्य शिवशक्तिसमन्वितम् ।

तस्य लिङ्गस्य माहात्म्याद् ब्रह्म प्राप्स्यति शाश्वतम् ॥ १७ ॥

कुण्डेश्वरकरस्पर्शकारि वारि निरन्तरम् । तदानय गृहीत्वा तु तेनायं वध्यतामिति

इति तस्य वचः श्रुत्वा ब्रह्मा लोकपितामहः ।

आजगाम मुहूर्त्तेन यत्र तल्लिङ्गमुत्तमम् ॥ १९ ॥

स्तुतिं चकार सहसा दृष्ट्वा भक्त्या पितामहः ॥ २० ॥

ब्रह्मोवाच

नमस्ते दिव्यरूपाय नमस्ते बहुरूपिणे । नमोऽविषह्यवीर्याय नमो विश्वक्रियात्मने

नमः पिङ्गकपर्द्दायनमः खण्डेन्दुधारिणे । नमः कनकवर्णाय नमो वननिवासिने ॥

वन्दे त्वां भूतभर्त्तारं सदा शत्रुविनाशनम् । रणत्कनककेयूरं धृतपूर्णेन्दुमण्डलम्

वन्दे त्वां त्रिदशाध्यक्षंविश्वाध्यक्षंमहेश्वरम् । क्षीणसंसारदुःखौघंमुनिध्यातपदंसदा

वन्दे त्वां सर्वदा देवं दैत्यसङ्घातनाशनम् । टङ्कपट्टिशशूलाग्रधनुः खड्गगदाधरम् ॥

एवं स्तुतः स भगवाँल्लिङ्गरूपी महेश्वरः ।

किञ्चित्स्मितमुखः प्राह ब्रह्माणं लोककारणम् ॥ २६ ॥

किं तेऽभीष्टं करोम्यद्य किं ददामि पितामह !।

कस्मात्स्तौषि मुनिश्रेष्ठ! कस्मादार्तोऽसि दृश्यसे ॥ २७ ॥

इति लिङ्गवचःश्रुत्वा कथितंब्रह्मणातदा । वृत्तान्तंविस्तरात्सर्वंलिङ्गेनोक्तंतदाप्रिये
जलं गृहाण वाणीश! शस्त्रजं शत्रुवारणम् । हनिष्यसि क्षणेनैव पुलोमंसहसैन्यकम्
इत्युक्तः सत्वरो ब्रह्मागतो यत्र जनार्द्दनः । जलेन तेन तान्दैत्यान्पातयामास भूतले
स पुलोमा महानासीत्स्वारोचिषेऽन्तरे मनौ ।
कृष्णोऽपि ब्रह्मणा सार्द्धमाजगाम कुशस्थलीम् ॥ ३१ ॥
ददर्श तत्र तल्लिङ्गं नाम चक्रे जनार्द्दनः । ब्रह्मणा संस्तुतो देवोममानुग्रहकारणात् ॥
तस्माद्ब्रह्मेश्वरो नाम ख्याति लोकेषु यास्यति ॥ ३२ ॥
येद्रक्ष्यन्तिनराभक्त्यादेवं ब्रह्मेश्वरंशिवम् । तेब्रह्मलोकमाक्रम्य समेष्यन्तिममान्तिकम्
यस्तु पश्येत्प्रसङ्गेन देवं ब्रह्मेश्वरंशिवम् । कृतकृत्यः सपुरुषो नशोचेन्मरणं सदा ॥
यःपुष्करंनरोगत्वातपो वर्षशतंचरेत् । अन्यो ब्रह्मेश्वरंपश्येत्तस्य पुण्यंततोऽधिकम्
पञ्चपातकसंयुक्तो यो मर्त्यो दुष्टमानसः ।
सोऽपि गच्छेच्छिवं स्थानं दृष्ट्वा ब्रह्मेश्वरं शिवम् ॥ ३६ ॥
चान्द्रायणानांविधिवद्दशानामेव यत्फलम् । तत्फलं समवाप्नोतिब्रह्मेश्वरस्यदर्शनात्
इत्युक्त्वा गतवान्विष्णुर्वैकुण्ठं शाश्वतं प्रिये ! ।
ब्रह्मलोकं जगामाऽथ ब्रह्मा लोकपितामहः ॥ ३८ ॥
एष ते कथितो देवि! प्रभावः पापनाशनः । ब्रह्मेश्वरस्य देवस्यजलपेश्वरमथोशृणु
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डेऽ-
चतुरशीतिलिङ्गमाहात्म्ये ब्रह्मेश्वरमाहात्म्यवर्णनंनाम
पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

# षट्षष्टितमोऽध्यायः

## जल्पेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

षट्षष्टितमकं विद्धि देवं जल्पेश्वरं प्रिये !। यस्य दर्शनमात्रेण महापापंशमं व्रजेत् ॥
जल्पोनाम महादेवि!राजाऽभूद्भुवि विश्रुतः । सदाजल्परतोनित्यं जल्पवादप्रवर्तकः
विकल्पबहुलो नित्यं संसारगतिचिन्तकः । सुबाहुप्रमुखाःपञ्च पुत्राजाता महाबलाः
तस्य राज्ञो वरारोहे! मूर्त्ताः पञ्चाग्नयोयथा । सुबाहुः शत्रुमर्द्दीचजयो विजय एव च

विक्रान्तः पञ्चमः पुत्रः सर्वे शस्त्रास्त्रपारगाः ॥ ४ ॥

पित्रा जल्पेनतेराज्ञा पृथग्राज्ये प्रतिष्ठिताः । पृथक्पुत्राहिते सर्वेपृथग्देशाधिपाःकृताः
प्राच्यां सुबाहुर्नृपतिर्याम्यां वै शत्रुमर्द्दनः । पश्चिमायांजयो राजाउत्तरे विजयोनृपः

मध्ये विक्रान्तसञ्ज्ञस्तु स्वपदे विनियोजितः ।
व्यवस्थामीदृशीं कृत्वा स्वयमेववनं ययौ ॥ ७ ॥
बभूवुर्मन्त्रिणस्तेषां हिता वंशक्रमागताः ।
बुभुजुः स्वस्वराज्यानि मन्त्रिभिः सहितास्तदा ॥ ८ ॥

विक्रान्तस्यचयोमन्त्री विकल्पैकपरायणः । तेनोक्तंविजने देशेविक्रान्तस्यमहीभृतः
यस्यैषा पृथिवी कृत्स्ना स समर्थः प्रकीर्तितः । उद्यमेन पदंलब्धं वासवेन महात्मना

त्रिदशैश्चाऽमृतं लब्धमुद्यमेन महीपते ॥ ११ ॥
हीनोद्यमा मानवा ये क्षत्त्रियाश्च विशेषतः ।
ते हास्यास्पदतां यान्ति हीनवीर्या दिने दिने ॥ १२ ॥

स्नेहं च कुरुते भ्राता राज्यलुब्धोऽर्थकारणात् । अर्थवीर्येणतेनैव संतोषंकुरुते नृपः
क्रियते न किमर्थंतु भूप! मन्त्रपरिग्रहः । भुज्यतेसकलंराज्यं मया ते मन्त्रिणाबलात्
परोऽपि हितवान्बन्धुर्बन्धुरप्यहितःपरः । अहितोदेहजो व्याधिर्हितमारण्यमौषधम्

भूमिमेते निर्गिलन्ति सर्पा बिलशयानिव।
राजानमविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ १६ ॥
मायया मोहितं सर्वं कोवा कस्य चबान्धवः।
उद्यमः क्रियतां तस्माद् भ्रातृणां निग्रहे द्रुतम् ॥ १७ ॥

भ्रातृभिर्भ्रातरः सर्वेनिहताराज्यकारणात्। धर्मंच शाश्वतंज्ञात्वा निहताश्चासुराःसुरैः
इति मन्त्रिवचःश्रुत्वा सराजाविस्मयान्वितः। हसित्वाप्रत्युवाचेदंममायंशत्रुरागतः

विक्रान्त उवाच

वयं च भ्रातरः पञ्च पृथिवीं कामयामहे। अतुष्टाः पृथगैश्वर्यं कथंकृत्स्नाभविष्यति
ज्येष्ठो भ्राता सुबाहुश्च द्वितीयःशत्रुमर्द्दनः। जयश्च विजयश्चैव तेषां लघुरहं यतः॥

मन्त्र्युवाच

राज्ये स्थितं पूजयन्तिज्येष्ठंपूजार्हणैर्वरैः। कनिष्ठज्येष्ठताकेयं राज्यंप्रार्थयतांनृणाम्
तथेति च प्रतिज्ञातेविक्रान्तेनमहीभृता। स मन्त्री कारयामास अभिचारविधिं तदा
अथर्वणेन मन्त्रेण पुरोधाःप्रचकार ह। ज्ञातं पुरोहितैस्तेषां तेऽपि चक्रुः समाहिताः
अथ कृत्यासमुत्पन्ना पश्चात्कृत्याचतुष्टयम्। सपुरोहितभृत्यांस्तानग्रसंस्तुसमंतदा

ततः समस्तलोकस्य विस्मयश्चाऽभवन्महान्।
यदैककालं नेशुस्ते पृथक्पुरनिवासिनः ॥ २६ ॥

ततः श्रुत्वा च निधनं पुत्राणां जल्पकोनृपः। वने वशिष्ठंपप्रच्छ किमेतद्भगवन्प्रभो
तेनापि कथितं सर्वं वशिष्ठेनमहात्मना। दिव्यज्ञानेनवृत्तान्तंविकल्पं चाऽकरोन्नृपः

राजोवाच

निमित्तोऽहं विनाशस्य धिग्धिग्जन्म मदीयकम्।
सार्द्धं त्वमात्यपुत्रैश्च मृतं ब्राह्मणपञ्चकम् ॥ २६ ॥

मत्तोऽन्यःकःपापरतोभविष्यति महान्भुवि। यदिजन्म मदीयंस्यान्नच जातुमहीतले
ततस्ते न विनश्येयुर्मम पुत्रपुरोहिताः। धिग्राज्यं धिक्चमेजन्म भूभुजांचमहाकुले

कारणत्वं गतो योऽहं विनाशस्य द्विजन्मनाम्।

कुर्वन्तः स्वामिनस्तेऽर्थं पुत्राणां मम याजकाः ॥
नाशं ययुर्न दुष्टास्ते दुष्टोऽहं नाशकारणे ॥ ३२ ॥
इत्थमुद्विग्नहृदयः स जलपः पृथिवीपतिः । पप्रच्छच पुनः प्रह्वोवशिष्ठं ज्ञानिनांवरम्

राजोवाच

भगवन्ब्रूहि मे तीर्थमवियोगकरंसदा । सद्यः पापहरं विप्र!लिङ्गं वा कथय प्रभो !॥
तस्यतद्वचनं श्रुत्वा जलपस्य पृथिवीपतेः । वशिष्ठःकथयामास दिव्यज्ञानेनपार्वति!
गच्छ जलप! ममादेशान्महाकालवनोत्तमम् ।
कृत्वा निःक्षत्त्रियां पृथ्वीं यत्र रामस्तपस्यति ॥
तत्र लिङ्गमनाद्यं च कुक्कुटेश्वरपश्चिमे ॥ ३६ ॥
तदाराधयराजेन्द्र जामदग्न्याश्रमेस्थितः । वशिष्ठस्यवचः श्रुत्वाजलपोऽसौपृथ्वीपतिः
देवदारुवनं त्यक्त्वा महाकालवनंगतः । ददर्श तत्र तल्लिङ्गमनाद्यं देवसंस्तुतम् ॥
पूजयामास विधिवत्परमेण समाधिना ॥ ३८ ॥
तत्र वाणी समुत्पन्ना लिङ्गमध्याद्वरानने!। न त्वंपापसमाचारो न त्वं मरणकारणम्
पुत्राणां नृप! विप्राणामदृष्टं तत्र कारणम् ॥ ३६ ॥
विपाकेन स्वकीयेन गता वैवस्वतम्पुरम् ।
मा शोकं कुरु राजेन्द्र गहना कर्मणो गतिः ॥ ४० ॥
अनेन शुद्धभावेन तुष्टोऽहं नृपसत्तम! । यदभीष्टं वरं ब्रूहि तत्ते दास्यामि नान्यथा ॥

राजोवाच

यदि तुष्टोऽसि मे देव! यदि देयो वरो मम । संसारसागरे घोरेमा भवेन्ममजन्मच
अक्षयां देहि मे कीर्त्ति नाम्ना मे विश्रुतो भुवि ।
अयं जलपेश्वरो देवो जलपेनाऽऽराधितो विभुः ॥ ४३ ॥
वदन्तुत्रिदशाःसर्वेएषमे दुर्लभोवरः । ये त्वांपश्यन्तिमनुजा मन्नाम्ना ख्यातिमागतम्
तेषां वियोगो मा भूयात्पुत्रतो धनतोऽपि वा ॥ ४४ ॥
न संसारभयं तेषां दस्युतो नैव राजतः । न भूतग्रहरोगेभ्यो भयमस्तु कदाचन ॥

शिवमस्तुसदा तेषां येषां त्वंदर्शनंगतः । ते धन्यामानुषेलोके ये त्वां शरणमागताः
सर्वतीर्थाभिषेकैस्तु यत्पुण्यं प्राप्यते नरैः । तत्सर्वमधिकं देव! लभ्यते तवदर्शनात्
तावत्पतति संसारे घोरे दुःखशताकुले । यावन्न दृश्यते देवः संसारार्णवतारकः॥
यदा पापक्षयः पुसां तदा ते दर्शनम्भवेत् । महता सुकृतेनैव नाल्पेन तपसा प्रभो !॥

एवं भविष्यतीत्युक्त्वा तेन लिङ्गेन पार्वति !।
पश्यतां सर्वदेवानां स्वतनौ सन्निवेशितः ॥ ५० ॥

तस्मिँल्लिङ्गेलयम्प्राप्ते नृपे जल्पे वरानने !। देवो जल्पेश्वरः ख्यातो देवैरुक्तो महीतले

भुक्तिदो मुक्तिदश्चैव सदाभीष्टकरःस्मृतः ॥ ५१ ॥

एष ते कथितो देवि! प्रभावःपापनाशनः । जल्पेश्वरस्य देवस्य शृणुकेदारसञ्ज्ञकम्

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये जल्पेश्वरमाहात्म्यवर्णनं
षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

## सप्तषष्टितमोऽध्यायः

### केदारेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

सप्तषष्टिकसङ्ख्याकं केदारेश्वरसञ्ज्ञकम् । देवं शृणु वरारोहे! दर्शनात्पापनाशनम्
सृष्टिकाले पुरादेवि! देवा व्याप्ताहिमेनहि । शीतार्ताविह्वलाःसर्वे ब्रह्माणंशरणंगताः
हिमाद्रिणाऽर्दिताः सर्वे वयंदेवजगत्पते । त्राहिभीतांश्चतुर्वक्त्रपितामहनमोऽस्तुते

देवानां वचनं श्रुत्वा प्रोक्तं वै ब्रह्मणा प्रिये !।
पीडिता हिमशैलेन शङ्करश्वशुरेण च ॥ ४ ॥

नाहं यातुं समर्थोऽस्मि सत्यमेतन्मयोदितम् । महादेवमृतेदेवागतिरन्या न विद्यते

स एव शरणं देवः सर्वेषां नो भविष्यति। तस्याज्ञया मया सर्वे पर्वतारचिताःपुरा
कृताःसृष्टिर्विचित्रा च हिमाद्रिश्चमयाकृतः। असेव्यःसर्वजन्तूनामधृष्योदुर्गमोगिरिः

हिमाचलस्य तस्यैव शास्ता देवो महेश्वरः।
तस्माद्यास्याम हे देवाः! कैलासं पर्वतोत्तमम् ॥ ८ ॥
यत्र तिष्ठति विश्वात्मा देवदेवो महेश्वरः।
एवमुक्त्वा गतो ब्रह्मा देवैः सार्द्धं ममान्तिकम् ॥
दृष्टोऽहं पूजितस्तैस्तु स्तुतोऽहं विविधैः स्तवैः ॥ ६ ॥

मया सम्मानिता देवाश्चतुर्वक्त्रः प्रपूजितः। पूजयित्वामयापृष्टो ब्रह्मा गमनकारणम्

किं कार्यं त्रिदशैःसार्द्धमागतोऽसि पितामह !।
कथितं ब्रह्मणा सर्वं श्रुतं सर्वं मया प्रिये !॥ ११ ॥

हिमाचलं समाहूय मर्यादा च कृता मया। शैलानांराजराजत्वे हिमाद्रिश्चप्रतिष्ठितः
देवानां विषयाश्चैव गन्धर्वाणां तथैवच। यक्षाणामथ नागानां किन्नराणां तथैव च

विद्याधराणां क्रीडार्थं पृथक्पृथङ्निवेशिताः।
रूपतो भाति शैलेन्द्रः शुद्धस्फटिकसन्निभः ॥ १४ ॥
जाह्नवीनिर्झरोष्णीषः शर्वाणीजनकस्तथा ॥ १५ ॥

सर्वदेवमयो दिव्यः सर्वतीर्थमयः कृतः। सर्वाश्रमनिवासश्च सर्वामरनिषेवितः॥
एवं संस्थाप्यशैलेन्द्रं लिङ्गमूर्त्तिरहंस्थितः। विख्यातस्त्रिषुलोकेषु केदारेश्वरनामतः
उदकं निर्मितं तत्र मन्त्रपूर्णं मया प्रिये !। माहात्म्यंविविधंप्रोक्तंलिङ्गस्यचजलस्यच

योऽत्रागत्य नरो भवत्या सम्यङ् मां पूजयिष्यति।
जलं योऽत्रैव गृह्णाति विधानेन वरानने !॥
तस्योदरे भविष्यामि लिङ्गरूपी न संशयः ॥ १६ ॥

इत्युक्ते वचने देवि! सदेवासुरपन्नगाः। यक्षरक्षःपिशाचाश्च भूतवेतालकिन्नराः॥
विद्याधरगणाश्चैव मम दर्शनलालसाः। समायाता वरारोहे! पीत्वा तत्र जलं शुभम्

दृष्टोऽहं विधिना तैस्तु लिङ्गमूर्त्तिगतः प्रिये !॥

मम तुल्याश्च ते जातास्तस्मिन्नद्रिवरे स्थिताः ॥
जनलोकगतैः सिद्धैः पूज्यमाना वरानने !॥ २२ ॥
अथ कालेन बहुना श्रुत्वा माहात्म्यमुत्तमम् ।
केदारेश्वरदेवस्य जलस्य च विशेषतः ॥ २३ ॥

मनुष्याः समुपायातास्ते रजोबहुलायतः । तमःप्रायाविशालाक्षि! तदाहंमाहिषंवपुः
कृतवांस्तद्भयार्थाय न च तेभीतिमागताः । इह देवोऽत्र देवोऽत्र बभ्रमुस्तेदिदृक्षवः

न तैर्दृष्टो महादेवि! यतोऽहं महिषाकृतिः ।
स्थितोऽस्म्यलक्ष्यरूपेण ततस्ते दीनमानसाः ॥
उद्विग्ना निश्वसन्तश्च वैराग्यं परमं गताः ॥ २६ ॥

नात्र देवोनतीर्थानि न गङ्गा पुण्यदायिनी । न धर्मो न परो लोकःसर्वमेतद्विडम्बनम्
एवं किल पुराणेषु श्रूयते सर्वदा श्रुतौ । हिमालये च केदारं लिङ्गं मोक्षप्रदायकम्

एवं तु वदतां तेषां मानुषाणां यशस्विनि !।
आकाशादुत्थिता वाणी मया प्रोक्तानुकम्पया ॥ २९ ॥
अमार्गं मा वदन्त्वत्र न निन्द्याः श्रुतयोऽव्ययाः ।
पुराणं नान्यथा प्रोक्तं ब्रह्मणा लोककर्तृणा ॥ ३० ॥
ये निन्दन्ति पुराणानि धर्मशास्त्राणि नास्तिकाः ।
ते यान्ति नरकं घोरं यावदाभूतसम्प्लवम् ॥ ३१ ॥

सदा देवोऽत्रकेदारः स्वर्गमोक्षप्रदायकः । विद्यते त्रिदशैः पूज्यः सततं नैव दृश्यते

करोति पूजां हिमवान्मासानष्टौ च शाश्वतान् ।
हिमाद्रिस्तेन पुण्येन नगेन्द्रस्तु कृतो नगैः ।
सेव्यश्च रमणीयश्च सर्वतीर्थनमस्कृतः ॥ ३३ ॥

सर्वरत्ननिधानश्च देवानां वल्लभस्तथा । ग्रीष्मे चैव वसन्ते च देवदेवोऽत्र दृश्यते ॥
नियतेनैव कालेन मानुषाणां च सर्वदा । यदिबुद्धिः परा जाता सर्वदा मम दर्शने ॥

आख्यास्ये तदुपायं च श्रूयतां सावधानतः ।

मा विकल्पोऽत्रकर्त्तव्यःसर्वान्कामानवाप्स्यथ ॥ ३६ ॥
क्षेत्राणामुत्तमं क्षेत्रं भुक्तिमुक्तिप्रदायकम् । प्रलयेऽप्यक्षयं प्रोक्तंमहाकालवनं नराः ॥
तत्राहं सम्भविष्यामि लोकानामनुकम्पया । लिङ्गरूपेणशिप्रायास्तटेपुण्येसुशोभने
सोमेश्वरस्य देवस्यपश्चिमे स्थानमुत्तमम् । प्रसिद्धमुपयास्यामि केदारेश्वरनामतः
सर्वदा दर्शनं तत्रमयासार्द्धं भविष्यति । सर्वेषां चप्रदास्यामिसर्वान्कामान्नसंशयः
इह यावत्फलंतस्माद्दास्यामि ह्यधिकंततः । इतितेमानवाःसर्वेश्रुत्वावाणींमनोरमाम्
आकाशादुत्थितां दिव्यां मनः प्रह्लादकारिकाम् ॥ ४१ ॥
गता वनं महाकालं संस्मरन्तो महेश्वरम् । विकल्पेन विचित्रेणसत्यमेवेतिनान्यथा
स्नात्वा शिप्राजले पुण्ये यावत्पश्यन्ति भास्करम् ।
तावद्दद्दृष्टिपथोत्पन्नं लिङ्गं पापप्रणाशनम् ॥ ४३ ॥
अथ ते हर्षिताः प्रोचुः केदारोऽयं न संशयः ।
दृष्टोऽस्माकं न सन्देहो गङ्गा शिप्राजले स्थिता ॥ ४४ ॥
ततस्ते पूजयामासुः पुष्पैर्नानाविधैस्तथा । पूजितोऽहं विशालाक्षितेषांतुष्टोवरानने
दुर्लभोऽतिवरो दत्तः कैलासेस्थानमुत्तमम् । अक्षयश्चपदंदत्तम्पुनरावृत्तिवर्जितम् ॥
अतोऽहंत्रिदशैः प्रोक्तःकेदारेश्वरनामतः । प्रार्थितःपरयाभक्त्यालोकानामनुकम्पया
इहागत्य नरा ये च त्वां पश्यन्ति सुभक्तितः ।
तेषां फलं त्वया देव! दातव्यमधिकंयतः ॥ ४८ ॥
हिमाद्रौहिमनाथस्ययात्रायाःप्रत्यहंफलम् । लभन्तेचनरानित्यंनात्रकार्याविचारणा
ब्रह्महा वासुरापोवास्तेयीवागुरुतल्पगः । तत्सम्पर्कीनरोयस्तुत्वांदृष्ट्वाकिल्बिषाकरः
सोऽपि याति परं स्थानं पुनरावृत्तिवर्जितम् ।
चान्द्रायणानां विधिवच्छतानां चैव यत्फलम् ।
तत्फलं समवाप्नोति केदारेश्वरदर्शनात् ॥ ५१ ॥
ते नराः पशवो लोके तेषां जन्मनिरर्थकम् । यैर्नदृष्टोमहाकालेकेदारेश्वरसञ्ज्ञकः
कौमारेयौवने बाल्ये वार्द्धकेयदुपार्जितम् । तत्पापंसङ्क्षयं यातिकेदारेश्वरदर्शनात्

हिमालयकृता यात्रा तस्याः प्रोक्तं च यत्फलम् ।
तत्फलं समवाप्नोति केदारेश्वरदर्शनात् ॥ ५४ ॥
इत्युक्तोऽहं तदा देवि! देवैःप्रणतिपूर्वकम् । तथेति चमयाप्रोक्तंतेऽपिदेवादिवं गताः
एष ते कथितो देवि! प्रभावः पापनाशनः । केदारेश्वरदेवस्य पिशाचाख्यमतःशृणु ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्ये केदारेश्वरमाहात्म्यवर्णनंनाम
सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

# अष्टषष्टितमोऽध्यायः

## पिशाचेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

अष्टषष्टिकसङ्ख्याकं पिशाचाख्यमथेश्वरम । शृणु देविप्रयत्नेन दर्शनात्पापनाशनम्
आदौकलियुगेदेविशूद्रोबहुधनोऽभवत् ।सोमोनामसुविख्यातोनास्तिकोवेदनिन्दकः
अब्रह्मण्यो नृशंसश्च कदर्यो निरपत्रपः । विश्वासघातकश्चैव परस्वहरणे रतः ॥ ३ ॥
त्रिवर्गहन्ता चान्येषामात्मकामानुवर्त्तकः । स कदाचिन्मृतो देवि! कष्टेन परमेण च
मरुदेशे पिशाचोऽभून्नग्नोदीनो भयावहः । नाशकत्सपिशाचानांस्वपक्षोच्छेदकारकः
बहवो मर्द्दितास्तेन पिशाचा बलवत्तराः ॥ ६ ॥
अथतेनैवमार्गेणकदाचिच्छाकटायनः । स्वाध्यायनिरतो विद्वान्वाग्मी शमपरायणः
उदयादित्यसंकाशोविभावसुसमद्युतिः । शकटेन सदा याति स पश्यन्पर्वतात्मजे!
गतो ददर्श तं रौद्रं पिशाचं च भयावहम् ।
स पिशाचः क्षुधाविष्टो भोक्तुकामोऽभ्यधावत ॥ ९ ॥
दृष्ट्वा तं शकटारूढं ब्राह्मणं शाकटायनम् । शकटस्य ध्वनिंश्रुत्वा रूपंदृष्ट्वाद्विजस्य च

तथारूपः पिशाचस्तु कर्णाभ्यां बधिरीकृतः ।
आत्मत्राणपरो भूत्वा नष्टः कष्टेन पार्वति !।
तं धावन्तं समालोक्य पिशाचं ब्राह्मणोऽब्रवीत् ॥ ११ ॥
पिशाच! त्रस्तरूपोऽसि त्वरितश्चैव लक्ष्यसे ।
क्व धावसि समाचक्ष्व कुतस्ते भयमागतम् ॥ १२ ॥

पिशाच उवाच

शक्रटस्यास्यमहतोघोषंश्रुत्वाभयङ्करम् । कर्णाभ्यांबधिरोजातोविसंज्ञस्तवदर्शनात्

ब्राह्मण उवाच

पिशाचानां बलिष्ठाश्च श्रूयन्ते ब्रह्मराक्षसाः ।
स त्वं मां भोक्तुकामोऽसि विख्यातो ब्रह्मराक्षसः ॥ १४ ॥

पिशाच उवाच

पिशाचानां समर्थोऽस्मि नष्टोऽहं तव दर्शनात् ।
दुःखं हि मृत्युः सर्वेषां जीवितं च सुदुर्ल्लभम् ।
अतो भीतः पलायामि जीवहेतोः सुखार्थतः॥ १५ ॥

ब्राह्मण उवाच

कुतः पिशाचसौख्यंतेमरणंश्रेय एव ते । पैशाची कुत्सितायोनिःपापिनामेवजायते

पिशाच उवाच

सर्वत्र हि गतो जीवोभवत्येवसुखाश्रयः । तस्माज्जीवितुमिच्छामिप्रसीदब्रह्मराक्षस

ब्राह्मण उवाच

नाहं त्वां भोक्तुकामोऽस्मि ब्राह्मणोऽहं न राक्षसः ।
सर्वभूतहितार्थाय विचरामि महीतले ॥ १८ ॥
सर्वेषामेव जन्तूनां मैत्रो ब्राह्मण उच्यते । माकुरुष्वभयं मत्तो मित्रभावगतो ह्यहम्
तस्य तद्वचनंश्रुत्वापिशाचः स्वस्थमानसः । प्रणम्यप्रत्युवाचेदं ब्राह्मणंशाकटायनम्
यदि ते सर्वभूतानां दत्ता ह्यभयदक्षिणा । कर्मणा मनसावाचा मित्रभावं गतो यदि

पृच्छामि त्वां महाभाग! संशयो हृदये स्थितः ।
श्रुत्वाऽनुकम्पया सम्यक्तन्मे व्याख्यातुमर्हसि ॥ २२ ॥
केन कर्मविपाकेन पैशाचं याति मानवः । पिशाचत्वात्कथं मुक्तिःप्राप्यतेपापकर्मभिः
इति तस्य वचः श्रुत्वा पिशाचस्यवरानने । ममत्वेनावृतस्तस्मै प्रावोचच्छाकटायनः
अपहृत्य च विप्रस्वं देवस्वं च विशेषतः । तेनपापेन पापिष्ठाः पिशाचत्वंप्रयान्तिव
पितरं मातरं चैव स्त्रियं बालं द्विजं तथा । वञ्चयित्वा हरत्यर्थं स पिशाचो भवेन्नरः
राजद्रव्यं गृहीत्वा तु न यजेन्नददातियः । आत्मानमेव पुष्णातिपिशाचत्वंसगच्छति
विश्वासघातका ये च परदाररताश्चये । प्राप्नुवन्ति पिशाचत्वं तथा ये वेदनिन्दकाः
निन्दन्ति ये पुराणानि धर्मशास्त्राणि सर्वदा ।
ते भवन्ति पिशाचाश्च ये सदा पिशुना नराः ॥ २९ ॥
इति ते कथितं सर्वं वेदप्रामाण्यतोऽधुना ।
इदानीं कथयिष्यामि यस्त्वं जातोऽसि तच्छृणु ॥ ३० ॥
सोमकोनाम शूद्रस्त्वं परमर्मप्रकाशकः । विश्वासघातको जातो देवब्राह्मणदूषकः
नास्तिको भिन्नमर्यादो जन्मन्यत्रापि सप्तमे । सकुलंपातयित्वात्र नरकेदारुणेभृशम्
पिशाचयोनिं सम्प्राप्तः पुनः प्राप्स्यसिरौरवम् । महारौरवसञ्ज्ञं तुक्रकचंकालसूत्रकम्
यन्त्रपीडनकं रौद्रं मथनं कुम्भवालुकम् ॥ ३३ ॥
इत्येवं वदतस्तस्य ब्राह्मणस्य यशस्विनि ।
सस्मार प्राक्तनं जन्म सत्सङ्गात्कुत्सितं स्वकम् ॥ ३४ ॥
दुःखाभिभूतो निश्चेष्टो धिग्धिगित्यमकृद्ब्रुवन् ।
पतितो भूतले देवि! इदं वाक्यमथाब्रवीत् ॥ ३५ ॥
अहोकेनापि पुण्येन भवता सह दर्शनम् । जातं ममाल्पपुण्यस्य दीनस्यकृपणस्य च
नास्ति धर्मसमं मित्रं नास्ति धर्मसमागतिः ।
नास्तिधर्मसमं त्राणं स च नास्ति मम प्रभो ॥ ३७ ॥
मग्नोऽहं दुःखजलधौ मग्नोऽहं पापकर्दमे । भ्रान्तोऽहमन्धतमसिततस्त्वांशरणं गतः

नमस्तेऽस्तु महाभाग ! किं करोमि प्रशाधि माम् ।
तत्तपोवलनिर्दिष्टमिदं प्राप्तं मयाऽधुना ॥ ३६ ॥

एवं निगदतस्तस्य पिशाचस्य वरानने !। कथयामास माहात्म्यंसविप्रःशाकटायनः
पृथिव्यांयानितीर्थानि आसमुद्रगतानिवै । क्षेत्राणियानिसन्तीहतेषांक्षेत्रंसुपुण्यदम्
महाकालवनं क्षेत्रं प्रलयेऽप्यक्षयं गतम् । लिङ्गं तत्र महाक्षेत्रे पिशाचत्वविनाशनम्
ढुण्ढेश्वरस्य देवस्यदक्षिणेत्रिदशार्चितम् । पैशाचं विद्यतेभूयः पिशाचयोनिनाशनम्
तस्य दर्शनमात्रेण पिशाचत्वात्प्रमोक्ष्यसे ॥ ४३ ॥

तस्य तद्वचनं श्रुत्वा स पिशाचो वरानने !। आजगामत्वरायुक्तो नमस्कृत्यद्विजंतदा
महाकालवने पुण्ये समीहितफलप्रदे । ददर्श तत्र तल्लिङ्गं स्नात्वा शिप्राजले शुभे ॥
दर्शनात्तस्य लिङ्गस्यसपिशाचो वरानने !। तत्क्षणाद्दिव्यदेहस्तु दिव्याभरणभूषितः
दिव्यं विमानमारूढो गतो लोके सनातने । उद्धृत्यसकलं गोत्रं मातृकं पैतृकंतथा
दृष्ट्वा तन्महदाश्चर्यंमाहात्म्यातिशयं प्रिये !। प्रोक्तंदेवैर्विमानस्थैःसिद्धैराकाशगैस्तथा
पिशाचोऽपि गतः स्वर्गं मस्य लिङ्गस्य दर्शनात् ।
अतो देवः स विख्यातो भविष्यति महीतले ॥
पिशाचेश्वरसञ्ज्ञस्तु सर्वपापप्रणाशनः ॥ ४६ ॥

येपश्यन्तिनरादेवि! पिशाचेश्वरसञ्ज्ञकम् । तेषांहिपितरःसद्योयेचापिनिरयेस्थिताः
पिशाचत्वाद्विमुच्यन्ते स्वर्गं यान्ति न संशयः ॥ ५० ॥
अश्वमेधस्य यज्ञस्य सम्यगिष्टस्य यत्फलम् ।
तत्फलं लभते सोऽपि पिशाचेश्वरदर्शनात् ॥ ५१ ॥

गयायां पिण्डदानेनयत्पुण्यं समुदाहृतम् । तत्पुण्यमधिकं ज्ञेयं पिशाचेश्वरदर्शनात्
येपश्यन्ति चतुर्दश्यां पिशाचेश्वरसञ्ज्ञकम् । प्रेतत्वंचपिशाचत्वं कुलेतेषांनजायते
न वियोनिं नरो याति नरकं चनपश्यति । प्रसङ्गेनापियःपश्येत्पिशाचेश्वरसञ्ज्ञकम्
सर्वैश्वर्यसमायुक्तः सर्वबन्धुसमन्वितः । मोदतेपितृलोके स पिशाचेश्वरदर्शनात् ॥
कीर्त्तनान्मुच्यते पापाद् दृष्ट्वा स्वर्गं च गच्छति ।

स्पर्शनादस्य लिङ्गस्य पुनात्यासप्तमं कुलम् ॥ ५६ ॥
तदैव स नरो मुक्तः संसारनिगडादिभिः । यदैव वीक्षतेलिङ्गं पिशाचेश्वरसञ्ज्ञकम्
यज्ञानां तपसां चैव दानानां चैवयत्फलम् । तत्फलंकोटिगुणितं जायतेतस्यदर्शनात्
यदि पश्येच्चतुर्दश्यां वैशाखे कार्त्तिकेतथा । तस्यपुण्यमसङ्ख्यातंजायतेनात्रसंशयः
एषते कथितो देवि! प्रभावः पापनाशनः । पिशाचेश्वरदेवस्य श्रूयतां सङ्गमेश्वरम् ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये पिशाचेश्वरमाहात्म्यवर्णनंनामाऽष्ट-
षष्टितमोऽध्यायः ॥ ६८ ॥

---

# एकोनसप्ततितमोऽध्यायः

## सङ्गमेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

एकोनसप्ततिं देवि! शृणु पार्वति! यत्नतः । यस्य दर्शनमात्रेण सङ्गमो जायते सदा॥
कलिङ्गविषये देवि! सुबाहुर्नाम पार्थिवः । बभूव भुविविख्यातोयज्वापरमधार्मिकः
तस्य पत्नी विशालाक्षीदुहिता दृढधन्वनः । काञ्चीपुरनिवासस्य क्षात्रव्रतरतस्यच
परस्परानुरागत्वात्पराप्रीतिरभूत्तयोः । तस्यराज्ञःशिरोऽर्त्तिस्तु मध्याह्नेजायतेसदा
आयुर्वेदविदां मुख्यैः शरीरस्य चिकित्सकैः ।
तैः प्रणीता प्रिये! योगा व्यथावृद्धिर्दिने दिने ॥ ५ ॥
एवं बहुतरेकाले गते देवि! महीपतिम् । प्रत्युवाचविशालाक्षी भर्तृदुःखेन पीडिता
कथमेषाशिरोरोगे जरा ते पृथिवीपते !। वैद्याश्च बहवो देव! नानाशास्त्रविशारदाः ॥
प्रयतन्तेऽस्य नाशाय तथाऽप्येष न शाम्यति ॥ ७ ॥
एवं स प्रियया प्रोक्तः सुबाहुः पृथिवीपतिः ।

प्रत्युवाच प्रियां भार्यां प्रेम्णा प्रणयवत्सलाम् ॥ ८ ॥
सुखदुःखाश्रयं देवि शरीरंसर्वदेहिनाम् । पूर्वकर्मानुसारेण सुखं दुःखं च जायते ॥
इति सम्बोधिता राज्ञी तेन राज्ञा वरानने ! ।
पुनः प्रोवाच हार्द्देन तमेवार्थं सुदुःखिता ॥ १० ॥
यदासावारितात्यर्थं पृच्छत्येव पुनःपुनः । तदाराजाप्रहस्यैव तां च राज्ञीमुवाच ह
यदि त्वं श्रोतुकामासि रोगस्याऽस्य समुद्भवम् ।
कारणं तत्त्वतो देवि ! नाख्यास्याम्यहमत्र वै ॥ १२ ॥
महाकालवनंगत्वा सिद्धगन्धर्वसेवितम् । तत्र ते कथयिष्यामि यदि कौतूहलं तव
श्वः प्रभाते गमिष्यामि त्वया सार्द्धं शुचिस्मिते !।
इति तस्य वचः श्रुत्वा सा राज्ञी विस्मिता स्थिता ।
उत्सुका गमनार्थाय महाकालवनं शुभम् ॥ १४ ॥
अथसारजनीवृत्ता प्रभाते नृपसत्तमः । प्रतस्थे भार्यया सार्द्धं सैन्येन महताम्वृतः ॥
आजगाम क्रमेणैव महाकालवनं शुभम् । आवासंविदधेधीमाञ्छिप्रातीरे नृपस्तदा
पातालवाहिनी तत्र गङ्गा त्रिपथगामिनी । द्वितीयानीलगङ्गा च शिप्रया सहसङ्गता
तासां च सङ्गमस्तत्र तल्लिङ्गं सङ्गमेश्वरम् । पूजितं गङ्गयासार्द्धं शिप्रयानीलगङ्गया
अथ प्राप्ते सुवाहौच साराज्ञीविस्मयान्विता । पप्रच्छप्रणयोपेताकथ्यतामत्रकारणम्
यत्त्वयोक्तं पुरा देव! कथयिष्यामि तत्र वै ॥ १६ ॥
एवमुक्तः सुवाहुस्तु प्रियया पृथिवीपतिः । प्रत्युवाच प्रियांप्रेम्णाप्रहस्यच पुनः पुनः
सुखं स्वपिहि भद्राङ्गि! श्रान्ता वयमनिन्दिते ।
प्रभाते कथयिष्यामि शिरोरोगस्य कारणम् ॥ २१ ॥
अथ सा रजनी वृत्ता प्रभाते नृपसत्तमः । कथयामास माहात्म्यं देवस्य परमेष्ठिनः
अहमासं कुशूद्रस्तु सर्वदा वेदनिन्दकः । विश्वासघातकोनित्यं त्वमप्येवं तथाविधा
पुत्रो जातस्तुदुःशीलो देवब्राह्मणवञ्चकः । कुरूपः कर्कशो दुष्टः प्रकृत्या पापपूरुषः ॥
अथदीर्घेणकालेन द्वादशाब्दं भयावहा । अनावृष्टिस्तु सञ्जाता सर्वप्राणिभयङ्करी ॥

वियोगस्तु त्वया प्राप्तो मया सार्द्धं सुतेन च । ततोऽहंदुःखसन्तप्तोवैराग्यंपरमंगतः
इच्छतानिधनंसद्यो मयाप्रोक्तमिदं वचः । मम पुण्यविहीनस्य पापध्यानरतस्य च
सुतेन भार्यया सार्द्धं सङ्गमो दुर्लभः पुनः । कथंस्वपितिपापिष्ठः कृत्वापापंसुदारुणम्
कुटुम्बार्थे करोत्येवमेकाकी निस्तरत्यसौ । धर्म एव परोबन्धुर्धर्मएव परा गतिः
धर्मेण साध्यते सर्वं तस्माद्धर्मं समाश्रयेत् ॥ २६ ॥
इतिचिन्तयतोऽत्यर्थं ममप्राणा गताः प्रिये । विविधा यातनाप्राप्तामयानरककोटिषु
अन्तकालेऽपि धर्मस्य प्रशंसा यामयाकृता । मत्स्योऽहंतेनपुण्येनजातःशिप्राजलेशुभे

त्वं च श्येनी ततो जाता तस्मिन्नेव वनोत्तमे ।
प्रावृट्कालेऽथ सम्प्राप्ते आश्लेषानुगते रवौ ॥ ३२ ॥
नदीत्रयरयेणैव निःसृतोऽहं जलात्ततः ।
त्वया शिरसि सम्प्राप्तो नखैर्विद्धोऽस्मि सुन्दरि !॥ ३३ ॥

आनीतोऽहं त्वयादेवि! सङ्गमेश्वरसन्निधौ । कैवर्तैर्निधनंप्राप्तं त्वया सार्द्धं वरानने !
म्रियमाणेन मे दृष्टो देवोऽसौ सङ्गमेश्वरः । शिप्रयास्नापितोऽत्यर्थं गङ्गयानीलगङ्गया
तस्यदर्शनमात्रेण जातोऽहं पृथिवीपतिः । कलिङ्गविषये देवि ! सर्वभूपालवन्दितः
सुता त्वं वल्लभा जाता काञ्चीपुरनिवासिनः । क्षात्रव्रतरतस्यैव सुभगा दृढधन्वनः
आवां राजत्वमापन्नौ तस्यलिङ्गस्यदर्शनात् । त्वया कररुहैर्विद्धो मारितोलगुडैश्चतैः

मध्याह्ने कदनं स्मृत्वा ततो मे शिरसि व्यथा ।
स्मरामि जातिमात्मीयामस्य देवस्य दर्शनात् ॥ ३६ ॥

एतत्ते कथितं देवि! पृष्टोऽहं यत्त्वया पुरा । गच्छसुन्दरि! भद्रं ते यत्रते वर्त्तते मनः

स्थातव्यं च मयाऽत्रैव सेव्योऽसौ सङ्गमेश्वरः ॥ ४१ ॥

ततः सा निरवद्याङ्गी नीलोत्पलविलोचना । करुणं सुस्वरंकृत्वाभर्त्तारमिदमब्रवीत्

मयाऽपि संस्मृतं देव! पूर्वजन्मनि चेष्टितम् ।
अस्य लिङ्गस्य माहात्म्यात्तिर्यग्योनिगतावपि ॥ ४३ ॥

प्राप्तावावां मनुष्यत्वं निर्मलेषु कुलेषु च ।'प्राप्ताश्रीरतुलालोके प्राप्तं राज्यमकण्टकम्

प्राप्ताभार्या प्रियाहंतेत्वंच प्राप्तो मया नृप । ख्यातोऽयं त्रिपुलोकेषुनामतः सङ्गमेश्वरः
अस्य देवस्य माहात्म्याद्वियोगो न भविष्यति ।
यथा कृष्णस्य लक्ष्म्यां च पार्वत्या च शिवस्य च ॥ ४६ ॥
पुनः प्रणम्य प्रणता सहसा मन्मथाकुला । भर्त्ता सुबाहुर्मेभूयादन्यस्मिन्निहजन्मनि
तव देवप्रसादेन यदि त्वं सङ्गमेश्वरः । ततोविलोक्यसोन्मेषं कुसुमेषु तरङ्गिताम् ॥
कान्तां पिबन्निव दृशा प्राह तां तरलेक्षणाम् ॥ ४८ ॥
महज्जेनाभिजन्येन गुणैः कान्त्या विभूषिता ।
मया प्राप्ता विशालाक्षि ! प्राप्तं मज्जन्मनः फलम् ॥ ४६ ॥
ततस्तां भयमन्त्रस्तां कम्पिताधरपल्लवाम् ।
गृहीत्वा च करे कान्तां जगामाऽन्तः पुरं निजम् ॥ ५० ॥
वदन्कन्दर्पसर्पेण दष्टोऽहं दैवतोऽधुना । चचार तत्र निःसारं संसारं कलयन्धिया
पुरे ममवरारोहेचिरंरेमेतया सह । एवं राजाप्रियां प्राप्य निवेद्य च निजां कथाम् ॥
भेजे राज्यं तया सार्द्धं विस्तारितमहोत्सवः ।
अशाश्वतमिदं ज्ञात्वा अर्थिभ्योऽपि ददौ धनम् ॥ ५२ ॥
अपूर्वत्यागिनानेन त्रैलोक्यंविस्मयं ययौ । राज्यंकृत्वाचिरंकालं सभार्यानृपसत्तमः
भुक्त्वा च विपुलान्भोगांस्तस्मिँल्लिङ्गे लयंगतः ।
अतो देवि! सुविख्यातो देवोऽसौ सङ्गमेश्वरः ॥ ५५ ॥
यः पश्येत्परयाभक्त्यातल्लिङ्गंसङ्गमेश्वरम् । नवियोगोभवेत्तस्यपुत्रभ्रातृप्रियादिभिः
नियमेन तु यः पश्येत्तल्लिङ्गं सङ्गमेश्वरम् । राजसूयसहस्रस्य फलं तस्याधिकंभवेत्
गाङ्गं च सफलं पुण्यं यामुनंनार्मदं तथा । जायते चान्द्रभागं च सङ्गमेश्वरदर्शनात्
यः पश्येच्छ्रावणेमासि तल्लिङ्गंसङ्गमेश्वरम् । कार्तिकस्वामिनोयात्राकृतातेन नसंशयः
मासि चाश्वयुजे देवं यः पश्येत्सङ्गमेश्वरम् । कृतं तेन सहस्रं तु वाजपेयं वरानने!॥
यः पश्येत्कार्त्तिके मासि तल्लिङ्गं सङ्गमेश्वरम् । राजसूयसहस्रं तु कृतं तेन न संशयः
चतुरो वार्षिकान्मासान्यः पश्येत्सङ्गमेश्वरम् । सयाति परमं स्थानंममाभीष्टतरंप्रिये

एष ते कथितो देवि! प्रभावः पापनाशनः । सङ्गमेश्वरदेवस्य शृणु दुर्द्धर्षमीश्वरम् ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्ये सङ्गमेश्वरमाहात्म्यवर्णनंनामैकोन-
सप्ततितमोऽध्यायः ॥ ६९ ॥

---

## सप्ततितमोऽध्यायः

### दुर्द्धर्षेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

शृणु सप्ततिकं देवं दुर्द्धरेश्वमीश्वरम् । यस्य दर्शनतो देवि! नरः पापैः प्रमुच्यते ॥
दुर्द्धर्षोनाम राजाऽभून्नेपालविषये पुरा । पुण्यकेतुर्यशस्वी च सत्यसन्धो दृढव्रतः ॥
तिस्रस्तस्याभवन्भार्यास्तत्तुल्याः सुमनोहराः ।
विहरन्स वनोद्याने वसन्ते पृथिवीपतिः ॥ ३ ॥
कदा मृगरसाविष्टो दैवाद्वै वातरंहसा । तुरगेणोहितः प्राप वनं रुचिरपादपम् ॥४॥
गजेन्द्रमृगशार्दूलसिंहसम्बरसङ्कुलम् । ऋक्षवानरवाराहगण्डकादिविराजितम् ॥
तस्मिन्वने सुविस्तीर्णं कदलीखण्डमण्डितम् ।
हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ॥ ६ ॥
ददर्श दर्पणस्वच्छं सरो नीरजराजितम् । स्नातसिद्धवधूवृन्दकुचकुङ्कुमपिञ्जरम् ॥
ददर्श कन्यां तत्रैव काननस्येव देवताम् । स तां दृष्ट्वासुचार्वङ्गीं मन्मथेन प्रपीडितः
चित्रन्यस्तइव क्षिप्रमभूद्विस्मयनिश्चलः । साभुजङ्गीव सङ्क्रुष्टामन्त्रेणेवान्तिकंययौ
कन्दर्पकोटिसदृशम्विश्रान्तं नृपमब्रवीत् ।
सुतां मां विद्धि राजेन्द्र! कल्पस्य प्राणवल्लभाम् ॥ १० ॥
तपोरतस्य शान्तस्य सर्वदा ब्रह्मचारिणः ।

मदर्थे प्रार्थ्यतां विप्र! स मां तुभ्यम्प्रदास्यति ॥ ११ ॥
इति तस्या वचः श्रुत्वा मन्मथेनाकुलीकृतः।
लज्जां त्यक्त्वा स भूपालो ययाचे विजने च ताम् ॥ १२ ॥
मम प्राणव्ययः सुभ्रूस्त्वां विना समुपस्थितः।
कार्याकार्यविचारो हि कस्य जीवितशान्तये ॥ १३ ॥
त्यज्यते प्राप्तममृतंयदेतद्बुद्धिलाघवम् । को जानीतेपरे लोके कस्य किंनुभविष्यति
भज मामनवद्याङ्गि तवैतद्वदनामृतम् । न पाययसि चेन्मह्यं मृतञ्जानीहि मे प्रिये॥
स्वयं पिबामि चेद्विद्धि परलोकगतं हि माम् ।
श्रुत्वेति चकिता तन्वी प्रोवाच विनयान्विता ॥ १६ ॥
भ्रष्टायां मयितातस्यविनष्टेकन्यकाफले । कुलं पततिनःसर्वंतस्मादेतद्विचिन्त्यताम्
यदि ते परमं प्रेम ममोपरि महीपते! । मदर्थे प्रार्थ्यतां विप्र स मां नूनं प्रदास्यति॥
तस्यास्तद्वचनं श्रुत्वा नान्यथा मे भविष्यति।
ज्ञात्वा कन्यां द्विजस्यैव कल्पस्य ब्रह्मचारिणः ॥ १९ ॥
गत्वा ययाचेप्रणतः स्थितंनिजतपोवने । मुनीन्द्रश्चन्द्रवदनां स चास्मैतां ददौमुदा
तत्रैव सङ्गतो राजा मन्मथेन वशीकृतः। रेमे रमणकैर्योगैर्न सस्मार निजं पुरम्॥
कदलीखण्डकुञ्जेषु रम्यासु वनराजिषु।
बहुलाम्रकदम्बेषु राजा भेजे नवां वधूम् ।
सिषेवे चारु सुरतं स विदग्धोऽतिमुग्धया ॥ २२ ॥
एवं हि वसतस्तस्य दुर्द्धर्षस्य वरानने !। आजगाम सुदुर्द्धर्षो राक्षसोऽतिभयङ्करः
ज्वलितो विटकाकारो दंष्ट्रोत्कटकटाननः । तं नृपंमोहयित्वा तु तरसातरलेक्षणाम्
जहार मन्मथाविष्टो रूपयौवनशालिनीम् ।
राजा च तां हृतां दृष्ट्वा वियोग विषमूर्च्छितः।
स्मृत्वा स्मृत्वा सुचार्वङ्गीं विललापाऽऽकुलेन्द्रियः ॥ २५ ॥
हा प्रिये प्रेमपीयूषे प्रणयामृतदीर्घिके । हा सुन्दरि! विशालाक्षिकगता मां विहायवै

पुनरिन्दुमिवानन्दंकदाद्रक्ष्यामितेमुखम् । इतिप्रलापमकरोत्स्मरंस्तांचारुहासिनीम्
उन्मत्त इव बभ्राम तत्र तत्र स्मरातुरः ॥ २७ ॥
एवं विलपतस्तस्य दुर्द्धर्षस्य नृपस्य तु । आजगाम तमुद्देशं कल्पो ब्राह्मणसत्तमः
ददर्श नृपतिं तत्र भ्रमन्तं भ्रमरं यथा ॥ २८ ॥
ज्ञात्वा जामातरं सम्यक्समाश्वास्य वचोऽब्रवीत् ।
एहि दुर्द्धर्ष राजेन्द्र ! गहना कर्मणो गतिः ।
क गतो हि महीपाल !नेपालविषयस्तव ॥ २९ ॥
कुलीना रूपवत्यश्च तिस्रो भार्याः क वै गताः । क तेराज्यं गतंभूप कुत्रपुत्रीगतामम
सर्वं विनश्वरं लोके गन्धर्वनगरोपमम् । अनित्यं जीवितंभूप!राज्यं वै बुद्बुदोपमम्
एवमाश्वासितो राजा कल्पेन च पुनः पुनः ।
सस्मार तां सुचार्वङ्गीं मन्मथेन प्रपीडितः ॥ ३२ ॥
ब्रूहि मे भगवन्सम्यग्यदि तेऽस्ति दया मयि ।
कथं राज्यं स्वकीयं स्यात्कथं मे सुहृदागमः ॥ ३३ ॥
तिस्रो भार्याः कथं विप्र! पश्यामि पृथिवीतले ।
लावण्यामृतशालिन्यस्तवपुत्र्या द्विजोत्तम !।
कथं समागमो भूयो भविष्यति मया सह ॥ ३४ ॥
इति तस्य वचः श्रुत्वा विप्रेणोक्तं वरानने !। गच्छ भूपाल नेपालं महाकालंततोव्रज
तस्मिन्क्षेत्रे तीर्थवरे लिङ्गं सर्वार्थसाधकम् ।
विद्यते यत्र सूर्येण तपस्तप्तं सुदुष्करम् ॥ ३६ ॥
शिप्रायास्तु तटे रम्ये पुण्येब्रह्मेशपश्चिमे । तस्य दर्शनमात्रेण तवाऽभीष्टं भविष्यति
कल्पस्यवचनं श्रुत्वा सत्वरोनृपसत्तमः । नेपालं च ततोगत्वासमाश्वास्यसुहृज्जनम्
सान्तःपुरपरीवारो महाकालवनं गतः । सर्वदा सर्वसिद्धीनामाश्रयं विषयं श्रियः ॥
तत्र स्नात्वा जले पुण्ये शिप्रायाश्चाऽऽशु सिद्धिदे ।
सूर्येणाराधितं लिङ्गं ददर्श नृपसत्तमः ॥ ४० ॥

पूजयामास रत्नैश्च दिव्यैर्वस्त्रैः सुभूषणैः । कर्पूरेण सुगन्धेन लिङ्गपूजा कृता तदा
मुक्ताफलैःसुतारैश्चजलधाराभिरेवच । भक्त्या ननर्त्ततस्याग्रे संस्तुवन्विविधैःस्तवैः
शुश्राव श्रोत्रपीयूषं गीतं देवगृहेशुभे । तच्छ्रुत्वाकौतुकाविष्टोध्वनिंश्रुत्वामनोरमाम्

प्रियामपश्यत्तत्रस्थां लावण्यललनावधिम् ॥ ४३ ॥

तां दृष्ट्वा विस्मयोत्फुल्ललोचनस्तन्मयोऽभवत् ।

क्षिप्रं तद्दर्शनेनैव स्मरेण तरलीकृतः ॥ ४४ ॥

ज्ञात्वा मे सैव पत्नीयं दृष्टादेवप्रसादतः । सापि लावण्यनलिनीराजहंसंविलोक्यतम्

क्षिप्रं पुलकिता तस्या विरराज कुचस्थली ।

एतस्मिन्नन्तरे देवि! वाणी लिङ्गात्समुत्थिता ॥ ४६ ॥

विश्वावसोः सिद्धपतेः सुतैषा प्राणवल्लभा । कल्पेनपालिता सम्यक्त्वदर्थंनृपसत्तम!

आनीता ते मया पत्नी हत्वा तं राक्षसाधिपम् ।

गृहाण च मया दत्तां भुङ्क्ष्व राज्यमकण्टकम् ॥ ४८ ॥

इत्युक्तोऽसौ गतो देवि! लब्ध्वा भार्यां प्रियां तदा ।

सान्तःपुरपरीवारो लिङ्गस्याऽस्य प्रभावतः ॥ ४६ ॥

आराधितो नरेन्द्रेण दुर्द्धर्षेण महात्मना । तदाप्रभृति देवोऽयं दुर्द्धर्षेश्वरसञ्ज्ञकः ॥

त्रिषु लोकेषु विख्यातो वाञ्छितार्थफलप्रदः ॥ ५० ॥

ये पश्यन्तिविशालाक्षि दुर्द्धर्षेश्वरसञ्ज्ञकम् । ते दुर्द्धर्षाभविष्यन्तिशत्रूणांसमरेसदा
सङ्क्रान्तौरविवारे च ग्रहणेचन्द्रसूर्ययोः । गत्वाऽर्चयन्ति ये देवि देवं दुर्द्धर्षमीश्वरम्

ते प्रयान्ति विमानेन मदीयं स्थानमुत्तमम् ॥ ५२ ॥

पापाचाराश्च ये जीवा दुष्कर्मनिरता नराः ।

मुच्यन्ते पातकात्सद्यो दुर्द्धर्षेश्वरदर्शनात् ॥ ५३ ॥

दर्शनात्स्पर्शनात्सद्यो नामसङ्कीर्त्तनादपि । ब्रह्महत्यासहस्रं हि तत्क्षणादेव नश्यति
कृतघ्नो निन्दको दुष्टः पापकर्मा दुरात्मवान् । परदाररतश्चौरो ब्रह्मघ्नो गुरुतल्पगः

मुच्यते सर्वपापेभ्यो दुर्द्धर्षेश्वरदर्शनात् ॥ ५५ ॥

अयने विषुवेचैव सम्प्राप्ते सोमपर्वणि । ये पश्यन्ति च दुर्द्धर्षं स्नात्वाशिप्राजलेशुभे

गङ्गायास्त्रिगुणं पुण्यं जायते नात्र संशयः ॥ ५६ ॥

तत्रतद्दीयतेदानंतस्यसङ्ख्यानविद्यते । पितरस्तोषितास्तेनआत्मावैतोषितस्ततः

कल्पकोटिसहस्रं तु मत्पुरे पूजितो वसेत् ।

यदा याति च भूलोके तदाऽसौ भूपतिर्भवेत् ॥ ५८ ॥

अधृष्यः शत्रुवर्गेण फलं प्राप्नोति चाऽक्षयम् ।

पदं यत्त्रिदशैर्वन्द्यं पुनरावृत्तिवर्जितम् ॥ ५९ ॥

एषतेकथितोदेवि! प्रभावः पापनाशनः । दुर्द्धर्षेश्वरदेवस्य प्रयागेशमतः शृणु ॥ ६० ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-चतुरशीतिलिङ्गमाहात्म्ये उमामहेश्वरसम्वादे दुर्द्धर्षेश्वरमाहात्म्यवर्णनंनाम-सप्ततितमोऽध्यायः ॥ ७० ॥

---

# एकसप्ततितमोऽध्यायः

## प्रयागेश्वरमाहात्म्यवर्णनम्

### ईश्वर उवाच

एकसप्ततिकं विद्धि प्रयागेश्वरसञ्ज्ञकम् । अद्वितीयं विजानीहि महापातकनाशनम्

हास्तिनेऽभूत्पुरे श्रीमाञ्छन्तनुर्नृपसत्तमः । वैवस्वतेऽन्तरे कल्पे युगे द्वापरसञ्ज्ञके

स चाद्भुतमहावीर्यो वज्रसंहननो युवा । सर्वशास्त्रेषु कुशलः कलापुञ्जविचक्षणः ॥३

बलेनविष्णुसदृशस्तेजसा भास्करोपमः । गङ्गामेष चचारैकः सिद्धचारणसेविताम्

स कदाचिन्महाबाहुः प्रभूतबलवाहनः । वनं जगाम गहनं हयनागशतैर्वृतः ॥ ५ ॥

गत्वा तत्र मृगान्व्याघ्रान्घातयामास लीलया ।

महिषाश्ववराहांश्च विनिघ्नन्राजसत्तमः ॥ ६ ॥

स कदाचिद्वने तस्मिन्ददर्श परमां स्त्रियम् ।
जाज्वल्यमानां वपुषा साक्षात्पद्मामिवापराम् ॥ ७ ॥
तां दृष्ट्वा हृष्टरोमाभूद्विस्मितो रूपसम्पदा । पिबन्निवच नेत्राभ्यां नातृप्यतनराधिपः
सा दृष्ट्वैव च राजानं विचरन्तंमहाद्युतिम् । स्नेहादागतसौहार्दान्नातृप्यतविलासिनी
तामुवाच ततो राजा सान्त्वयञ्छ्लक्ष्णया गिरा ।
देवी वा दानवी त्वं च गन्धर्वी यदि वाप्सरा ॥ १० ॥
यक्षी वा पन्नगी वा त्वं मानुषी वा सुमध्यमे !।
याचे त्वाऽम्भोजगर्भाभे भार्या मे भव शोभने !॥ ११ ॥
एतच्छ्रुत्वा वचोराज्ञः संस्तुतं मृदु वल्गु च । अङ्गीकृतंतया देवि समयंप्रार्थितो नृपः
वारिता विप्रिये वापि त्यजेयं त्वामसंशयम् ।
न प्रष्टव्या त्वया राजन्काऽसि कस्येति सर्वथा ॥ १३ ॥
एवमस्त्वितितेनोक्तं सत्येन सुकृतेन च । स तस्याः शीलवृत्तेन रूपौदार्यगुणेन च
उपचारेण च रहस्तुतोष जगत्पतिः । दिव्यरूपा हि सा देवी गङ्गा त्रिपथगा नदी
मानुषं विग्रहं कृत्वा श्रीमन्तं वरवर्णिनि !।
राजानं रमयामास यथा रेमे तथैव च ॥ १६ ॥
स राजा रतिसक्तत्वादुत्तमस्त्रीगुणैर्हृतः । सम्वत्सरानृतून्मासान्न बुबोधबहूनगतान्
रममाणस्तयासार्द्धं यथाकामं नरेश्वरः । अष्टावजनयत्पुत्रांस्तस्याममरवर्णिनः ॥
जातं जातं च सा पुत्रं क्षिपत्यम्भसि मुक्तये ।
प्रीणामि त्वामहमिति गङ्गास्रोतसि पावने ॥ १९ ॥
नास्यतत्तुप्रियं राज्ञःशन्तनोर्ह्यभवत्तदा । नोवाचकिञ्चित्तांदेवींत्यागाद्भीतोमहीपतिः
अथैनामष्टमे पुत्रे जाते प्रहसतीमिव ।
उवाच राजा दुःखार्त्तः परीप्सन्पुत्रमात्मनः ॥ २१ ॥
मा वधीः कस्य काऽसीति किं विध्वंसि सुतानिति ।
पुत्रहिंसा महत्पापं मा प्राप्सीस्तिष्ठ गर्हिते !॥ २२ ॥

गङ्गोवाच

पुत्रकामा न ते हन्ति पुत्रं पुत्रवतांवर !। जीर्णस्तु मम बालोऽयं यथामे समयःकृतः
अहं गङ्गा जह्नु सुता महर्षिगणसेविता॥ देवकार्यार्थसिद्ध्यर्थमुषित्वाऽहं त्वया सह
इमेऽष्टौ वसवो देवा महाभीमा महौजसः। वशिष्ठशापदोषेण मानुषत्वमुपागताः॥
तेषामानयिता नान्यस्त्वदृते भुवि विद्यते। मद्विधा मानुषीधात्रीनचैवास्तिकदाचन
तस्मात्तज्जननीहेतोर्मानुषत्वमुपागता। स्वस्तितेऽस्तु गमिष्यामिपुत्रं पाहिमहाव्रत

सैवमुक्त्वा तदा गङ्गा विष्णुमायाविमोहिता।
रुरोद मानुषं भावमाश्रिता तनुमध्यमा ॥ २८ ॥

अहो बतमहत्कष्टंयदमी घातिताःसुताः। मया नृशंसयामोहाज्जले क्षिप्तास्तुबालकाः
हा वत्साहासुताःपुत्राहा ताताःस्तनयाःक वै। मां विहाय गताः कुत्रहृदयंकिनदीर्यते
मातर्मातेति करुणंब्रुवाणाःस्वयमागताः। उपगुह्येकदा पुत्रान्वत्सवत्सेति सौहृदात्
कस्य जातु प्रणीतेन पिङ्गेन क्षितिरेणुना। ममोत्तरीयमुत्सङ्गं कदाङ्गामलयिष्यति॥
अङ्गप्रत्यङ्गसम्भूता मनोहृदयनन्दनाः। मया तु मात्रा हा वत्सा मारिता निधनंगताः

काँल्लोकान्नु गमिष्यामि कृत्वा कर्म सुदारुणम्।
कथं पुण्या भविष्यामि पुत्रघ्नी निर्दया सती ॥ ३४ ॥

इत्येवं करुणं कृत्वा रुदित्वा चपुनःपुनः। मूर्छितापतिताप्यार्ता निश्चेष्टाधरणीतले
एतस्मिन्नन्तरे देवि! नारदो मुनिसत्तमः। तस्या विलापशब्दं तमाकर्ण्यसहसातदा
विस्मयोत्फुल्लनयनः किमेतदितिचिन्तयत्। एषासाजाह्नवीगङ्गापावनी देववन्दिता
समुद्रमहिषीदिव्यापुण्यात्रिपथगा नदी। मानुषंभावमाश्रित्य कस्माद्रोदितिविह्वला
इत्येवं चिन्तयित्वा च समीपमगमन्मुनिः। गङ्गायांविलपन्त्याश्च ब्रह्मपुत्रस्तुनारदः

उवाचोच्चैर्वियत्स्थोऽसौ देवि! गङ्गे नमोऽस्तु ते ॥ ३६ ॥

नारदोऽहं महापुण्येकस्माद्रोदिषिपावनि !। हिमाद्रिपुत्रीविख्यातादेवगन्धर्वसेविता

धृता शिरसि देवेन शिवेन परमेष्ठिना ॥ ४१ ॥

नारदस्यवचःश्रुत्वा दिव्यादेवनदीतथा। अवलोक्यविमानस्थं प्रत्युवाचमहामुनिम्

मयानारद मोहेन कृतोऽधर्मोजुगुप्सितः। जानन्त्या सुमहत्पापं सप्तपुत्रा हता मया
समुद्रेण वियोगस्तु संजातो ममदैवतः। भार्याजाता मनुष्यस्य पुत्राजाताहताश्चमे
अतो मया विलपितं मग्नयाशोकसागरे। कथ्यतां मम देवर्षे! येन पुण्या भवामि वै
इतितस्यावचः श्रुत्वानारदो मुनिसत्तमः। त्रिकालवेदीशुद्धात्मा गङ्गां वचनमब्रवीत्

नारद उवाच

किं विस्मृतोजगद्वन्द्येदेवानां समयःशुभः। प्रतिज्ञातंत्वया देवि! वसूनांमोक्षकारणे
प्राप्तास्तेवसवोलोकान्प्रसादात्तवसुव्रते!। त्वयावतारितोदेवि! समुद्रःशन्तनुःस्मृतः
इतितस्यवचःश्रुत्वा नारदस्य महात्मनः। गङ्गात्रिपथगापुण्या प्रत्युवाचमहामुनिम्
सत्यमुक्तंत्वया ब्रह्मञ्ज्ञातंसर्वंमयाऽधुना। किन्तुयोनिर्यतोलब्धा मानुषीतेनमोहिता
अपवादभयाद्भीता भवन्तं शरणं गता। दीयतामुपदेशो मे कथ्यतां स्थानमुत्तमम्॥

नारद उवाच

किं विस्मृतो जगद्वन्द्ये देवानां समयःकृतः। अपवादभयाद्भीतायदित्वंदेवि! पुण्यदे

मां पृच्छसि परं स्थानं शृणु त्वं वच्मि सुव्रते!॥ ५२॥

अवन्ती तु समाख्याता सप्तकल्पसनातनी।

तस्यां सखी त्वदीया तु शिप्रा विप्रप्रिया सदा॥ ५३॥

तस्यास्तीरेशुभंलिङ्गं दुर्द्धर्षेश्वरदक्षिणे। विद्यतेत्रिदशैः पूज्यं सर्वतीर्थैश्चसेवितम्
तस्य दर्शनमात्रेण कृतकृत्या भविष्यसि। तस्माद्गच्छमहापुण्येगङ्गे देवर्षिसेविते
इत्युक्ता सा त्रिपथगा नारदेन महात्मना। गता तत्रमहापुण्या सखीं शिप्रां ददर्श ह
संश्लेषं चतदा कृत्वा लिङ्गं दृष्ट्वासुपावनम्। पूजयामास भावेन तत्रैवचचिरं स्थिता
अथ सूर्यसुता देवी यमुना पापनाशिनी। तत्रायातासुहार्द्देनयत्र गङ्गा व्यवस्थिता
ददर्शदेवीतांगङ्गां ध्यायन्तीशङ्करं शिवम्। सापितत्रैवतिष्ठन्तीपूजयन्तीपरंशिवम्
अथ तेनैव कालेन प्राचीदेवी सरस्वती। समायाता सुगुप्ताच गङ्गायमुनयोर्जले॥
एतस्मिन्नन्तरे देवि! शक्रं प्राह स नारदः। न दृश्यते प्रयागस्तु महाकालवनं गतः॥
गङ्गायमुनयोर्मध्ये यत्र गुप्ता सरस्वती। प्रयागः स तु विज्ञेयः सर्वपापप्रणाशनः॥

स साम्प्रतं प्रयागस्तु महाकालवनोत्तमे । केनापि कारणेनैव गतो न ज्ञायते मया॥
इति तस्यवचः श्रुत्वानारदस्य महात्मनः । शक्रेण सहिताःसर्वे ह्यवन्तींतुसमागताः
स्तुवन्तो विविधैः स्तोत्रैर्गङ्गां त्रिपथगां शुभाम् ।
गङ्गे देवि! नमस्तुभ्यं सर्वपापप्रणाशिनि !॥ ६५ ॥
वसूनांजननी देवि! वसूनां मोक्षदायिनि !। त्रैलोक्यपावनीनित्यं हरेण शिरसाधृता
सेविता वालखिल्यैश्च कृष्णस्य परमा कला ।
यमुने! त्वां नमस्यामः कालिन्दीं वरवाहिनीम् ॥ ६७ ॥
सुता त्वं पाविनीदेवि! मार्त्तण्डस्यदिवस्पतेः । शिप्रेदेवि!नमस्तुभ्यंब्रह्मदेहोद्भवेशुभे
प्राची त्वमेव विख्याता पुण्यदेहा सरस्वती ।
या प्राची कौरवक्षेत्रे पुष्करे या महालये ॥
सा त्वं शिप्रा प्रसिद्धा च सर्वपातकनाशिनी ॥ ६९ ॥
त्वं दया सर्वजन्तूनां त्वं स्वर्गः शरणं नृणाम् ।
त्वं माता सर्वजन्तूनां त्वं प्राची भुवि गीयसे ॥ ७० ॥
वहुजन्मकलङ्काङ्कं दृष्ट्वायादेहिनांभुवि । करोविक्षालनं देवि सात्वंत्रैलोक्यसंस्थिता
आसां च सङ्गमो यस्तु स प्रयागो बुधैः स्मृतः ।
अत्रागत्य तु युष्माभिः स्थापितः स्नापितोऽधुना ॥ ७२ ॥
सोऽद्यप्रभृति देवोऽयंप्रयागेश्वरसञ्ज्ञकः । त्रिषु लोकेषुविख्यातःस्मरणात्पापनाशनः
अत्रागत्य प्रपश्यन्ति येप्रयागेश्वरं ततः । तेकृतार्था भविष्यन्ति सर्वपातकवर्जिताः
कुलं च तारितं तेषां पैतृकं मातृकं तथा । गङ्गायास्त्रियुगं पुण्यं चतुर्वर्गफलप्रदम् ॥
जायते नात्र सन्देहः प्रयागेश्वरदर्शनात् ॥ ७५ ॥
गङ्गायां च प्रयागे च देवदारुवने शुभे । नैमिषे पुष्करे चैव श्रीशैले च त्रिपुष्करे ॥
त्र्यम्बके धौतपापेच महेन्द्रे भैरवे तथा । गोकर्णेच सुवर्णाख्ये रेवाकपिलसङ्गमे ॥
एतेषां दर्शनेनैव या सिद्धिर्द्वादशाब्दिका । सालभ्या मासमात्रेण प्रयागेश्वरदर्शनात्
येपश्यन्ति चतुर्दश्यामष्टम्यां च विशेषतः । भक्त्या च नियमंकृत्वाप्रयागेश्वरसञ्ज्ञकम्

न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि । भोगदं मोक्षदं लिङ्गं भविष्यति महीतले
कलास्तिस्रो भविष्यन्ति लिङ्गेऽस्मिन्मोक्षदे शुभे ।
गङ्गा च यमुना प्राची सर्वपातकनाशिनी ॥ ८१ ॥
एवमुक्त्वा स्तुता गङ्गा यमुना च सरस्वती ।
देवैः प्रणतिपूर्वेण गताः स्थानं स्वकं तदा ॥ ८२ ॥
देवाः प्रहृष्टाः शक्राद्याः प्रयागेश्वरसञ्ज्ञकम् ।
स्तुत्वा च विविधैः स्तोत्रैः पूजयित्वा दिवं गताः ॥ ८३ ॥
एष ते कथितो देवि! प्रभावः पापनाशनः । प्रयागेश्वरदेवस्य चन्द्रादित्येश्वरं शृणु

इति श्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्ये उमामहेश्वरसम्वादे प्रयागेश्वरमाहात्म्य-वर्णनंनामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

# द्विसप्ततितमोऽध्यायः

## चन्द्रादित्येश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

द्विसप्ततीश्वरं विद्धि चन्द्रादित्येश्वरं प्रिये । यस्य दर्शनमात्रेण कृतकृत्यो नरो भवेत्
शम्बरेण पुरा देवि! निर्जिताः सङ्गरे सुराः । नष्टा रणं परित्यज्य प्राणत्राणपरायणाः
ग्रस्तं च राहुणा दृष्ट्वा शशाङ्कं भयविह्वलम् ।
विनतायाः सुतो ज्येष्ठः प्रोक्तः सूर्येण सारथिः ॥ ३ ॥
वहाऽरुण! रथं शीघ्रं यत्र युद्धं न विद्यते । श्रूयते चन्द्रसूर्यौ तौ दैत्यानां बलवत्तरौ
राहुर्दंष्ट्राकरालस्तु स तृतीयो भयङ्करः । न ज्ञायते रणे चन्द्रो मृतो नष्टोऽथवापुनः
स च न ज्ञायते शक्रः क्व गतो वरुणो रणे । यमो न ज्ञायते कुत्र धनदस्य च का कथा

एवमुक्तोऽरुणो रुणो रविणा रणमध्यतः । रथं सम्प्रेरयामास यत्र युद्धं न विद्यते॥
एतस्मिन्नन्तरे चन्द्रः समायातस्तु तत्क्षणात् ।
राहुग्रहगृहीतोऽपि यत्र देवो दिवस्पतिः ॥ ८ ॥
सन्त्रस्तः स विलोलाक्षःक्षणमात्रमचेतनः । बभूव सहसा चन्द्रोदृष्ट्वादेवं दिवाकरम्
शम्बरेण रणे रुद्धा रुद्राश्च भयविद्रुताः । जग्मुर्दिशो दश भयादसुरेन्द्रविभीषिताः॥
साध्याः सर्वे भयत्रस्ता गता यत्र न दानवाः । तेषु भग्नेषु देवेषु हतशिष्टेषु सङ्गरे॥
व्यधमत्सर्वगात्राणि वर्माणि च जनक्षये ।
पलायमानदेवानामसुरो बलवच्छरैः ॥ १२ ॥
पृष्ठतो निजघानाऽथ निकृत्ताश्च सहस्रशः । अहं नष्टश्छलेनैव व्यग्रीभूतेऽसुरे तदा
आसुरं रूपमास्थाय प्राणत्राणपरायणः । शीघ्रं च गम्यते तावद्यावन्नायाति शम्बरः
इत्युक्तं निशिनाथेन भयभीतेन पार्वति !। चन्द्रादित्यौ क्षणान्नीतावरुणेन रथेन वै ॥
यत्र देवो जगन्नाथो गरुडस्थो जनार्दनः । सुरसङ्घातसङ्केतकिन्नराकीर्णकन्दरे ॥
मन्दरे सुरनारीणां नन्दने वरचन्दने । दृष्ट्वा तत्र जगन्नाथं शङ्खचक्रगदाधरम् ॥
स्तुतिं तौ चक्रतुर्देवौ चन्द्रसूर्यौ यशस्विनि !॥ १७ ॥
नमो लोकत्रयाध्यक्ष! स्वप्रभाजितभास्कर !।
नमो विष्णो! नमो जिष्णो! नमस्ते कैटभान्तक !॥ १८ ॥
नमः सर्वक्रियाकर्त्रे जगत्त्रात्रे! च ते नमः । नमश्चक्रायुधाधृष्य! नमो दानवघातिने!
नमः क्रमत्रयाक्रान्तत्रैलोक्यान्तर्हितोद्भव । नमः प्रचण्डदैत्येन्द्रकुलकाल! महाबल !।
नमो नाभिह्रदोद्भूतपद्मगर्भमहाप्रभो !। जनिताशेषलोकेशविरञ्चाय महाद्युते !॥२१॥
अमरारिविनाशाय महासमरशालिने । नमस्ते विबुधाधीश!शरणं भव नः प्रभो !॥
चन्द्रसूर्यकृतं स्तोत्रं श्रुत्वा देवो जनार्दनः ।
आश्वास्य स्तुतिपूर्वेण प्राह देवो ह्यधोक्षजः ॥ २३ ॥

विष्णुवाच

स्वागतं चन्द्रसूर्यौ भो भवन्तौ स्तुतिभाजनौ ।

किं कारणमिह प्राप्तौ तद्ब्रूतां विगतज्वरौ ॥ २४ ॥
नारायणेनैवमुक्तौप्रोचतुश्चन्द्रभास्करौ । समरे निर्जिता देवाः शम्बरेण दुरात्मना ॥
न ज्ञाताः क्व गतास्ते च आवां नष्टौ प्रयत्नतः ।
अरुणेन इहानीतौ द्रष्टस्त्वं देव! दैवतः ॥ २६ ॥
शम्बरेण जिता देवाः सच सर्वत्र दृश्यते । स्थले चैव जले चैव शम्बरः क्रूरपौरुषः
नश्यतां त्रिदशेन्द्राणां पृष्ठतःशरवृष्टिभिः । चिच्छेदनरवर्माणिच्छत्राणिचधनूंषिच
वर्माणि च विचित्राणि मुकुटानि महान्ति च ।
पृथूनि चापि चापानि चर्माणि विविधानि च ॥ २६ ॥
गजाश्च मदसम्भिन्नकपोलाः कोटिशःसुराः । वाजिनश्चामरापीडा रत्नपर्याणभूषणाः
विबुधाध्वस्तसन्नाहा विगजा विपदातिनः । विपदामाकराकारा बभूवसुरवाहिनी
ततो दैत्याधिपो मानी परिवृत्तो महारणात् ।
निर्जितारिर्महातेजा ज्वालावानिव पावकः ॥ ३२ ॥
वन्द्यमानोमुनिगणैः स्तूयमानो महर्षिभिः । आनन्दितोजयाशीर्भिः प्रवरैर्दैत्यपुङ्गवैः
तत्र सर्वर्द्धिसम्पूर्णमासनं हेमभूषणम् । अध्यतिष्ठत दैत्येन्द्रस्तत्र मङ्गलवेश्मनि ॥
तत्रोपविष्टः शुशुभे दैत्यराजो महायशाः ॥ ३४ ॥
दिव्यचन्दनपुष्टाङ्गः सुरपुष्पसमुज्ज्वलः । मुकुटाकारजुष्टाङ्गः सितचामरवीजितः ॥
मृतोत्थितैस्तथा दैत्यैर्दैत्यार्धाशैरधिष्ठितः ॥ ३५ ॥
ऋतुभिर्मूर्त्तिमद्भिश्च सेव्यमानो महाबलः । सर्वपुष्पोत्करयुतैर्नानाविहगनादिभिः ॥
तत्र श्रीरतुलालोके तत्र लक्ष्मीर्निरर्गला । तत्र कान्तिर्द्युतिःशोभा शम्बरोयत्रदानवः
एवंसदैत्यनृपतिःसभृत्यस्तत्र मोदते । स्वयमिन्द्रस्तु सञ्जातश्चन्द्रसूर्यौ कृतौस्वकौ
तयोरिति वचः श्रुत्वा स देवः पुरुषोत्तमः ।
चिरं ध्यात्वा स्वमनसि तदाऽवोचदिदं प्रिये !॥ ३६ ॥
चन्द्रसूर्यौ मया ज्ञातं शम्बरस्य विचेष्टितम् ।
ब्रह्मणो वरदानेन भोक्तव्यं तपसः फलम् ॥ ४० ॥

शम्बराय पुरा क्षिप्तं वज्रं कुलिशपाणिना । हृदये निहतःसोऽपि तथापिनमृतोऽसुरः
गम्यतां च मयाज्ञप्तौ महाकालवनोत्तमे । चन्द्रसूर्यौममादेशात्तत्रसिद्धिश्चलप्स्यथः

तत्राऽनन्तो महाकालो लिङ्गरूपो महेश्वरः ।
तस्य चोत्तरतो देशे लिङ्गं कामप्रदं शिवम ॥ ४३ ॥

तस्य दर्शनमात्रेण कृतकृत्यौ भविष्यथः । तस्य ज्वालासमूहेन मरणं शम्बरस्य च

भविष्यति न सन्देहस्तस्मात्तत्रैव गम्यताम् ॥ ४४ ॥
इत्युक्तौ वासुदेवेन चन्द्रसूर्यौ यशस्विनि !।
सत्वरं हृष्टरोमाणौ महाकालवनं गतौ ॥ ४५ ॥

तत्र दृष्ट्वा महादेवं तेजसो राशिमव्ययम् । स्तुतंत्रविविधैः स्तोत्रैःपूजितंकुसुमैःशुभैः

एतस्मिन्नन्तरे वाणी लिङ्गमध्यात्समुत्थिता ।
आश्वासयन्ती तमसाचन्द्रसूर्यौ हिमात्मजे !॥ ४७ ॥
हतः स शम्बरो दैत्यौ गतौ तौ चन्द्रभास्करौ ।
दैत्यानां निर्मितौ दुष्टौ पातालान्तरसंस्थितौ ॥ ४८ ॥

राहुकेतू ग्रहान्ते तु कृतौ समयपूर्वकौ । स्थापितः स्वपदे शक्रो देवैःसह न संशयः

स्वं स्वं स्थानं गताः सर्वे लोकपाला मुदा युताः ।
कान्तिप्रतापसंयुक्तौ भवन्तौ भुवनत्रये ॥ ५० ॥

गगने ग्रहनक्षत्रैः सहितौ विचरिष्यथः । पूर्ववत्पुण्यपापानां साक्षिभूतौभविष्यथः

इत्युक्तौ चन्द्रसूर्यौ तु तया वाण्या वरानने !।
सन्तुष्टौ कृतकृत्यौ तु सञ्जातौ लिङ्गदर्शनात ॥ ५२ ॥

एतस्मिन्नन्तरे देवाः विमानस्थाः समागताः । यत्रचन्द्रश्च सूर्यश्च महाकालवनेशुभे

ज्ञात्वालिङ्गस्य माहात्म्यं नाम चक्रुः समाहिताः ।
सेवितं चन्द्रसूर्याभ्यां लिङ्गं तेजोमयं परम् ॥ ५४ ॥
चन्द्रादित्येश्वरं नाम ख्याति यास्यति भूतले ।
लिङ्गस्यास्य समुत्थेन ज्वालासङ्घेन शम्बरः ॥

दग्धो भृत्यजनैः सार्द्धं चन्द्रसूर्यानुसेवनात् ॥ ५५ ॥
इत्युक्त्वा त्रिदशाः सर्वे समीपे सर्वतःस्थिताः ।
स्तुवन्तो विविधैः स्तोत्रैश्चन्द्रादित्येश्वरं शिवम् ॥ ५६ ॥
चन्द्रादित्यौ च तत्रस्थौ स्थितौ लिङ्गसमीपतः ।
आराधयन्तौ देवेशं पदम्प्राप्तौ च पूर्ववत् ॥ ५७ ॥
ये पश्यन्ति नरा भक्त्या चन्द्रादित्येश्वरं शिवम् ।
ते यान्ति सूर्यलोकं तु चन्द्रलोकं तथैव च ॥ ५८ ॥
विमानैःसूर्यसङ्काशैस्तथाचन्द्रप्रभैः शुभैः । यावच्चन्द्रश्च सूर्यश्च तावत्तेषां सुखम्भवेत
चन्द्रसूर्योपरागे तु चन्द्रादित्येश्वरं शिवम् ।
ये पश्यन्ति नरा भक्त्या स्नात्वा शिप्राञ्च पावनीम् ॥ ६० ॥
तेषांकुलशतं यावत्पैतृकं मातृकं तथा । लोके चन्द्रस्यसूर्यस्य मोदतेशाश्वतीःसमाः
अमासोमसमायोगे ये पश्यन्ति प्रसङ्गतः ।
चन्द्रादित्येश्वरंदेवं न ते यान्ति यमालयम् ॥ ६२ ॥
एष ते कथितोदेवि प्रभावःपापनाशनः । चन्द्रादित्येश्वरेशस्य श्रूयतां करभेश्वरम् ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्ये उमामहेश्वरसम्वादे चन्द्रादित्येश्वरमाहात्म्यवर्णनं नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

# त्रिसप्ततितमोऽध्यायः

## करभेश्वरमाहात्म्यवर्णनम्

### श्रीहर उवाच

त्रिसप्ततीश्वरं विद्धि करभेशं वरानने !। यस्य दर्शनमात्रेण कुयोनिर्नैव लभ्यते ॥१॥
वीरकेतुरभूद्धीमानयोध्याया महीपतिः । विद्याविनयसौभाग्यलावण्यामृतपूरितः
स सम्यक्पालयामास प्रजाःपुत्रानिवौरसान् । अतीतानागतज्ञानपरिनिष्ठितमानसः
अथैकस्मिन्दिने राजा जगाम गहनं वनम् । मृगसिंहगजाकीर्णंव्याघ्रसम्बरसङ्कुलम्
स तत्र विविधान्वन्यान्विव्याधपरवीरहा । मृगांश्च महिषांश्चैव वराहंश्च सहस्रशः
लोडितं तद्वनं सर्वं पशुपक्षिमृगाकुलम् । रहितं श्वापदैः सर्वैः कृतं तेन महीभृता॥

यदा न श्वापदास्तस्मिन्दृश्यन्ते गहने वने ।
तदा विद्धस्तु करभो बाणेनाऽऽनतपर्वणा ॥ ७ ॥
स चापि करभो देवि! बाणमादाय सत्वरन् ।
विद्धोऽपि निःसृतोऽत्यर्थं राज्ञस्तस्यैव पश्यतः ।
स च राजा बली तूर्णं ससार करभम्प्रति ॥ ८ ॥

ततो निम्नस्थलञ्चैव स चोग्रोऽद्रवदाशुगः । मुहूर्त्तेनततोदेवि! योजनानिबहून्यपि॥
ततः स राजा तारुण्यादौरसेन बलेन च । ससार बाणासनधृक्सखड्गःसहयोनृपः
ततो नदान्नदीश्चैव पल्वलानि वनानि च । अतिक्रम्यानतिक्रम्य ससारैव वनेचरम्

स चापि करभो देवि! आसाद्यासाद्य तं नृपम् ।
पुनरप्येति जवनो जवेन महता ततः ॥ १२ ॥

स तस्य बाणैर्बहुभिः करभोविह्वलीकृतः । पृष्ठतःपार्श्वतश्चैव पुनरभ्येतिचान्तिकम्

पुनश्च जवमास्थाय पार्श्वे चाग्रे च दृश्यते ॥ १३ ॥
अथाऽरण्यं महारौद्रं प्रविष्टः करभस्तदा ।

अन्तर्धानं जगामाऽऽशु स च राजा वनेऽविशत् ॥ १४ ॥
प्रविश्य च महारण्यं तापसानामथाश्रमम् । आससाद ततो राजा श्रान्ताश्वोपाविशत्पुनः
तं कार्मुककरं दृष्ट्वा श्रमार्त्तं क्षुधितं तदा । समभ्येत्यर्षयस्तस्मै पूजां चक्रुर्यथाविधि
स पूजामृषिभिर्दत्तां प्रतिगृह्य यथाविधि । अपृच्छंत्तापसान्सर्वांस्तपसो वृद्धिमुत्तमाम्

ते तस्य राज्ञो वचनं प्रतिगृह्य तपोधनाः ।
ऋषयो राजशार्दूलं पप्रच्छुस्तत्प्रयोजनम् ॥ १८ ॥

केन भद्र! सुखार्थेन सम्प्राप्तोऽसि तपोवनम् । पदातिर्बद्धनिस्त्रिंशो धन्वी बाणी नरेश्वर
एतदिच्छामहे श्रोतुं कुतः प्राप्तोऽसि मानद !। कस्मिन्कुले च जातस्त्वं किंनामा ब्रूहि पार्थिव
ततः स राजा सर्वेभ्यो द्विजेभ्यः पुरुषर्षभः । आचख्यौ तद्यथान्यायं कुलं गोत्रं च तत्त्वतः
इक्ष्वाकूणां कुले जातो वीरकेतुर्द्विजर्षभाः । चरामि मृगयूथानि निघ्नन्बाणैः सहस्रशः
बलेन महता युक्तः सामात्यः सपरिच्छदः । यदा न लब्धो गहने मृगो वा सूकरोऽपि वा
महिषश्चित्तलो वापि शशो वा शम्बरो वने । तदा मे करभो विद्धो बाणेनानतपर्वणा

स प्रणष्टः क्षणेनैव स बाणो मम पश्यतः ।
तं द्रवन्तमनुप्राप्तो वनमेतद्यदृच्छया ॥ २५ ॥

भवत्सकाशं नष्टश्रीर्हताशः श्रमकर्शितः । भवतां विदितं सर्वं सर्वज्ञा हि तपोधनाः

भवन्तः सुमहाभागास्तस्मात्पृच्छामि संशयम् ॥ २६ ॥

क्व गतः करभो विद्धो मया बाणेन साम्प्रतम् । क्व च प्राप्स्यामि सहसा ब्रूत तत्सुसमाहिताः
ततस्तेषां समस्तानामृषीणामृषिसत्तमः । ऋषभो देवि! करभं स्मरन्निदमथाब्रवीत्
गतः स करभो भूप! महाकालवने शुभे । गच्छ त्वं च महाराज! महाकालवने शुभे ॥

यत्र देवो महादेवः कारभं रूपमास्थितः ।
विनोदार्थं च देवानां लिङ्गमूर्त्तिरभूत्पुरा ॥ ३० ॥

पश्चिमे क्षेत्रपालस्य कैलासस्य महीपते । समीपे तस्य विघ्नेशो मोदकप्रियसञ्ज्ञकः
ब्रह्मणा पूजितो राजन्देवानामर्थसिद्धये । स च धर्मध्वजो राजा हैहयानां कुलोद्वहः

तुरगेण कदाचित्तु नीतो बदरिकाश्रमम् ।

प्रसिद्धं त्रिषु लोकेषु नरनारायणाश्रमम् ॥ ३३ ॥
तत्र चीराजिनधरं कृशं विप्रं ददर्श ह । शरीरमपि राजेन्द्र ! न केनापि समं तदा
दृष्ट्वा च हसितो विप्रस्तेन राज्ञा प्रमादतः ॥ ३४ ॥
यस्माद्धससि मां दृष्ट्वा तस्माद्दुष्ट्रो भविष्यसि ।
लम्बोष्ठो लम्बदन्तश्च विस्वरो विकृताकृतिः ॥ ३५ ॥
इत्युक्तस्तेन विप्रेणशप्तोऽपिनृपसत्तमः । तं विप्रं प्रार्थयामास स चतुष्टोऽब्रवीदिदम्
न मे वागनृताभूप! कदाचिदपिविद्यते । अवश्यंकरभोभूत्वापश्चान्मुक्तिमवाप्स्यसि
यदा त्वं करभो जातो विद्धो वै वीरकेतुना ।
अयोध्याधिपभूपेन गमिष्यसि शराहतः ॥ ३८ ॥
महाकालवनं दिव्यंतत्र त्वं लिङ्गदर्शनात् । गमिष्यसि परं स्थानंयत्रदेवो महेश्वरः
स चेक्ष्वाकुकुलोद्भूतो वीरकेतुर्महाबलः । लिङ्गदर्शनतो भूप!चक्रवर्तित्वमाप्स्यति
इत्युक्तो नृप! भूपालः करभत्वंसमागतः । स त्वयाऽभिहतो भूप! बाणेनानतपर्वणा
द्रक्ष्यसि त्वं विमानस्थं विमुक्तं लिङ्गदर्शनात् ॥ ४१ ॥
इत्युक्तो नृपतिस्तेन ऋषभेण द्विजेन तु ।
आजगाम त्वरायुक्तो महाकालवनं शुभम् ॥ ४२ ॥
ददर्श तत्र तल्लिङ्गं पूजितं त्रिदशैः सदा । एतस्मिन्नन्तरे वाणी श्रुता तेन महीभृता॥
विमानस्थेन या प्रोक्तातूष्ट्रेण मधुरस्वरा । भोभोराजेन्द्रमांपश्यविमानेचोद्धृतंशुभे
दर्शनादस्य लिङ्गस्य प्राप्ता मे परमागतिः । त्वयाहतोऽहं बाणेनतेनाऽहं त्वागतोवने
समीपमस्य लिङ्गस्य त्वं मे बन्धुः परो गतः ॥ ४५ ॥
इत्युक्त्वा सनृपं देविवचः समधुराक्षरम् । गतस्तु परमं स्थानं नित्यमव्ययमक्षयम्
ततो देवगणाव्योम्नि सकिन्नरमहोरगाः । यक्षराक्षसगन्धर्वाःसपिशाचाप्सरोगणाः
ब्रह्मेन्द्रहरिमुख्याश्च विमानैर्देवि ! संस्थिताः ।
आजग्मुर्मुदितास्तत्र द्रष्टुं कौतुकमानसाः ॥ ४८ ॥
विलोक्य करभं मुक्तं विमानस्थं विराजितम् ।

लिङ्गदर्शनमात्रेण संस्तुतं विविधैः स्तवैः ॥ ४६ ॥

अच्छरत्नसमूहेन मुकुटेनोज्ज्वलत्विषा । भासन्तं रविकोटीनां जगदानन्दकारकम्

नामवक्रुस्ततोदेवा दृष्ट्वा माहात्म्यमुत्तमम । दर्शनादस्यलिङ्गस्यमुक्तोऽयंकरभोयतः

तस्मात्त्रिष्वपि लोकेषु विख्यातः करभेश्वरः ।

भविष्यति न सन्देहः पशुयोनिविमोचकः ॥ ५२ ॥

इत्युक्त्वा त्रिदशाः सर्वे गताः स्वं धिष्ण्यमुत्तमम् ।

अयोध्याधिपतिर्वीरो वीरकेतुः स्वमालयम् ।

समृद्धं निःसपत्नं च ततो राज्यं चकार सः ॥ ५३ ॥

यः पश्यतिनरोदेवि! करभेश्वरसञ्ज्ञकम् । सप्रयात्यक्षयाँल्लोकान्पूज्यमानोगणाधिपैः

यदा कालादिहायातो राजराजेश्वरो महान् ।

पृथिव्यामेकराड् भूत्वा क्रमान्मोक्षमवाप्नुयात् ॥ ५५ ॥

नदुःखं जायतेतस्य व्याधिशोकभयं तथा । ये पश्यन्ति प्रसङ्गेन तल्लिङ्गं करभेश्वरम्

सर्वमेधेषु यत्पुण्यं सर्वदानेषु यत्फलम् । तत्फलं त्वधिकं देवि ! करभेश्वरदर्शनात्

व्याधयो नोपजायन्ते दारिद्र्यं न कदाचन । ऐश्वर्यचातुलंतेषां जायते दर्शनात्सदा

पशुयोनिगता ये च पितरो दुःखितास्तु ये ।

तिष्ठन्ति चाम्बरे ते तु चिन्तयन्तः स्वगोत्रजम् ॥ ५६ ॥

आगमिष्यति नः पुत्रोनप्तावासन्तताविह । कदा पश्यति देवेशं करभेश्वरमीश्वरम् ॥

तेन दर्शनमात्रेण मुक्तिर्नो भविता ध्रुवम ॥ ६० ॥

यो यमुद्दिश्य वै कामं दर्शनं तु करिष्यति ।

तस्य तज्जायते सर्वं मृतस्य परमा गतिः ॥ ६१ ॥

एष ते कथितो देवि! प्रभावः पापनाशनः । करभेशस्य देवस्य शृणुराजस्थलेश्वरम्

इतिश्रीस्कान्दे महापुराणएकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे

चतुरशीतिलिङ्गमाहात्म्य उमामहेश्वरसम्वादे करभेश्वरमाहात्म्य-

वर्णनंनाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

# चतुःसप्ततितमोऽध्यायः

## राजस्थलेश्वरमाहात्म्यवर्णनम्

श्रीहर उवाच

चतुःसप्ततिकं विद्धि शिवं राजस्थलेश्वरम् । यस्यदर्शनमात्रेण सर्वपापैःप्रमुच्यते
विष्णुकल्पे पुरा वृत्ते मन्वन्तरमुखप्रिये । अराजके महीपृष्ठे ब्रह्मा चिन्तापरोऽभवत्
न मनुष्यैर्विना देवाः समर्था लोकधारणे । दानेज्याजपतो देवा भजन्तेपुष्टिमुत्तमाम्

योग्यो राजा प्रजापालः को भवेज्जनवत्सलः ।
सोऽपश्यदथ राजर्षिस्तपस्यन्तं रिपुञ्जयम् ॥ ४ ॥
पृथ्व्यां सर्वगुणाकीर्णं धर्मनिष्ठं महाव्रतम् ।
तमुवाचाऽथ देवेशो ब्रह्मा लोकपितामहः ॥ ५ ॥

ब्रह्मोवाच

रिपुञ्जय! निबोधेदं वचनं मम पुत्रक !। राज्यं च पालयतां वत्स! एककल्पेन चेतसा
अलं ते तपसा तात! कष्टेनानेन साम्प्रतम् । धर्मेण विजिताःसर्वेत्वया लोकानरोत्तम
क्रियतामधुना लोकपालनं तु ममाज्ञया । यतः परोपकारोहि फलं देहस्य देहिनः॥

न धर्मस्तादृशोऽन्योऽस्ति न चान्योऽर्थस्य साधकः ।
निरयाप्तिरपि श्रेय उपकृत्य परस्य वै ॥ ६ ॥

नाऽपकारेण भूतानामपि स्याद्भुवनेशता । सततं लोककार्यार्थं मदाज्ञागौरवेण च

पृथ्वीं समुद्रवसनां प्रजाश्चैव प्रपालय ॥ १० ॥

इत्युक्तः स तु राजर्षिर्ब्रह्मणा पर्वतात्मजे !। प्रोवाच प्राञ्जलिर्भूत्वाब्रह्माणंतुरिपुञ्जयः
स्वभावेनाचला पृथ्वीत्वयापूर्वंविनिर्मिता । विनैवपालकं ह्येषाकुत्रयास्यतिमेदिनी
यद्यवश्यं मया पृथ्वीपालनीया पितामह !। देहि मे नगरीं रम्यामवन्तींसप्तकल्पगाम्

मनुष्यलोके विख्याता सकले साऽमरावती ।

स्वर्गच्युतानां देवानां निवासार्थं प्रतिष्ठिता ॥ १४ ॥

मर्यादामनुवर्त्तेयुर्यदि मे नाकवासिनः । अदत्ते चमया स्थाने न वासः कस्यचिद्भवेत्

अनेन विधिना पृथ्वीं पालयिष्याम्यहं प्रभो ! ॥ १५ ॥

ब्रह्मोवाच

भविष्यत्येष ते कामो यस्त्वयोक्तो नरोत्तम ! । येकेचित्त्रिदशाः सन्ति मद्गौरववशेन ते

तवादेशं करिष्यन्ति सदा त्वद्वशवर्त्तिनः ॥ १६ ॥

देवनाथेतिवै नाम भविष्यति वसुव्रत । इत्युक्त्वान्तर्दधे ब्रह्मा हंसयानंसमास्थितः

अथ राजा प्रतिज्ञाय ब्रह्मणा भूमिपालनम् ।

पृथिव्यामुद्घोषयामास प्रोवाच त्रिदिवौकसाम् ॥ १८ ॥

भवतांविहितः स्वर्गो मनुजानांचभूतलम् । येचात्र कन्दररताः स्थले वाभूधरेषु च

येस्थितायान्तुतेदेवामनुजानामियंधरा । तच्छ्रुत्वाघोषितं तस्यराज्ञोभयनिपीडिताः

त्रिदशा ब्रह्मणो वाक्याद्गौरवात्त्रिदिवंगताः ॥ २० ॥

अथ प्रजाः स नृपतिर्धर्मेणावर्धयत्तदा । पुत्रवत्स्नेहयुक्तेन हृदयेनातिनिर्वृताः ॥ २१

प्रजास्ततस्सुखसम्वृद्धा जरामृत्युविवर्जिताः ।

पुत्रिणो धनधान्याढ्याः सर्वकामसमन्विताः ॥ २२ ॥

यौवनस्थाश्च निर्द्वन्द्वाः सततं धर्मसंश्रयाः ।

नासीत्पृथिव्यां शैलस्तु स्थलो वा द्वीप एव च ॥ २३ ॥

अकृष्टपच्यापृथिवीस्वादवद्भिःफलैर्युता । देवलोक इवासीद्भूःसर्वकामगुणोज्ज्वला

एवं व्रजति काले वै राज्ञि राज्यं प्रकुर्वति । महामर्षपरादेवाविप्रकार्यार्थमुद्यताः ॥२५

प्रजानां बहुदुःखानि मुहुः कुर्वन्त्यनेकशः । अथानावृष्टिमकरोत्सुदीर्घांपाकशासनः

तथा संह्रियमाणेषु लोकेषु नृपसत्तमः । मेघो भूत्वा दिवं प्राप्य सुवृष्टिमकरोन्नृपः ॥

तेनैवाऽऽप्यायितो लोकः सुखी जातो यशस्विनि ! ।

ततः काले तु कस्मिश्चिदवर्षत्पाकशासनः ॥

सम्वर्त्तो वारिदो भूत्वा मेघान्वै विन्यपातयत् ॥ २८ ॥

ततस्तुमारुतोभूत्वानृपतिस्तामधारयत् । ततोऽनलःप्रनष्टोऽभूत्सर्वतःपृथिवीतलात्
नयज्ञान जपोहोमो नचपक्तिरवर्त्तत । लोकश्च व्याधिलङ्घुब्धस्तदाभूद्विषमेस्थितः
ततःस राजातं दृष्ट्वा त्वभवद्धव्यवाहनः । सोऽधारयत्प्रजाः सर्वायज्ञांश्चत्रिदिवौकसः
एतस्मिन्नन्तरे देवि! त्वया सार्द्धंसमागतः । दर्शनार्थं स्वनगरीमहं भूतगणैर्वृतः ॥
ततो देवगणाः सर्वे सकिन्नरमहोरगाः । सयक्षरक्षोगन्धर्वाः सिद्धविद्याधरोरगाः ॥
भूताः प्रेताःपिशाचाश्चयेचान्ये गगनेचराः । चत्वारःसागराश्चैवक्षारक्षीरादिसिन्धवः
गङ्गा च यमुना सिंधुश्चन्द्रभागा सरस्वती । चर्मण्वतीभीमरथी पुण्यागोदावरीनदी

विपाशा देविका पुण्या शरयूः कौशिकी तथा ।
गोमती धूतपापा च बाहुदा च दृषद्वती ॥ ३६ ॥

पारावेदस्मृतिश्चैववेत्रघ्नीनर्मदाशिवा । तापीपयोष्णीनिर्विन्ध्यासर्वास्तत्रसमागताः
पुष्करश्च प्रयागश्च प्रभासो नैमिषस्तथा । पृथुतीर्थोदकश्चैव तथैवाऽमरकण्टकः ३८
गङ्गाद्वारः कुशावर्त्तो बिल्वको नीलपर्वतः । वाराहपर्वतश्चैव तीर्थं कनखलं तथा ॥
भृगुतुङ्गः सुकुक्षश्चाप्यजगन्धश्च पार्वति !। कालिञ्जरः सकेदारो रुद्रकोटिर्महालयः ॥
स्थानानिचसमस्तानि पुण्यान्यायतनानि च । मेरुर्महेन्द्रो मलयोमन्दरोगन्धमादनः
मुनयो वालखिल्याश्च:वेदाश्चत्वार एवच । एते चान्ये च वहवः समायाता मया सह

अनन्तरं मया मेरुः स्थलाकारः कृतस्ततः ।
तस्मिन्स्थले स्थितो देवि! उपविष्टः सुरैर्वृतः ॥
नियुक्ताः सागराः पार्श्वे चत्वारो लवणादयः ॥ ४३ ॥

अथव्याकुलतांप्राप्तः सचराजारिपुञ्जयः । स्वस्थलस्थंच मांदृष्ट्वासमायातस्तुमांप्रति

तेजसा दह्यमानोऽपि मदीयेन वरानने !।
भीतोऽपि तोषयामास कोऽसिदेव !नमोऽस्तु ते ॥ ४५ ॥

स्थलेऽस्मिन्नृपराजाहंमयाप्युक्तंविनोदतः । चतुर्भगश्चतुर्मूर्त्तिश्चतुर्द्धासंस्थितोनृपः
तेनाहं सर्वतो दृष्टो वाङ्मये सचराचरे । अनन्तरं स्तुतस्तेन भक्त्या परमयाप्रिये
प्रभावमतुलं दृष्ट्वा मदीयं व्यापकं परम् । भक्त्या परमया देवि! स च मां शरणंगतः

भूयः स्तुतोऽपि तेनाऽहं तुष्टो वै तस्य भूपतेः ।
तेनोक्तं यदि मे देव! तुष्टस्त्वं परमेश्वर !॥ ४६ ॥
भक्तिर्मे सुदृढाभूयात्त्वयि सर्वेश! शाश्वती । तुष्टोऽहं तेन वाक्येनपुनः प्रोक्तोमयानृप
एवं भविष्यतीत्युक्त्वा पुनर्मां ब्रूहि पार्थिव !।
हृदि स्थितश्च ते कामःसर्वकालं भविष्यति ॥ ५१ ॥
अधृष्यः सर्वदेवानांसर्वदा सम्भविष्यसि । तेनाऽहं प्रार्थितो देविभूयोवरमनुत्तमम्
अतीव राजते देव स्थलोऽयं तव सन्निधौ । मेरुरेष न सन्देहो वल्लभः सर्वदा तव
राजस्थलेश्वरोऽसि त्वंविख्यातोभुवनत्रये । भविष्यसियथा देवतथात्वंकर्तुमर्हसि
अत्रागत्य च यो देवभक्त्यापरमया युतः । यात्रां करोतिभावेनपुराणोक्तविधानतः
तस्य त्वया प्रदातव्यं सर्वं मनसि चिन्तितम् ।
अणिमादिगुणाः सर्वे गुटिकासिद्धिरञ्जनम् ॥ ५६ ॥
खड्गं च पादुकां चैव जलवासं रसायनम् ।
राजस्थलेश्वरं यस्तु भक्त्या पश्यति मानवः ॥ ५७ ॥
दशम्यां तु विशेषेण कृत्वानियमपूर्वकम् । देवानामपि देवत्वं सम्प्राप्नोति महेश्वरः
पूजनीयस्तु त्रिदिवैर्यथा देवः पुरन्दरः । दृष्ट्वा राजस्थले देवं योऽत्रयात्रांकरिष्यति
तस्य श्रीर्विजयश्चैवभवत्येव वरोमम । शत्रवः सङ्क्षयं यान्तु सम्पद्यन्तां मनोरथाः
वृद्धिर्भवतु वंशे च दर्शनात्तव शङ्कर !॥ सर्वेऽत्र देवास्तिष्ठन्तु मेरुरत्रैवतिष्ठतु
तिष्ठन्तु सागराः सर्वे तव देव! समीपतः ॥ ६१ ॥
इत्युक्तोऽहं तदा तेन मया चोक्तं वरानने !। सुद्युम्नोनामभूपालोयंदात्रैवागमिष्यति
पुत्रार्थं भार्यया सार्द्धं तदा दास्यामि वाञ्छितम् ।
तदा समुद्राश्चत्वारः स्थास्यन्ति सफलाः स्वयम् ॥ ६३ ॥
तस्याराधनतो भूप!पुत्रंदास्यामिशोभनम् । येचात्रमानवाराजन्यात्रांकुर्वन्तिभक्तितः
तेषां मनोरथावाप्तिर्भविष्यति न संशयः॥ ६४ ॥
राजा रिपुञ्जयो भक्त्या गणाधीशः कृतो मया ॥ ६५ ॥

एष ते कथितो देवि!प्रभावः पापनाशनः। राजस्थलेश्वरेशस्य श्रूयतां वडलेश्वरम्
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये राजस्थलेश्वरमाहात्म्यवर्णनंनाम
चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

---

## पञ्चसप्ततितमोऽध्यायः

### वडलेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

पञ्चसप्ततिकं देवं वडलेश्वरसञ्ज्ञकम्। विद्धि पापहरं देवि! दर्शनात्कामदं नृणाम् ॥
धनदस्य सखा देवि! मणिभद्रो बभूवह। ईर्ष्याप्रभावस्तत्पुत्रो वडलोनाम कोपनः
रूपवान्सर्वदा कामी सदा मत्तो बलाधिकः।
कदाचित्स गतो रम्यां नलिनीं धनदस्य च ॥ ३ ॥
रत्यर्थं कामसेवार्थं गुप्तां रहसि निर्मिताम्। ददर्श कुसुमैश्छन्नां वज्रवैडूर्यभूषिताम्
तां वै विद्रुमसंछन्नांमुक्तादामविराजिताम्।
सुरम्यां विपुलच्छायां स्वर्णपङ्कजशोभिताम् ॥ ५ ॥
कुवेरभवनाभ्याशे वल्लभां धनदस्य च। आक्रीडं राजराजस्य कुबेरस्य महात्मनः॥
राक्षसैः किन्नरैश्चैव गुप्तां खड्गधरैः सदा। तां दृष्ट्वा परमप्रीतो बभूव वडलस्तदा
प्रियया सहितो रेमे स्थाने गुप्ते मनोहरे। रेमे रमणकैर्योगैरनङ्गेन वशीकृतः॥
तत्र गुप्ता रणे शूरा राक्षसा रणकोविदाः। रक्षन्ति शतसाहस्रं सर्वायुधपरिच्छदाः
ते तु दृष्ट्वैव वडलं मणिभद्रसुतं प्रिये!। भक्ष्यैः सम्पूरितमुखं दिव्यचन्दनभूषितम्
केतकीगर्भपत्राभैर्दन्तैर्दिव्यतराननम्। युद्धार्थे बद्धनिस्त्रिंशशक्तियुक्तमरिन्दमम्॥
भार्यासहायमुन्मत्तं पर्यङ्के च स्थितं सदा।

रत्यर्थमागतं ज्ञात्वा अन्योन्यमभिचुक्रुशुः ॥ १२ ॥

मा वीरानेनमार्गेण सभार्यो गन्तुमर्हसि । आक्रीडोऽयं कुवेरस्य धनदस्य महात्मनः
देवा देवर्षयो यक्षा गन्धर्वाः किन्नरास्तथा । आमन्त्र्य यक्षप्रवरं विहरन्तिरमन्तिच
नेह शक्यं विनादेशाद्विहर्तुं क्रीडितुं चिरम् । भ्रात्रामात्येन सुहृदा केनापिचसुतेनच
येनकेनचिदन्यायाद्वमन्य धनेश्वरम् । विहारः क्रियते दर्पात्स विनश्येदसंशयम् ॥
एवं स राक्षसैर्घोरैर्वडलो विनिवारितः । मामैवमिति सक्रोधंभर्त्सयद्भिः समन्ततः
कदर्थीकृत्य तु स तान्राक्षसान्भीमविक्रमः । व्यगाहत महातेजास्ते सर्वेतंन्यवारयन्

गृह्णीत बध्नीत निकृन्ततैनं पिबाम खादाम च वृत्तहीनम् ।
क्रुद्धा ब्रुवन्तो ह्यपतन्द्रुतं ते शस्त्राणि चोद्यम्य विवृत्तनेत्राः ॥ १९ ॥
ततः स गुर्वीं यमदण्डकल्पां महागदां काञ्चनपट्टनद्धाम् ।
प्रगृह्य तामभ्यपतत्तरस्वी ततोऽब्रवीत्तिष्ठत तिष्ठतेति ॥ २० ॥
ते तस्य वीर्यं च बलं च दृष्ट्वा विद्याबलं बाहुबलं तथैव ।
न शक्नुवन्तः सहितुं समेता हताः प्रवीराः सहसा निवृत्ताः ॥ २१ ॥
विदार्यमाणास्तत एव तूर्णमाकाशमास्थाय विमूढसञ्ज्ञाः ।
कैलासशृङ्गाण्यभिदुद्रुवुस्ते यक्षार्दिता रक्षपालाः प्रभग्नाः ॥ २२ ॥
स शक्रवद्दानवदैत्यसङ्घान्विक्रम्य जित्वा मदनाभितप्तः ।
विगाह्य तां पुष्करिणीं समर्थः कामं स चिक्रीडति यक्षपुत्रः ॥ २३ ॥
ततस्तु ते रक्षपालाः समेत्य धनेश्वरं वै वडलेन नुन्नाः ।
यक्षस्य धैर्यं सुबलं च सङ्ख्ये यथावदाचख्युरतीव भीताः ॥ २४ ॥

तेषां तु वचनं श्रुत्वा मणिभद्रो महायशाः । शशाप पुत्रं दयितं वडलं प्रभुकारणात्

यस्मात्सा नलिनी रम्या सेविता वडलेन तु ।
दयिता धनदस्यापि यथा माता तथैव सा ॥ २६ ॥

तस्मात्पुत्रोमदीयस्तुसर्वभोगविवर्जितः।पङ्ग्वन्धोवधिरोदीनःक्षयरोगमवाप्स्यति
इतिशप्तस्तदाजातोवडलोभोगवर्जितः । पतितोभूतलेचैवतस्मिन्स्थानेगतोऽपिसन्

पीडितः क्षयरोगेण न शशाक विचेष्टितुम् ।
अन्धोऽथ बधिरो जातो गुरुशापहतस्तदा ॥ २९ ॥
चिन्तयामास सहसा शापमत्यद्भुतं महत् । शप्तोऽहं केनसहसा जीवन्योन्यन्तरङ्गतः
कथं शप्तोऽस्मि तातेन मणिभद्रेण वल्लभः । पुत्रो युवा च शूरश्च शत्रुपक्षक्षयंकरः
धन्योऽसौ मणिभद्रोऽपि मत्तातो येन भूतले ।
प्रभुभक्त्या निजः पुत्रः शप्तस्त्यक्तश्च तत्क्षणात् ॥ ३२ ॥
वडलेन पुनः प्रोक्तं धन्योऽहं प्रभुकारणात् ।
उत्सवो निधनं नाम भर्तृपिण्डोपजीविनाम् ॥ ३३ ॥
अन्यायेन यथाकामं प्रारब्धःसञ्चितश्चिरम् ।
तेनाहं शापतां प्राप्तो यास्यामि नरकं ध्रुवम् ॥ ३४ ॥
एवं विलपतस्तस्य वडलस्य वरानने !। आजगामतमुद्देशं मणिभद्रो महाबलः ॥
ददर्श पुत्रं पङ्ग्वन्धं क्षयरोगप्रपीडितम् ॥ ३५ ॥
निःश्वसन्तंसुदुःखार्त्तंविलपन्तंपुनःपुनः । प्रत्युवाचसुतंयक्षो मणिभद्रोऽतिदुःखितः
मया कुपित्रा हा वत्स! शप्तस्त्वं प्रभुकारणात् ॥ ३६ ॥
त्वयेयं नलिनी रम्या धनदस्यातिवल्लभा । सेविता कामतस्तेन प्रवरा राक्षता हताः
तस्मात्पुत्रमयाशप्तो न मिथ्यासभविष्यति । प्रभुर्देवःप्रभुःस्वामीप्रभुर्मातप्रभुःपिता
स्वाम्यर्थे यः प्रियान्प्राणान्परित्यजति सङ्गरे ।
स याति परमं स्थानं ब्रह्मलोकं सनातनम् ॥ ३९ ॥
न मन्त्रसाध्यः शापोऽयं नौषधेनव्रतेन च । नियमेन च दानेन तस्मान्मद्वचनं कुरु ॥
मया श्रुतं शक्रलोके पुराणं स्कन्दकीर्त्तितम् । ब्रुवतो नारदस्यैवदेवानांसन्निधौपुरा
प्रभावोवर्णितस्तेन महाकालवनस्य च । क्षेत्रे ह्यस्मिन्महालिङ्गं स्वर्गद्वारस्यदक्षिणे
विद्यतेव्याधिशमनंरूपसौभाग्यदायकम् । तत्राहंत्वांच नेष्यामिविमानेनाशुगामिना
इत्युक्त्वा मणिभद्रेण समानीतः सुतस्तदा ।
यत्र देवाधिदेवोऽसौ स्वर्गद्वारस्य दक्षिणे ॥ ४४ ॥

स्पर्शनात्तस्य लिङ्गस्य चक्षुष्मान्रूपवान्बली । सुपादःश्रुतिसंयुक्तस्तत्क्षणादभवत्तदा
दृष्ट्वा सुमहदाश्चर्यं मणिभद्रेण पार्वति !। कृतं नाम सुहृष्टेन स्वीयपुत्रस्य नामतः ॥
चक्षुष्मान्वडलो जातो लिङ्गस्याऽस्य प्रभावतः ॥ ४६ ॥
अद्यप्रभृति देवोऽयं वडलेश्वरसञ्ज्ञकः । भविष्यति त्रिलोकेषु विख्यातोनेत्रदायकः
पूजयिष्यन्तियेदेवं वडलेश्वरसञ्ज्ञकम् । लिङ्गंलोकेषु विख्यातंतेप्राप्स्यन्तिमनोरथम्
दृष्टो हरति पापानि स्पृष्टो राज्यं प्रयच्छति ।
अर्चितो भक्तिभावेन मोक्षं दद्यान्न संशयः ॥ ४६ ॥
कार्त्तिके शुक्लपक्षस्य तिथिर्वै द्वादशी भवेत् ।
तस्यां ये पूजयिष्यन्ति वडलेश्वरसञ्ज्ञकम् ॥ ५० ॥
दानं तैः सततं दत्तं ते यान्ति परमं पदम् । प्रयागे च प्रभासे च गङ्गासागरसङ्गमे ॥
तपस्तत्तंभवेत्तैस्तु ते मुक्तानात्र संशयः । गर्भवासे न जायन्तेसर्वसौख्य समन्विताः
गाणपत्याभविष्यन्तिशङ्करस्यसदाप्रियाः । सौभाग्यरूपसम्पन्नाःपुत्रपौत्रैश्चसंयुताः
जायन्ते मानवा लोके वडलेश्वरदर्शनात् ॥ ५३ ॥
गर्भवासेमहाकष्टे यस्य वासो न रोचते । सोऽभ्यर्चयतु भावेन वडलेश्वरमीश्वरम्
न लिङ्गेन विना सिद्धिर्दुर्लभं परमम्पदम् ।
गतिर्न जायते स्वर्गे यावल्लिङ्गं तु नार्चयेत् ॥ ५५ ॥
लिङ्गार्चनविहीनानां सिद्धिश्चापिसुदुर्लभा । ममपुत्रेणसम्प्राप्तमीप्सितंलिङ्गतोयतः
इत्युक्त्वामणिभद्रोऽपि सुतेन सहितोययौ । यत्र देवोधनाध्यक्षःस्थानंस्वंपरमंगतः
एष ते कथितो देवि! प्रभावः पापनाशनः ।
वडलेश्वरदेवस्य श्रूयतामरुणेश्वरम् ॥ ५८ ॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये उमामहेश्वरसम्वादे वडलेश्वरमाहात्म्यवर्णनं
नामपञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

# षट्सप्ततितमोऽध्यायः

## अरुणेश्वरमाहात्म्यवर्णनम्

### ईश्वर उवाच

षट्सप्ततितमं देवमरुणेश्वरसञ्ज्ञकम् । विद्धि पापहरं देवि! दर्शनात्कामदं नृणाम्
पुरा देवयुगे देवि! प्रजापतिसुते शुभे । आस्तां भगिन्यौ रूपेण समुपेतेऽद्भुतेऽनघे॥

ते भार्ये कश्यपस्याऽऽस्तां कद्रूश्च विनता तथा ।
प्रादात्ताभ्यां वरं प्रीतः प्रजापतिसमः पतिः ॥ ३ ॥

कश्यपो धर्मपत्नीभ्यां मुदा परमया युतः । वरातिसर्गं श्रुत्वैव कश्यपादुत्तमं तु ते
हर्षादभ्यधिकांप्रीतिं प्रापतुःस्मवरस्त्रियौ । वव्रे कद्रूः सुतान्नागान्सहस्रंतुल्यवर्चसः
द्वौ पुत्रौ विनतावव्रे कद्रूपुत्राधिकौबले । ओजसातेजसाचैव विक्रमेणाधिकौवतौ

तस्यै भर्त्ता वरं प्रादाल्लभ्स्यसे पुत्रकोत्तमौ ।
एवमस्त्वति तां चाह कश्यपो विनतां तदा ॥ ७ ॥
यथा च प्रार्थितं लब्ध्वा वरं तुष्टाऽभवत्तदा ।
कृतकृत्या तु विनता लब्ध्वा वीर्याधिकौ सुतौ ॥ ८ ॥
कद्रूश्च लब्ध्वा पुत्राणां सहस्रं तुल्यतेजसाम् ।
धार्यौ गर्भौ प्रयत्नेन इत्युक्त्वा स महातपाः ॥ ९ ॥

ते भार्ये वरसंहृष्टे कश्यपो वनमाविशत् । कालेन महता कद्रूर्नागानां सा शतीर्दश॥

जनयामास चार्वङ्गी द्वे चाण्डे विनता तदा ॥ १० ॥

तयोरण्डानि निदधुः प्रहृष्टाः परिचारिकाः । सोपस्वेदेषु भाण्डेषु पञ्चवर्षशतानिच

ततः पञ्चशते काले कद्रूपुत्रा विनिर्गताः ।
अण्डाभ्यां विनितायास्तु मिथुनं न व्यदृश्यत ॥ १२ ॥
ततः पुत्रार्थिनी देवी व्रीडिता सा तपस्विनी ।

अण्डं बिभेद विनता तत्र पुत्रं ददर्श ह ॥ १३ ॥

पूर्वार्द्धकायसम्पन्नमितरेणाप्रकाशितम् । स पुत्रो रोषसंरब्धःशशापैनामितिश्रुतम्

योऽहमेवं कृतो मातस्त्वया लोभपरीतया । शरीरेणासमग्रेण तस्माद्दासीभविष्यसि

पञ्चवर्षशतान्यस्या यया विस्पर्द्धसेसदा । एष तेचसुतोमातर्दास्याद्वैमोक्षयिष्यति

यद्येनमपि मातस्त्वं मामिवाण्डविभेदनात् ।

न करिष्यस्यनङ्गं वा पुत्रं चाऽतितरस्विनम् ॥ १७ ॥

प्रतिपालयितव्यस्ते जन्मकालोऽस्य धीरया ।

विशिष्टबलमीप्सन्त्या पञ्चवर्षशतान्यतः ॥ १८ ॥

एवंशप्त्वाततोदेवि! विनतां मातरंस्वकम् । अरुणो विललापाथबाष्पशोकपरिप्लुतः

हाहामया नृशंसेनमाता स्वजननीस्त्रका । शप्ताविनापराधेन कथं यास्यामिसद्गतिम्

माता देहारणिः पुंसां माता दुःखसहा परा ॥ २० ॥

गर्भक्लेशेपरंदुःखंमाता जानातियादृशम् । वात्सल्यंचाधिकं मातुर्दृश्यतेनतुपैतृकम्

गुरूणामेव सर्वेषां माता गुरुतरास्मृता । एकस्यापिसुतस्यैवन दृष्टानिष्कृतिःश्रुतौ

यदि पिण्डप्रदानं तुगयायां कुरुतेसुतः । गते पितरिपञ्चत्वं माता पुत्रस्य निर्वृतिः

न च मातृविहीनस्य ममत्वं कुरुते पिता ॥ २३ ॥

विकलोमातृहीनस्तुपुत्रोहि प्रोच्यतेतदा । यदास वृद्धो भवति तदाभवंतिदुःखितः

तदा शून्यं जगत्सर्वं यदा माता वियुज्यते ॥ २४ ॥

सोऽहं पापसमाचारो जातो मातृविहिंसकः ।

मरिष्यामि न सन्देहः साधयित्वा हुताशनम् ॥ २५ ॥

जातोऽहं विकलाङ्गस्तु प्राक्कृतेनैव कर्मणा ।

न माता कारणं यस्मात्स्वकीयं कर्म भुज्यते ॥ २६ ॥

एवंविलपतस्तस्य कश्यपस्य सुतस्यच । अरुणस्य विशालाक्षि!नारदः समुपागतः

दृष्ट्वाऽरुणं सुदुःखार्त्तं विलपन्तं पुनः पुनः । प्रत्युवाच प्रसन्नात्मा नारदः प्रहसन्निव

अरुणोऽयमहो रौति कश्यपस्यात्मसम्भवः ।

विनतायाः सुतो ज्येष्ठः सम्भूतस्तपसां निधिः ॥ २९ ॥

उत्पादितोऽयमल्पाहैरर्द्धकायो महाबलः । एनमाश्वासयिष्यामिविनतागर्भसम्भवम्

मोहेन विलपन्तं च श्रेयो मे भविता ध्रुवम् ॥ ३० ॥

इति सञ्चिन्त्य मनसिवाक्यैर्मध्वमृतोपमैः । प्रत्युवाचारुणं तत्र नारदो द्विजसत्तमः

तात कश्यपदायाद विनतागर्भसम्भव । तेजोराशे दुराधर्ष सन्तापं मा कृथा वृथा॥

भाविनोऽर्था भवन्तीहदुःखस्यचसुखस्यच । यत्त्वयाविनता शप्तारहस्यंदेवनिर्मितम्

यदितेऽस्तिघृणाचित्तेशप्ताऽऽत्मजननीत्वया । तदागच्छममादेशान्महाकालवनंशुभम्

उत्तरे देवदेवस्य यात्रेशस्य च पुण्यदम् । विद्यते त्रिदशैः पूज्यं सर्वदासर्वदंशिवम्

अरुणस्त्वेवमुक्तस्तु नारदेन महात्मना । आजगाम क्षणार्द्धेन महाकालवनं शुभम्॥

ददर्श तत्र तल्लिङ्गं तेजःकूटोपमं शुभम् । पूजयामास विधिवत्पुष्पैर्भावसमन्वितः

लिङ्गेनोक्तोऽरुणो देवि! सारथ्यं कुरु सर्वदा ।

सूर्यस्य भ्रमतस्तस्य त्वत्तुल्यो नास्ति सारथिः ॥ ३८ ॥

मयादत्तं तुसामर्थ्यं सूर्यस्यपुरतः सदा । उदयस्तेऽरुणप्राग्वै पश्चात्सूर्यउदेष्यति

त्वन्नाम्नात्रिषु लोकेषुख्यातोऽहमरुणेश्वरः । भविष्यामि न संदेहोनृणामर्थप्रदायकः

ये मां पश्यन्ति सततं त्वन्नाम्ना चारुणेश्वरम् ।

ते यास्यन्ति परं स्थानं दाहप्रलयवर्जितम् ॥ ४१ ॥

मोदिष्यन्तिकुलैःसार्द्धं पितृमातृसमुद्भवैः । कल्पकोटिसहस्रं तुयेपश्यन्तिसमाहिताः

नदुःखं जायते तेषांयेपश्यन्ति रवेर्दिने । संसारसागरोत्थं वै यावदिन्द्राश्चतुर्दश॥

यः पश्यति चतुर्दश्यां कृष्णायामरुणेश्वरम् ॥ ४४ ॥

स नेष्यति पितॄन्स्वर्गेनरकस्थान्नसंशयः । सङ्क्रान्तौरविवारेचयः पश्येदरुणेश्वरम्

शुण्डीरस्वामिनो यात्रा कृता तेन न संशयः ॥ ४५ ॥

इत्युक्तस्तेन लिङ्गेन विनतानन्दनस्तदा । आगतः कृतकृत्यात्मायत्र देवोदिवस्पतिः

अस्य लिङ्गस्य माहात्म्यात्कश्यपस्याऽऽत्मसम्भवः ।

अरुणो दृश्यते व्योम्नि सूर्यस्य पुरतः सदा ॥ ४७ ॥

एषते कथितो देवि! प्रभावःपापनाशनः। अरुणेश्वरदेवस्य पुष्पदन्तेश्वरं शृणु ॥४८

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशातिलिङ्गमाहात्म्येऽरुणेश्वरमाहात्म्यवर्णनंनाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---



# सप्तसप्ततितमोऽध्यायः

## पुष्पदन्तेश्वरमाहात्म्यवर्णनम्

श्रीमहादेव उवाच

सप्तसप्ततिकं देवि! पुष्पदन्तेश्वरं शृणु। यस्य दर्शनमात्रेण गर्भवासो न जायते ॥ १

शिनिर्नामद्विजोदेवि! सचापुत्रोऽभवत्पुरा। पुत्रार्थं चिन्तयामास सतपांसिबहूनि ह

वायुभक्षऽोम्बुभक्षश्च निराहारोर्ध्वबाहुकः।
शाकमूलफलाहारः पर्णाश्येकद्वि पर्णभुक् ॥ ३ ॥

एवमादीनि चान्यानि तपांसि श्रेयसेपरम्। एतेषां तपसां मध्ये तप एकं समाश्रये

परंविघ्नोपशान्त्यर्थंतोषयिष्येऽहमीश्वरम्। एवं सञ्चिन्त्यमनसाऊर्ध्वबाहूर्ध्वपादकः

आभ्यां न स दुरासाद्यो नापराधो भविष्यति ॥ ५ ॥

तथाचकार स मुनिर्वर्षाणां द्वादशैवहि। तपस्यन्तं चतं दृष्ट्वा नियमे परमे स्थितम्

विज्ञप्तोहं त्वया देवि! मन्दरे चारुकन्दरे। करोत्येष तपः क्रूरं पुत्रहेतोर्मुनिर्महान् ॥

तेजसा दीपयञ्छैलं शोषयन्सलिलाशयान्। तपसादुष्करेणैव क्षुभितानाकवासिनः

व्यालेन्द्रा व्याकुलीभूता लुलिताश्चाऽचलेश्वराः।
मुनयो विस्मृतिं प्राप्ताः कम्पेते चापि रोदसी ॥ ६ ॥

अयोनिजः शिनिर्विप्रः पुत्रमिच्छत्ययोनिजम्।
त्वं योनिर्गुणसङ्घानां त्वं योनिस्तपसामपि ॥ १० ॥

त्वं तपस्त्वंपरंधाम शिखिचन्द्रार्कलोचन !। सर्वेश्वर सुतोऽभीष्टःकिंन विप्रायदीयते
सुरासुरगुरो!किंन पुत्रमस्मै प्रयच्छसि । तपसा क्षीणदोषस्य ब्रह्मत्वेभावितात्मनः

शिनेः पुत्रप्रदानं त्वं कुरु मद्वचनाच्छिव !।
तपसा दुष्करेणैव गाढं क्लिष्टो महामुनिः ॥ १३ ॥
तेजांसि ज्योतिषामेव महतां च विधिस्थितः ।
अहस्त्तेजसा स्वेन तमांसीव दिवाकरः ॥ १४ ॥

त्वद्भक्तस्य च देवेश व्यर्थःकस्मात्परिश्रमः । उदितेऽर्केतमांसीह न भवन्तिकदाचन
त्वत्परस्य न देवेश युक्ता दुःखविभीषिका । इत्यहं प्रार्थितो देवि त्वयापर्वतपुत्रिके
विप्रार्थमनुकम्पार्थं पुत्रार्थं चविशेषतः । आकारिता मया देवि! गणास्त्वद्गौरवेणतु
रुद्राश्च हरभक्ताश्चकूष्माण्डागगनेचराः । रोमरौद्रामहानीलाःशिखावन्तःसकोकिलाः

अन्ये च विविधाकाराः कालास्या हरिपिङ्गलाः ।
जटाजूटधराश्चित्रा वीथिनक्षत्रचारिणः ॥ १९ ॥
नीलग्रीवाः कृष्णमुखाः पिङ्गधौतजटासटाः ।
ज्वरोडिण्डिर्महाकालोलाङ्गुलिश्च महेश्वरः ॥ २० ॥

घण्टाकर्णो विशाखश्चपरिशेषागणाश्च ये । वृषारूढाःकामतुल्याःकामरूपबलास्तथा
शूलचन्द्रधराः सर्वेसर्वेतुल्यपराक्रमाः । ममादेशात्समायाताःकृताञ्जलिपुटाःस्थिताः

स्तुवन्तो विविधैः स्तोत्रैरूचुरेवं समाहिताः ।
किं कर्त्तव्यमिहास्माभिरादेशो दीयतां प्रभो !॥ २३ ॥
गणानां वचनं श्रुत्वा ज्ञात्वा भक्तिं च तादृशीम् ।
महातपःप्रभावोऽयं शिनिविप्रस्य कीर्त्तितः ॥ २४ ॥

पुत्रार्थंतप्यतितपःशिनिर्ब्राह्मणसत्तमः । मद्वाक्यात्कोनुविप्रस्य पुत्रत्वंसम्प्रदास्यति

तस्याऽहं सम्प्रदास्यामि सर्वान्कामान्यथेप्सितान् ।
अमरं चाजरं पुत्रं मुनिर्वाञ्छति साम्प्रतम् ॥ २६ ॥
मद्वाक्यं क्रियतां सद्यो विप्रः क्लेशाद्विमुच्यताम् ।

मद्भक्तस्य न सङ्कल्पो मिथ्याभवितुमर्हति ॥ २७ ॥

मदीयंवचनंश्रुत्वा सर्वेकम्पितकन्धराः । सर्वे चावाङ्मुखाजाताःसर्वेध्यानपरायणाः

न कश्चिद्भाषतेकिञ्चिन्न कश्चिद्वीक्षते तदा । अथोक्तं पुष्पदन्तेनरभसान्मानितेन तु

मम चित्तमविज्ञाय गणानामनुकम्पया । न यास्यन्तिगणादेवत्वांविहायमहातलम्

इह स्थास्यन्ति सततं त्वत्समीपे न संशयः ।

कथं योनिं प्रयास्यन्ति सम्प्राप्य मुदमुत्तमाम् ॥ ३१ ॥

हीनां रजोऽधिकां दीनां तमोबहुलधारिणीम् ।

कथं स्वर्गं परित्यज्य यास्यामो नरकं परम् ॥ ३२ ॥

ब्रुवन्नेवं भ्रमेणैव भाव्यर्थेन प्रणोदितः । उक्तोमया विशालाक्षिपुष्पदन्तोगणाग्रणीः

पत त्वं मानुषेलोकेयस्मान्मेविप्रियं कृतम । शप्त्वातंपुष्पदन्तं तु वीरकःप्रेरितोमया

विप्रस्यपुत्रतांतूर्णंपुत्रगच्छममाज्ञया । ततस्तेसंप्रदास्यामिसर्वान्कामान्यथेप्सितान्

इत्युक्तोवीरकोदेवि!गतोविप्रस्यपुत्रताम् । पुष्पदन्तोऽपि करुणंविललापसुदुःखितः

पश्चात्तापेन संयुक्तो निःश्वस्य च पुनः पुनः ।

अहो तत्सफलं जन्म यदाज्ञाक्रियते नरैः ॥ ३७ ॥

प्रभूणामेकचित्तेन ते भृत्या दुर्लभाः स्मृताः । तेषामर्थश्चधर्मश्चकुलं चैवचतारितम्

प्रसन्नास्त्रिदशास्तेषां प्रभुभक्ताश्चये नराः । सेवाधर्मोहि गहनोयोगिनामपि दुष्करः

न ज्ञेयः केन तत्त्वेन दुराराध्यःप्रभुर्भवेन । एकेनाप्यपराधेन प्रकोपं कुरुते प्रभुः ॥४०॥

विनश्यन्त्युपकाराणि तस्मात्सेवा सुदुष्करा ।

स्वामी सर्पश्च वह्निश्च तत्प्रभावं व्रजन्ति हि ॥ ४१ ॥

तस्माद्यत्नेन संसेव्या आत्मरक्षणतत्परैः ।'सोऽहंभूमौ निपतितःप्रभोरादेशभञ्जकः

कांस्तु लोकान्गमिष्यामि कलुषीभ्रूणहा इव ।

एवं विलप्य बहुशो मामेव शरणं गतः ।

उवाच दीनया वाचा प्रणिपत्य पुनः पुनः ॥ ४३ ॥

दीनोऽस्मि ज्ञानहीनोऽस्मि प्रणतोऽस्मि च शङ्कर !।

कुरु प्रसादं देवेश! अपराधं क्षमस्व मे ॥ ४४ ॥

नहि निर्वहणं यान्ति प्रभूणामाश्रिता रुषः । प्रसीद देवदेवेश! दीनस्य कृपणस्य च
अपि कीटपतङ्गत्वं गच्छेयंतव शासनात् । भक्तोऽहं सर्वदा देव! पुत्रत्वेहि प्रतिष्ठितः
इति तस्य वचः श्रुत्वा पुष्पदन्तस्यपार्वति !। ममत्वेनतदादेविप्रोक्तमित्थंत्वयावचः

गच्छ पुत्र ममादेशान्महाकालवनं शुभम् ।
लिङ्गमाराधय क्षिप्रं तत्त्वन्नाम्ना भविष्यति ॥ ४८ ॥

कीर्त्तिस्ते भविता पुत्रयावदाभूतसम्प्लवम् । इत्युक्ते तुत्वयादेविमयाप्युक्तंवरानने
न मे मिथ्या वचः पुत्र! भविष्यतिकथञ्चन । दर्शनादेवलिङ्गस्यममाभीष्टोभविष्यसि

विमाने पुष्पपादे तु समारूढो भविष्यसि ।
पुष्पैः सम्पूज्यमानस्तु पदं प्राप्स्यसि शाश्वतम् ॥ ५१ ॥

गणैः सार्द्धं मयाचैवमुदितोविचरिष्यसि । ममापि नरतिर्वत्सभविष्यतित्वयाविना
अहं तत्रागमिष्यामि महाकालवने शुभे । तुष्टोऽहं सर्वदा वत्सगणानामग्रणीः कृतः

अनया शुद्धया भक्त्या लोकानामुपकारकः ।
भविष्यसि न सन्देहस्तस्मिन्क्षेत्रे गतो ध्रुवम् ॥ ५४ ॥

इत्युक्तो हि मयादेविपुष्पदन्तोगणाग्रणीः । मानीममाज्ञयामौनीमहाकालवनेशुभम्
लिङ्गमाराधयामास दुर्वासेशादथोत्तरे । लिङ्गेनोक्तस्तु सहसा तुष्टोऽहं गणसत्तम!

त्वन्नाम्ना ख्यातिमेष्यामि प्रसादस्ते कृतोऽधुना ॥ ५६ ॥

एतस्मिन्नन्तरे देवि! त्वया सार्द्धमहं गतः ।शक्राद्यैस्त्रिदशैःसार्द्धंगणैर्नानाविधैस्तथा

हृष्टस्तु पुष्पदन्तोऽपि पुष्पपट्टासने शुभे ।
पुष्पैः प्रकीर्यमाणोऽपि पुनः प्राप्तो ममाऽऽन्तिकम् ॥ ५८ ॥
मया संश्लेषितः स्नेहादुत्सङ्गेऽप्यधिरोपितः ।
स्थानं दत्तं विशालाक्षि! इदमुक्तं मया तदा ५९ ॥

येपश्यन्तितनरालिङ्गंत्वयासंपूजितंभुवि । तेयास्यन्तिपुष्पकेणक्रीडन्तोवैत्रिविष्टपम्
[गणाध्यक्षा भविष्यन्तिसर्वकामैरलङ्कृताः । ममलोकेगणाध्यक्षायावदिन्द्राश्चतुर्दश

दर्शनात्क्षीयते पापमैहिकं पूर्वकं तथा । ततः प्रसादान्मे सर्वं ज्ञानं सम्यग्भविष्यति
यः पूजयेच्चतुर्द्दश्यामष्टम्यां सोमवासरे । अमरैः सहसंहृष्टो मोदते दिवि सर्वदा ॥
पैतृकैर्मातृकैः सार्द्धं कुलैस्तु सप्तभिर्युतः । नवदेत्केनचित्सार्द्धं नरोयः प्रातरुत्थितः
पुष्पदन्तेश्वरं दृष्ट्वा सोऽश्वमेधफलं लभेत् । मुच्यतेपातकाद्यैश्च यःशाठ्येनापिपश्यति
नतस्यसन्ततिच्छेदोयः पश्यति दिनेदिने । नियमेन गणाध्यक्षजायतेब्रह्मणोदिनम्

ऐश्वर्यं सप्तलोकेषु भुक्त्वा भोगान्यथाक्रमम् ।
पृथिव्यामेकराड्भूत्वा ममाङ्गे सम्भविष्यति ॥ ६७ ॥

एष ते कथितो देवि! प्रभावः पापनाशनः । पुष्पदन्तेश्वरेशस्य अविमुक्तेश्वरं शृणु ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्रयांसंहितायांपञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्य उमामहेश्वरसम्वादेपुष्पदन्तेश्वरमाहात्म्य-
वर्णनंनाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

# अष्टसप्ततितमोऽध्यायः

## अविमुक्तेश्वरमाहात्म्यवर्णनम्

### ईश्वर उवाच

अष्टसप्ततिकं विद्धि अविमुक्तेश्वरं प्रिये । यस्य दर्शनमात्रेण तीर्थयात्राफलं लभेत् ॥
शाकले नगरे देवि! चित्रसेनोमहीपतिः । बभूव भुविविख्यातोरूपवान्मन्मथाधिकः

तस्य चन्द्रप्रभा भार्या प्राणेभ्योऽपि गरीयसी
पतिव्रता धर्मशीला रूपयौवनशालिनी ॥ ३ ॥

अपुत्रस्यापि नृपतेः पुत्रीजाता मनोरमा । तस्या नाम तदा चक्रे पितापार्थिवसत्तमः

सर्वलक्षणसम्पन्ना कन्या लावण्यवत्यपि ।
सापि जातिस्मरा देवि! सस्मार च पुरातनम् ॥ ५ ॥

वैराग्याद्ब्रह्मचर्यं च चचारतनुमध्यमा । कदाचिद्यौवनं प्राप्तासाच पृष्टा नृपेण वै॥
उत्सङ्गे च निजे कृत्वा मूर्ध्निचाघ्रायहर्षितः । पुत्रि प्रदानकालस्ते कस्मैदेयापरायच
नृपाय नृपपुत्राय संम्मताय द्विजाय वा । वृद्धाय बहुभार्यायग्रामीणाय च पुत्रिणे॥
हर्षेण चावृतो राजा पुनः पप्रच्छ तां सुताम् ॥ ८ ॥
पृष्टा च सा यदा देवी न चोवाचनृपंप्रति । अधोमुखी चसञ्जाता पुनःप्रोक्तानृपेणतु
यदि मद्वचनं पुत्रि! प्रतिभाति न साम्प्रतम् । वरणंस्वेच्छयापुत्रि!कुरुतर्हिस्वयंवरम्
इत्युक्ता सा नृपतिना पित्रा प्रोक्ता पुनः पुनः ।
रुरोद सा वै करुणं श्रुत्वा तां कुत्सितां गतिम् ॥ ११ ॥
जहास चाऽतिहासेन पुनः श्वासांश्चमुञ्चति । प्रहर्षंच पुनःक्षिप्रं प्राप्य बाष्पंचमुञ्चति
तामवस्थांगतां दृष्ट्वापुत्रीमुन्मत्ततांगताम् । किमेतदिति भूपालोग्रसिताकिंग्रहेणवै
भूतेन वा पिशाचेन मत्सुता लक्षणैर्युता ।
इति चिन्तापरो राजा यदा जातो यशस्विनि !॥ १४ ॥
तदाप्रोक्तस्तया पुत्र्यामा तात विमना भव । नाहंग्रस्ता ग्रहेणेह न भूतेन न रक्षसा॥
न पिशाचेन यक्षेण तव कन्यामहीपते !। जातिस्मराऽहमुत्पन्नाश्रूयतां ममजन्म च॥
प्राग्ज्योतिषे पुरे विप्रोहरस्वामीचभूवह । भार्याऽहंदुर्भगाजातातस्यविप्रस्यपार्थिव
रूपयौवनसम्पन्ना तस्य नाहं प्रियाविभो । सदाविद्वेषसंयुक्तो मयि निष्ठुरजल्पकः
नान्यस्य कस्यचिद्द्वेष्टा मुक्त्वा मां पृथिवीपते !।
पाणिग्रहणकाले तु ग्रहैः पापैर्विलोकिता ॥ १६ ॥
अहमूढां कुलीनेन द्विजेनातिगुणेन च । स चावलोकितो विप्रो ग्रहैःपुण्यैर्नराधिप॥
तेन मे वल्लभो राजन्न चाऽहं तस्यवल्लभा । स सदाचारसंयुक्तो वेदाध्ययनतत्परः॥
नान्यत्र कुरुते भावं ब्रह्मचर्यव्रतेस्थितः । ततोऽहं क्रोधसंयुक्ता वशीकरणलम्पटा॥
अपृच्छं प्रमदास्तात यास्त्यक्ताः पतिभिः किल ॥ २२ ॥
ताभिरुक्ता ह्यहं भूप!वश्यो भर्त्ता भविष्यति ।
अस्माकं प्रत्ययो जातस्तस्मात्त्वं कर्तुमर्हसि ॥ २३ ॥

भेषजैर्विविधैश्चूर्णैर्मन्त्रैर्मोहकरैः परैः। तैस्तैस्तु कृतलेपोऽपि भविता दासवत्पतिः
ततोऽहं त्वरिता गत्वा तासां वाक्येन भूपते !। चूर्णं मन्त्रं गृहीत्वाथ प्राप्ता भर्तृगृहं पुनः
प्रदोषे पयसा युक्तश्चूर्णो भर्त्तरि योजितः। ग्रीवायां च मया मन्त्रो न्यस्तः सर्वाङ्गसन्धिषु

यदा पीतश्च चूर्णस्तु मन्त्रेणातीवगुण्ठितः।
वशगस्तत्क्षणाज्जातो मन्त्रचूर्णप्रभावतः॥ २७॥
द्वारदेशे स्थितः क्रन्दन्दासोऽस्मि तव शोभने !।
त्राहि मां शरणं प्राप्तं त्वद्वशोऽहं च शोभने !॥ २८॥
तत्तस्य रुदितं ज्ञात्वा मन्त्रमाहात्म्यतो नृप !।
स्वस्थीकरणयोगेन तदा स्वस्थः कृतः पतिः॥ २९॥

ततः प्रभृति कान्तो मे वश्योऽभूद्भवने स्थितः। पश्चात्मं च गता काले तथा नारकयातनाम्
ताम्रभ्राष्ट्रे च दग्धाहं युगानि दशपञ्च च। सूक्ष्माणि तिलमात्राणि कृत्वा खण्डान्यनेकशः

छेदिता कालसूत्रेण पीडिता घ्राणयन्त्रके॥ ३१॥

क्वाथीभूता तप्ततैलैर्घटे दर्व्याथ लोडिता। पिष्टा चैव शिलापृष्ठे कुट्टिता लोहमुद्गरैः॥
दलिता दन्तदलने दग्धाहं रौरवे भृशम्। अधोमुखी विनिक्षिप्ता त्वमेध्ये पूयशोणिते
यान्यापि युवती तात भर्तुर्वश्यं समाचरेत्। वृथाधर्मा दुराचारा पच्यते नरके भृशम्
भर्त्ता नाथो गुरुर्भर्त्ता भर्त्ता वै दैवतं परम्। भर्त्ता स्वामी सुहृद्भर्त्ता भर्त्ता च परमं पदम्

तुष्टे भर्त्तरि नारीणां तुष्टाः स्युः सर्वदेवताः।
विमुखे विमुखाः सर्वे तस्मात्सेव्यः सदा पतिः॥
भस्मीभवति सा नारी यया भर्त्ता न तोषितः॥ ३६॥
यस्य प्रसादात्प्राप्यन्ते भोगाश्च विविधाः सदा।
तं वश्यं कुरुते या च सा कथं सुखमाप्नुयात्॥ ३७॥

तिर्यग्योनिशतं याति कृमिपक्षिशतानि च। तस्मात्तत्तत्सदा कार्यं स्त्रीभिर्भर्तृवचः किल
एवं पुनर्मया भुक्ता नरका भृशदारुणाः। तिर्यग्योनिसहस्रं तु कर्मणा कुत्सितेन च॥

किञ्चित्पातकशुद्ध्यर्थं चण्डालस्य च वेश्मनि।

जाताऽहमतिरूपेण पीडिता विविधैर्व्रणैः ॥ ४० ॥
सारमेयैर्वृता दीना भक्ष्यमाणा पुनः पुनः ।
दुष्टाऽहं भक्ष्यमाणाऽपि मार्गे रुद्धा वृकैरहम् । तैरहं तुद्यमानापि महाकालवनं गता
दृष्टो मया महादेवो दैवतो मृगमाणया । समीपे देवदेवस्य पिप्पलादेश्वरस्य च ॥
तस्य दर्शनमात्रेण गता शक्रपुरम्प्रति । विमानेन सुदीप्तेन किङ्किणीजालमालिना ॥
दिव्याम्बरधरा दिव्या दिव्यमालाविभूषणा ॥ ४३ ॥
तत्राऽहंपूजिता देवैःस्तुताऽहंचारणैस्तथा । दर्शनात्तस्यलिङ्गस्यजाताऽहंतत्रवेश्मनि
वल्लभा रूपसम्पन्ना शाकलेर्नगरे शुभे ।
स्मृत्वा तु कुत्सितां योनिं विलापश्च कृतो मया ॥ ४५ ॥
स्मृत्वा लिङ्गस्य माहात्म्यं हर्षो जातस्तु तत्क्षणात् ।
तन्मे नैव च वातूल्यं गृहीता न ग्रहेण च ॥ ४६ ॥
जाताजातिस्मराताात! ब्रह्मचर्यव्रतेस्थिता । अतोयास्यामि तं देवं दर्शनार्थम्पुनःप्रभो
यथा न भूयो मे जन्म स्याच्च संसारसागरे ॥ ४७ ॥
इति पुत्रीवचः श्रुत्वा चित्रसेनो महीपतिः । सभृत्यमन्त्रिसहितोमहाकालवनंगतः
ददर्श तत्र तल्लिङ्गं पूजयामास भक्तितः । साऽपि दृष्ट्वैव तल्लिङ्गं तस्मिल्लिङ्गेलयंगता
राजा च पुत्रवाञ्जातोलिङ्गदर्शनतः प्रिये !। बभूवचक्रवर्त्ती स यथा स्वायम्भुवोमनुः
एतस्मिन्नन्तरे देवि! दृष्ट्वा देवे लयं गताम् ।
राजपुत्रीं महादेवि! कृतं नाम मुदान्वितैः ॥ ५१ ॥
अविमुक्तस्य लिङ्गस्यदर्शनादेवतत्क्षणात् । अविमुक्तेश्वरोदेव इतिख्यातोभवत्विति
योऽसौ काश्यां प्रसिद्धोऽस्ति देवो विश्वेश्वरः शिवः ।
स चैवाऽत्र सुविख्यातोऽविमुक्तेश्वरसञ्ज्ञया ॥ ५३ ॥
वाराणसी यथा पुण्या तथाऽवन्ती च मुक्तिदा ।
तस्या दशगुणं पुण्यं श्रूयतेऽत्र विशेषतः ॥ ५४ ॥
तस्माद्विश्वेश्वरो देवः समायातः कुशस्थलीम् ।

यत्रागत्य सुविद्वांसो मानवाः शंसितव्रताः ॥ ५५ ॥
पश्यन्तिपरयाभक्त्याह्यविमुक्तेश्वरंशिवम् । तेषां मुक्तिर्नसन्देहोभविष्यतिसुनिश्चला
अमुक्ता नैव पश्यन्ति मुक्ता पश्यन्ति सर्वदा । ब्रह्मचर्यव्रतैःसम्यगिष्टैः सर्वमखैर्भवेत्
तत्फलं प्राप्यते सम्यगविमुक्तेशदर्शनात् । नैःश्रेयसीगतिःपुण्या दर्शनादेव जायते
यागतिः प्राप्यते साङ्ख्यैर्योगैर्वा या गतिर्भवेत् ।
सा गतिः प्राप्यते सम्यगविमुक्तेशदर्शनात् ॥ ५६ ॥
जन्ममृत्युभयं हित्वा स याति परमां गतिम ।
यः पूजयति भावेन ह्यविमुक्तेश्वरं शिवम ॥ ६० ॥
ब्रह्महाऽपि च यो गच्छेदविमुक्तेश्वरं यजेत् ।
तस्य लिङ्गस्य माहात्म्यात्सर्वपापान्निवर्त्तते ॥ ६१ ॥
शाठ्येनापिचयःपश्येदविमुक्तेश्वरंशिवम् । समुञ्चतिजरांमृत्युं जन्मचैतदशाश्वतम्
स्मृतःसम्पूजितो भक्त्या स्तुतो वा विविधैः स्तवैः ।
मुक्तिं ददाति देवेशो ह्यविमुक्तेश्वरः शिवः ॥ ६३ ॥
एष ते कथितो देवि! प्रभावः पापनाशनः ।
अविमुक्तेश्वरेशस्य हनुमत्केश्वरं शृणु ॥ ६४ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-चतुरशीतिलिङ्गमाहात्म्ये उमामहेश्वरसम्वादेऽविमुक्तेश्वरमाहात्म्यवर्णनंनामाऽ-ष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

# एकोनाशीतितमोऽध्यायः

## हनुमत्केश्वरमाहात्म्यवर्णनम्

### श्रीमहादेव उवाच

एकोनाशीतिकं विद्धि हनुमत्केश्वरं प्रिये !। यस्य दर्शनमात्रेण समीहितफलं लभेत्
प्राप्तराज्यस्यरामस्य राक्षसानां वधे कृते। आगता मुनयो देवि! राघवंप्रतिनन्दितुम्
रामेण पूजिताःसर्वे ह्यगस्तिप्रमुखा द्विजाः। प्रहृष्टमनसोविप्रा रामं वचनमब्रुवन् ॥

दिष्ट्या तु निहतो रामः रावणः पुत्रपौत्रवान्।
दिष्ट्या विजयिनं त्वाऽद्य पश्यामः सह भार्यया ॥ ४ ॥

हनूमता च सहितं वानरेण महात्मना। दिष्ट्या पवनपुत्रेण राक्षसान्तकरेण च ॥
चिरञ्जीवतु दीर्घायुर्वानरो हनुमान्सदा। अञ्जनीगर्भसम्भूतो रुद्रांशो हि धरातले॥

आखण्डलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा।
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ॥
ब्रह्मणा सहिताश्चैव दिक्पालाः पान्तु सर्वदा ॥ ७ ॥
श्रुत्वा तेषां तु वचनं मुनीनां भावितात्मनाम्।
विस्मयं परमं गत्वा रामः प्राञ्जलिरब्रवीत् ॥ ८ ॥
किमर्थं लक्ष्मणं त्यक्त्वा वानरोऽयं प्रशंसितः।
कीदृशः किम्प्रभावो वा किम्वीर्यः किम्पराक्रमः ॥ ६ ॥

अथोचुः सत्यमेवैतत्कारणं वानरोत्तमे। न त्वस्य सदृशोवीर्ये विद्यते भुवनत्रये ॥
एष देव महाप्राज्ञो योजनानां शतं प्लुतः। धर्षयित्वा पुरीं लङ्कां रावणान्तःपुरंगतः॥
प्रादेशमात्रप्रतिमं कृतं रूपमनेन वै। दृष्टा सम्भाविता सीता पृष्टा विश्वासिता तथा
सेनाग्रगामन्त्रिपुत्राः किङ्करा रावणात्मजाः। हता हनुमतातत्रताडिता रावणालये

भूयो बन्धविमुक्तेन सम्भाष्य तु दशाननम्।

लङ्का भस्मीकृता तेन पातकेनेव मेदिनी ॥ १४ ॥
नकालस्यनशक्रस्यन विष्णोर्वैधसोऽपिवा। श्रूयन्तेतानिकर्माणियादृशानिहनूमतः

राम उवाच

एतस्यबाहुवीर्येणलङ्कासीताच लक्ष्मणः। प्राप्तोमम जयश्चैवराज्यंमित्राणिबान्धवाः
सखायं वानरपतिमुक्त्वैनं हरिपुङ्गवम्। प्रवृत्तिमपिकोवेत्तुंजानक्याःशक्तिमान्भवेत्
बाली किमर्थमेतेन सुग्रीवप्रियकाम्यया। तदा वैरे समुत्पन्ने न दग्धस्तृणवत्कथम्
नाहं विदितवान्मन्ये हनुमानात्मनो बलम्। उपेक्षितःक्लिश्यमाने किमर्थं वानराधिपे
एवं ब्रुवाणं रामं तु मुनयो वाक्यमब्रुवन्। सत्यमेतद्रघुश्रेष्ठ यद्ब्रवीषि हनूमतः॥
न बले विद्यते तुल्यो न गतौ न मतावपि।
अमोघवाक्यैः शापस्तु दत्तोऽस्य मुनिभिः पुरा ॥ २१ ॥
न ज्ञातं हि बलं येन बलिना वालिमर्दने। बाल्येऽप्यनेन यत्कर्म कृतं नाम महात्मना
तन्न वर्णयितुं शक्यमेतस्य तु बलं महत्।
यदि श्रोतुं तवेच्छाऽस्ति निशामय वदामहे ॥ २३ ॥
असौ हि जातमात्रोऽपि बालार्क इव मूर्त्तिमान्।
ग्रहीतुकामो बालार्कम्पुप्लावाम्बरमध्यतः ॥ २४ ॥
तूर्णमाधावतो राम! शक्रेण विदितात्मना। हनुस्तेनास्य सहसाकुलिशेनैवताडितः
ततो गिरौ पपातैष शक्रवज्राभिताडितः। पततोऽस्य महावेगाद्वामो हनुरभज्यत
अस्मिंस्तु पतिते बाले मृतकल्पेऽशनिक्षतात् ॥ २६ ॥
ततो वायुः समादाय महाकालवनं गतः। लिङ्गमाराधयामास पुत्रार्थं पवनस्तदा ॥
स्पृष्टमात्रस्तु लिङ्गेन समुत्तस्थौप्लवङ्गमः। जलसिक्तंयथासस्यंपुनर्जीवितमाप्तवान्
प्राणवन्तमिमं दृष्ट्वा पवनो हर्षितस्तदा। प्रत्युवाच प्रसन्नात्मा पुत्रमादाय सत्वरम्
स्पर्शनादस्य लिङ्गस्य मम पुत्रः समुत्थितः।
हनुमत्केश्वरो देवो विख्यातोऽयं भविष्यति ॥ ३० ॥
एतस्मिन्नन्तरे शक्रः समायातः सुरैर्वृतः। नीलोत्पलमयीं मालांसम्प्रगृह्येदमब्रवीत्

मत्करोत्सृष्टवज्रेण यस्मादस्य हनुर्हतः । तदेष कपिशार्दूलो हनुमांस्तु भविष्यति

वरुणोऽस्य वरं प्रादान्नास्यमृत्युर्भविष्यति ।

यमो दण्डादवध्यत्वमारोग्यं धनदो ददौ ॥ ३३ ॥

सूर्येण च प्रभा दत्ता पवनेन गतिर्द्रुता । लिङ्गेन च वरो दत्तो देवानां सन्निधौ तदा

आयुधानां हि सर्वेषामवध्योऽयं भविष्यति । अजरश्चामरश्चैव भविष्यति न संशयः

अमित्रभयदो ह्येष मित्राणामभयप्रदः । अजेयो भविता युद्धे लिङ्गेनोक्तं पुनःपुनः

शत्रोर्बलोत्सादनाय राघवप्रीतये सदा । कियत्कालं बलं स्वीयं नस्मरिष्यतिशापतः

हते तु रावणे भूयो रामस्यानुमते स्थितः ।

विभीषणं प्रार्थयित्वा मामत्र स्थापयिष्यति ॥ ३८ ॥

ततो मां त्रिदशाः सर्वे पूजयिष्यन्ति भाविताः ।

तेनैव नाम्ना विख्यातिं पुनर्यास्यामि भूतले ॥ ३९ ॥

अथ गन्धवहः पुत्रं प्रगृह्य गृहमानयत् । अञ्जनायै तदाचख्यौ वरलब्धिं च लिङ्गतः

एवं लिङ्गप्रभावाच्च बलवान्मारुतात्मजः । स जातस्त्रिषुलोकेषुराम! तस्मात्प्रशस्यते

पराक्रमोत्साहमतिप्रतापैः सौशील्यमाधुर्यनयादिकैश्च ।

गाम्भीर्यचातुर्यसुवीर्यधैर्यैर्हनूमतः कोऽभ्यधिकोऽस्ति लोके ॥ ४२ ॥

ममेव विक्षोभितसागरस्य लोकान्दिधक्षोरिव पावकस्य ।

प्रजा जिहीर्षोरिव चान्तकस्य हनूमतः स्थास्यति कः पुरस्तात् ॥ ४३ ॥

एतद्वै कथितं तुभ्यं यन्मां त्वं परिपृच्छसि ।

हनूमतोऽस्य बालस्य कर्माण्यद्भुतविक्रम! ॥ ४४ ॥

दृष्टः सभाजितश्चापि रामगच्छामहे वयम् । एवमुक्त्वागताः सर्वे मुनयोऽवन्तिमण्डलम्

पूजयामासुरीशानं हनुमत्केश्वरं शिवम् ॥ ४५ ॥

समर्चयन्ति ये भक्त्या लिङ्गं त्रिदशपूजितम् । हनुमत्केश्वरं देवं ते कृतार्थाः कलौ युगे

व्रजन्त्येव सुदुष्प्राप्यंब्रह्मसायुज्यमव्ययम् । सम्प्राप्यतुपुनर्जन्म लभन्तेमोक्षमव्ययम्

यः पश्यति नरोलिङ्गं हनुमत्केश्वरंप्रिये । सोऽधिकंफलमाप्नोतिसर्वदुःखविवर्जितः

सर्वलोकेषु तस्यैव गतिर्न प्रतिहन्यते। दिव्येनैश्वर्ययोगेन युज्यते नात्र संशयः॥
बालसूर्यप्रतीकाशविमानेन सुवर्चसा। वृतः स्त्रीणां सहस्रैस्तु स्वच्छन्दगमनागमः
विचरत्यविचारेण सर्वलोकान्दिवौकसाम्।
स्पृहणीयतमः पुंसां सर्ववर्णोत्तमोऽधुना॥ ५१॥
स्वर्गाच्च्युतः प्रजायेत कुले महति रूपवान्। धर्मज्ञो रुद्रभक्तश्चसर्वविद्यार्थपारगः
राजा वा राजतुल्यो वा दर्शनादस्य जायते। स्पर्शनात्परमं पुण्यं यजनात्परमंपदम्
एष ते कथितो देवि! प्रभावः पापनाशनः। हनुमत्केश्वरेशस्य स्वप्नेश्वरमथो शृणु

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्य उमामहेश्वरसंवादे हनुमत्केश्वरमाहात्म्य-वर्णनंनामैकोनाशीतितमोऽध्यायः॥ ७९॥

---

# अशीतितमोऽध्यायः

## स्वप्नेश्वरमाहात्म्यवर्णनम्

### ईश्वर उवाच

अशीतिकं विजानीहिदेवंस्वप्नेश्वरं प्रिये!। यस्यदर्शनमात्रेणदुःस्वप्नंनश्यतिध्रुवम्
कल्माषपादेति ख्यातो लोके राजा बभूव ह।
इक्ष्वाकुवंशजो देवि! तेजसा सूर्यवद्भुवि॥ २॥
स कदाचिद्वने राजा वशिष्ठसुतमौरसम्। शक्तिं परमधर्मज्ञं ददर्श विजितेन्द्रियम्॥
मार्गस्थितं तपोनिष्ठमपगच्छेति चाऽब्रवीत्॥ ३॥
अमुञ्चन्तं तु पन्थानं तमृषिं नृपसत्तमः। जघान कशया मोहात्तदा राक्षसवन्मुनिम्॥
कशाप्रहाराभिहतस्ततः स मुनिपुङ्गव!। तं शशाप रुषाविष्टो वाशिष्ठःक्रोधमूर्च्छितः
हंसि राक्षसवद्यस्माद्राजापसद तापसम्। तस्मात्त्वमद्यप्रभृतिपुरुषादो भविष्यति

सततं पिशितासक्तश्चरिष्यसि महीमिमाम् । सतुशप्तस्तदातेन तत्क्षणाद्वैनृपोत्तमः
जगाम शरणं शक्तिं प्रसादयितुमर्हयत् । यदा न तुष्टो विप्रर्षिः शक्तिःपरमकोपनः

प्रसाद्यमानो भूपेन तदा तेनापि भक्षितः ॥ ८ ॥
शक्तिं तं भक्षयित्वा तु वशिष्ठस्याऽपरान्सुतान् ।
भक्षयामास सहसा सिंहः क्षुद्रमृगानिव ॥ ९ ॥

तदाप्रभृति सञ्जातः पुरुगदो नृपोत्तमः । रात्रौपश्यतिदुःस्वप्नान्पापसङ्गेनमोहितः

दृष्ट्वा भयानकान्स्वप्नान्स राजा पर्यतप्यत् ।
पश्चात्तापेन संयुक्तो विललाप सुदुःखितः ॥ ११ ॥

अथाप्युक्तममात्यैश्चकिंकरोषिमहीपते । कस्मात्तेनिष्प्रभा कान्तिर्विवर्णोहरिणःकृशः

स राजा कथयामास दुःस्वप्नाननुपूर्वशः
स्वप्नेऽहं सागरं शुष्कं चन्द्रं च पतितं भुवि ॥ १३ ॥

उपरुद्धां च जगतीं घनेन तमसावृताम् ।आत्मानं चाहमद्राक्षं मलिनं मुक्तमूर्द्धजम्
पतन्तमद्रिशिखरात्कलुषे गोमये ह्रदे । पिबन्नञ्जलिना तैलं हसन्निव मुहुर्मुहुः ॥ १५॥
तैलेनाभ्यक्तसर्वाङ्गस्तैलमेवावगाहयन् । पीठे कार्ष्णायसे चैवनिषण्णोऽहमधोमुखः

गायन्ति प्रमदा रक्ता रक्तमाल्यानुलेपनाः ।
कृष्णाम्बरधराश्चान्याः कृष्णमाल्यानुलेपनाः ॥ १७ ॥
ताभिराकृष्यमाणोऽपि नीतोऽहं दक्षिणां दिशम् ।
बद्ध्वा रज्ज्वा सुवर्णस्य लोहस्य रजतस्य च ॥ १८ ॥

पांसुकर्दमयोर्मध्ये मग्नोऽहं लोहयन्त्रितः । कपोतैस्तुद्यमानोऽहंगृध्रैः काकैश्चदारुणैः

शृगालैर्भक्ष्यमाणश्च स्थितो मद्गुरमस्तके ।
ऋक्षवानरयानस्थो गतोऽहं दक्षिणां दिशम् ॥ २० ॥

नदीं निमग्नो निश्चेष्टो जलहीनांमहीसमाम् । दन्तैर्विदारितो रात्रौरासभेनाहमर्द्दितः
ताडितो हृदयेऽत्यर्थं चरणैर्वज्रसन्निभैः । दृष्टिश्च हन्यतेऽत्यर्थं वेतालैर्लोहशङ्कुभिः
करालैः कण्टकैःकृष्णैःपुरुषैरुद्यतायुधैः । स्वप्नेऽहं ताडितोऽत्यर्थमप्रमाणैःशितैःशरैः

एवमेतन्मया दृष्टमिमां रात्रिं भयावहाम् ।
सङ्ख्यां कर्तुं न शक्येत दुःस्वप्नानपरान्बहून् ॥ २४ ॥
इमां तु दुःस्वप्नगतिं निरीक्ष्य वै ह्यनेकरूपामविचिन्तितां पुरा ।
भयं महन्मे हृदयं न शुद्ध्यति प्रगृह्य बाहू विलपाम्यनाथवत् ॥ २५ ॥
नृपस्य वचनं श्रुत्वा अमात्या भृशदुःखिताः ।
पश्यन्तो दुर्निमित्तांश्च उल्कापातादिकांस्तदा ॥ २६ ॥
सौरिसूर्यकुजाक्रान्तं नगरं दृश्यतेऽधुना । नागंचतुष्पदं विष्टिं किंस्तुघ्नं शकुनिंतथा
करणानि न शस्यन्ते मुहूर्त्ता दारुणाभवन् । विदित्वानृपभङ्गं तु देशभङ्गं कुलक्षयम्
आश्वासयन्तो राजानमिदं वचनमब्रुवन् ।
अलं शोकेन काकुत्स्थ! सत्यासत्या हि विभ्रमाः ॥ २९ ॥
दृश्यन्तेभाविताःपुंसिस्वप्ने धातुवशेनहि । तथापित्रादिदेवांश्चपूजयब्राह्मणांस्तथा
एभिस्ततो मोक्ष्यसे त्वं मानसादधिविभ्रमात् ।
यस्माद्दैवोपघातानां दैवमेव हि रक्षणम् ॥ ३१ ॥
एवमाश्वासितो भूपो ह्यमात्यैर्धर्मकोविदैः । तत्पापं कथयामास गुरुपुत्रवधादिकम्
वशिष्ठस्य सुतोज्येष्ठःशक्तिर्वैभक्षितोमया । नृशंसेन तथामात्या एकोनंभक्षितंशतम्
तेन पापेनसन्तप्तःकथंस्वस्थोभवामि वै । एकापिब्रह्महत्या या सापिदैवात्सुदुष्करा
मया पुनर्नृशंसेन सा तथा न तु वर्जिता ।
कांस्तु लोकानूगमिष्यामि कृत्वा कर्म सुदारुणम् ॥
राक्षसोऽहमनेनैव शरीरेण कुलान्तकृत् ॥ ३५ ॥
जातः कुले रघूणां वै पापात्मा पापसम्भवः ।
सोऽहमत्र मरिष्यामि साधयित्वा हुताशनम् ॥ ३६ ॥
इति तस्य वचः श्रुत्वा सौदासस्य सुविस्मिताः ।
अमात्या वेदतत्त्वज्ञाः सर्वशास्त्रविशारदाः ॥ ३७ ॥
अहो पापमिदं भूरि कृतं पापेनसर्वथा । प्रायश्चित्तं न जानीमो वशिष्ठेनविनाऽधुना॥

तस्मादद्यैव गन्तव्यमस्य भूपस्यकारणात् । यत्रतिष्ठतिविप्रर्षिर्वशिष्ठोभगवान्मुनिः

इत्युक्त्वा सहितास्तेन तेऽमात्याभृशदुःखिताः ।

गत्वा यत्राऽऽश्रमे विप्रो वशिष्ठो भगवानृषिः ॥ ४० ॥

अदृश्यन्तीं वधूं दीनां यत्राश्वासयतिप्रभुः । अदृश्यन्ती तु तं दृष्ट्वा क्रूरकर्माणमग्रतः

भयसम्विग्नया वाचा वशिष्ठमिदमब्रवीत् ॥ ४१ ॥

असौ मृत्युरिवोग्रेण दण्डेन बहुगर्वितः । प्रगृहीतेन काष्ठेनराक्षसोऽभ्येतिभीषणः

तन्निवारयितुं शक्तो नान्यो वै भुवि कश्चन । त्वामृतेऽद्य महाभाग सर्ववेदविदांवर

त्राहि मां भगवन्पापादस्माद्दारुणदर्शनात् ! राक्षसोऽयमिहागत्य नूनमावांसमाहते

वशिष्ठ उवाच

माभैःपुत्रि न भेतव्यंराक्षसात्ते कथञ्चन । नैतद्रक्षोभयं यस्मात्पश्यसित्वमुपस्थितम्

राजा कल्माषपादोऽयममात्यैः सहितो विभुः ॥ ४५ ॥

स एषोऽस्मिन्वनोद्देशे समायातो ममान्तिकम् ।

तमायान्तमथालक्ष्य वशिष्ठो भगवानृषिः ॥

वारयामास तेजस्वी हुङ्कारेण नृपोत्तमम् ॥ ४६ ॥

मन्त्रपूतेनच ततःसमभ्युक्ष्य च वारिणा । मोक्षयामास वै भावाद्राक्षसाद्राजसत्तमम्

प्रतिलभ्य ततःसञ्ज्ञामभिवाद्य कृताञ्जलिः । उवाचनृपतिः काले वशिष्ठमृषिसत्तमम्

सौदासोऽहं महाभाग दासोऽहंतवसुव्रत ॥ अस्मिन्कालेयदिष्टंतेब्रूहिकिंकरवाणिते

तस्य तद्वचनं श्रुत्वा नृपस्यद्विजसत्तमः । ज्ञात्वातपोबलेनैव विश्वामित्रस्यचेष्टितम्

राजानं प्रत्युवाचेदं विनयावनतं तथा ॥ ५० ॥

ज्ञातमेव यथाकालं गच्छ राजन्कुशस्थलीम् ।

महाकालसमीपे तु लिङ्गं दुःस्वप्ननाशनम् ॥ ५१ ॥

राजसम्पत्करं दिव्यंपुत्रपौत्रविवर्द्धनम् । ब्रह्महत्यासहस्राणां स्फोटनं पापनाशनम्

तस्य दर्शनमात्रेण विपाप्मा च भविष्यसि ॥ ५२ ॥

दुःस्वप्नजं भयंघोरंविनङ्क्ष्यतिनसंशयः । ग्रहाश्चसानुकूलास्तेभविष्यन्तिनृपोत्तम

इत्युक्तो गुरुणा भूयो वशिष्ठेन महात्मना । जगामत्वरितोदेवि! महाकालवनं शुभम्
दद‍र्श तत्र तल्लिङ्गं दुष्टदुःस्वप्ननाशनम् ॥ ५४ ॥
नष्टाः सर्वेऽपि दुःस्वप्नाः सुस्वप्नाश्चाभवंस्तदा ।
राजा निष्कल्मषो भूत्वा पुनः प्राप्तोन्निजं पदम् ॥
अयोध्याया गतो राज्यं चकार मुदितस्तदा ॥ ५५ ॥
तदाप्रभृति देवोऽयं सुस्वप्नेश्वरसञ्ज्ञकः । बभूव भुवनेख्यातः सर्वदुःस्वप्ननाशनः
अष्टम्यां च चतुर्दश्यां देवं स्वप्नेश्वरं शिवम् ।
दर्शनं येकरिष्यन्ति स्नात्वा शिप्राजले शुभे ॥
आजन्मप्रभवं तेषां दुःस्वप्नं च विनश्यति ॥ ५७ ॥
स एवसर्वदापूज्य इहलोकेपरत्रच । यःपश्यतिनरोभक्त्यादेवंस्वप्नेश्वरं शिवम् ॥ ५८
यंयंकाममभिध्याय मनसाऽभिमतं नरः । तं तं दुर्ल्लभमाप्नोति सुस्वप्नेश्वरदर्शनात्
नियमेन प्रपश्यन्ति देवं स्वप्नेश्वरं सदा । ते प्रयान्तितनुं त्यक्त्वामदीयंभवनंप्रिये
भक्तिहीनः क्रियाहीनो यः पश्यति प्रसङ्गतः ।
सुपुण्यां गतिमाप्नोति योगिगम्यां यशस्विनि !॥ ६१ ॥
ये च पुष्पैर्विचित्रैश्चपूजयन्ति च पर्वसु । तेसर्वकामसम्पन्नाः श्रीबलारोग्यसंयुताः ॥
दीर्घायुषः शुभाचारा जायन्ते देहिनोऽमलाः ॥ ६२ ॥
एतेच ब्रह्मविष्णिचन्द्रकुवेरदहनादयः । सुस्वप्नं परमं प्राप्ताः श्रीस्वप्नेश्वरदर्शनात् ॥
एष ते कथितो देवि! प्रभावःपापनाशनः । स्वप्नेश्वरस्य देवस्य शृणुलिङ्गचतुष्टयम्
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे
उमामहेश्वरसम्वादे स्वप्नेश्वरमाहात्म्यवर्णनंनामाऽशीतितमोऽध्यायः ॥ ८० ॥

———

# एकाशीतितमोऽध्यायः

## पिङ्गलेश्वरमाहात्म्यवर्णनम्

ईश्वर उवाच

चतुर्द्वारस्थितं देवि! शृणु लिङ्गचतुष्टयम्। यस्य दर्शनमात्रेण कृतकृत्यो नरो भवेत्
अहं पृष्टस्त्वया देवि कौतुकाच्च वरानने। अतीव रमणीयं च स्थलं दर्शय मे प्रभो!॥

सेवितं बहुभिः सिद्धैः पुनरावृत्तिकाङ्क्षिभिः।
यद्गुह्यं च पवित्रं च प्रलयेऽप्यविनाशि यत्॥ ३॥

अनन्यसदृशं दिव्यं यत्तीर्थं यत्तपोवनम्। असङ्ख्येयगुणोपेतं भुक्तिमुक्तिकरं शुभम्

सुवर्णशृङ्गाः प्रासादा हर्म्याणि विविधानि च।
उद्यानानि विचित्राणि मार्गाश्च विविधाः शुभाः॥ ५॥

समीहितफलावाप्तिर्यत्र लभ्या सुखेन वै। सिद्धचारणगन्धर्वकिन्नरोद्गीतनादितम्॥
पुण्यलोकोपमस्थानं त्रिविष्टपविभूषणम्। एवमभ्यर्थितो देवि मन्दरे चारुकन्दरे
मया प्रोक्तं प्रसन्नेन स्थानं शृणु सनातनम्। महा कालवनं रम्यं स्वर्गात्सुखकरं परम्
अनौपम्यगुणोपेतं भुक्तिमुक्तिकरं शुभम्। तत्समः कोऽपि धन्योऽन्यो न दृष्टो भुवनत्रये

देवगन्धर्वसिद्धैश्च सेव्यं वै मुक्तिकाङ्क्षिभिः।
विनोदार्थं मया सृष्टं त्वत्प्रियार्थं कुतूहलात्॥ १०॥

तिलकं सर्वतीर्थानां जम्बूद्वीपे मनोरमे। इच्छाकामफलावाप्तिरनायासेन लभ्यते॥
जरारोगभयैर्हीनं सर्वव्याधिविवर्जितम्। शक्राग्नियमरक्षोम्बुवायुसोमेशसेवितम्॥

स्वर्गे प्रमुदिता देवास्तेऽपि काङ्क्षन्ति सर्वदा॥ १२॥

असङ्ख्येयफलं त्वत्र अक्षया च गतिः सदा। यैर्न संसेवितं स्थानं वञ्चितास्ते नरा भुवि
क्षेत्रस्य च गुणान्वक्तुं देवदानवमानवैः। न शक्यते प्रयत्नाच्च स्वयं यत्र स्थितो ह्यहम्
यत्किञ्चिदशुभं कर्म कृतं मानुषकर्मणा। महाकालवनं प्राप्य तत्सर्वं भस्मसाद्भवेत्॥

न सा गतिः कुरुक्षेत्रे गङ्गाद्वारे त्रिपुष्करे ।
या गतिर्विहिता पुंसां महाकालवने सदा ॥ १६ ॥

तिर्यग्योनिगतागत्वामहाकालवनेस्थिताः । तत्रैवनिधनं प्राप्तास्तेयान्तिपरमांगतिम् मेरुमन्दरमात्रोऽपिराशिःपापस्यकर्मणः । महाकालवनं प्राप्यसर्वोऽपि व्रजतिक्षयम् श्मशानमिति चाख्यातं महाकालवनं प्रिये । तत्रब्रह्मादयो देवा नारायणपुरोगमाः ॥

योगिनश्च तथा साङ्ख्याः सिद्धाश्च सनकादयः ।
उपासते च मां भक्त्या मद्भक्त्या मत्परायणाः ॥ २० ॥

या गतिर्यो तपसां या गतिर्यज्ञयाजिनाम् । महाकालवने क्षेत्रे सागतिर्विहितामया संहरामि च तत्रस्थस्त्रैलोक्यंसचराचरम् । अतोदेवि! समाख्यातंमहाकालवनंशुभम् एवंबहुविधाञ्छ्रुत्वागुणान्बहुविधांस्तथा । देवि!त्वं विस्मिताजातागमनायमनोदध

क्षेत्रस्याऽऽलोकने चित्तं जातमुत्कण्ठितं तव ।
त्वया सार्द्धं समागत्य महाकालवने शुभे ॥ २४ ॥
पश्य देवि! विचित्राख्यं यन्मया कथितं तव ।
अमरेशपुरस्पर्द्धि वर्द्धितानन्दसुन्दरम् ।
वर्णितं यन्मया देवि! भुक्तिमुक्तिकरं परम् ॥ २५ ॥

त्वया प्रोक्तं विशालाक्षि!दृष्ट्वाक्षेत्रमनुत्तमम् । अस्यस्थानस्यरक्षार्थंभक्तंगणचतुष्टयम्

नियुज्य तां महादेव! सन्तोषाय मम प्रभो !॥ २६ ॥

द्वाराणितत्र चत्वारिक्रियन्तां परमेश्वर !। चत्वारःकलशाश्चैवहैमाःकार्यादृढाःशुभाः पूर्वादिक्रमयोगेन चतुर्वर्गोनियोज्यताम् । धर्मश्चार्थश्च कामश्च मोक्षश्चैव महेश्वर !॥ त्वदीयं वचनं श्रुत्वा मया देवि प्रयत्नतः । अस्य क्षेत्रस्य रक्षार्थं स्मृतंगणचतुष्टयम्

चत्वार ईश्वरास्तेऽपि स्थापितास्तदनन्तरम् ।
पिङ्गलेशो धनाध्यक्षस्तथा कायावरोहणः ॥ ३० ॥

बिल्वेश्वरो गणश्रेष्ठो दुर्दर्शो गणनायकः । एते मया नियुक्ता वै समर्थाः क्षेत्ररक्षणे पूर्वादिक्रमयोगेन त्वत्प्रियार्थं वरानने !। नियुक्तास्त्वन्मतेनैवपूर्वस्यां दिशिपिङ्गलः

दक्षिणस्यां दिशि तथा प्रिये! कायावरोहणः ।
बिल्वेश्वरः प्रतीच्यां तु दुर्दर्शश्चोत्तरे तथा ॥ ३३ ॥
मानवा ये म्रियन्तेऽत्र क्षेत्रमध्येगणोत्तमाः । तेषां रक्षापराकार्याभवद्भिर्ममशासनात्
कथां शृणु प्रयत्नेनपिङ्गलेश्वरसम्भवाम् । यस्याः श्रवणमात्रेण कृतकृत्योनरोभवेत्
पिङ्गला कन्यका देवि! कान्यकुब्जे बभूव ह ।
सुशीला च सुवेषा च सौन्दर्येणाऽतिनिर्मिता ॥ ३६ ॥
पितातस्या महाप्राज्ञःसर्वशास्त्रार्थतत्त्ववित् । ज्ञानध्यानरतश्चैवस्वाध्यायपरिनिष्ठितः
पिङ्गलोनाम विप्रेन्द्रो भार्या तस्य पतिव्रता ।
पिङ्गाक्षी विश्रुता लोके सा च पञ्चत्वमागता ॥ ३८ ॥
ततस्तेन स दुःखेन गृहस्थाश्रमनिःस्पृहः ।
तपोवनं जगामाथ गृहीत्वा तनयां स्वकाम् ॥ ३९ ॥
ऋषिभिः सेवितं पुण्यं शाकमूलफलाशनैः । संतत्रमुनिभिः सार्द्धंध्यानयोगपरायणः
निवासंकृतवान्देवि!पिङ्गलायाश्चरक्षणम् । पालयामासधर्मात्मापुत्रिकांहृदयोपमाम्
तामेव सततं साध्वीं मन्यमानोमहातपाः । नपाणिं ग्राहयामासमातृहीनेतिचिन्तयन्
विरक्तोऽपि महाभाग संसारात्सर्वधर्मवित् ।
पुत्रिकां प्रेक्षयन्सम्यक्सन्न्यासं नाकरोद्वशी ॥ ४३ ॥
अथ संरक्षयन्बालां मातृहीनांतपस्विनीम् । संयुक्तःकालधर्मेणस विप्रः स्वर्जगामह
ततःसापिङ्गलादीनाहीनापित्रासुदुःखिता । विललापाऽऽतुरादेवि!पतिताशोकसागरे

पिङ्गलोवाच

अद्यमे च पितादैवात्कालधर्ममुपेयिवान् । मांत्यक्त्वा गतवानेकोदयालुर्निःस्पृहोयथा
ससमः सर्वभूतेषु ममात्यन्तं हिते रतः । मामेकांसम्परित्यज्यपरलोकमितो गतः ॥
साऽहं परमदुःखार्त्ता पितृशोकेन विह्वला । शरीरं धारयामीदं कृपणं व्यर्थजीवितम्
ब्रह्मज्ञोऽपि हि तातो मे शान्तो दान्तो जितेन्द्रियः ।
मामेव पालयामास मातृहीनेति चिन्तयन् ॥ ४६ ॥

येन संरक्षिता बाल्ये येनाऽस्मिपरिवर्धिता । तेनपित्राबियुक्ताऽहंन जीविष्येकदाचन
नद्यां वा निपतिष्यामिसमिद्धेवाहुताशने । पर्वताद्वापतिष्यामि पितृहीनानिराश्रया
इति शोकातुराबालाविलपन्ती पुनःपुनः । बोध्यमानामहाभागैः सदारैर्ऋषिसत्तमैः

कन्यकाभीरुदन्तीभिर्वयस्याभिः समन्ततः ।
आलिङ्ग्यालिङ्ग्य बहुशः पीड्यमाना सुदुःखिता ॥
आगत्य करुणाविष्टो धर्मः परहिते रतः ॥ ५३ ॥

स्थविरोब्राह्मणोभूत्वाप्रोवाचेदं वचस्तदा । अलंबालेविशालाक्षि!रोदनैरतिदारुणैः

न भूयः प्राप्यते तातस्तस्मान्नार्हसि शोचितुम् ॥ ५४ ॥

अनित्यंयौवनं रूपंजीवितंद्रव्यसञ्चयः । प्रियैःसहचसम्वासस्तंन्न शोचन्तिपण्डिताः

त्वया वै तत्कृतं कर्म पूर्वजन्मनि शोभने ।
येन पित्रा वियोगः स्यादरण्ये मुनिसेविते ॥ ५६ ॥

त्वां विहाय गतःक्वापिपश्य बाले विधेर्बलम् । इदंकृतमिदं कार्यमिदमन्यत्कृताकृतम्
एवमीहासमासक्तं मृत्युः प्रकुरुते वशे । तस्माद्दुःखं समुत्सृज्य श्रोतुमर्हसिशोभने!

पितृभ्यां च वियोगश्च येनाऽभूत्तव कर्मणा ।
पुरा त्वं सुन्दरीनाम वेश्यारूपेण सुन्दरी ॥ ५९ ॥
नृत्यगेयादिनिपुणा वीणावेणुविचक्षणा ।
आदिश्च पण्यनारीणां भूषणाच्छादनादिभिः ॥ ६० ॥

तां दृष्ट्वा रूपसम्पन्नांसुवेषां सुविभूषिताम् । ब्राह्मणोगुणवान्कश्चिद्बभूवमदनातुरः
तं विदित्वा तथाभूतं ब्राह्मणं मदनातुरम् । समाश्वस्तस्तेन त्वं रमिताकामिनाततः
सोऽथ पापरतिर्मूढो ब्राह्मणोविषयात्मकः । हतः शूद्रेणकेनापि कामिनातववेश्मनि

विहाय भार्यामप्रौढां शुभां द्वादशवार्षिकीम् ।
प्रयातो नरकं घोरं शूद्रासम्पर्कदूषितः ॥ ६४ ॥
ततस्तस्य पिता विद्वान्माताऽतीव च दुःखिता ।
आर्त्ता पुत्रवियोगेन शापो दत्तो भयावहः ॥ ६५ ॥

मातोवाच

औषधादिप्रयुक्तंच वशीकर्त्तुं ममात्मजम् । यदस्माकंवियोगाय वञ्चितोदुष्टचारिणि
यस्माच्च मम पुत्रेण सा वियोगमकारयत् । तेनजन्मान्तरे दीनापतिहीनाभवत्वसौ

पितोवाच

बाल्ये वयसि वर्त्तन्ती मातृहाना सुदुःखिता ।
बहिष्कृता विवाहेन पितृहीना भविष्यसि ॥ ६८ ॥

धर्म उवाच

तस्मात्पूर्वकृतेनैव कर्मणा वरवर्णिनि !। इदं दुःखमनुप्राप्ता कन्यका भवती सती ॥

पिङ्गलोवाच

त्वया जन्मान्तरे वृत्तं मम प्रोक्तं द्विजोत्तम !।
तस्माद् ब्रूहि भवन्प्रश्नं ( भवत्प्रश्नं ) पृच्छन्त्या निश्चयं स्वकम् ॥ ७० ॥

इत्थं सुघोरपापाऽहं पापाचारा तथाऽधमा । कथं तु ब्राह्मणेनाऽहमुत्पन्ना ब्रह्मवादिना
दशसूनासमश्चक्री दशचक्रिसमो ध्वजः । दशध्वजसमावेश्या दशवेश्यासमो नृपः

एवं वदन्ति धर्मज्ञा ब्राह्मणाः संशितव्रताः ।
तस्माद् द्विजोत्तमादस्मात्कथं जन्माऽभवन्मम ॥ ७३ ॥

ब्राह्मण उवाच

पापाचारपराऽपि त्वं ब्राह्मणानां कुलेशुभे । उत्पन्ना तत्र वक्ष्यामिकारणंश्रृणुपिङ्गले
ब्राह्मणो विषयासक्तः कश्चिद्बद्धो नृपाज्ञया । चौर्यंकर्मकृतं तेन वेश्यालुब्धेनसुन्दरि
मुच्यतां च त्वयाऽप्युक्तं न चौरोनैव पातकम् । यद्यनेनकृतंचौर्यंतन्मयैव कृतं भवेत्
ददामिवित्तमधिकं मुच्यतां द्विजसत्तमः । इत्युक्त्वा गृहमानीय तेनैव सहिता पुनः
गृहं च कल्पितं शुभ्रं पुष्पधूपादिवासितम् । रमितश्चत्वयाविप्रो यथासुखमनुत्तमम्

तस्य पुण्यस्य माहात्म्याद्गता स्वर्गमनुत्तमम् ।
समुत्पन्ना कुले पुत्री ब्राह्मणस्य विशेषतः ॥ ७९ ॥
शापाच्चैव वियोगं त्वं प्राप्ता पुत्र्यधुना परम् ॥ ८० ॥

पिङ्गलोवाच

पूर्वजन्मनि वेश्याहं जाता दुष्कृतकारिणी । परद्रव्यपरा दुष्टा शौचाचारविवर्जिता

इदानीं दुःखिता जाता पितृमातृवियोगतः ॥ ८१ ॥

पाणिग्रहणधर्मेण वर्जिता शापतः प्रभो !। प्रसादं कुरु मे विप्र कोभवान्कथयस्व मे

कथंजन्म न मेभूयात्कथं मुक्तिर्भवेन्मम । भवबन्धविनिर्मुक्ताकथं यास्यामिसद्गतिम्

विप्र उवाच

धर्मोऽहं द्विजरूपेणत्वां जिज्ञासुरिहागतः । ममोपदेशात्तन्वङ्गिलिङ्गस्यैकस्यदर्शनात्

क्षेत्रस्य च प्रसादात्त्वं परां मुक्तिमवाप्स्यसि ॥ ८४ ॥

पिङ्गलोवाच

कस्मिन्क्षेत्रे परा मुक्तिः कस्य लिङ्गस्य दर्शनात् ।

लभ्यते सहसा धर्म! एतदिच्छामि वेदितुम् ॥ ८५ ॥

धर्म उवाच

अस्ति गुप्ततमं क्षेत्रं महाकालवनं शुभम् । सर्वेषामेव जन्तूनां हेतुर्मोक्षस्य सर्वदा ॥

तस्मिन्क्षेत्रवरे पुण्ये स्थाने योजनविस्तृते ।

लिङ्गं मोक्षप्रदं पुत्रि! पूर्वस्यां दिशि संस्थितम् ॥

तस्य दर्शनमात्रेण मुक्तिमाप्स्यसि पिङ्गले !॥ ८७ ॥

तस्य तद्वचनं श्रुत्वा धर्मस्य च यशस्विनि !। जगामपिङ्गलातूर्णं यत्रतल्लिङ्गमुत्तमम्

ददर्श परया भक्त्या पस्पर्श च पुनः पुनः ॥ ८८ ॥

दर्शनात्तस्यलिङ्गस्य तस्मिँल्लिङ्गेलयङ्गता । अत्रचावसरेदेवाः प्रोचुस्तत्रैवसंस्थिताः

अन्यजन्मनि पापिष्ठा मुक्ता त्वं पिङ्गलेक्षणा ॥ ९० ॥

अतोलोकेषुविख्यातः पिङ्गलेश्वरसञ्ज्ञकः। भविष्यति न सन्देहो महापातकनाशनः

दिशि पश्यन्ति ये गत्वा पूर्वस्यां पिङ्गलेश्वरम् ।

तेषां शतक्रतुस्तुष्टः पूजां सम्यग्विधास्यति ॥ ९२ ॥

देवा वश्याभविष्यन्तिस्वर्गस्तेषां न संशयः । भविष्यतिचवशगानगरी चामरावती

धर्मोधनेनसहितः कुले तेषां न नश्यति । लोकोधर्मेण चरतां वशगः सम्भविष्यति
पितृणामक्षया तृप्तिर्भविष्यति न संशयः ॥ १४ ॥
अश्वमेधसहस्रेण यत्पुण्यं समुदाहृतम् । तत्सर्वं भविता सम्यक्पिङ्गलेश्वरदर्शनात् ॥
यानि लिङ्गानि क्षेत्रेऽस्मिन्गोप्यानि प्रकटानि च ।
पूजितानि भवन्तीह पिङ्गलेश्वरदर्शनात् ॥ १६ ॥
एष ते कथितो देवि प्रभावः पापनाशनः । पिङ्गलेश्वरदेवस्य शृणु कायावरोहणम्

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्ये पिङ्गलेश्वरमाहात्म्यवर्णनं
नामैकाशीतितमोऽध्यायः ॥ ८१ ॥

---

## द्व्यशीतितमोऽध्यायः

### कायावरोहणेश्वरमाहात्म्यवर्णनम्

**महादेव उवाच**

कायावरोहणस्यापिउत्पत्तिं शृणुपार्वति !। यस्याःश्रवणमात्रेण ननरःकायवान्भवेत्
ब्रह्मणः सृष्टिकामस्यमनोर्वैवस्वतेऽन्तरे । दक्षस्त्वजायताङ्गुष्ठाद्दक्षिणात्सप्रजापतिः
वामादजायताङ्गुष्ठाद्भार्यातस्य महात्मनः । तस्यांपञ्चाशतंकन्याः स एवाजनयत्प्रभुः
ताःसर्वाश्चानवद्याङ्गीः कन्याः कमललोचनाः ।
पुत्रिकाः स्थापयामास नष्टपुत्रः प्रजापतिः ॥ ४ ॥
ददौ स दश धर्माय कश्यपाय त्रयोदश ।
दिव्येन विधिना देवि! सप्तविंशतिमिन्दवे ॥ ५ ॥
रोहिणी वल्लभा जाता तस्य चन्द्रस्य सर्वदा ।
षड्विंशतिकृते चन्द्रः शप्तो दक्षेण पार्वति ॥ ६ ॥

चन्द्रेणापि तथाशप्तो दक्षः प्राचेतसः कृतः । अयजत्सोऽश्वमेधेनभूत्वाप्राचेतसात्मजः
नाभन्त्रितोऽहं मोहेन दक्षेण पर्वतात्मजे । तत्र देवनिकायानां यज्ञभागानशेषतः ॥ ८

हव्यवाहस्तदा युक्तो वहन्मन्त्रैः समीरितः ।
त्वया दृष्टो विशालाक्षि! निरालम्बेऽम्बरे स्थितः ॥ ६ ॥

स्मरन्त्या पूर्ववैरं तु विज्ञप्तोऽहं त्वया प्रिये । त्वंदेवःसर्वदेवानां गतिश्च शरणं तथा

त्वं यज्ञस्त्वं वषट्कारो होताऽध्वर्युस्त्वमेव च ।
त्वया विना कथं यज्ञो वर्त्तते सर्वदेवप !॥ ११ ॥

देवानां भागधेयानिवहत्यग्निरयं भयात् । सगर्वश्चाऽवलिप्तश्च दक्षः प्राचेतसः किल
अनुस्मरन्पूर्ववैरं नैव दास्यत्यशासितः । कायहीनश्च कर्त्तव्यो दक्षो वह्निस्तथैव च
ये च यज्ञे समानीता देवा दक्षस्य शङ्कर । ते सर्वे कायरहिताः कार्यास्त्रिपुरसूदन
एवमुक्ते त्वयादेवि! मयाऽप्युक्तं वरानने !। पूर्वजन्मनि दक्षोऽयं पितातवशुचिस्मिते

वह्निश्चादेशकारी च देवाः क्रीडनकाः प्रिये !।
मदीयं वचनं श्रुत्वा कृतः क्रोधस्त्वया प्रिये !॥ १६ ॥
ललाटे भ्रुकुटीं कृत्वा प्रोच्छ्वसन्त्या पुनःपुनः ।
क्रोधात्करेण नासाग्रं मर्द्दितं बहुशस्तदा ॥ १७ ॥
तस्मिन्सम्मर्द्यमाने तु नासाग्रे पर्वतात्मजे !।
जाता स्त्री भ्रुकुटीवक्त्रा चतुर्दंष्ट्रा त्रिलोचना ॥ १८ ॥

बद्धगोधाङ्गुलित्रा च कवचाबद्धमेखला !। सखड्गासधनुष्का च सतूणा सपताकिनी
सहस्रास्या शतभुजा सहस्रचरणोदरी । प्रतिकूलैः पदैर्देवि कम्पयन्ती तथा भुवम्
कृतंनामत्वया देवि! तां दृष्ट्वा च तमोमयीम् । भद्रकालीचमायाच सर्वलोकनमस्कृते
मयासृष्टस्तु पुरुषस्तादृशो लोमहर्षणः । स चाऽपि प्राञ्जलिर्भूत्वामामुवाचपुनःपुनः

आज्ञापय सुरेशान! किं करोमि जगत्प्रभो !॥ २२ ॥
ततो देवि! मयाऽऽज्ञप्तो भावं ज्ञात्वा त्वदीयकम् ।
कृत्वा नाम मनोज्ञन्तु वीरभद्र इति स्मृतः ॥ २३ ॥

वीरभद्र समादेशाद्भद्रकालया महाऽनया । प्राचेतसात्मजं दक्षं सगर्वं सहदैवतम् ॥२४
विध्वंसयगणाध्यक्ष सयज्ञं सपरिग्रहम् । दत्तं मया महत्सैन्यमसङ्ख्येयगुणस्यच

त्वयाऽपिभद्रकाल्यास्तु दत्तं सैन्यं भयावहम् ।
कपालकर्त्रिकाहस्तं मातृणां गणमक्षयम् ॥ २६ ॥

ततस्तौ तेन सैन्येनमहतातिसमावृतौ । जग्मतुस्तत्रयत्राऽऽस्तेदक्षःप्राचेतसोयजन्
देवैः परिवृतो देवि! सदस्यैर्ब्राह्मणैः सह । ततोदेवाःसुरुद्धास्ते तेनसैन्येन पार्वति!

विश्रब्धा मन्त्रपूतं तु पिबन्तः सोममध्वरे ॥ २८ ॥

त्रिनेत्रेण त्रिशूलेन त्रिदशाधिप ईश्वरः । त्रासितः सहसा शक्रोगणेनाध्वरमध्यगः
यमाख्येन गणेनैव यमकल्पप्रभेण च । सोमपाने प्रसक्तश्च यमश्चाकर्षितोऽध्वरे॥
पाशेन वरुणो बद्धः पाशेन गणपेन तु । पश्चिमाशाधिपो वीरः प्राणेन परमेश्वरि !॥
ताडितोऽनिल एवाथ उत्तरे नरवाहनः । उत्तराशाधिपो देवि निधानैःसहितोऽध्वरे

वीरभद्रनियुक्तास्ते चक्रुर्युद्धं सुदारुणम् ॥ ३२ ॥
अथ युद्धं चकारोच्चैर्भद्रकाली भयावहा ।
विकराली महाकाली कालिका कलशोदरी ॥ ३३ ॥
प्रज्वालज्वलनाकारा शुष्कमांसातिभैरवा ।
एताश्चान्याश्च शतशो नरमालाविभूषणाः ॥ ३४ ॥
कपालकर्त्रिकाहस्ता जघ्नुर्देवगणांस्तथा ।
इति मातृगणं क्रुद्धं मर्दयन्तं सुरांस्तदा ॥
दृष्ट्वाऽभ्युपगता देवास्तुषिता युद्धलालसाः ॥ ३५ ॥
केचिच्च चिक्षिपुः शक्ती केचित्प्रासांस्तथापरे ।
केचिच्च तोमरैस्तीक्ष्णैः केचित्खड्गैश्च पट्टिशैः ॥ ३६ ॥

अर्द्दितो मातृसङ्घस्तु पीडिताः प्रमथा यदा । भद्रकाली तदाक्रुद्धागदया शरवृष्टिभिः
खड्गादिभिः षडर्कांशुःपीडयामास संयुगे । भगस्यनेत्रेपूष्णस्तुदशनाःसूदितामुखात्
करान्दिनकरस्यैव चरणौ भास्करस्य च । मुशलेनहता येऽष्टौवसवो रणकोविदाः

वमन्तो रुधिरंतेऽपिनष्टा जर्जरमस्तकाः । विदेहाश्च कृता युद्धे तुषिता रणगर्विताः
बद्धः प्राचेतसो दक्षः पाशेन सुदृढेन च । शेषाश्च त्रिदशा भीता ब्रह्माणं शरणं गताः
वृत्तान्तः कथितः सर्वोविस्तरेणयथातथा । आद्याये तुषितादेवा विदेहाश्चैवतेकृताः
नष्टाश्च वसवो देवाः पीडिता भास्करा रणे । नज्ञायतेसहस्राक्षो न यमो नधनेश्वरः
वरुणो यादसां नाथः क गतः परमेश्वरः ॥ ४३ ॥
भद्रकाल्या हतं सर्वं वीरभद्रगणेन च । भग्नश्च यज्ञयूपो वै विध्वस्तं कलशं तदा ॥
प्रदीपिता महाशालाभग्नं वै यज्ञतोरणम् । तेषांतु वचनं श्रुत्वा ब्रह्मा लोकपितामहः
आजगाम कृपाविष्टो यत्राऽहं मन्दरे स्थितः ॥ ४५ ॥
स्तुतिंकृत्वा मदीयां तुवाक्यमुक्तमिदंतदा । आद्याये तुषिता देवाविदेहाश्चैवतेकृताः
भद्रकाल्या महादेव! वसवो जर्जरीकृताः । पीडिताभास्करा युद्धेशेषानष्टादिशोगताः
कायावरोहणं देव तुषितानां कथं भवेत् । ब्रह्मणोवचनं श्रुत्वा मया प्रोक्तं वरानने !॥
महाकालवने क्षेत्रे गच्छन्तु तुषितास्त्वमी ।
लकुटीशो गतो यत्र कायावरोहणाद्गृहम् ॥ ४६ ॥
ब्राह्मणाश्च ममादेशाच्चतुःशिष्यैःसमन्विताः । द्वापरेसमतिक्रान्ते प्राप्ते कलियुगेतथा
तत्र कायमनुप्राप्ता मम शिष्या ममोपमाः ।
अवसन्त क्षितौ धन्या रक्षणार्थं द्विजन्मनाम् ॥ ५१ ॥
क्षेत्रस्य दक्षिणे तस्य विद्यते लिङ्गमुत्तमम् ।
सर्वसम्पत्करं दिव्यं सिद्धानां कायदायकम् ॥ ५२ ॥
प्रसादात्तस्य लिङ्गस्य कायान्प्राप्स्यन्त्यमी सुराः ।
मदीयं वचनं श्रुत्वा गतास्ते तुषिताः प्रिये !॥ ५३ ॥
मुदिता ब्रह्मणा सार्द्धं यत्र तल्लिङ्गमुत्तमम् । प्रसादात्तस्य लिङ्गस्यप्राप्तंकायमनुत्तमम्
पुनस्ते तादृशाजातास्तुषिता यादृशाऽभवन् । अतोदेवैः कृतं नाम कायावरोहणेश्वरः
समीहितप्रदो नित्यं ख्यातो देवो भविष्यति ॥ ५५ ॥
ये गत्वा दक्षिणामाशां देवं कायावरोहणम् ।

पश्यन्ति परया भक्त्या यमस्तेषां पिता भवेत् ॥ ५६ ॥
जन्मकोटिसहस्रैस्तु यत्पापं समुपार्जितम्। तत्सर्वं नाशमायातिदर्शनादेव नान्यथा
स्वकर्मणागतायेचनरके पितरो गणाः। दर्शनात्तस्य लिङ्गस्य तेषां मुक्तिर्भविष्यति
येपश्यन्ति प्रसङ्गेन देवं कायावरोहणम्। न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि॥
स्पर्शनात्तस्य लिङ्गस्य पापिनोऽपि हि ये नराः।
ते यास्यन्ति परं स्थानं सर्वपापविवर्जितम् ॥ ६० ॥
शाठ्येनपूजितो देवःकायावरोहणेश्वरः। ददातिराज्यं भोगांश्चस्वर्गलोकंसनातनम्
द्वादश्यां ये प्रपश्यन्ति स्नात्वा कायावरोहणम्।
ते भित्त्वा ब्रह्मसदनं यास्यन्ति परमां गतिम् ॥ ६२ ॥
एष तेकथितोदेवि! प्रभावः पापनाशनः। कायावरोहणेशस्य बिल्वेश्वरमथो शृणु॥
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
चतुरशीतिलिङ्गमाहात्म्य उमामहेश्वरसंवादे कायावरोहणेश्वरमाहात्म्य-
वर्णनंनाम द्व्यशातितमोऽध्यायः ॥ ८२ ॥

---

## त्र्यशीतितमोऽध्यायः

### बिल्वेश्वरमाहात्म्यवर्णनम्

श्रीहर उवाच

बिल्वेश्वरस्यमाहात्म्यंश्रृणु सुन्दरि!सादरम्। यस्यश्रवणमात्रेण मुच्यतेसर्वपातकैः
आदिकल्पे महादेवि! लोकानामनुकम्पया।
कल्पवृक्षास्ततो जाता ब्रह्मणो ध्यायतः पुरा ॥ २ ॥
तेषां मध्ये बिल्ववृक्षः श्रीवृक्ष इतिगीयते। अधस्तात्तस्य वृक्षस्य पुरुषःकाञ्चनप्रभः
उपविष्टस्तदादृष्टोब्रह्मणा लोककर्तृणा। फलानितस्यपत्राणि विविधानिनिरन्तरम्

भक्षयत्यतिलन्द्वष्टो ह्वयानि च मृदूनि च । बद्धगोधाङ्गुलित्रश्चशरीधन्वी तथैव च ॥
खड्गी किरीटमाली च कुण्डली कवची तथा ।
महोरस्को महोत्साहः सिंहसंहननो युवा ॥ ६ ॥
ब्रह्मणा चकृतं नामबिल्व इत्यभिविश्रुतम् । तमिन्द्रोवरयामास राजा त्वं भूतलेभव
त्रिविष्टपस्य भूमिस्थः सखाभूतो ममं प्रियः ।
ददामि ते वैजयन्तीं मालामम्लानपङ्कजाम् ॥ ८ ॥
यस्याः प्रभावतःशस्त्ररणे न प्रभविष्यति । सोऽब्रवीद्यदि मे वज्रमायुधंत्वंप्रयच्छसि
तस्यां पृथिव्यां राजाहं नान्यथा रोचते मम ।
ततोऽहं पालयिष्यामि सत्येनेमां वसुन्धराम् ॥ १० ॥

इन्द्र उवाच

एवं भवतु भद्रं ते भव राजा प्रजाहितः । स्मरणादेव वज्रस्तेकरेयास्यति नान्यथा
स एवमुक्तस्तेजस्वी बिल्वो राजा बभूवह । कपिलोनाम धर्मात्मा वेदवेदाङ्गपारगः
सखा बभूव बिल्वस्य तस्यविप्रर्षिसत्तमः । स तेन सह संगम्य सुखासीनोवरानने!
चक्रे कथा विचित्रार्थाः प्रीयमाणःपुनःपुनः । तथा कथान्तरे वादः परस्परमभूत्तयोः
दानं प्रधानं तीर्थं तु बिल्वेनोक्तं पुनःपुनः । ब्रह्म श्रेष्ठं तपः श्रेष्ठमित्युक्तं कपिलेन तु

बिल्व उवाच

दानाद्राज्यं सुखं भोगाऐश्वर्यंस्वर्गमक्षयम् । प्राप्यते द्विजशार्दूल!कथं ब्रह्म प्रशंससि

कपिल उवाच

वेदाद्यज्ञाः प्रवर्त्तन्ते वेदादिष्टिश्च कामिका । प्रवर्त्तन्तेक्रिया वेदाद्वेदमूलमिदं जगत्

बिल्व उवाच

संसारे पार्थिवाः श्रेष्ठाः समर्थालोकपालने । लोकपालोपमालोकेकथंब्रह्म प्रशंससि

कपिल उवाच

मुख्या वै ब्राह्मणाः प्रोक्ताः शापानुग्रहकारकाः ।
पितरः पार्थिवानां तु किं त्वं बिल्व न मन्यसे ॥ १६ ॥

एवं कौतूहले जाते कपिलो द्विजसत्तमः । विल्वेन ताडितो मूर्ध्निवज्रेणानतपर्वणा
वज्रेण स द्विधा छिन्नः कपिलो ब्रह्मविद्यया ।
सन्धार्य स्वशरीरं तु ममाऽन्तिकमुपागतः ॥ २१
स्तुतोऽहं विविधैः स्तोत्रैः सम्यगाराधितो ह्यहम् ।
मया दत्तमव्ययत्वं कुलिशाद् ब्राह्मणस्य तु ॥ २२ ॥
द्विजः समागतोविल्वं पुनःसख्यमभूत्तयोः । पुनस्तु तादृशोवादःसञ्जातःपर्वतात्मजे
वामपादेन चाऽप्येनं विल्वो विप्रमताडयत् । पुनश्च वज्रमादायजघानैनं तदा दृढम्
न मृतिनव्यथांतस्यतद्वज्रमकरोत्पुनः । अवध्यत्वमथोज्ञात्वाविल्वस्तस्यमहात्मनः
नारायणमथासाद्यप्रार्थयामासचेप्सितम् । वरदोऽस्मीतितुष्टेनविष्णुनासचमोदितः
प्रोवाच प्रणतो विष्णुमिदं देवि! महामनाः ॥ २६ ॥

विल्व उवाच

कपिलोनाम विप्रर्षिरवध्योऽक्षय एव च । सखा मम हृषीकेश स च मामाहनित्यशः
बिभेम्यहं न देवस्य राक्षसस्याऽसुरस्य च ॥ २७ ॥
पिशाचस्याऽपि यक्षस्य न चैवान्यस्य कस्यचित् ।
विभेमीति यथा ब्रूयां तथा त्वं कर्त्तुमर्हसि ॥ २८ ॥
एवमुक्तस्तु बिल्वेनसदेवः पुरुषोत्तमः । एवं भविष्यतीत्युक्त्वाकपिलस्याश्रमंगतः
स प्रविश्याश्रमं देवं कपिलेन प्रपूजितः । कपिलं प्रत्युवाचेदं सामपूर्वं जनार्द्दनः ॥
भगवन्ब्राह्मणश्रेष्ठ! वेदवेदाङ्गपारग !। वरमेकं वृणोम्यद्य विप्रेन्द्र ! दातुमर्हसि ॥ ३१
प्रसादितोऽहं बिल्वेन नृपेन्द्रेण पुनः पुनः । वरदोऽस्मीति चाप्युक्तो वरंवव्रेमहामुने
त्वया प्रोक्तं बिभेमीति ब्रूहितस्माद्नुग्रहात् । अभीतस्त्वं तथाप्यद्यमदर्थंतुवदप्रभो
कपिलस्त्वेवमुक्तो वै विष्णुना मधुरं वचः । उवाच न बिभेमीतिभूयोभूयोजनार्दन
नाहं वक्ष्ये बिभेमीति तेनोक्तं नोच्यते मया ।
एतच्छ्रुत्वा वचस्तस्य कपिलस्य जनार्द्दनः ।
उवाच चक्रमुद्यम्य भयं विप्रस्य दर्शयन् ॥ ३५ ॥

न चेद्वक्ष्यसि भीतोऽहं चक्रं ते प्रहरामि वै ॥ ३६ ॥

कपिल उवाच

किं वृथा प्रियचक्रस्य विष्णो! क्लेशमिहेच्छसि ।

नाहं चक्रस्य ते गम्यः प्रसादात्त्र्यम्बकस्य हि ॥ ३७ ॥

ततः स मुष्टिमादाय कुशानां कपिलस्तदा । वासुदेवं समासाद्य तिष्ठतिष्ठेत्यभाषत

अद्य गर्वं च दर्पं च बलंयच्चतवाऽद्भुतम् । तत्सर्वं नाशयिष्यामि तिष्ठेदानींजनार्द्दन

ततो युद्धं समभवत्तुमुलं लोमहर्षणम् । निमेषान्तरमात्रं तु कृष्णस्य कपिलस्य च

दिव्यास्त्राणांकुशानांचयुद्धंसमभवद्दृढम् । निरालम्बेऽम्बरेदेवविदेवानांभयमाविशत्

एतस्मिन्नन्तरे ब्रह्मा सुरैः परिवृतस्तदा । आजगामातिसन्तप्तः कृष्णं वचनमब्रवीत्

भगवन्भूतभव्येश! भवबन्धभयापह !। हर्य्यकेश हृषीकेश सृष्टिसंहारकारक !॥ ४३ ॥

समाराध्यजगन्नाथशक्राद्यास्त्रिदिवौकसः ।वसन्तिमुदिताःसर्वेसर्वकामसमन्विताः

आब्रह्मस्तम्बपर्यंतं त्रैलोक्यं सचराचरम् । उत्पादितंधृतंव्याप्तं विष्णुनाप्रभविष्णुना

तेनैकेन विशुद्धेन सर्वगेन महात्मना । इति स्म मुनयः सर्वे उदिता मुनिसत्तमाः ॥

वदन्ति कारणं चाऽस्य त्रैलोक्यस्य जनार्द्दनः ।

देवदानवदैत्यैश्च मुनिचारणपन्नगैः ॥ ४७ ॥

वरार्थिभिश्चप्रवरैः पूज्यसे गरुडध्वज !। किं भवानेवगोविन्द वृथायुध्यसिसद्विजैः

कपिलस्य च विप्रस्य हराल्लब्धवरस्य च ।

किं न वेत्सि यथा ह्येष प्रसादात्पारमेश्वरात ॥ ४६ ॥

अवध्यत्वमनुप्राप्तो ह्यजेयत्वं संयुगे । न चैवं त्वद्विधा देवब्राह्मणेषुविकुर्वते ॥ ५० ॥

ब्रह्म च ब्रह्मणो मूलं त्वयैवप्राक्प्रतिश्रुतम् । तस्मादाशुनिवर्त्तस्वमत्वैनंब्राह्मणंविभो

इत्थं निशम्य देवेशो वाक्यं ब्रह्ममुखाच्च्युतम् ।

योगेन तद्बलं ज्ञात्वा कपिलस्यं तु शङ्करम् ॥ ५२ ॥

जगाम परमं लोकं पूज्यमानस्त्रिविष्टपैः । गते जनार्दने बिल्वो विललाप पुनः पुनः ॥

युद्धं सुदारुणं श्रुत्वा कृष्णस्य कपिलस्य च ।

कथं जेष्यामि कपिलं कथं मे निवृ तिर्भवेत् ।
कस्याहं शरणं यामि को मे त्राता भविष्यति ॥ ५४ ॥
न जितः कपिलो युद्धे विष्णुना प्रभविष्णुना ।
मया संस्पर्द्धते नित्यं कथं जेयो भविष्यति ॥ ५५ ॥
अजेया ब्राह्मणा युद्धे शापानुग्रहकारकाः । भस्म कुर्यु र्जगत्सर्वं सदेवासुरमानुषम्
ब्राह्मं हि परमं तेजो देवैरपि दुरासदम । एवं विलपतस्तस्य वासवः समुपागतः ॥
विलपन्तं कृशं विल्वं वज्रहस्तमवेक्ष्य सः । ममत्वाकृष्टहृदयः प्रत्युवाच पुरन्दरः ॥
अलं शोकेन भूपाल! शृणु मे वचनं परम् । यदाहंपीडितो युद्धे शम्बरेण दुरात्मना
बलिष्ठेन सगर्वेण तदा पृष्टो मया गुरुः ॥ ५६ ॥
बृहस्पतिर्महातेजास्तेनोक्तं तु तदा नृप !। गच्छ शक्र ममादेशान्महाकालवनं शुभम्
यत्र सन्ति सुदिव्यानि लिङ्गानि विविधानि च ।
भुक्तिमुक्तिकराण्येव वाञ्छितार्थप्रदानि च ॥ ६१ ॥
तेषां मध्ये लिङ्गमेकमाराधय शचीपते !।
यस्य दर्शनमात्रेण रणे धृष्टो भविष्यसि । तस्यतद्वचनाद्विल्वसम्यगाराधना कृता
मया लिङ्गस्यहर्षेण जितोवै शम्बरस्तदा । प्रसिद्धिं तु गतोदेव सचेन्द्रेश्वरसञ्ज्ञकः
तस्मात्त्वं पश्चिमामाशां गत्वा क्षेत्रस्य तस्य वै ।
समाराधय यत्नेन लिङ्गं वरुणपूजितम् ॥ ६४ ॥
तल्लिङ्गं त्रिषु लोकेषु त्वन्नाम्ना ख्यातिमेष्यति ।
कपिलस्त्वत्सखा विप्रो जितोऽस्मीति वदिष्यति ॥
तस्य लिङ्गस्य माहात्म्यान्मित्रभावं गमिष्यति ॥ ६५ ॥
इत्युक्त्वा तु गतेशक्रे देवलोकयशस्विनि । पूजयामासभावेनपुष्पैर्दिव्यैःसुगन्धिभिः
जगाम विल्वोभूपालो महाकालवनं शुभम् । पश्चिमे भागे त्रिङ्गं त्रिदशपूजितम् ॥
मुक्ताफलैश्च रत्नैश्च वासोभिर्भूषणैस्तथा ।
एतस्मिन्नन्तरे चैव कपिलोऽपि समागतः ॥ ६८ ॥

ददर्श बिल्वं भूपालं पूजयन्तं पुनः पुनः । शरीरे तस्य बिल्वस्य मदीयं रूपमुत्तमम्
दृष्ट्वा मत्वा महादेवं जितोऽस्मीति द्विजोऽब्रवीत् ॥ ६६ ॥
प्रार्थयामित्वयासख्यमनन्तं शिवसन्निधौ । एवमुक्तस्तदा बिल्वः कपिलेनमहात्मना
प्रसन्नःप्राञ्जलिर्भूत्वा कपिलं द्विजसत्तमम् । एवं भवतु भद्रं ते कृतार्थोऽहंमहात्मना
सख्यं तदेव भवतु शश्वद्वदसि मन्यसे । एवमन्योन्यमुक्त्वातौकृत्वासख्यमनुत्तमम्
चिक्रीडतुश्चिरंकालं परं हर्षमुपागतौ ।
तस्य लिङ्गस्य माहात्म्याद्भूयो राज्यं चकार सः ॥ ७३ ॥
स हि मित्रेण भूपालो बिल्वो देवि! मुदान्वितः ।
तदा प्रभृति विख्यातो देवो बिल्वेश्वरः क्षितौ ॥
बिल्वेनाराधितो लोके वाञ्छितार्थफलप्रदः ॥ ७४ ॥
येपश्यन्तिविशालाक्षिदेवंबिल्वेश्वरंपरम् । तेकृतार्था भविष्यन्तिमहापातकवर्जिताः
येऽनुमोदन्ति देवस्य दर्शनं पर्वतात्मजे !। तेऽपि पापविनिर्मुक्ताःप्रयान्तिमम मन्दिरे
समतीतं भविष्यञ्च कुलानामयुतं नरः । मम लोकं नयत्याशु तस्य लिङ्गस्यदर्शनात्
प्रयान्ति पितरोहृष्टा मम लोके ह्यतन्द्रिताः ।
विमुक्ताः पातकैर्घोरैः कृत्वा लिङ्गस्य दर्शनम् ॥ ७८ ॥
कृत्वापि पातकंघोरं ब्रह्महत्यादिकं नरः । तत्पापंविलयं याति श्रीबिल्वेश्वरदर्शनात्
या तिथिः श्रूयते देवि! कृष्णपक्षे त्रयोदशी ।
सा प्रोक्ता वल्लभा तस्य सर्वपातकनाशिनी ॥ ८० ॥
येऽर्चयन्ति नरास्तस्यां देवं बिल्वेश्वरं प्रिये !। न तेषां पुनरावृत्तिर्घोरसंसारगह्वरे
कर्मणामनसावाचायत्पापंसमुपार्जितम् । तत्क्षालयतिदेवोसौतिथौतस्यांसमर्चितः
एत ते कथितो देवि प्रभावा पापनाशनः । बिल्वेश्वरस्य देवस्य श्रूयतामुत्तरेश्वरम्

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्रयां संहितायां पञ्चमेऽवन्तीखण्डे
चतुरशीतिलिङ्गमाहात्म्ये बिल्वेश्वरमाहात्म्यवर्णनं नाम
त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

# चतुरशीतितमोऽध्यायः

## उत्तरेश्वरमाहात्म्यवर्णनम्

श्रीमहादेव उवाच

उत्तरेश्वरमाहात्म्यमशेषपापनाशनम् । जन्ममृत्युजराव्याधिस्फोटनं शृणु पार्वति!
अयोध्यायामतिख्यातकुलोत्पन्नश्च पार्थिवः । सुर्धीःपरीक्षिन्नामा चमृगया मगमत्सच
मृगमनुससाराऽथ मृगो दूरमपाक्रमत् ॥ ३ ॥
तदाऽध्वनि जातश्रमः क्षुत्तृष्णाभिभूतः कस्मिंश्चिद्वनोद्देशेनीलवनमपश्यच्चाविवेश ।
तस्य वनखण्डस्य दक्षिणभागे सरो दृष्ट्वा साश्व एव व्यगाहत ॥ ५ ॥
अथाऽश्वस्थः सन्मृणालमश्वस्याऽग्रतो निक्षिप्य पुष्करिणीं समुपाविशत्
शयितस्ततः शयानो गीतमशृणोत् ॥ ७ ॥
स श्रुत्वा चिन्तयन्नेह मनुष्यगतिं प्रपश्यामि ॥ ८ ॥
कस्य खल्वयं गीतशब्द इत्यवलोकयामास ॥ ६ ॥
अथापश्यत्कन्यां परमरूपदर्शनीयां पुष्पाणि
विचिन्वन्तीं चाथ राजा समीपे पर्यक्रामत् ॥ १० ॥
तामब्रवीद्राजा कस्याऽसि त्वं कन्या परमरूपदर्शनीया पुष्पाणि विचिन्वन्ती ॥ ११
साथ राजसमीपे गत्वेति प्रोवाच कन्यास्मीति ॥ १२ ॥

राजोवाच

अर्थी तवाऽस्मीति ॥ १३ ॥

अथोवाच कन्या

समयेनाहं त्वया शक्योपालब्धुं नान्यथेति ॥ १४ ॥
तां राजा स मपृच्छत्कस्ते समय इति ॥ १५ ॥
ततः कन्या तमुवाच नोदकं दर्शयितव्यमिति ॥ १६ ॥

राजा बाढमित्युक्त्वा तां समागम्य तया सहाऽऽस्ते ॥ १७ ॥

तत्रैवासन्ने राजनि सेना त्वागच्छत् तया सहोपविष्टं राजानं परिवार्य चातिष्ठत् ॥

सभाजितश्च राजा तथैव शिबिकया प्रायात्। अथ झटिति तया सह तं नगरमनुप्राप्य रहसि तया सह रममाणः सन्नान्यं किञ्चिदपश्यदथ प्रधानोऽमात्यस्तस्याभ्याशचरास्ताः स्त्रियोऽभ्यपृच्छत् ॥ १९ ॥

किमत्र प्रयोजनं विद्यते इत्यब्रुवंस्ताः स्त्रियोऽपूर्वमेव पश्यामस्तदुदकं नात्राश्रियत इति ॥ २० ॥

अथाऽमात्यश्च निरुदकं कारयित्वा दारुवृक्षं वृद्धपुष्पफलं शरद्युपलभ्य राजानामब्रवीत्। वनमिदमनुदकं साध्वत्र रम्यतामिति ॥ २१ ॥

स तस्य वचनात्तयैव सह देव्या वनं प्राविशत् ॥ २२ ॥

सकलत्रस्तस्मिन्वने रम्ये तयैव सह रेमे ॥ २३ ॥

प्रविश्य च राजा सह प्रियया सुधाधवलसलिलपूर्णां वापीमपश्यत् ॥ २४

वापीं दर्दुरैः पूर्णां दृष्ट्वैव च तां तस्या एव तीरे तया देव्याऽतिष्ठत् ॥२५

अथ तां देवीं राजाब्रवीत्। शान्ततरं वापीसलिलमिति ॥ २६ ॥

सा च तद्वचः श्रुत्वा तीर्थवापी न्यमज्जन्न पुनरुदमज्जत्। तां मृगयमाणो राजा नापश्यत् ॥ २७ ॥

वापीं दर्दुरैः पूर्णां दृष्ट्वा आज्ञापयामास भृत्यान्सर्वदर्दुरवधः क्रियतामिति ॥२८

यो ममार्थी स तैर्दर्दुरैरुपायनैर्मामनुतिष्ठेत् ॥ २९ ॥

अथ कश्चिन्महान्दर्दुरो दर्दुरवधे क्रियमाणे सर्वासु दिक्ष्वभ्यगात् ॥ ३०

उपेत्यचैनमुवाचेदं ज्ञात्वा क्रोधवशङ्गतम्।

प्रसादं कुरु नार्हसि दर्दुराणामनपराधिनां वधं कर्तुमिति ॥ ३१ ॥

श्लोकश्चाऽत्र भवति

मा दर्दुरान्प्रभिन्द्यास्त्वं कोपं सन्धारयाऽच्युत।

प्रक्षीयते महाधर्मो जनानां परिजानताम् ॥ ३२ ॥

तमेवं वादिनमिष्टजनवियोगे शोकपरीतात्मानं स राजा प्रोवाच।
न हि काममप्येतान्निष्कामेन निवर्हणीया इति ॥ ३३ ॥
एतैर्दुरात्मभिर्मे स्त्री भक्षिता सर्वथैव त्विमे वध्या दर्दुराः।
नार्हसि विद्वन्नुपरोद्धुमिति ॥ ३४ ॥
सतद्वाक्यमुपश्रुत्य व्यथितेन्द्रियमनाः। प्रोवाच प्रसीद राजन्नहमायुर्नाम भूपालः ॥
प्राप्ता सा मम दुहिता। सा कन्या नागलोकं गता।
अत्राऽऽस्ते नागचूडो नागराजः। स्मृता आगमिष्यति ॥ ३६ ॥
तामब्रवीद्राजा तां स्मृत्वाऽऽनीय मे दीयतामिति ॥ ३७ ॥
अथैनां स्मृत्वा राज्ञे अदात्। अब्रवीच्च ॥ ३८ ॥
मयावहसितो गालवो महान्मुनिः तपसा कर्शिताङ्गः।
क्षमेश्वरो दर्दुरबाल्यात्प्रकोपितः तेनाहं शप्तः,
यन्मामनादृत्य दर्दुरबाल्यादवहसितस्तस्माद्दर्दुरो भविष्यसि ॥ ३९ ॥
प्रसादितस्तु विप्रः प्रत्युवाच ॥ ४० ॥
अवितथोऽयं मम शापस्तस्मादन्यजन्मनि दर्दुरराजो भूत्वा त्वं हि,
दुहितरमिक्ष्वाकुकुलोत्पन्नाय सर्वगुणान्विताय दत्त्वा यदा,
यास्यसि महाकालवने तस्योत्तरदिग्भागे, तदा लिङ्गस्य दर्शनेन मुक्तिमवाप्स्यसि
दुहिता कियत्पातालं यास्यति स्मृता चाऽऽगमिष्यति।
स्वस्ति तेऽस्तु साधयिष्यामि कार्याणि, इत्युक्त्वा दर्दुरो महाकालवनमगच्छत्
तस्योत्तरे लिङ्गं ददर्श तस्य दर्शनादनेकमाणिक्यरचितं,
सिद्धगन्धर्वसेवितं विमानवरमारुह्य शक्रलोकं गतः ॥ ४३ ॥
तस्य माहात्म्यमवलोक्य देवाचार्यो बृहस्पतिर्वाक्यं जगाद ॥ ४४ ॥
अहो लिङ्गस्यमाहात्म्यमहो लिङ्गस्य वैभवम्।
सम्प्राप्तोवासवं लोकं शापभ्रष्टो हि दर्दुरः ॥ ४५ ॥
आयुराख्यो हि भूपालो मुक्तो दर्दुरतां गतः ॥ ४६ ॥

इति तद्वचनं श्रुत्वा देवाचार्यस्य पार्वति !। देवास्ते हृष्टमनसोनाम चक्रुः समाहिताः
यस्माद्दर्दुरभूपालो मुक्तो दर्दुरयोनितः।
दर्शनात्तस्य लिङ्गस्य तस्मात्ख्यातो भविष्यति ॥ ४८ ॥
उत्तरेश्वरदेवश्च शापपापप्रणोदकः। इत्युक्त्वा त्रिदशैः सर्वैः पूजितो ह्युत्तरेश्वरः॥
भुक्तिमुक्तिप्रदो देवि!महापातकनाशनः। क्षेत्रस्य रक्षणार्थाय नियुक्तो योमया गणः
दर्दुरो हि दुराधर्षः स चापीश्वरतां गतः ॥ ५० ॥
उत्तराशामथो गत्वा यःपश्येदुत्तरेश्वरम्। ससर्वैश्वर्यसंयुक्तोयाति लोकमथोत्तरम्
सुभगः सर्वदा दान्त सुरूपः पुत्रवानिति। नीरोगःपुण्यशीलश्च जायते सप्तजन्म च
या वृद्धिस्तु कुबेरस्य शक्रस्य चयमस्यच। वरुणस्यचया वृद्धिःसावृद्धिरुत्तरोत्तरा
जायते नात्र सन्देह उत्तरेश्वरदर्शनात् ॥ ५३ ॥
कृष्णपक्षे चतुर्दश्यां ये पश्यन्ति यशस्विनि !। उत्तरेश्वरसञ्ज्ञं तुतेकृतार्थाःकलौयुगे
किं दानैः किं तपोभिश्चकिं यज्ञैर्बहुदक्षिणैः। दर्शनाल्लभते राज्य स्वर्गं मोक्षंक्रमेणतु
आजन्म च कृतं पापं स्वल्पं वा यदिवाबहु। तत्सर्वंनाशमायाति उत्तरेश्वरदर्शनात्
इत्येवं चतुराशीतिः सङ्ख्याता ईश्वरास्तव। कथिता येत्वया पृष्टामहाकालवनेमया
य एतेषां देवि! यात्रां प्रतिलोमानुलोमतः।
करिष्यन्ति नरा भक्त्या ते यास्यन्ति परं पदम् ॥ ५८ ॥
यश्चाऽपि पूजयेत्तत्र लिङ्गंभक्त्यातुमानवः। स कुलं तारयत्येवपैतृकं मातृकं शतम्॥
एषते कथितो देवि!प्रभावःपापनाशनः। चतुराशीतिलिङ्गानांकिंभूयःश्रोतुमिच्छसि

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चमेऽवन्तीखण्डे चतुरशीतिलिङ्गमाहात्म्य उमामहेश्वरसम्वाद उत्तरेश्वरलिङ्गमाहात्म्य-वर्णनपूर्वकचतुरशीतिलिङ्गमाहात्म्यवर्णनंनाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥

शुभम्भूयात्

—◦*◦—

